ॐ

श्रीमत्स्वामिशङ्करचैतन्यभारतीविरचितम्

# दर्शनसर्वस्वम्



टीकाकारः सम्पादकश्च

डा० सुधांशुशेखरशास्त्री

ॐ

यतिकुलचक्रचूडामणि-

श्रीमत्स्वामिशङ्करचैतन्यभारतीविरचितम्

चित्स्वातन्त्र्यपर्यवसायितास्पदम्

# दर्शनसर्वस्वम्

ग्रन्थकृत्स्वोपज्ञेन राजहंसनाम्ना

मानसोन्मीलनेन, श्रीसुधांशुशेखरशास्त्रि-

विरचितचित्कलाभारतीति संस्कृतहिन्दीव्याख्या-

द्वयेन च संवलितम् ।



टीकाद्वयकारेण

काशीहिन्दूविश्वविद्यालयवैदिकदर्शनविभागाध्यक्षेण

न्यायवेदान्ताचार्यसिद्धान्तभूषणविद्यावारिधि-

## (डा०) सुधांशुशेखरशास्त्रिणा

सम्पादितं प्रकाशितञ्च

सम्पादकः प्रकाशकश्च—
डा० सुधांशुशेखरशास्त्री
डी० १/६५, ललिताघट्टम्
वाराणसी, उ. प्र.-२२१००१

•


प्रथमसंस्करणम्—एकसहस्रप्रतिरूपाणि
कार्तिकपूर्णिमा, सम्बत् २०४७ ( सन् १९९० )

मूल्यम्—शतरूप्यकाणि,

प्राप्तिस्थानम्—
सम्पादकनिवासस्थानम्,
वाराणसीस्थापणेभ्योऽपिप्राप्यन्ते

•

मुद्रकः—
आनन्द कानन प्रेस
टेढ़ीनीम, वाराणसी
फोन : ६२०५०

ॐ तत्सत् ।

# उपोद्घातः

खण्डनशारदाया द्वितीयभागे प्रकाशितमपीदं दर्शनसर्वस्वं किंचिदौचित्यं पुरस्कृत्य क्वाचित्काभिप्रेताविष्कृत्या साकं पृथक् प्रकाश्यते। स्वप्रमेयोपपादने शारदायाः सहकारितया च तदीयसौमनस्यास्पदताव्यपदेशपात्रमिदमिति तस्या इवास्यापि मानसोन्मीलनेन राजहंस इति समाख्या समासादिता। दर्शनसर्वस्वे शारदोक्तनयोक्तमर्थजातं तु तत एव शक्यमवगन्तुमिति राजहंसे न प्रायः पुनस्तदुपन्यस्तम्।

सर्वेष्वपि दर्शनेषु कामं सूक्ष्मेक्षिकया विवेचिता सती प्रौढिमानं भजमाना ज्ञप्ति शून्य स्वातन्त्र्य-विवर्तेति दर्शनचतुष्टयी पर्यवस्यतीत्यतः, ज्ञप्ति-स्वातन्त्र्य-वादयोर्ज्ञानज्ञेययो- सर्व थाभेदाभ्युपगमेन शून्य विवर्तवादयोस्तु ससङ्गवस्तुमात्रस्यैव मिथ्यात्वोपपादनेनास्ति काचिदनपह्नवनीयैव बन्धुता, परस्परं क्वचिदंशे विरोधसद्भावेऽपि यथायोगं प्रतिपिपादयिषिताद्वैतोपोद्बलनाय द्वैतनिरासे कृतादरतया तु सा चतुर्णामपीत्यतश्च समेषामेषामिहैकत्रैव कृतमुपबृंहणं रमणीयमेव।

अत्र च प्रथमप्रकरणद्वये स्वातन्त्र्यवादविवर्तवादपूर्वसोपानतयैव परिष्कार्ययोर्विज्ञानवादशून्यतावादयोरास्तिकदर्शनेषु विशिष्य च श्रीमदुदयनाचार्यादिभिरात्मतत्त्वविवेकादिषूद्भावितदूषणानां निराकरणप्रकाराः सूत्रिताः। स्वातन्त्र्यवादस्य तु दैववशाद्विशिष्टां प्रसिद्धिमसेदुषोऽपि स्वातन्त्र्यापरपर्यायैश्वर्यविचारे उपासनासरण्यौपयिकप्रतिपत्तिकरहस्यनिवहनिरूपणभारोद्वहने च सर्वेभ्योऽपि दर्शनेभ्यः प्रशंसनीयपुरःपदार्पणपाटवतया[१] कियत्यंशेऽत्र माननीयतौचित्यं गमिता। अस्य, इममेव सैद्धान्तिकेऽध्वनि कियदनुधावतः शाक्तशीर्षण्यश्रीविद्यासम्प्रदायस्य, एतद्द्वयपरिपोषितविमर्शात्मकप्रकाशवादस्य, तत्रैव पर्यवस्यतः शब्दब्रह्मेतिप्रथितवादस्य चौपनिषदाद्वैतसिद्धान्तेन सार्धं सन्धिविधानाय तु चरमपरिच्छेदे आयस्तम्।

'नास्ति काचिद्ब्रह्मणः शक्तिः' 'अस्ति सा किन्तु ब्रह्मज्ञाननाश्या' 'न तस्या नाशोऽपि तु तं विनैवायास्यति स क्षणो यदनन्तरमनादिरपि द्वैतप्रतिभासो

---

१. प्रशंसनीयं पुरः पदार्पणपाटवं यस्य तत्तया।

न कस्याप्युदेष्यति, ब्रह्मविषयकचरमज्ञाने दृश्याश्रयकालपूर्ववृत्तित्वाभावनियम इति यावत्' इत्यादिकान् वैदान्तिकांश्च कांश्चित्पक्षानाक्षिप्य 'चितिस्वभावविशेषस्तावदद्वैतात्मना प्रथनार्हतारूपोऽस्ति शक्तितया व्यपदिष्टः, तस्य च द्वैतप्रतिभासोत्थापने प्रवृत्तिद्वयी, अक्रमा व्याप्यवृत्तिश्चैका, सक्रमाऽव्याप्यवृत्तिश्चापरा, तत्राद्यामादायानाद्यनन्तमनौपाधिकं चिताविश्वरत्वम्, दृष्टिसृष्टिश्च, द्वितीयामादाय तु जीवत्वं सृष्टिदृष्टिश्च, तादृशस्वभावस्य चानाद्यनन्तत्वेऽपि चितौ केवलकल्पनोपनीतातिरिक्तताकत्वेन वस्तुतश्च चित्यनतिरिक्तत्वेन निर्विशेषाद्वैतवादप्रतिष्ठाऽपि, धर्माणामेवातिरिक्तताप्रयोजकतया तेषां कल्पितत्वे तस्या अकल्पितत्वानुपपत्तेः। सर्गप्रलययोश्च प्रवाहानन्त्यनेव, प्रसिद्धदृष्टिसृष्टिरीतिस्त्वरम्येति त्याज्यैवे' त्यादिकं व्यवस्थापितं विवर्तवादे।

एवं चासांशयिकमेतद् यदौपनिषदाद्वैतप्रतिपत्तौ प्रसिद्धा विधा त्यक्तप्रायैवात्र, तथापि तु 'मानमूलं वचो ग्राह्यं बालादपि शुकादपि' इति नयमनुसृत्य निष्पक्षपातं वस्तुतत्त्वनिरूपणनिपुणैर्विचारणीयः प्रचारणीयश्चायं निबन्धो बुधैः।

यदा चाविद्ययैव देव्या वात्सल्येन लालितोऽपि, अल्पज्ञतयैव चालिङ्गितोऽपि प्रायः सर्वः सगर्वो नरः, भूम्ना च पुरोभागितैव धारयति धुरम्, अन्ततश्च मृषाभिनिवेशवशंवदतयैव परपदप्राप्तिपराङ्मुखैर्नखैरपि दृप्यत एवेति सांसारिकी सृतिः, तदा कोऽवसरोऽस्त्यसमीचामिव समीचामपि वचसां प्रपञ्चस्येत्युपरमति–

शङ्करचैतन्यभारती
**ललिताघट्टस्थश्रीराजराजेश्वरीमन्दिरे**
**वाराणस्याम्।**
मार्गशीर्षपूर्णिमा, सं० २००५

---

१. दोषैकदृक् पुरोभागी।

## ।। ईषत्प्रास्ताविकम् ।।

**नमः श्रीगुरवे नित्यं भ्रान्तिमुद्भाव्यभिन्दते ।**
**श्रीमच्छङ्करचैतन्यभारतीब्रह्मरूपिणे ।।**

इह तावत्पारमेश्वरमायाविलासविलसदुच्चावचप्रपञ्चे विलसितानां नानाविधसंसारसागरोर्मिभिरनिशं मोमुह्यमानानां मानवानां तितीर्षूणां संसार-सागरादस्ति काचित्तत्तरणोपायभूता दर्शनसरणितरणिः । तत्र विलसतितराम् सर्वदर्शनललामभूतं दर्शनीयतमं दर्शनमद्वैतदर्शनमिति न परोक्षं प्रेक्षावतां विपश्चिदपश्चिमानां श्रद्धाराध्यसद्गुरूणां श्लथीकृतदृढग्रन्थीनाम् । रराजीति तत्रायं भेददानवान्दलयद्भिः सौगतशैवादिभिराराधितोऽपि पूर्णतामनाप्नुवन्न-तोऽपरितुष्यच्चिदानन्दसन्दोहोदधिवलयितौपनिषद्ब्रह्माद्वयवादिपत्तनसौधसदसि पारिपूर्ण्येन सतोषोऽद्वैतवादः ।

तत्र—

इत्याह नास्तिक्यनिराकरिष्णु-
रात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद् विषयः प्रबोधः
प्रयाति वेदान्तनिवेषणेन ।। (श्लो० वा० १४८)

यत्तु ब्रह्मविदामेष निश्चयः यदुपलभ्यते न तत्तथ्यम्, यन्नोपलभ्यते तत्त-थ्यमिति नमस्तेभ्यः विदुषां नोत्तरं वाच्यम्'' (प्र० प०)

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ।। (न्या० कु० ३)

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्ति-
स्तद्बाधने बलिनि वेदनये जयश्रीः ।
नो चेदनित्यमिदमीदृशमेव विश्वम्
तथ्यं तथागतमतस्य तु कोऽवकाशः ।। (आत्म० वि० २) ।।

इत्यादिवचननिचयैस्तौतातिकादिभिर्हार्दभावेन तोष्टूयमानस्य 'निर्विशेष-ब्रह्माद्वयवादस्य सोपानारोहणन्यायेन भजन्ति सहकारितां दर्शनान्तरशास्त्राणि यद्यपि, तथापि द्वैतासुरपरासप्रयासेन पराकृतप्रतीपस्वेतरतया काममन्तरङ्गतां-गतां दर्शनचतुष्टयीं ज्ञप्तिशून्यस्वातन्त्र्यविवर्तवादात्मिकां पुरस्कृत्य प्रवृत्तोऽयं ग्रन्थः ।

तत्र "प्रक्रियाग्रहिलता हि न तत्त्वविदामि"ति नयेन सामान्यतः प्रायो न्यक्कृतप्रक्रियाविशेषांशैः परिस्कृतिपद्धतिरेवानुसृता ग्रन्थकृद्भिरिति प्रोक्तदर्शनचतुष्टयस्य प्रक्रियाविशेषांशो मयका प्रदर्श्यमानो नानुचितिं चुम्बति केषाञ्चिन्मतिचुम्बितः स्यात् फलेग्रहिरिति मत्या समासत उन्मील्यते मनाक् ।

**बौद्धदर्शनप्रक्रियांशः—**

सौगताः किल सर्वं क्षणिकं क्षणिकं दुःखं दुःखं स्वलक्षणं स्वलक्षणं शून्यं शून्यमिति भगवत्तथागतोपदिष्टचतुर्विधभावनामादृत्य परमपुरुषार्थं प्रेप्सन्तो योगाचार-सौत्रान्तिकवैभाषिक माध्यमिकभेदेन चातुर्विध्यमुपगता यथाक्रमं विज्ञानमात्रास्तित्वं बाह्यार्थानुमेयत्वं बाह्यार्थप्रत्यक्षत्वं सर्वशून्यत्वञ्चेति स्वमतं प्रतिपादयन्ति । उपदेष्टुस्तथागतस्यैकत्वेऽपि विनेयबुद्धितारतम्यान्मतस्य चातुर्विध्यम् ।

**योगाचारबौद्धमतम्—**

तत्र विज्ञानमात्रास्तित्ववादियोगाचारनये विज्ञानमेवैकं तत्त्वं विज्ञानैकस्कन्धनाम्ना व्यवह्रियमाणम् । तदेव च पूर्वसंस्कारवशात्तेन तेन नीलपीतादिविषयाकारेण प्रतिभासतेऽन्तस्थं सदपि बाह्यवच्च प्रतीयते । यश्च ग्राह्यग्राहकयो र्भेदावभासः, स एकस्मिन् चन्द्रमसि द्वित्वावभास इव भ्रमः । तत्र चानाद्यविच्छिन्नप्रवाहभेदवासनैव निमित्तम् । उक्तञ्च—

सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदश्च भ्रान्तिविज्ञनैर्दृश्येतेन्दाविवाद्वये ॥ इति ॥

तच्च ज्ञानं साकारं क्षणिकं क्षणिकत्वाच्चानित्यम् किन्तु पारमार्थिकम्, सत्त्वञ्चार्थक्रियाकारित्वरूपम्, तस्यैव पारमार्थिकसत्वाभ्युपगमात् । विज्ञानमात्रसत्ताकञ्च सर्वं जगत् । अतएव क्षणिकाः सर्वे घटादयः पदार्थाः सत्त्वाद् मेघमालावत् प्रदीपज्वालावद् वा । तदुक्तम्—

विज्ञानपरिणामोऽयं विकल्पो यद्विकल्प्यते ।
तेन तन्नास्ति तेनेदं सर्वं विज्ञप्तिमात्रकम् ॥ इति ॥

विज्ञानस्वरूपो जीवात्मापि क्षणिकानां विज्ञानानां प्रवाहरूपतया प्रतिक्षणं भेदादनित्य एव । पूर्वपूर्वविज्ञानसंस्काराणामुत्तरोत्तरविज्ञाने संक्रमान्न स्मरणानुपपत्तिः । विभुत्वादिपरिमाणचर्चा तु तत्र नास्त्येव विज्ञानानां गुणभूतत्वेन स्वातन्त्र्येण किञ्चिदपि परिमाणासम्भवात् । न चाश्रयानुरोधेनापि स, आश्रयस्यैवाभावात् ।

तदिदं विज्ञानं द्विविधमालयविज्ञानं प्रवृत्तिविज्ञानञ्चेति । तत्राहमिति विज्ञानमाद्यम् । घटपटाद्युल्लेखि च द्वितीयम् । यथोक्तम्—

तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम् ।
तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत् ॥ इति ॥

तत्रैकसन्तानवर्तिनामालयविज्ञानानां या वासनास्तासु प्रवृत्तिविज्ञान-जननशक्तयस्तासाञ्च स्वस्वकारणं प्रत्याभिमुख्यं परिपाकः, तस्य च प्रत्ययशब्दा-भिलप्यकारणं स्वाश्रयसन्तानवर्ती पूर्वक्षणः, तथा च बुद्धिरेवानादिवशादनेका-कारतयाऽवभासमाना प्रागुक्तचतुर्विधभावनासन्तानसंजातनिखिलवासनोच्छेद-समुपजातनिर्मृष्टविविधविषयाकारोपप्लवविशुद्धविज्ञानसन्ततिस्वरूपतामासाद्यमाना मोक्ष इत्याख्यायते ।

**सौत्रान्तिकबौद्धमतम्—**

सौत्रान्तिकास्तु—विज्ञानवद् विज्ञानातिरिक्तमप्यस्ति बाह्यं वस्तु सत्, किन्तु तदनुमेयम् । इन्द्रियसन्निकृष्टविषयस्यैवोत्पाद्ये ज्ञाने स्वाकारसमर्पकत्वात् । एवञ्चानुमानेन सावयवतया सिद्धानां दृश्यमानानां जालसूर्यमरीचिस्थानां रज-सामवयवेभ्यः पार्दिवादिचतुर्विधेभ्यः परमाणुपदवाच्येभ्यो भूतभौतिकाः पदार्था आलम्बनसमनन्तरसहकार्यधिपतिरूपेभ्यश्चतुर्विधेभ्यः प्रत्ययेभ्यश्चित्त-चैत्ताः पदार्थाः प्रवर्तन्ते । तत्र पृथिव्यादिकं भूतम् । रूपादयश्चक्षुरादयश्च भौतिकम् । आलम्बन प्रत्ययो विषयरूपः । अव्यवहितपूर्वज्ञानं समनन्तरप्रत्ययः । आलोकादिः सहकारिप्रत्ययः । अधिपतिप्रत्ययश्चक्षुरादिरिन्द्रियाणि । चित्तं चैत्तात्मकश्च स्कन्धः पञ्चविधः रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकः । तत्र रूप्यन्ते एभिर्विषयाः रूप्यन्त इति च व्युत्पत्त्या विषयसहितानीन्यिद्राणि रूपस्कन्धः, आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्धः, उक्तस्कन्धद्वयसम्बन्धजन्यः सुखदुःखादिप्रत्ययप्रवाहो वेदनास्कन्धः, घट इत्यादिशब्दोल्लेखिविज्ञानप्रवाहः संज्ञास्कन्धः । वेदनास्कन्धनिबन्धना रागद्वेषादयः क्लेशा उपक्लेशाश्च मदमाना-दयो धर्माधर्मौ च संस्कारस्कन्धः । तदुक्तम् —

दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः ।
विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥
पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् ।
धर्मायतनमेतानि द्वादशायतनानि तु ॥ इति ॥

तदेतत्सर्वं दुःखं दुःखसाधनञ्चेति भावयित्वा तन्निरोधोपायं दुःखसमुद-यायतनमार्गरूपाणामार्यसत्यचतुर्णां तत्त्वज्ञानं तत्साधनञ्च शीलसमाधिप्रज्ञारूपं रत्नत्रयं सम्पादयेत् । तत्त्वज्ञानानन्तरञ्च जायमाना विमलविज्ञानप्रवाह एव मुक्तिरित्याख्यायते इति प्रतिपेदिरे ।

**वैभाषिकबौद्धमतम्—**

वैभाषिकाणामपि प्रायः एषैव प्रक्रिया, परं प्रत्यक्षमपि बाह्यमेतन्मते इति विशेषः।

**माध्यमिकबौद्धमतम्—**

माध्यमिकास्तु—शून्यं शून्यमिति शून्यभावनामादृत्य दृग्दृश्ययोरभेदासम्भवाद् भेदे च सम्बन्धस्यासम्बद्धस्य सम्बन्धत्वानुपपत्त्या सम्बन्धान्तरापेक्षायामनवस्थादुष्टस्यानिर्वाच्यत्वात् तादृशसम्बन्धानुयोगिप्रतियोगिनोरप्यनिर्वाच्यत्वमिति वदन्तः ज्ञानं ज्ञेयं सर्वमेव शून्यमिति प्रतिपादयन्ति। शून्यत्वञ्चात्रानिर्वाच्यत्वापरपर्यायम्, न त्वभावरूपत्वम्। अनिर्वाच्यत्वञ्च तन्मते चतुष्कोटिविनिर्मुक्तत्वम्।

न सन्नासन्न सदसन्न चानुभयतत्त्वकम्।
विमतं तर्कपीड्यत्वान्मरीचिषु यथोदकम्॥

इत्यद्वयवज्रसंग्रहादौ तैरेवोक्तत्वात्।

लङ्कावतारेऽपि—

बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते।
अतो निरभिलाप्यास्ते निःस्वभावाश्च देशिताः॥ इति।
इदं वस्तुबलायातं यद्वदन्ति विपश्चितः।
यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा॥ इति च।

व्यवहारश्च स्वप्नव्यवहारवत्संवृत्या सम्पद्यते। एवञ्चैतन्मतेऽर्थक्रियाकारिण्यपि सांवृतत्वमेव न तु पारमार्थिकत्वम्। यथोक्तं गुरूचन्द्रिकायामाचार्यैः— "अर्थक्रियाकारिण एवाबाध्यस्वरूपत्वनियमस्य माध्यमिकान्यबौद्धैरङ्गीकारात्" इति। आत्मापि शून्य एव। शून्य एवात्मन्यविद्यावशात् सर्वमिदमसज्जगत् प्रतिभाति। शून्यादिभावनया निखिलवासनानिवृत्तौ परनिर्वाणात्मिका मुक्तिर्भवति। प्रमाणञ्चैतन्मते प्रत्यक्षमनुमानञ्चेति द्विविधम् न तु चार्वाकवत् प्रत्यक्षमात्रम्। तत्कीर्तितं धर्मकीर्तिना—

कार्यकारणभावाद् वा स्वभावाद्वा नियामकात्।
अविनाभावनियमोऽऽदर्शनान्न न दर्शनात्॥ (न्या० वि०) इति।

**काश्मीरिकशैवाद्वैतवादप्रक्रियांशः—**

स्वातन्त्र्यवादप्रक्रियांशस्तावदित्थम्—

अत्र शिवाद्वयदर्शने परमशिव एव परमेश्वरः मुख्यं तत्त्वम्। स च स्वतन्त्रश्चिद्घनसंवित्स्वभावः स्वया स्वातन्त्र्याख्यया शक्त्या सततं शिवादिधरण्यन्त-

तत्तद्भुवनभूततत्त्वात्मना क्रीडनादिशीलत्वात् कृत्यपञ्चकविधायी। तत्र स्वातन्त्र्यं नामानन्दाख्यं शक्तितत्त्वं परमात्मनो मुख्यमैश्वर्यम् केवलस्वात्मभाने स्वात्मकविश्वाकारतया च भाने इतरानपेक्षत्वरूपम्। "आनन्दः स्वातन्त्र्यमिति तन्त्रसारोक्तेः। एतदेव च विमर्शचिच्चैतन्यस्फुरत्तास्पन्दसत्तासारहृदयादिशब्दैरागमेषूद्घोष्यते। तदुक्तम्—

चितिः प्रत्यवमर्शात्मा परा वाक्स्वरसोदिता।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः॥
सा स्फुरत्ता महासत्ता देशकालाविशेषिणी।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः॥
(ई० प्र० १।५।१३-१४) इति।

इयमेव च प्रकाशात्मनः परमशिवस्य शक्तिदशाप्युच्यते।

न शिवेन विना देवी न देव्या च विना शिवः।
नानयोरन्तरं किञ्चित् चन्द्र चन्द्रिकयोरिव॥
न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी।
शिवः शक्तस्तथा भावान् इच्छया कर्तुमीहते॥
शक्तिशक्तिमतोर्भेदः शैवे जातु न वर्ण्यते। (शिवदृष्टिः ३।२।३)

शक्तिश्च शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति।
तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव॥ (बो. प. द. ३) इत्यादिवचनैर्वस्तुतः शक्तिशक्तिमतोरभेदेऽपि स्वात्मकवेद्यांशप्राधान्यविवक्षायां विमर्शादिशब्देन वेदकांशप्राधान्यविवक्षायां तु तस्यैव प्रकाशशब्देन व्यवहारः।

एतस्यैव विलासः सर्वोऽपि प्रपञ्चः। परमशिव एव भगवान् स्वस्वातन्त्र्यमाहात्म्यात्स्वात्मन्येव स्वाभिन्नं विचित्रं विश्वं भिन्नमिवोद्भासयति। उक्तञ्च— "चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" (          ) इति। स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति" ( प्र. हृ. सू. २ ) इति। "श्रीमत्परमशिवस्य पुनः विश्वोत्तीर्णविश्वात्मकपरमानन्दमयप्रकाशैकघनस्य अखिलभेदेनैव स्फुरति, न तु वस्तुतोऽन्यत् किञ्चित्, ग्राह्यं ग्राहकं वा, अपि तु श्रीपरमशिवभट्टारक एवेत्थं नानावैचित्र्यसहस्रैः स्फुरति" ( प्र. हृ. सू. ३ ) इति। "संवित्स्वभावः परमशिव एव भगवान् स्वातन्त्र्यादेव प्रकाशते" ( प्र. विवृतिविमर्शिनी ) इति च।

परमशिवस्य स्वातन्त्र्यशक्तिसंवलितत्वेऽपि तस्यास्तदभिन्नत्वात्परमाद्वैतमेवैतन्मते। अत एव—'तथा तथा भासमानत्वमपि वस्तुतः न किञ्चिद्, अपि तु तदभेदाख्यातिमात्रमेतदिति नवमाह्निकेऽभिनवगुप्तपादाः। स एव स्वस्वातन्त्र्य-

वशाद्विभिन्नां दशामधिशय्य तत्तद् व्यवहारभाग्भवतीति षट्त्रिंशत्तत्त्व-विभागोऽप्यत्र।

षट्त्रिंशत्तत्त्वानि सर्वाण्यपि सामान्यतः त्रिषु भागेषु विभक्तानि। १. शिवतत्त्वम्, २. विद्यातत्त्वम्, ३. आत्मतत्त्वञ्चेति। तत्र शिवतत्त्वम् शिव-शक्त्यात्मकम्। विद्यातत्त्वे-सदाशिवतत्त्वमीश्वरतत्त्वं शुद्धविद्यातत्त्वञ्चेति तत्त्वत्रयम्। आत्मतत्त्वञ्चैकत्रिंशत्तत्त्वात्मकम्। तत्र कञ्चुकपञ्चकम् ( नियतिः कालः रागः विद्या कला ) प्रकृतिः पुरुषः माया अन्तःकरणत्रयम्-( मनोबुद्धिरहङ्कारश्च ) पञ्चज्ञानेन्द्रियाणि ( श्रोत्रत्वगक्षिरसनाघ्राणाख्यानि ) पञ्चकर्मेन्द्रियाणि—( वाक्-पाणिपादपायूपस्थाख्यानि ) पञ्चविषयाः ( शब्दस्पर्शरूपरसगन्धाख्याः ) पञ्च-भूतानि पृथिव्यादीनि प्रसिद्धानि।

तत्र स्वेच्छयाऽणवमायीयकार्ममलत्रयोपेतः शिव एवाङ्गीकृतकञ्चुक-पञ्चकवशान्नानाविधसंकोचभावमधिगतः जीवसंज्ञाभाग्भवति। उक्तञ्चैतत्—

एष प्रमाता मायान्धः संसारी कर्मबन्धनः।
विद्याभिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते॥
स्वाङ्गरूपेषु भावेषु प्रमाता कथ्यते पतिः
मायातो भेदिषु क्लेशकर्मादिकलुषः पशुः॥ (ई० प्र० ३।२।२-३) इति।
मायागृहीतसंकोचः शिवः पुंतत्त्वमुच्यते।
अयमेव हि संसारी जीवो भोक्तैव दृश्यते॥
ज्ञत्वकर्तृत्वपूर्णत्वनित्यत्वान्यस्य शक्तयः।
तत्संकोचात्संकुचितः कलाद्यात्मतया मतः॥
(अनु० प्र० प० २२-२३) इति च।

ईदृशसंकोचभाव एव बन्धः। आणवशाक्तशाम्भवाद्युपायवशाच्च विगलितसंकोचभावोऽभिव्यक्तस्वस्वरूपप्रथनात्मकः पूर्णात्मता लाभो मोक्षः। "मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः"

मोक्षस्य नैव किञ्चिद्धामास्ति न चापि गमनमन्यत्र।
अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः (परमार्थसार ६०) इत्या-द्युक्तेः। एतन्मते प्रमाणमपि चिच्छक्तिरेव। तदुक्तं पौष्करे—

न चक्षुः शब्दसवित्तौ न श्रोत्रं रूपवेदने।
सर्वत्र ग्राहिका संवित्सैव मानमतो मतम्॥ (१।१५) इति।

तत्र अविद्यारागादिना कलुषिता विषयाभिमुखी संशयादिविनिर्मुक्ता चिच्छक्तिः प्रमाणम्। प्रमाता तु आत्माभिमुखी चिच्छक्तिरिति प्रमाणप्रमात्रो-

विवेकः। तच्च प्रमाणं त्रिविधं प्रत्यक्षमनुमानं शब्दश्चेति। "प्रत्यक्षमनुमानञ्च सह शब्देन शाङ्करे" इत्युक्तत्वात्।

श्रुत्यन्तसिद्धान्तप्रक्रियालेशः

श्रौतसिद्धान्ते पुनरशेषविशेषप्रत्यनीकं चिन्मात्रं ब्रह्मैव परमार्थः। तच्च नित्यशुद्धबुद्धमुक्तस्वभावं स्वतःसिद्धम्। तदेव चात्मा। तदुक्तं श्रीमद्भाष्यकृता—"आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात्प्रागेव प्रमाणादिव्यवहारात् सिध्यति। न चेदृशस्य निराकरणं संभवति। आगन्तुकं हि वस्तु निराक्रियते न स्वरूपम्। य एव हि निराकर्ता तदेव तस्य स्वरूपम्। न ह्यग्नेरौष्ण्यमग्निना निराक्रियते।" (शा० भा० २।३।७) इति। "सर्वो ह्यात्मास्तित्वं प्रत्येति, न नाहमस्मीति। यदि हि नात्मास्तित्वप्रसिद्धिः स्यात् सर्वो लोको नाहमस्मीति प्रतीयात्। आत्मा च ब्रह्म। (शा० १।१।१) इति। एतदेव च "सत्यं ज्ञानमनन्तं ब्रह्म" (तै० २।१।१) इत्यादिसत्यज्ञानाद्यात्मकत्वरूपस्वरूपलक्षणस्य "यतो वा इमानि" (तै० ३।१) इति, "जन्माद्यस्य यतः" (ब्र० सू० १।१।२) इति श्रुतिसूत्राभ्यां निगदितस्य तटस्थलक्षणस्य लक्ष्यमपि। तदुक्तम् विवरणे—

जगज्जन्मस्थितिध्वंसा यतः सिध्यन्ति कारणात्।
तत्स्वरूपतटस्थाभ्यां लक्षणाभ्यां प्रदर्श्यते॥
(विवरणम्) इति।

निरूपाधिकस्य च तस्य निराश्रयत्वेन निर्विषयत्वेन सन्मात्रस्वरूपत्वेन स्वस्वरूपप्रथनेऽन्यानपेक्षत्वात्सत्यत्वं त्रिकालाबाध्यत्वरूपम्। तदतिरिक्तनानाविधभोक्तृभोक्तव्यादिभेदप्रपञ्चः सर्वोऽपि तस्मिन्नविद्यया मायापरपर्यायया परिकल्पितः। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छा० ६।२।१) इत्यादि वचननिचयप्रामाण्यात्। अविद्या चानादिभावरूपाऽनिर्वचनीया। उक्तञ्च—

अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मिका या।
कार्यानुमेया सुधियैव माया यया जगत् सर्वमिदं प्रसूयते॥
(वि० चू० ११०) इति।

अनादिभावरूपं यद्विज्ञानेन विलीयते।
तदज्ञानमिति प्राज्ञा लक्षणं संप्रचक्षते॥
(चि० १।९) इति च।

अनिर्वचनीयत्वञ्चैतन्मते सत्त्वप्रकारकप्रतीत्यविषयत्वे सत्यसत्त्वप्रकारकप्रतीत्यविषयत्वे सति सदसत्त्वप्रकारकप्रतीत्यविषयत्वरूपम्। तदुक्तम्—

सन्नाप्यसन्नाऽप्युभयात्मिका नो भिन्नाप्यभिन्नेत्युभयात्मिका नो।
साङ्गाप्यनंगाप्युभयात्मिका नो महाद्भुताऽनिर्वचनीयरूपा ॥
( वि० चू० १११ ) इति ।

अविद्याया अविद्यात्वमिदमेव तु लक्षणम् ।
यत् प्रमाणासहिष्णुत्वमन्यथा वस्तु सा भवेत् ॥
( बृ० भा० वा० १८१ ) इति ।

प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत् ।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिनः ॥
( चि० १।१३ ) इति ।

ईदृशाविद्याकल्पितत्वात् मृषाभूतं जगत् । मृषाभूतमपि नालीकमपि तु व्यावहारिकं प्रातिभासिकं वा । तेन न प्रतिकर्मव्यवस्थानुपपत्तिः । प्रमाणानां प्रामाण्यमपि व्यवहारकाले एव । उक्तञ्चैतत्—

देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥ इति ।

ब्रह्मण्यपि तेषामतद्धर्माध्यारोपणमात्रनिवर्तकत्वेनैव प्रामाण्यम् न त्वज्ञातज्ञापकत्वेन ब्रह्मणः स्वप्रकाशत्वेन स्वतःसिद्धत्वात् । प्रमाणानि च षडेव प्रत्यक्षादीनि प्रसिद्धानि ।

प्रोक्तं निर्विशेषतत्त्वं परमार्थतो नित्यशुद्धबुद्धमुक्तस्वभावमप्येकमेव सदपि निरुक्तमायाद्युपाधिवशाज्जीवेश्वरभावं भजते । "माया आभासेन जीवेशौ करोति···" ( ) "अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुषुप्तिः, यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः" ( शा० भा० १।४।३ ) ।

मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ ।
यथेच्छं पिबतां द्वैतं तत्त्वं त्वद्वैतमेव हि ॥
( पञ्च द० ६।२३६ )

इत्यादिवचनेभ्यः ।

तत्र जीवो नामान्तःकरणोपाधिकमविद्योपाधिकं वा चैतन्यम् । तदुक्तम् "जीवो हि नाम चेतनः शरीराध्यक्षः प्राणानां धारयिता" ( शा० भा० १।१।६ ) इति । "अस्ति आत्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसम्बन्धी" ( शा० भा० १।३।१७ ) इति । "मन उपाधिकश्च जीवः" ( शा० भा० ३।१।१४ ) इति च । अन्तःकरणस्य नानात्वेन तदुपाधिकस्य जीवस्यापि नानात्वम् ।

अविद्याया एकत्वेन तदुपाधिकस्य जीवस्यैकत्वम्। अत्राप्यन्तःकरणमादायैव प्रतिकर्मव्यवस्थोपपत्तिः। केचित्तु अविद्याया नानात्वमङ्गीकृत्यैव तद्व्यवस्थामुपपादयन्ति। स्वभावतो व्यामोहकारित्वादिसाम्यमादाय तत्र तत्र श्रुतिस्मृतिभाष्यादिषु मायाविद्ययोरभेदेन व्यवहारोऽपि संगच्छते। क्वचिच्च शुद्धसत्त्वमलिनसत्वाभ्यां विक्षेपशक्तिप्राधान्यावरणशक्तिप्राधान्याभ्यां वा मायाविद्ययोर्भेदेन व्यवहारोऽपि न विरुध्यते। तदुक्तम्—

मायाविक्षिपदज्ञानमीशेच्छावशवर्ति वा।
अविद्याच्छादयत्तत्त्वं स्वातन्त्र्यानुविधायि वा॥ इति।

तत्रापि प्रतिबिम्बवादो विवरणकारस्य। आभासवादो वार्तिककारस्य। अवच्छेदवादश्च भामतीकारस्य मते। तत्र स्वरूपतः सत्यं प्रतिबिम्बत्वरूपेण मिथ्याभूतं बिम्बमेव प्रतिबिम्बमिति वादः प्रतिबिम्बवादः। स्वरूपतो मिथ्याभूतं प्रतिबिम्बमिति वादः आभासवादः; अस्मिन् वादेऽहङ्कारोपहितस्तत्तादात्म्यापन्नो जीवः। यथा सर्वगतस्याकाशस्य घटादिनाऽवच्छेदोऽवश्यंभावी, तथैव सर्वगतस्य चैतन्यस्यान्तःकरणादिनाऽवच्छेद आवश्यक इति तदवच्छिन्नो जीव इति वादोऽवच्छेदवादः। प्रतिबिम्बवादेऽपि अन्तःकरणतत्संस्कारावाच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीव इति विवरणकाराः। बुद्धिप्रतिबिम्बितं चैतन्यं जीव इति संक्षेपशारीरककाराः वदन्ति।

मायोपाधिकश्चेश्वरः। तत्रापि जीवात्मकप्रतिबिम्बस्य बिम्बभूतमज्ञानोपहितं चैतन्यमीश्वरः। शुद्धचैतन्यञ्चोभयातीतमिति विवरणमतम्। अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः। अज्ञानोपहितं बिम्बचेतन्यं शुद्धमिति संक्षेपशारीरकमतम्। अज्ञानविषयीकृतं चैतन्यमीश्वरः। जीवस्यैवाज्ञानाश्रयत्वमिति भामतीमतम्। अज्ञानोपहितात्माऽज्ञानतादात्म्यापन्न ईश्वर इति वार्तिकमतम्।

एवञ्चैकस्यैव चैतन्यस्यौपाधिको भेदोऽभेदस्तु वास्तविकः। तदुक्तम्—"भेदव्यपदेशोऽपि ब्रह्मण उपाधिभेदापेक्षयैव उपचर्यते न स्वरूपभेदापेक्षया" "उपाधिभेदाच्च भेदव्यपदेशः" (शा० भा० ३।२।३४) तथान्यप्रतिषेधादपि न ब्रह्मणः परं वस्त्वन्तरमस्तीतिगम्यते। तथाहि—"स एवाधस्तात्" "अहमेवाधस्तात्" "आत्मैवाधस्तात्" "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" "ब्रह्मैवेदं सर्वम्" "आत्मैवेदं सर्वम्" "नेह नानास्ति किञ्चन" यस्मात्परं नापरमस्ति किञ्चित् तदेतद् ब्रह्मापूर्वमनपरमनंतरमबाह्यम्" इत्येवमादीनि वाक्यानि स्वप्रकरणस्थान्यन्यार्थत्वेन परिणेतुमशक्यानि ब्रह्मव्यतिरिक्तं वस्त्वन्तरं वारयन्ति" (शा० भा० ३।२।३६) इति। "अभेदोपादानैव भेदकल्पना न भेदोपादानाऽभेदकल्पना" (भामती १।१।४) इति।

अभेदं नोल्लिखन्ती धी न भेदोल्लेखनक्षमा ।
तथा चाद्ये प्रमा सा स्यान्नान्त्ये स्वापेक्ष्यवैशसात् ॥

( खण्ड. खा. १।१८ ) इति च ।

एतेन—

न सा धीः क्वचिदप्यस्ति यत्र भेदा न भासते ।
अतएव न तन्मानं यन्न भेदप्रमापकम् ॥

इति ब्रुवन्तः शतशः श्रुतियुक्तिविरुद्धं कल्पयन्तोऽन्ये निरस्ता वेदितव्याः । "तमेव विदित्वे" त्यादिश्रुत्या केवलात्मज्ञानस्यैव मोक्षहेतुत्वं श्रुत न भेदज्ञानस्येति न भेदे श्रुतेस्तात्पर्यम् । "द्वे ब्रह्मणी वेदितव्ये परं चापरमेव" "द्वा सुपर्णा सयुजा सखाया" जुष्टं यदा पश्यत्यन्यमीशम्" इत्यादिषु भेदकथनन्त्वनुवादमात्रम्, भेदस्य प्रत्यक्षसिद्धत्वेन तत्र श्रुतेः प्रामाण्याभावात् । उक्तञ्च—भामतीपतिना–"भेदो लोकसिद्धत्वादनूद्यते, अभेदस्तु तदपवादेन प्रतिपादनमर्हति" इति ।

प्रपञ्चस्त्वविद्यायाः परिणामः, ब्रह्मणो विवर्तः । तत्र परित्यक्तपूर्वरूपस्य रूपान्तरेण प्रकाशः परिणामः अपरित्यक्तपूर्वरूपस्य रूपान्तरेण प्रकाशस्तु विवर्तः । उक्तञ्चैतत्—

अभेदिनो निर्विकृतेरनेकमृषास्वरूपान्तरदर्शकत्वम् ।
विवर्तशब्दार्थ इह प्रसिद्धस्तरङ्गभेदादिव चन्द्रभेदः ॥

( सं० शा० २।६६ )

"कारण सलक्षणो ऽन्यथाभावः परिणामः, तद् विलक्षणो विवर्तः" ( सि. ले. ) इति च ।

विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः ।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥

इति च वाचस्पतिमिश्रः । तथा च ब्रह्मान्यस्य पारमार्थिकत्वाभावान्नाद्वैतव्याघातकत्वम् ।

औपाधिको भेदश्चोपाधिनिवृत्तौ निवर्तते । उपाधिश्चमूलाज्ञानमित्युक्तम् । मूलाज्ञानेन तत्परिणामेन च सह जायमानाश्चितः सम्बन्ध एव बन्धः । तस्य चाहमज्ञोऽहं देहीत्यादिना प्रत्यक्षतयाऽनुभूयमानत्वात्तन्निवृत्तिर्ब्रह्मसाक्षात्काराद‍ेव । "तरतिशोकमात्मवित्" ( छा॰ ७।१।३ ) "तमेव विदित्वातिमृत्युमेति" ( श्वे० ३।८ ) "ज्ञात्वा देवं मुच्यते सर्वपाशैः" ( श्वे० २।५ ) इत्यादिश्रुतिभ्यः । मूलाज्ञाननिवृत्तौ स्वस्वरूपाधिगमो मोक्षः । नान्यत्किञ्चिद्मोक्षदशायामपूर्वं प्रापणीयं भवत्यपि तु मूलस्वरूपेणावस्थानमेव ।

उक्तञ्च—"निगडध्वंसवन्नापि पुंसो मोक्ष इहात्मनः ।
निवृत्तिमात्रं बन्धस्य कथंचिदुपपद्यते ॥
( बृ. वा. ३२० ) इति

"अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः"
"निवृतिरात्मामोहस्य ज्ञातत्वेनोपलक्षितः"

इत्याद्युक्त्याऽविद्यास्तमयत्वोपलक्षितस्याविद्यास्तमयोपलक्षितस्य वा चिदात्मन एव मोक्षपदार्थत्वात् । "परमेव ब्रह्म भवति य एवं वेद" ( नृ० ५ ) "अभयं वै ब्रह्म भवति य एवं वेद" ( बृ० ४।४।२५ ) "मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" ( बृ० ४।४।७, का० ६।१४ ) इत्याद्याः श्रुतयश्चात्र भवन्ति ।

**प्रच्छन्नबौद्धत्वनिराकरणम्**—

अयमेव वादो निर्विशेषब्रह्माद्वयवादः श्रीमद्भगवत्पादेन समर्थितत्वाच्च शाङ्कराद्वैतवादनाम्नापि व्यवह्रियमाणः । नायं विचारोऽप्यत्रानुचितः प्रतिभाति, यदत्र केचन किञ्चित्प्रक्रियासाम्यमाश्रित्य प्रत्यवतिष्ठन्ते—नन्वयं श्रीमच्छंकराचार्यः प्रच्छन्नबौद्धः, तत्समर्थितश्चाद्वैतवादोऽपि नौपनिषदाद्वैतवादोऽपि तु बौद्धसिद्धान्तसिद्ध एव, भास्करादिभिस्तथोक्तत्वात्, तथाहि—"विगीतं विच्छिन्नमूलं महायानिकबौद्धगाथितं मायावादं व्यावर्णयन्तो लोकान् व्यामोहयन्ति" ( ब्र० सू०भा० १।४।२५ )" ये तु बौद्धमतावलम्बिनो मायावादिनस्तेऽप्यनेन न्यायेन सूत्रकारेणैव निरस्ता वेदितव्याः" ( ब्र० सू० भा० भा० २।२।२९ )। "एवं रूपेण सकर्मकेण सकर्तृकेण ज्ञाधात्वर्थेन सर्वलोकसाक्षिकमपरोक्षमवभासमानेनैव ज्ञानमात्रमेव परमार्थ इति साधयन्तः सर्वलोकोपहासकरणं भवन्तीति वेदवादच्छद्मप्रच्छन्नबौद्धनिराकरणे निपुणतरं प्रपञ्चितम्" ( ब्र० सू० श्रीभा० २।२।२७ )

वेदोऽनृतो बुद्धकृतागमोऽनृतः, प्रामाण्यमेतस्य च तस्य चानृतम् ।
बौद्धानृतो बुद्धिफले तथानृते, यूयं च बौद्धाश्च समानसंसदः ॥
( शतदू० ४३ वादे )

"मायावादतमोव्याप्तं जगत् इत्यादौ त्वद्व्याख्यासिंहनादे सपदिददृशिरे मायिगोमायवस्ते" ( गी० सू० वृ० ४।१।३ )

प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः ।
वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते ॥
( प्र० च० २।४ )

"तस्मादेषोऽपि महायानिकपक्षप्रवेशो ब्रह्मवादिनां मोह एव"
( प्र० पञ्जिका० ८ पृ० १५६ )

"मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च" ( पद्म पु० ६।२६३।७० )

वेदार्थवन्महाशास्त्रं मायावादमवैदिकम्" ( पद्म पु० ६।२६३।७४ ) इति ।

तदेतच्छाङ्कराद्वैतवादसिद्धान्तापरिज्ञानविजृम्भितम्, अत्रत्यैराचार्यैरेव तस्य निरस्तत्वात्, तदीयवैषम्यस्य दर्शितत्वाच्च । तथाहि—"ब्रह्मावसानोऽयं प्रतिषेधः, नाभावावसानः" ( ब्र० सू० शा० भा० ३।२।२२ ) "तस्माद्ब्रह्मणो रूपप्रपञ्चं प्रतिषेधति परिशिनष्टि ब्रह्मेत्यभ्युपगन्तव्यम्" ( ब्र० सू० शा० भा० ३।२।२२ ) "न ह्ययं सर्वप्रमाणप्रसिद्धो लोकव्यवहारो अन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम्" ( ब्र० सू० शा० भा० २।२।३१ ) "एवमेतौ द्वावपि वैनाशिकपक्षौ निराकृतौ बाह्यार्थवादिपक्षो विज्ञानवादिपक्षश्च । शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते" ( ब्र० सू० शा० भा० २।२।३१ ) अपि चारोपितं निषेधनीयम् । आरोपश्च तत्त्वाधिष्ठानो दृष्टः । यथा शुक्तिकादिषु रजतादेः । न चेत् किञ्चिदस्ति तत्त्वं कस्य कस्मिन्नारोपः । तस्मान्निष्प्रपञ्चं परमार्थसद्ब्रह्मानिर्वाच्यप्रपञ्चात्मनारोप्यते । तच्च तत्त्वं व्यवस्थाप्यातात्त्विकत्वेन सांव्यावहारिकत्वं प्रमाणानां ( प्रमेयाणां ) बाधकेनोपपद्यते इति युक्तमुत्पश्यामः ( इति च तत्रत्या भामती ) सर्वथाप्यनादरणीयोऽयं सुगतसमयः श्रेयस्कामैः" ( तत्रैव २।२।३२ ) ।

क्रमते नहि बुद्धस्य ज्ञानं धर्मेषु तापिनः ।
सर्वे धर्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम् ॥

( मा० का० ४।९९ )

"ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितम् । यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्रकल्पना चाद्वयवस्तुसामिप्यमुक्तम् । इदं तु परमार्थतत्वमद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः" इति तत्रत्यं शाङ्करभाष्यम् । "सकलभेदविकलं परिपूर्णमनादिनिधनं ज्ञप्तिमात्रमुपनिषदेकसमधिगम्यं तत्त्वमिह प्रतिपाद्यते । मतान्तरे तु नैवमिति कुतो मतसाङ्कर्याशङ्कावकाशमासादयेदित्यर्थः" इति च तत्रत्यानन्दगिरिः ।

"तथा च सत्यद्वैतस्य वस्तुत्वे प्रमाणाभावाच्छून्यवादप्रसङ्गः । द्वैतस्य चाभावात् न रज्जुसर्पादिविकल्पनाया निरास्पदत्वानुपपत्तिरितिप्रत्युक्तमेतत्" ( मा० का० शा० भा० २।३२ ) "नाप्रामाणिकशून्यवादो युक्तो यथा रज्वामारोपितसर्पादेरज्जुरधिष्ठानम् । न हि निरधिष्ठानो भ्रमोऽस्ति । तथा द्वैतकल्पनाया निरधिष्ठानत्वायोगात्तदधिष्ठानत्वेनाद्वैतमास्थेयम्" इति तत्रत्याआनन्दगिरिः ।

"न हि ब्रह्मवादिनो नीलाद्याकारां वित्तिमभ्युपगच्छन्ति किन्तु अनिर्वचनीयं नीलादि" ( ब्र० सू० शा० भा० भामती २।२।२८ ) ।

आनन्दबोधभट्टारकाचार्यो न्यायमकरन्दे वाचस्पतोमिश्रशब्दमेवानुकरन्नाह—"तथा सत्येषोऽपि महायानिकपक्षानुप्रवेशो ब्रह्मवादिनां मोह एवेति व्यामूढभाषितम्। न हि वयं नीलाद्याकारां वित्तिमभ्युपगच्छामः, येन महायानिकपक्षानुप्रवेशः किन्तु अनाद्यविद्याविक्रीडितमलीकनिर्भासमाकारं प्रपञ्चमाचक्ष्महे।" (न्या० म० मोक्ष नि० पृ० ३०५) पञ्चपादिकाविवरणे श्रीप्रकाशात्मयतिना—सौगतवादब्रह्मवादयोः साम्यं निषिद्धम्—"दुर्जनरमणीयां वाचं जल्पति सुगतविज्ञानवादसमानोऽयं वेदान्तवादः, स शोचनीयः" (पञ्चपादिकाविवरणे पृ० ८४) श्रीसर्वज्ञात्ममुनिनापि—

ननु शाक्यभिक्षुसमयेन समः प्रतिभात्ययञ्च भगवत्समयः।
यदि बाह्यवस्तु वितथं नु कथं समयाविमौ न सदृशो भवतः॥
यदि बोध एव परमार्थवपुर्न तु बोध्यमित्यभिमतं भवति।
ननु चाश्रितं भवति बुद्धमुनेर्मतमेव कृत्स्नमिह मस्करिभिः॥
ननु मातृमानविषयावगतिरपरस्परं प्रति विभागवतीः।
उपयन्भदन्तमुनिना सदृशः कथमेष वैदिकमुनिर्भवति॥
परमात्मसंश्रयतमोजनितं प्रविभक्तमेव तु परस्परतः।
स्थिरमभ्युपेतमिह नः समये ननु मातृमानविषयप्रभृतिः॥

(संक्षेपशा० २।२५–२८)

श्रीश्रीहर्षोऽपि तयोर्वैलक्षण्यं वदति—"एवं च सति सौगतब्रह्मवादिनोरयं विशेषो यदादिमः सर्वमेवानिर्वचनीयं वर्णयति—विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिनः सङ्गिरन्ते" ( ख० ख० खा० १ प० पृ० ६४ )

"शून्यमेव तर्हि तत् (ब्रह्म) दिग्देशगुणगतिफलभेदशून्यं हि परमार्थसद् अद्वयं ब्रह्म मन्दबुद्धीनामसदिव प्रतिभाति"। छा० शा० भा० ८. १. १) "सद्भावमात्रं तत्त्वं परिकल्पयन्ति बौद्धाः न तु सत्प्रतिद्वन्द्विवस्त्वन्तरमिच्छन्ति" (छा० शा० भा० ६।२।१)

"सर्वा एताः कल्पना बुद्धिविज्ञानावभासकस्य व्यतिरिक्तस्यात्मज्योतिषोऽपह्नवादस्य श्रेयोमार्गस्य प्रतिपक्षभूता वैदिकस्य" "विज्ञानादर्थान्तरं वस्तु न चेदभ्युपगम्यते विज्ञानं घटः पट इत्येवमादीनां शब्दानामेकार्थत्वे पर्यायशब्दत्वं प्राप्नोति। तथा साधनानां फलस्य चैकत्वे साध्यसाधनभेदोपदेशशास्त्रानर्थक्यप्रसङ्गः। तत्कर्तुरज्ञानप्रसङ्गो वा" "तस्माद् विज्ञानवादिनापि न शक्यं विज्ञानव्यतिरिक्तं ज्योतिरन्तरं निराकर्तुम्" "एतेन सर्वस्य शून्यता प्रत्युक्ता" "शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते।" (बृ० शा० भा० ४।३।७)

स्वोक्त्येवापह्नुतेः कृत्स्नवस्तुनोऽतो न यत्यते ।
निराचिकीर्षया शून्यवादिनोऽविषयत्वतः ॥ (बृ० वा० ८०७) इति

एवञ्च प्रोक्तवाक्यानां सौगतमतनिराकरणपरत्वात्स्पष्टमिदं यद् भास्करादयः श्रीशङ्कराचार्यस्याशयमबुद्ध्वैव केवलं स्वमतप्रतिष्ठापनार्थं मत्सरग्रस्ततया आचार्यशङ्करं प्रच्छन्नबौद्धत्वेन तत्समर्थितमद्वैतञ्चावैदिकत्वेनाचिक्षिपुः । पद्मपुराणे च केचन विरोधिश्लोकाः प्रक्षिप्ताः । अतो नैव श्रीमद्भगवत्पादाः प्रच्छन्नबौद्धाः, न वा तैः समर्थितो निर्विशेषब्रह्माद्वयवादः शून्यवादः बौद्धदर्शनेन प्रभावितश्च । वस्तुतो निर्विशेषब्रह्माद्वयवाद औपनिषदाद्वैतवादः, यो हि उपनिषत्सु वर्णितः । स एव च भगवता श्रीमच्छङ्करेण समर्थितः प्रसारितश्च । मध्ये बौद्धदर्शनप्रभावेण च यो विरलप्रचारोऽजायत स बौद्धाभिमतं निरस्य पुनरुज्जीवितः । एतन्मते सर्वत्रापि "सदेव सोम्येदमग्र आसीत्" "अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति" (का० १।६।१३) "शिवः केवलोऽहम्" इत्यादिना सद्रूपमेव तत्त्वं प्रतिपादितम् । यत्किञ्चित्प्रक्रियासाम्यन्तु सर्वेष्वपि दर्शनेषूपलभ्यत इति न तेन क्वचित्साङ्कर्यं देशनीयम् ।

## दर्शनसर्वस्वपदार्थः

तदेतद् ज्ञप्तिशून्यस्वातन्त्र्यविवर्तवादाख्यं वादचतुष्टयमाश्रित्य प्रावर्तिष्टेदं दर्शनसर्वस्वमित्यवोचाम । तत्र किन्तावद्वस्तुतो दर्शनन्तत्सर्वस्वञ्चेति दर्शनसर्वस्वपदार्थः किञ्चित्समालोच्यते ।

तत्र दृश्यतेऽनेनेतिदर्शनम् । "करणाधिकरणयोश्चे"तिकरणेल्युट् । यज्जनितवृत्त्या विषयीक्रियते तत्त्वमिति दर्शनपदार्थः दर्शनशास्त्रम् । तस्य शब्दात्मकशास्त्रस्यान्यपदार्थत्वे तदधीनशाब्दबोधविषयीक्रियते चिदात्मा । "शास्त्रयोनित्वात्" "तत्तु समन्वयात्" इति वैयासिकसूत्राभ्यां षड्विधतात्पर्यनिर्णायकलिङ्गैश्च सर्वेषां वेदान्तवाक्यानामद्वितीयब्रह्मस्वरूपपरत्वात् । शाब्दबोधश्च शाब्दत्वे सप्रकारकत्वव्याप्तेरप्रामाणिकत्वात्तुरीयविषयतातिरिक्तविषयत्वानिरूपकवृत्त्यात्मकमानसबोधोऽवसेयः । तस्य शब्दप्रयोज्यतया शब्दकरणकत्वेऽपि दशमस्त्वमसीतिवत् साक्षादपरोक्षात्मविषयकत्वात् साक्षात्काररूपत्वं नानुपपन्नम् ।

ननु "यतो वाचो निवर्तन्त" इति शब्दाद्यगोचरत्वमवगाहमानायाः श्रुतेर्विरोध इति चेत्—न, "यतो वाचो निवर्तन्ते" इत्यादिश्रुतिरेव निषेधति वेदान्तवेद्यत्वं ब्रह्मणः श्रुतिरेव च विधत्ते । न हि श्रुतिप्रतिपादितेऽर्थेऽनुपपन्नत्वं नाम किञ्चिदित्युभयमप्युपपादनीयमेव । विषयत्वनिषेधकानि वाक्यानि भग्ना-

वरणचिद्विषयत्वलक्षणफलासंभवविवक्षया प्रवृत्तानि । विषयत्वबोधकानि तु वृत्तिजन्यावरणभङ्गलक्षणफलसंभवविवक्षया प्रवृत्तानि । तदुक्तम्—

अनाधेयफलत्वेन श्रुतेर्ब्रह्म न गोचरः ।
प्रमेयं प्रमितौ तु स्यादात्माकारसमर्पणात् ॥ इति ।

न प्रकाश्यं प्रमाणेन प्रकाशो ब्रह्मणः स्वयम् ।
तज्जन्यावृतिभङ्गत्वात्प्रमेयमिति गीयते ॥ इति ।

स्वप्रकाशोऽपि साक्ष्येव धीवृत्या व्याप्यतेऽन्यवत् ।
फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ॥

( प० द० ७।९० )

ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ।
स्वयं स्फुरणरूपत्वान्नाभास उपयुज्यते ॥

( प० द० ७।९२ ) इति च ।

तस्मान्न श्रुतिविरोधो देशनीयः । अकृतोपास्तेः शुद्धसत्त्वस्य हि भावनासचिवगुरूपदिष्टसदागमसत्तर्कादिभिस्तत् विषयिणी वृत्तिरुज्जृम्भते । कृतोपास्तेः कस्यचित्पुरुषधौरेयस्य तदपेक्षामन्तरैव वृत्तेरुल्लासेऽपि तदुपबृंहणं शास्त्रादिभिरिति न परोक्षं प्रेक्षावताम् । अत एव भगवच्छुकस्य स्वतस्तद्वृत्तेः समुल्लासेऽपि जनकादिसमीपगमनवृत्तान्तः सङ्गच्छते ।

यद्यपि वृत्तिव्याप्यत्वं तदुपहितस्यैव तथाप्युपहितानुपहितयोस्तादात्म्यात्तत्रापि तद्व्यवहारः । वस्तुतस्तु स्वात्मसिद्धमेव निद्रूपम् ।

यदि दृश्यतेऽनेनेति करणव्युत्पत्त्या चक्षुरादीन्द्रियाण्येव दर्शनपदार्थं इत्युच्येत तदापि तेषां सर्वस्वभूतं ब्रह्मैव, तेषां तदधिष्ठानकत्वेन सत्ताप्रदत्वात् ।

एवं दृश्यतेऽनुभवविषयीक्रियते यदिति कर्मणि ल्युटापि दर्शनशब्दार्थोऽवसेयः । अस्मिन् पक्षे ब्रह्मैव दर्शनपदार्थः । यदि च दृश्यते चक्षुरादीन्द्रियै र्गृह्यते इति कर्मणि ल्युटा दर्शनं प्रपञ्चस्तदा तदधिष्ठानत्वात्तत्सर्वस्वं स्वात्मभूतं ब्रह्मैव सर्वस्वम् ।

यद्यपि करणाधिकरणयोरेव ल्युट् तथापि राजभोजनाः शालय इतिवत् बाहुलकादन्यत्रापि ल्युट् सिध्यतीति शाब्दिकानां नयः । अत एव "मुखनासिकावचनोऽनुनासिकः" इत्यत्र वचने कर्मल्युडन्तता स्वीकृता शेखरकृता । तथा च "असति बाधके प्रमाणानां सामान्ये पक्षपातः" इतिनयेन करणाधिकरणातिरिक्तांशे बाहुलकत्वाश्रयणे करणाधिकरणातिरिक्तत्वाविशेषादन्यत्रापि ल्युट्सम्भवात्—दृश्यते यस्मात्, यज्जानं यदधीनं तदित्यर्थः । न ह्यधिष्ठानमन्तराऽस्य

प्रपञ्चस्य ज्ञानमेव सम्भवति। न हि निरधिष्ठानक आरोप क्वचिद् दृश्यते। यद्वा यस्मात् = यज्ज्ञानादित्यर्थः। "तस्य भासा सर्वमिदं विभाति" इति श्रुतेः।

दृश्यते प्रपञ्चो यस्मै तद्दर्शनम्। अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते। इति न्यायेन सर्वोऽपि प्रपञ्चः निष्प्रपञ्चब्रह्मवेदनार्थमेव। अत एवोक्तं भगवता व्यासेन—

बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः।
मात्रार्थञ्च भवार्थञ्च आत्मनेकल्पनाय च॥

(श्रीमद्भाग० १०।८७।२)

अत्र-आत्मने स्वस्मै स्वज्ञानार्थं स्वोपासनार्थं यद्बुद्ध्यादीनां कल्पनं विनियोगस्तस्मै" इति वंशीधरः। नेति नेति इत्यादिश्रुतयोऽप्यतद्व्यावृत्त्यैव ब्रह्मणि तात्पर्येण पर्यवस्यन्ति। न चापवादोऽध्यारोपं विना सम्भवतीति परमात्मज्ञानार्थमेव प्रपञ्चः।

एवमेव दृश्यते प्रपञ्चो यस्मिन् = अधिष्ठाने तद्दर्शनम्। यद्वा भावल्युटा दृष्टिर्दर्शनमित्यपि "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" (बृ० ४।३।२३) इत्यादि श्रुतेः। अस्मिन्पक्षे दर्शनं स्वप्रकाश-चैतन्यम्, तच्च तत्सर्वस्वमित्याद्यप्रसिद्धापि दर्शनशब्दव्युत्पत्ति विधा कस्मैचिद् यदि रोचेत। वस्तुतस्तु स्वात्मसिद्धमेव तदित्यवोचाम। तदुक्तं श्रीश्रीहर्षमिश्रैः—"श्रुतिस्तस्मिन्नविद्यादशायां पराभ्युपगमरत्या प्रमाणमित्युच्यते" (ख० स्वप्रकाशवादे) अत एवाभिनवगुप्तपादैः श्रीतन्त्रालोके "तत्र हि भावनादीनां न मुख्या कापि सङ्गतिमित्युक्तं शाम्भवोपायानुपायौ व्याख्यापयद्भिः। करणे ल्युटि दर्शनानां सर्वस्वमिति। अन्यत्र तु कर्मधारय इति। सर्वस्वमिति तु सर्वेषां स्वभूतमात्मभूतम्। "न वाऽरे सर्वस्य कामाय सर्वं प्रियं भवतीति श्रुत्याऽऽत्मन एव सर्वेषां परमप्रेमास्पदत्वात्। एवञ्च दर्शनानामपि स्वात्मभूतत्वात् सर्वस्वम्। प्रेयस्त्वेनाहमहमिकया सर्वैरेव शास्त्रैः स्तुत्यादिना प्रतिपाद्यत्वे किमु वक्तव्यं सर्वदर्शनप्रतिपाद्यत्वे इति सच्चिदानन्दरूपं प्रत्यक्चैतन्याभिन्नं परं ब्रह्मैव दर्शनसर्वस्वपदार्थः। तत्प्रतिपादनपरत्वाच्चास्य ग्रन्थस्याप्युपनिषच्छब्द इव ग्रन्थेऽस्मिन्नपि तच्छब्दप्रयोगः।

तत्प्रतिपत्तिप्रयोजकत्वस्य सर्वदर्शनेषु सद्भावेऽपि कामं दर्शनचतुष्टय्येवान्तरङ्गतांगता परिगृहीतात्र, तत्प्रतिपादनशूरत्वात्। प्रोक्तदर्शनसर्वस्वस्य च न प्रपञ्चानिर्वचनीयतामतिचुम्बनमन्तरा प्रतिपत्तिः सुकरेति तदनिर्वचनीयतायामपि दर्शनसर्वस्वव्यवहारो नानौचितिं चुम्बतीति विज्ञेयं प्रज्ञावद्भिः।

वादानां क्रमिकत्वम्—

तत्र विज्ञानात्मातिरिक्तस्य निरासकतया विज्ञानवादस्यान्तरङ्गत्वेऽपि

शून्यवादापेक्षया बहिरङ्गत्वादादौ विज्ञानवादः। तादृशविज्ञानवादस्य द्वैतनिरासकस्यापि न यथावदौपनिषद्ब्रह्मप्रतिपत्तिकरत्वमिति तत्खण्डनाय शून्यवादस्योपक्रमः। तत्रापि चितेरप्यपलापात् तत्साधनाय स्वातन्त्र्यवादस्य व्यवस्थापनम्। किन्त्वसमीक्षितोऽसावपि नालमौपनिषद्ब्रह्मप्रतिपत्तावित्यन्ते विवर्तवादः इत्येवं वादचतुष्टयक्रमसरणिः।

## प्रकरणार्थसंक्षेपः—

### विज्ञानवादार्थसंक्षेपः

मध्येग्रन्थन्तावद् ग्रन्थकृताऽऽद्यप्रकरणे सौगतीयविज्ञानवादः पूर्वपक्षतयोपक्षिप्तः। तत्र मुख्यतयाऽनुमानद्वयेन संवित्संवेद्ययोस्तादात्म्यं साधितम्। तत्र घटादिकं स्फुरणात्मकं स्फुरणविषयत्वादित्यात्मकमाद्यम्।

तत्र तत्स्फुरणविषयतात्वेनैव हेतुता विवक्षिता। स्वाप्निकपदार्थश्च दृष्टान्तः। स्फुरणात्मकत्वं स्फुरणतादात्म्यम्। तच्च तादात्म्यमत्यन्ताभेदरूपमेव मन्तुमुचितम्। वस्तुषु भासमानं वहिष्ट्वमपि ज्ञानात्मकमेवेदृश्येव च गतिः शशशृङ्गादेरपि। समुदायस्य बुद्ध्यात्मकायामेव पर्यवसानेन वनादिविषयज्ञानस्यापि साकारत्वमेव। संशयोपपदानार्थमपि ज्ञानस्य विचित्राकारतैव स्वीकर्तुमुचिता। ज्ञाने चेमौ नीलपीतावित्यात्मकेऽनुभूयमानस्य वैजात्यस्य चित्रशब्देनोच्यमानत्वाज्ज्ञानस्य चित्राकारत्वमपि शक्यसमर्थनम्। कादाचित्वादिकमपि ज्ञानस्य बाह्यविषयमन्तरैव भवितुमर्हति न तदर्थं बाह्यमङ्गीकार्यम्। एवमवयव्यादिरपि न ज्ञानातिरिक्तपदार्थः, परमाणुरपि न शक्यसमर्थनः, ज्ञानाकारतायामनुभवविरोधोऽपि नास्ति।

द्वितीयमनुमानञ्च विमतं ज्ञानाभिन्नं ज्ञानाविषयकप्रतीत्यविषयत्वादित्यात्मकम्। ज्ञानञ्चात्र क्षणिकमेव न नित्यमेकञ्च, निराकारज्ञानस्यानुभवबाधितत्वेन लाघवादेरकिञ्चित्करत्वात्। बौद्धाचार्याणामप्यत्रैव निर्भरः, इत्यादयो वहुविधा विषयाश्चर्चिता विज्ञानवादे।

### शून्यवादार्थसंक्षेपः

द्वितीयप्रकरणे शून्यवादः परिष्कृतः। तत्र ज्ञानीयसाकारवादं तिरस्कृत्य ज्ञानत्वशून्यत्वादीनामप्यनिर्वचनीयत्वं प्रदर्शितम्।

एतन्मते निर्वाणमपि न पारमार्थिकमिति "निर्वाणमप्यायुष्मन् सुभूते मायोपमं स्वप्नोपममि"त्यादितदुक्त्यैव प्रदर्श्य—वेदान्तिमते कस्यचित्परमार्थतत्त्वस्य स्वीकृतत्वेन तस्य परिशेषावश्यम्भावेन तदात्मकतया मुक्तेः पारमार्थि-

कत्वोक्तिसम्भव एव। शून्यवादिमते तु कस्यचित्तत्वस्यापरिशेषितत्वेन न केनाप्यात्मना कस्यापि तात्विकत्वसम्भवः। अत एव न मुक्तौ ज्ञानस्याप्यवस्थानमित्याद्युक्तरूपेण वेदान्तशून्यवादयोस्तत्त्वविषयकसमीक्षणं तद्वैलक्षण्यञ्च प्रतिपादितम्। एवमेव भामतीकारस्य शून्यताविषयकपारमार्थिकत्वोक्तेः समन्वयः, शून्यत्वसाधकयुक्तयः प्रतीत्यसमुत्पादपरिष्कारो निरधिष्ठानकभ्रमस्योपपत्तिरित्यादिविषयविवेचनां कृतवन्तः।

## स्वातन्त्र्यवादार्थसंक्षेपः

तृतीयं स्वातन्त्र्यवादः। तत्र मुख्यतया—घटमहमज्ञासिषमित्याद्यनुभवानुरोधेन ज्ञानक्षणिकत्वं तिरस्कृत्य न स्वभावविशेषकल्पनया तादृशाकारसम्भवः क्षणिकविज्ञानीयस्वभावविशेषकल्पनेऽप्रामाणिकानन्तस्वभावविशेषकल्पनागौरवप्रसङ्ग आपद्यत इत्यकामेनापि कालानच्छिन्नस्य चितो नित्यत्वं स्थायित्वमबाध्यत्वमनलीकत्वं स्वतःसिद्धत्वञ्च स्वीकरणीयमेवेत्युक्तम्।

वेदान्तसिद्धान्तात्स्वातन्त्र्यवादस्य वैषम्यम्—(१) वेदान्तमते विश्वोत्तीर्णस्य प्रकाशस्यैश्वर्यशून्यत्वम् [विमर्शानात्मकत्वम्]। स्वातन्त्र्यवादे तु तस्य विमर्शात्मकत्वम्। (२) स्वप्रकाशत्वमपि न वेदान्तवत् स्वव्यवहारे परानपेक्षत्वमात्ररूपम्, अपि तु केवलस्वात्मभाने स्वात्मकविश्वाकारतया भाने च परानपेक्षत्वरूपम्। (३) वैषम्यनैर्घृण्यपरिहारोऽपि न कर्मसापेक्षतयैवापि तु स्वास्वातन्त्र्यवशादेव। वैषम्याद्यात्मनापि तस्याः संविद एव भासमानत्वात्। शिवशक्तिनरात्मकतत्त्वत्रयप्रतिपादकत्वादिदं दर्शनं त्रिकदर्शनमित्यपि व्यवह्रियते। प्रपञ्चस्य न सोपादानकत्वम् अपि तु निरूपादानकत्वमेव। अविद्या स्वरूपतिरोधायिका शक्तिरेव न त्वन्या। षट्त्रिंशत्तत्त्वादिविभागः। शक्तिशक्तिमतोरत्यन्ताभेदादद्वैतमेव तत्त्वं युक्ततरन्न तु विशिष्टाद्वैतवादसम्भव इत्यादिविषयान् पर्यालोचितवन्तः।

## विवर्तवादार्थसंक्षेपः

तुरीये विवेचितो वेदविदां विवर्तवादः। तत्र मुख्यतया–ईश्वरानुग्रहसहकृतमिथ्यात्वनिश्चयस्य वैराग्योत्पादकतया मुक्तिप्रदाद्वैतसाक्षात्कारविशेषोपयिकाद्वैतप्रतिपत्तिफलकतया च मिथ्यात्वोपपादनस्य सार्थक्यम्। अद्वैतप्रतिपत्तिश्च न द्वैतसत्यत्वे सुकरेति स्वातन्त्र्यवादिभिरपि द्वैतसत्यत्वं न युक्त्यागमानुरोधाद्वक्तुं शक्यं तयोरपि विश्वमिथ्यात्व एवानुकूल्यात्।

सत्यत्वमिथ्यात्वप्रतिपादनपराणामागमवचनानां परस्परव्याघातेन सत्ता-

त्रयपक्षस्वीकारेऽपि क्षत्यभावादागमिकैरपि विवर्तवादोऽनुसरणीयः। बाह्याभास-सन्भिन्नचैतन्यरूपाणां ज्ञानेच्छक्रियाशक्तीनामपि विवर्तान्तःपातित्वमेव।

चिच्छब्दस्य ब्रह्मपर्यायतया चिच्छक्तिरेव ब्रह्म। शक्तिशब्दस्तु तत्त्व-पर्यायः "स्वरूपप्रतिष्ठा वा चितिशक्तिः कैवल्यम्" इत्यादौ तथा दर्शनात्। चितिरिति शक्तिरिति स्त्रीलिङ्गशब्दप्रयोगस्तु भावनाविशेषायत्तः। तस्यैव ब्रह्मणः पारमार्थिकत्वम्, तदन्यस्य प्रपञ्चस्य विचारासहत्वेन मिथ्यात्वम्। तच्च वेदविदामिव न शैवानामपि सर्वथानभिमतम्।

सूक्ष्मेक्षया समीक्षणे विवर्तवादस्वातन्त्र्यवादयोः साम्यं सम्भवति। प्रपञ्चश्चित्प्रतिबिम्ब इति स्वातन्त्र्यवादसिद्धान्तस्य—प्रतिबिम्बत्वस्य निर्वक्तुम-शक्यतया दर्पणप्रतिबिम्बयोरैक्यमिव चित्प्रतिबिम्बयोरैक्यमेव। तयो र्भासमान-भेदस्तु मिथ्यैव। चितः पारमार्थिकत्वं प्रपञ्चस्य च चिद्भिन्नत्वाभिन्नत्वाभ्यां दुर्निरूपत्वाद् दुर्गतिरेव (अनिर्वचनीयत्वमेव) इत्यत्रैव पर्यवसानम्।

प्रतिबिम्बस्य दर्पणात्मकत्वं न तु बिम्बात्मकत्वम्, नापि प्रतिबिम्बो बिम्बाभिन्नो बिम्बाजनकाजन्यत्वादित्यनुमानं मानं तत्र बिम्बाभेदसिद्धिं बिना बिम्बाजनकाजन्यत्वासिद्धेः, मायायाश्च तत्र जनकत्वसम्भवादिति सर्वं ब्रह्मैव, न तु ब्रह्म सर्वमेवेति ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वमेव पर्यवस्यति।

मिथ्यात्वञ्च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपम्। एतादृश-मिथ्यात्वं विवर्तवादमाश्रित्यैव सम्भवति, न तु परिमाणवादे। अत एव भास्कर-रायोक्तपरिणामपरिणामिभावोऽपि न युक्तिसहः। अन्यानपेक्षया तेन तेन रूपेण भासमानत्वरूपं स्वातन्त्र्यमपि सकलागमसिद्धं स्वीकर्तुं शक्यमेव, तेषां तेन तेन रूपेण भासमानत्वमपि चिन्मात्रावशेष एव नत्वन्यदिति "तथा तथा भास-मानत्वमपि वस्तुतो न किञ्चिद् अपि त्वभेदाख्यातिमात्रमेतत्" इत्यादिना तैरेवोक्तत्वात्।

एवं पूर्वाहन्तामादायापि न तयोर्वैषम्यम्, तैस्तत्र जड़स्याहङ्कारस्या-विवक्षितत्वात्। एवं सृष्ट्यादिपञ्चविधकृत्यकारित्वमादायापि न वैषम्यम्, तस्याविद्यादशायां श्रुत्यन्तविद्भिरपि स्वीकारात्। चिन्मात्रतत्त्वे स्वातन्त्र्य-वादिरपि तस्य स्वीकर्तुमशक्यत्वात्।

तेषां केवलस्वव्यवहारे स्वात्मकविश्वात्मना व्यवहारे चेतरानपेक्षत्वरूपं स्वातन्त्र्यमपि न वैषम्यसम्पादकम्, तादृशस्वातन्त्र्यस्याविद्यादशायामस्माभिरपि स्वीकारात्।

मिथ्याभूतस्यापि प्रपञ्चस्य चिद्भास्यतया वा चिदधिष्ठानकतया वा

चिदात्मकताया वक्तुं शक्यत्वात् वेद्यांशविशिष्टविमर्शस्य मायायामेव पर्यवसानसम्भवात्। माया तन्मते स्वरूपावारिका शक्तिरेव षट्त्रिंशत्तत्त्वान्तर्गता प्रकृतिः, तदतिरिक्ता वा त्रिगुणात्मिका। भेदप्रथायां मायाशब्दप्रयोगस्तु कार्यकारणयोरभेदमाश्रित्यैव।

शब्दब्रह्मवादस्यापि विवर्तवाद एव पर्यवसानम्। तात्त्विकदृष्ट्या विभिन्नप्रस्थानकानां सर्वेषां शास्त्राणां परमेश्वरे एव तात्पर्यसत्त्वेनब्रह्माद्वैतवाद एव पर्यवसानसम्भवात्। उक्तञ्चैतत्—

"न हि ते मुनयो भ्रान्ताः सर्वज्ञत्वात्तेषाम्, किन्तु बहिर्विषयप्रवाहाणामापाततः परमपुरुषार्थे प्रवेशो न सम्भवतीति नास्तिक्यनिराकरणाय तैः प्रस्थानभेदाः प्रदर्शिताः। सर्वेषां प्रस्थानकर्तृणां मुनीनां विवर्तवादपर्यवसानेनाद्वितीये परमेश्वर एव वेदान्तप्रतिपाद्ये तात्पर्यम्। (प्रस्थानभेद)।

एवञ्च शब्दब्रह्मणोऽप्यद्वैतब्रह्मण्येव पर्यवसानम्, तस्य चिन्मात्रस्वरूपत्वात् शब्दरूपता त्वौपाधिकी। विवर्तवादमाश्रित्य प्रपञ्चस्य भ्रान्तित्वस्वीकारेणाप्तकामस्यापि परमेश्वरस्य तत्सर्जने प्रवृत्तिः सम्भवति। अत एव च न वैषम्यनैर्घृण्यमपि। ज्ञानस्य भ्रान्तित्वमपि युक्तिसङ्गतमेव। न च चिदचिदुभवविशिष्टाद्वैतोपपादनार्थं शरीरशरीरिभावोऽपि वक्तुं शक्यः, शरीरत्वस्य दुर्निरूपतया तस्य निर्वक्तुम शक्यत्वात्।

तथा च वस्तुतोऽद्वैतब्रह्मैव पारमार्थिकं तत्त्वम। तस्यास्त्येका मायाख्या शक्तिः। सा च वस्तुतस्ततोऽभिन्नापि कल्पितभेदवती। ब्रह्मणः सत्यत्वेन तु तद्रूपेण सा सत्येत्युच्यते। ब्रह्मातिरिक्तत्वस्य मिथ्यात्वेन तेन रूपेण सा मिथ्येति कथ्यते। प्रपञ्चस्यापि तया कल्पितत्वादियमेव गतिः। सा च शक्तिरनुपपन्नार्थप्रदर्शकत्वरूपस्वातन्त्र्यशालितयाऽपर्यनुयोज्या सत्यत्वे मिथ्यात्वे वा स्वानुरूपान् भ्रान्तान् भ्रमविषयान् भ्रमांश्च नैकविधान् स्फारयति। स्वमेवोद्भासितेन चोपायकलापेन कांश्चिन्मुक्ततया भासयति। वस्तुतस्तु न बन्धो न वा मोक्षः। बाधितायाञ्च तस्यां ब्रह्मसाक्षात्कारेण चिदद्वैतमेवावशिष्यते। तादृशचिदवशेष एव च मोक्षः। तत्रापि भावाद्वैतादिपक्षेषु संतुष्टेरभावाद् बद्धत्वादिभ्रमनिवृत्तिफलकपरिपूर्णात्मकताबोधोदयस्य परमपुरुषार्थत्वमित्येतत्सर्वमपि प्रत्यपादि।

## ग्रन्थकृतांपरिचयः

तस्यास्यानिर्वचनीयतासर्वस्वभूतचिदद्वैतवादप्रतिपादकग्रन्थरत्नस्य रचयितारः सन्त्यस्माकं प्रातःस्मरणीयाः सहस्रदलपद्मश्रृङ्गाटाध्यक्षाः सकलभूमण्डलमण्डनायमाना विदितवेदितव्याः पूज्यपादाः श्रीमच्छंकरचैतन्यभारती-

स्वामिपादाः। तैरेव स्वात्मचितिचरणार्चनसमुपजातचमत्काररहस्यप्रकटनाय प्रतिसिद्धोऽप्यहं तेषां विषये किञ्चिदिव प्रकाशयामि।

कदा कतमं जनपदं जन्मनाऽलञ्चकार ग्रन्थकार इत्यादिजिज्ञासायां प्रामाणिकजनमुखेभ्यो यथावगतं तथैव पुरस्करोमीतिहासरसिकानां प्रमोद-जननाय।

त इमे निजजनुषा काश्मीरप्रदेशान्तर्गतग्रामविशेषे कमपि द्विजकुलमल-ञ्चक्रुः। स्वनिर्वाणतिथेः षण्मासेभ्यः प्रागेव तैरेवोक्तं कस्मिंश्चित्प्रसङ्गे—यत् द्वाचत्वारिंशद्वर्षाणि व्यतीतानि जीवनस्य म इति हातुमिच्छामि भौतिकीमि-मां तनुं, किमतोऽधिकजीवनेनेति। तेनैतेषां निर्वाणतिथितः पूर्वकालगणनाक्रमेण १९१५ ई० तमः १९१६ ई० तमो वा वर्षकालः पूज्यपादानाभाविर्भावकाल इति निश्चीयते।

बाल्यप्रभृत्येव च प्रज्ञाप्रकर्षेण जम्मूनगरे श्रीरघुनाथसंस्कृतमहाविद्यालये कृतवसतयः कंचिन्निमित्तीकृत्य कानिचिच्छास्त्राण्यधीत्यावशिष्टानि वाराणस्या-मागत्याध्यगीषत। चिन्तामणिमन्त्रचिन्तनसंतुष्टश्रीशारदाप्रसादासादितशेमु-षीकैरेतैरचिरादेव सर्वाण्यपि साङ्गोपाङ्गनिगमागमशास्त्राणि स्मारं स्मारं लोकोत्तरं विलक्षणं वैदुष्यमवापुर्यत्र तैर्विराचिताः ग्रन्था एव प्रमाणम्।

एतेषां संन्यासगुरवः श्रीविश्वरूपाचार्याः (श्रीसुरेश्वराचार्याः) आसन्। तेषामेव नाम्ना एतैः संन्यासः परिगृहीतः अत एवैतैः—

यदीयवाचं विमलां जयोद्भटामवेत्य तर्कैर्निरवर्ति भारती।
चिदेकतानात्मना निरञ्जनः स विश्वरूपो विमलीकरोतु नः॥

इति शारदोपक्रमे

सादरं तं नमस्कुर्वे विश्वरूपं तु भारतीम्।
पादाम्बुजेषु यस्यासन् शिष्यालयः समन्ततः॥

इति ख्यातिवादोपक्रमे च श्रीविश्वरूपाचार्या नमस्कृताः। अत एव चैते भारतीति पदवीकाः। विश्वरूपाचार्याणां तत्पदवीकत्वात्। यन्नाम्ना संन्यासो गृह्यते स एव मुख्यो गुरुरिति यतिसम्प्रदायः। तत्संस्कारकर्तारस्तु श्री जयेन्द्र-स्वामिपादा, इत्येतेषां लेखादेवावगम्यते। तद् यथा—

शमं यदीयं परिचिन्त्य कोविदा जयन्ति शाम्यन्मनसः परे स्थिताः।
स शान्तधाम्नां निवहो दयावहो दिशन्परां पातु जयेन्द्रशब्दितः॥इति।

शोभा न द्वैतशून्ये परमसुखतया श्रूयमाणेऽपि देवे,
विद्यामाद्यां विना यां सकलसुरनुतां सापि येषां प्रसादे।

इज्यासाम्राज्यभाजोऽगणितगुणगणाञ्शम्भुभावाद्भुतांस्तान्
श्रीविद्यानन्दनाथान् द्रविड़यतिवरान् मन्महे नादरैः कैः ॥

इति तेषामेवोक्त्या श्रीविद्यानन्दस्वामिपादैर्हि एते काञ्चित्पद्धतिमुपदिश्य चितिचरणार्चने नियोजिता इति प्रतीमः।

किञ्चित्कालपर्यन्तं कनखलक्षेत्रे भगवत्याः श्रीभागीरथ्यास्तटे कानिचिद् दिनान्यवात्सुः पञ्चवटीक्षेत्रे श्रीअखण्डानन्दमहाभागानां सानुनयनिवेदनमङ्गीकृत्य, ततः दिल्लीनगरोपकण्ठं श्रीशुक्रतालं स्ववसत्याऽलङ्कृत्य पुनर्विश्वेश्वरराजधान्यां वाराणस्यामवशिष्टजीवनं व्यातिषुः। तदनन्तरं न क्वापि गतवन्तः। अत्रैव ललिताघट्टस्थश्रीराजराजेश्वरीमन्दिरे यावज्जीवनं काशिनिवासकृतसंकल्पाः महात्मगणं विद्वद्वृन्दञ्चाध्यापयन्तः काशीवासिश्रद्धालुजनान्दर्शनादिना पवित्रयन्तः समुद्धारयन्तश्च न्यवात्सुः, प्राणैषिषुश्चात्रैवानेकविधान्निबन्धान् पण्डितकुलेषु प्रसिद्धान्, ये नामाद्य लोके तदीयवैदुष्यपरिचायकास्तदीयाध्यापनकौशलसाक्षितामावहन्ति, द्रढयन्ति च सर्वतन्त्रस्वतन्त्रत्वमेतेषाम्। तेष्वन्यतमाः ग्रन्थाः—खण्डनखण्डखाद्यस्य शारदाटीका, तट्टीका राजहंसः, दर्शनसर्वस्वम् (मौलिको ग्रन्थः) तट्टीका राजहंसः, ख्यातिवादः (मौलिको ग्रन्थः) इत्यादयः।

एतैरध्यापितेषु महात्मसु विद्वत्सु चानेकेषु विनेयवर्गेषु सत्स्वपि शिक्षादीक्षाभ्यां स्वात्मसात्कृतास्तेषां मुख्यानुग्राह्यतां भजन्तो मदीयदृशाऽवच्छेदकशरीरभेदेऽपि त एवेति मदाराध्यपादा विराजन्तेऽत्रैव स्वचरणारविन्दरेणुपवित्रितेऽस्मिन् श्रीराजराजेश्वरीमन्दिरस्थकुटिरे ये श्रीशिवशङ्करचैतन्यभारतीस्वामिपादनाम्ना लोके व्यवह्रियन्ते। अन्येऽपि तदध्यापनशिक्षादिना वैदुष्यमवाप्ताः केचिद् यथा ज्ञानमुपन्यस्यन्ते, यथा श्रीचरणानां कृपाभाजना विरक्ताश्च श्रीदयालुपुरिमहाभागाः, निर्वाणपीठाधीश्वराः महामण्डलेश्वराः श्रीकृष्णानन्दस्वामिमहाभागाः, महामण्डलेश्वराः श्रीमहेश्वरानन्दस्वामिमहाभागा (मुम्बईस्थाः), आवाहनपीठाधीश्वरा महामण्डलेश्वराः श्रीअखण्डानन्दस्वामिमहाभागाः, महामण्डलेश्वराः श्रीगणेशानन्दस्वामिमहाभागाः, महामण्डलेश्वराः श्रीस्वरूपानन्दस्वामिमहा भागाः, श्रीपूर्णानन्दस्वामिमहाभागाः, श्रीदयानन्दस्वामिमहाभागाः, पण्डितप्रवरानैयायिकधुरन्धराः श्रीकेशवमिश्राः सेवायां रताश्च श्रीमहानन्दस्वामिमहाभागाः, श्रीप्रकाशानन्दमहाभागाः, श्रीगोपालानन्दमहाभागाः प्रभृतयः।

नात्युक्तिं किञ्चिद् वच्मि किन्तु वस्तुस्थितिरेषा यत् "ब्रह्मविद् ब्रह्मैव भवतीत्युक्त्यनुसारेण ब्रह्मवित्तया सर्वविधवासनाशून्यत्वेन "वासनाशून्यसंविद्" इति शिवलक्षणलक्ष्यतया च ते साक्षाच्छिवस्वरूपा एवासन्। अत्रैते श्लोकाः—

श्रीशारदाख्यविषमाद्भुतटीकया य:
ग्रन्थं व्यभूषयत्खण्डनखण्डखाद्यम् ।
चैतन्यभारतिपदान्वित -- शङ्कराख्यो
वैराग्यमूर्ति -- यतिराडभवत्तपस्वी ॥१॥

टीकां यो विमलां सदा सुविषमां श्रीहर्षमिश्रैः कृते
ग्रन्थे खण्डनसंज्ञकेऽतिकठिने सर्वार्थसम्पत्करीम् ।
सञ्चक्रे कृतसम्मतिं बुधवरैः श्रीबालकृष्णाभिधैः
वन्दे तं सततं यतीशविदितं श्रीशङ्करं सद्गुरूम् ॥२॥

तर्कं यं प्रवदन्ति तर्करसिकाः साक्षादयं गौत्तमो,
योगे योगविदः पतञ्जलिरिति प्रायेण संचक्षते ।
सांख्ये सांख्यविशारदाश्च कपिलं ज्ञानाकरं सञ्जगुः,
वेदान्ते विदुषां गणो गुरुवरं व्यासोऽयमित्याह यम् ॥३॥

मीमांसानतमस्तकान् गुरुमतं स्वीकुर्वतो नित्यशः,
भट्टाचार्यपदानुगांश्च नितरां मीमांसया मांसलान् ।
कुर्वन्तं यतिपुङ्गवं सुमनसो यं जैमिनिं मेनिरे,
वन्दे तं सततं यतीशविदितं श्रीशङ्करं सद्गुरूम् ॥४॥

त्यागे यस्य शुकोऽपि याति लघुतां योगीशवन्द्यो ध्रुवं,
वार्ता केतरयोगिनां त्रिभुवने प्रख्यातिमालिङ्गताम् ।
श्रीविश्वेशपदारविन्दनिरतं शान्तं प्रदान्तं प्रभुं,
वन्दे तं सततं यतीशविदितं श्रीशङ्करं सद्गुरुम् ॥५॥

निबन्धं राजहंसं यो वेदान्तार्थप्रकाशकम् ।
तथा दर्शनसर्वस्वं रचयित्वान्वकम्पत ॥६॥ इति ।

एवञ्चैतेऽत्रैव श्रीराजराजेश्वरीमन्दिरे १९५८ ई० तमे वर्षे आषाढ़-कृष्णद्वादश्यां शनिप्रदोषेऽवच्छेदकपाञ्चभौतिकं शरीरं परित्यज्य ब्रह्मभावमासेदुः ।

**चित्कलाविषये किञ्चित् —**

यद्यपि ग्रन्थकारैरेवास्मिन् ग्रन्थे राजहंसनाम्नी टीकापि व्यरचि, तथापि तस्याः संक्षिप्ततया ग्रन्थस्यास्य दुरुहतामालक्ष्य तद्भावाविर्भाविन स्वमतिमल-प्रक्षालनार्थमस्ति ममाप्ययं कश्चित्प्रयासः चित्कलारूपो भारतारूपश्चेत्येताभ्या-मुपवृंहितं सटीकं ग्रन्थरत्नमिदं दर्शनसर्वस्वं चिरप्रतीक्षितं सप्रमोदं प्रकाश्यते ।

वस्तुतश्चित्कलापदार्थ आगमे—श्रीपरमशिवमहाभट्टारकस्य चित्सुधा-समुद्रस्य पूर्णस्वरूपस्य ज्ञानक्रियाशक्त्योरनुन्मीलनावस्थायां किञ्चित्स्पन्दनरूपं

तत्संघट्टात्मकं वर्णानां मूलकारणमकारादिहकारान्तवर्णप्रत्याहारलक्षणं पराहन्तास्वरुपमहमिति चिन्मयं श्रोतः प्रथमं विकाशमापन्नं चित्कलेति गीयते। ततः सिसृक्षयाऽवियुक्त ज्ञानक्रियात्मकं परमशिवेच्छयैव परस्परगुणप्रधानभावेन विभिन्नं सरिद्युग्मं प्रसृतम्। ज्ञानसरितश्चित्त बुद्धिलक्षणान्तःकरणस्रोतः प्रसृतम्, तस्मात् कर्मेन्द्रियप्रणाल्यो निर्गताः। यत उक्तम्—"न क्रिया रहितं ज्ञानं न ज्ञानरहिता क्रिया" इति। तत्र ज्ञानशक्तिस्रोतो द्वारा शिवार्णवप्रवेशोपायं निर्णेतुमुद्यताः शैववेदान्तसांख्यतार्किकादयः, क्रियाशक्तिस्रोतोद्वारा निर्णेतुमुद्यताः पातञ्जलहठयोगिपूर्वमीमांसादयः इति। तस्याश्चित्कलाया भगवत्या इदमेव परं माहात्म्यं यत्स्वभित्तावेव सर्ववाङ्मयं तदर्थञ्च नामरूपात्मकमाभासयति, आप्यायति संहरत्यनुगृह्णातीति। तस्या गुरुरूपाया एव स्रोतोद्वयमवगाहमानेन मया यत्किञ्चिद् मलीमसधियोपलब्धं तदिह लेखनप्रणाल्योपनिबद्धम्। वस्तुतः प्रागुक्तदर्शनसर्वस्वपदार्थप्रकाशनक्षमा सैव निरुक्तस्वरूपा भगवती चित्कलैवेति तद्भावनया तदर्थप्रकाशनप्रयासरूपत्वादस्याष्टीकायाश्चित्कलेत्यन्वर्थं नाम। अत एवारम्भे चित्कलां कलयामीत्येवोक्तं मयका। तत्रासौष्ठवं किञ्चित् तन्मलीमसधियः, सौष्ठवन्तु तस्या एव गुरुरूपाया इति न मम वराकस्य सौष्ठवमसौष्ठवं वा किञ्चित्, तथापि "गच्छतस्स्खलनं क्वापि भवत्येव प्रमादतः" इति न्यायेन स्खलितं मे विद्वद्भिः क्षन्तव्यम् यतो नेदमपूर्वं क्षन्तव्यम्।

मनो मलीमसं प्राप्य दोषदृष्टिं न हास्यति।
विश्वमिथ्यात्वदृष्टिस्तु नो न खेदयति मनः॥
अथवाऽस्तु प्रबन्धोऽयं मध्यमानां फलेग्रहिः।
गुणदोषदृशिर्दोष इति सन्तः प्रचक्षते॥

**कृतज्ञताप्रदर्शनम्—**

तदत्र नास्ति कश्चन तादृशशब्दः येन पूज्यपादानां विदितवेदितव्यानां साक्षाच्छिवस्वरूपाणां श्रीमद्गुरुचरणानां श्रीशिवशङ्करचैतन्यभारतीस्वामिपादानां कृते कृतज्ञतां प्रकटयेयम्, येषामादेशेनाहमेतस्मिन् दुरुहकार्येप्रवृत्तः, पूर्णताञ्चगादेष ग्रन्थो येषां कृपाकणेन। बभाषिरे च येभ्यः श्रीप्रभुपादाः "प्रतिकृतिरियं मदीया, तदवच्छेदेनाहमेवाध्यापयिष्ये" इति मां प्रति। वस्तुस्थितिरेषा यत्तेषां यावज्जीवनमधमर्णतां परिहातुमसमर्थोऽहमिति प्रणतिं पादपद्मयोः सादरं समर्पये।

तदनु च श्रीचरणैरनुगृहीतां तां मातरं श्रीमतीं दुर्गादेवीं संस्मरामि नमामि च सादरं ययाऽहं वात्सल्यस्नेहपरिपूर्णया लालितः पालितश्च, यदीय स्नेहेनाप्लायितश्च मातृवत्त्वमन्वभवम्।

ततः सादरं सविनयं प्रणतो विनिवेदयामि महामण्डलेश्वरेभ्यः श्रीगणेशानन्दगिरिस्वामिमहाभागेभ्यः कृतज्ञताम्, यैरेतस्मिन् कार्येऽहं प्रेरितः साहाय्यञ्चाचरितमस्य ग्रन्थस्य प्रकाशनकार्ये द्रव्यप्रदानेन ।

एवं महाशक्तिपीठाधीश्वराः स्वामिश्रीसर्वानन्दसरस्वत्यः, श्रीस्वामिदयालुपुरिमहाभागानां कृपाभाजनाः वाक्कीला रामगोपालशर्माणः, श्रीमाधवोपनिषदाश्रमाध्यक्षाः श्रीपुरुषोत्तममहाभागाश्चेत्येतैर्द्रव्यप्रदानेनैतस्मिन् कार्ये साहाय्यं कृतमिति न विस्मरणार्हम् । प्रेयान्सः श्रीप्रज्ञानानन्दसरस्वत्यो ललितकुमारचतुर्वेदिनश्चैत एतस्मिन् कार्ये प्रूफसंशोधनादिना सपरिश्रमं बहुविधं साहाय्यमकार्षुः, सस्नेहमहं समेषामेषामभ्युन्नतिं कामये, तदर्थं श्रीविश्वेश्वरञ्च प्रार्थये ।

ग्रन्थस्यास्य मुद्रणकार्ये आनन्दकाननमुद्रणालयाध्यक्षाणां श्रीविश्वम्भरनाथद्विवेदमहाभागानां तत्रत्यकार्यकर्तॄणाञ्च पूर्णसहयोगोऽभूदिति तदर्थं ते धन्यवादार्हाः ।

## समर्पणम्

अन्ते च विश्वमयविश्वोत्तीर्णचिद्घनपरमानन्दैकस्वरूपाखिलविश्वगुरू-श्रीविश्वेश्वरपादारविन्दयोः सादरं सविनयं ग्रन्थरत्नमिद समर्प्य प्रार्थये—

श्रीविश्वेश ! मया किञ्चि-
च्छक्यते न हि साधनम् ।
इयन्तु वाङ्मयीपूजा-
कारिता स्वीकरोतु ताम् ।
कृतकृत्यस्य तृप्तस्य
तव किं क्रियते मया
बहिर्वाभ्यन्तरे वापि
भवता भावो हि गृह्यते ।। इति शिवम् ।।

सतामनुचरः
**सुधांशुशेखरशास्त्री**
कार्तिकपूर्णिमा सं० २०४७
( २।११।१९९० )



श्रीमच्छङ्करचैतन्यभारती भारतीस्वयम् ।
धर्मज्ञानवैराग्य - योगमूर्ति - विराजते ॥

॥ ॐ ॥

पूज्यपादानामस्मद्गुरूचरणानाम्

# शुभाशीर्वचांसि

आमूलं मौलिपर्यन्त
प्रबन्धोऽयं विलोकितः ।
जिज्ञासूनामहं मन्ये
मनांसि रमयिष्यति ॥

शमाशिषा युनज्मि त्वां
शिवेन वचसा सदा ।
चित्कला सा महादेवी
मङ्गलाय समस्तु ते ॥

श्रीगुरुचरणरेणुः
स्वा० शिवशङ्करचैतन्यभारती

॥ ॐ ॥

## राजहंससमेते दर्शनसर्वस्वेऽनिर्वचनीयतावादात्मनि

## संक्षिप्ता

## विषयानुक्रमणिका

•

ॐ

## संकेतसूची

| | |
|---|---|
| अ० च० | अद्वैतसिद्धिचन्द्रिका |
| अ० ब० सं० | अद्वयबज्रसंग्रहः |
| अनु० | अनुत्तरप्रकाशिका |
| अनु० गा० | अनुमिति गादाधरी |
| आ० त० वि०/आ० वि० | आत्मतत्त्वविवेकः |
| ई० | ईशावास्योपनिषद् |
| ई० प्र० | ईश्वरप्रत्यभिज्ञा |
| ई० प्र० वि० | ईश्वरप्रत्यभिज्ञाविमर्शिनी |
| ऐत० | ऐतरेयोपनिषद् |
| कठ०/का० | कठोपनिषद् |
| का० पु० | कालिकापुराणम् |
| कू० पु० | कूर्मपुराणम् |
| केन० | केनोपनिषद् |
| ख० | खण्डनखण्डखाद्यम् |
| गी० | गीता |
| गी० भा० | गीताभाष्यम् |
| च० शा० | चरकशास्त्रम् |
| छा० | छान्दोग्योपनिषद् |
| जै० | जैमिनीयदर्शनम् |
| जै० सू० | जैमिनिसूत्रम् |
| तत्त्व सं० | तत्त्वसंग्रह |
| तन्त्रा०/त० | तन्त्रालोकः |
| ता० र० | तार्किकरक्षा |
| तेजो० वि० उ० | तेजोबिन्दूपनिषद् |
| तै० | तैत्तरीयोपनिषद् |
| त्रि० र० | त्रिपुरारहस्यम् |
| त्रि० र० म० | त्रिपुरारहस्यमहात्म्यखण्डम् |
| त्रि० र० ज्ञा० | त्रिपुरारहस्यज्ञानखण्डम् |
| त्रिं० | त्रिंशिका |
| दे० अथर्व० | देव्यथर्वशीर्षम् |

| | |
|---|---|
| नि० षो० | नित्याषोऽशिकार्णव |
| निराल० उप० | निरालम्बोपनिषद् |
| नैष० | नैषधमहाकाव्यम् |
| न्या० वि० | न्यायबिन्दुः |
| न्या० सू० | न्यायसूत्रम् |
| प० सा० | परमार्थसारः |
| परमा० | परमानन्दतन्त्रम् |
| पं०/पं० द० | पञ्चदशी |
| पुरश्चर्य० | पुरश्चर्याणवः |
| पू० मी० | पूर्वमीमांसा |
| प्रक० | प्रकरणपञ्चिका |
| प्र० वा० | प्रमाणवार्तिकम् |
| प्र० | प्रश्नोपनिषद् |
| बृह० | बृहदारण्यकोपनिषद् |
| बृ० वा० | बृहदारण्यकभाष्यवार्तिकम् |
| बो० प० | बोधपञ्चदशिका |
| बो० च० ब० | बोधिचर्यावतारः |
| ब्र० सू० | ब्रह्मसूत्रम् |
| ब्र० सू० भा० | ब्रह्मसूत्रभाष्यम् |
| ब्र० सू० शा० भा० | ब्रह्मसूत्रशाङ्करभाष्यम् |
| भाग० | भागवतम् |
| भा० | भाष्यम् |
| भा० दी० | भाट्टदीपिका |
| भा० चि० | भाट्टचिन्तामणिः |
| म० शा० | मध्यमिकशास्त्रम् |
| महा० म० | महार्थमञ्जरी |
| म० भा० | महाभारतम् |
| महा० भा० | महाभाष्यम् |
| माण्डू०/मा० उ० | माण्डूक्योपनिषद् |
| मा० का० | माण्डूक्यकारिका |
| मा० | मानसोल्लासः |

| | |
|---|---|
| मा० मे० | मानमेयोदयः |
| मालि० वा० | मालिनीवार्तिकम् |
| मी० | मीमांसादर्शनम् |
| मी० न० वि० | मीमांसानयविवेकः |
| मी० कौ० | मीमांसाकौस्तुभः |
| मुण्ड०/मु० | मुण्डकोपनिषद् |
| योग० द० | योगदर्शनम् |
| यो० वा० | योगवासिष्ठम् |
| यो० हृ० | योगिनीहृदयम् |
| यो० हृ० से० | योगिनीहृदयसेतु |
| ल० स० | ललितासहस्रनामस्तोत्रम् |
| ल० स० भा० | ललितासहस्रनामभाष्यम |
| वाक्य० ब्र० | वाक्यपदीयब्रह्मकाण्डम् |
| वा० | वार्तिकम् |
| वा० पु० | वात्मनपुराणम् |
| वारा० त० | वाराहीतन्त्रम् |
| वाक्य० का० | वाक्यपदीयकारिका |
| विज्ञ० त्रि० | विज्ञप्तित्रिंशिका |
| विज्ञ० वि० | विज्ञप्तिविंशिका |
| विव० | विवरणम् |
| विग्रहव्या० | विग्रहव्यावर्तिनी |
| वि० स० | विष्णुसहस्रनामस्तोत्रम् |
| वे० सू० | वेदान्तसूत्रम् |
| वे० कल्प० | वेदान्तकल्पतरूः |
| वै० भू० | वैयाकरणभूषणसारः |
| शा० दी० | शास्त्रदीपिका |
| शि० सू० | शिवसूत्रम् |
| शि० सू० वि० | शिवसूत्रविमर्शिनी |

| | |
|---|---|
| शिवदृ० | शिवदृष्टिः |
| शै० पु० | शैवपुराणम् |
| श्वे० | श्वेताश्वतरोपनिषद् |
| श्लो० वा० | श्लोक वार्तिकम् |
| स० र० उ० | सरस्वतीरहस्योपनिषद् |
| सा० का० | सांख्यकारिका |
| सा० प्र० भा० | सांख्य प्रवचनभाष्यम् |
| सा० सू० | सांख्यसूत्रम् |
| सि० बि० न्या० र० | सिद्धान्तबिन्दुन्यायरत्नावली |
| सि० बि० | सिद्धान्तबिन्दुः |
| सि० सि० पद्धति | सिद्धसिद्धान्तपद्धतिः |
| सुश्रु० सं०/सु० सं० | सुश्रुतसंहिता |
| सौ० ल० | सौन्दर्यलहरी |
| सं० शा० | संक्षेपशारीरकम् |
| स्त० चि० | स्तवचिन्तामणिः |
| स्प० नि० | स्पन्दनिर्णयः |
| स्प० सं० | स्पन्दसंदोहः |



महाप्रकाशवपुषि काशिकायां महाप्रभुः ।
शङ्कराख्यं परं ज्योति विश्वनाथो विराजते ॥

❀ ॐ ❀

॥ श्रीशारदायै नमः ॥

# दर्शनसर्वस्वम्

## ( अनिर्वचनीयतावादः )

**प्राणिता गुणगणेशने रताः, सञ्जिता निजपदाम्बुजे पुनः ।**

ॐ तत्सत्

## दर्शनसर्वस्वे राजहंसो नाम मानसोन्मीलनम्

## विज्ञानवादे राजहंसः

**प्राणिता इति । शाक्तेन स्फारेण प्राणितानां = आवेशिततयाऽऽपादिततत्तत्क्रियाक्षमतानां केशवशिवादीनां परस्परकार्यकारितायाः अपि दर्शनात् प्रत्येकमपि सत्त्वाविव्यक्ती-**

॥ ॐ ॥

नमो नमः श्रीगुरुपादुकाभ्याम्

## चित्कला

ओंकाराकारशुण्डाग्रं समष्ट्याम्नायरूपिणम् ।
वेदान्तवेद्यं सद्वन्द्यं श्रीभास्यं नौमि सर्वदा ॥ १ ॥

कुमारीं शारदां दिव्यामक्षपुस्तकधारिणीम् ।
वराभयकरां रम्यां श्रीबालां चित्कलां भजे ॥ २ ॥

## भारती

पाशाङ्कुशौ धनुर्बाणान् वहन्ती स्वकराम्बुजैः ।
श्रीचक्रवासिनी काचित् पुरस्तादस्तु मे मुहुः ॥१॥

ओमित्युक्ते य एवेह प्रतीयेत परः शिवः ।
तस्मै सिद्धाय तत्त्वाय विश्वेशाय नमो नमः ॥२॥

सर्वचैतन्यरूपां तामाद्यां विद्याञ्च धीमहि।
त्वामेव विश्वजननीं विश्वरूपां स्तुवीमहि ॥ ३ ॥
विद्यागुणविहीनेऽपि वात्सल्यमुररीकृतम्।
मयि येन सशंकुर्यात् श्रीविश्वेशः कृपापरः ॥ ४ ॥
अन्तर्याम्यात्मना विश्वं त्रैलोक्यं यो नियच्छति।
श्रीगुरूं शरणीकृत्य चित्कलां कलयामिताम् ॥ ५ ॥

प्रकृतग्रन्थपरिसमाप्तिपरिपन्थ्यन्तरायतत्युपशमकं चितिस्तवनमातनोत्याचार्यः—प्राणिता इति।

टीकायां—शाक्तेन स्फारेणेति। शक्तेरेव कुर्वद्रूपत्वादितिभावः। गुणगणेशन इति। गुणाः सत्त्वरजस्तमांसि। सत्त्वादित्रयं द्रव्यमेव, न तु गुणात्मकम् सांख्यनये। तदुक्तं भिक्षुणा—"सत्त्वादीनि द्रव्याणि न वैशेषिका गुणाः संयोगविभागवत्त्वात्, लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्च। तेष्वत्र शास्त्रे श्रुत्यादौ च गुणशब्दः पुरुषोपकरणत्वात् पुरुषपशुबन्धत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च प्रयुज्यते।" ( सा० प्र० भा०, १।६१ ) तेषां गणः समूहः परिणाम-परिणामिनोरभेदात्तदधीनत्वाच्च समस्तप्रपञ्चस्तस्येशनम् = उत्पत्तिस्थितिलयादयः, तत्र रतास्तत्परास्तन्नियामकास्तदधिष्ठातार इति यावत्। ब्रह्मविष्णुमहेश्वरा इति शेषः।

ननु रजो नियामकत्वं ब्रह्मणो विष्णोश्च सत्त्वस्य रुद्रस्य च पुनस्तमस इत्येव पुराणप्रसिद्धेः गुणसमुदायनियामकत्वं न क्वाप्यस्तीति गुणगणेशने रता इति न हृदयङ्गी भवतीत्यत आह टीकायाम्—केशवशिवादीनामिति। सत्त्वस्याभ्यर्हितत्वात् तदधिष्ठातुराद्यप्रयोगः। यद्यपि शिवस्य स्वरूपतः सत्त्वस्य कार्यतश्च तमसोऽधिष्ठातृत्वं, विष्णोश्च सत्त्वतमसोः कार्यस्वरूपे आदाय नियामकत्वम्, ब्रह्मणश्च कार्यतः स्वरूपतश्च रजसो नियामकत्वं दृष्टं तथापि सृष्टेः ज्ञानपूर्वकत्वात् ज्ञानस्य सत्त्वकार्यत्वात् सत्त्वस्य च रजस्तमसोरविनाभूतत्वात् सृष्टयादिकर्तृत्वेन त्रयाणामपि गुणगणनियामकत्वं निर्बाधमेव। गुणानां परस्परा-

शाङ्करं शङ्करं ज्योतिः शाक्तस्फारमयं शिवम्।
भारतीं भारतिं वन्दे सर्वचैतन्यरूपिणम् ॥३॥
चिन्तामणिरिवाकम्प्यं सर्वसंकल्पवायुभिः।
बुद्धं प्रसिद्धं संसिद्धं मानयामो वयं मुदा ॥४॥
सच्चिदानन्दरूपान्तांल्ललितालयवासिनः।
श्रीगुरून् शरणीकृत्य भारतीं भावयाम्यहम् ॥५॥

**मञ्चिता मदनदृष्टि येन तत्, त्रैपुरं किमपि मन्महे महः ॥१॥**

नामानन्त्याच्च गुणगणनियामकत्वं तेषु नानुपपन्नम् । सत्त्वत्वाद्युपाधिनाऽनुगममादृत्य तु गुणेषु त्रित्वव्यवहारः । सञ्जिता इत्यनेन भगवदनुग्रहवशंवदत्वं सन्मार्गप्रवृत्तेरवद्योत्यते । मञ्चिता इति । निस्सीमोपासनासम्पदा प्रसन्नया विश्वप्रसवित्र्या कृपापीयूषवर्षणवशेन

विनाभूतत्वञ्च प्रतिपादितमीश्वरकृष्णेन सांख्यतन्त्रे—

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥
( सा० का०, १२ )

अत्रोत्तरार्द्धे 'द्वन्द्वान्ते' इत्यादि नियमानुरोधेन अन्योऽन्यशब्दस्याभिभवादिषु प्रत्येकमन्वयसत्त्वाद् अन्योऽन्याश्रयवृत्तयो गुणा इति भवति । अत्र चाश्रयपदार्थो नाधाराधेयभावोऽपितु यदपेक्षया यस्य क्रिया स तस्याश्रयः सहकारीति यावत् । तथा च सत्त्वरजस्तमसां गुणानां परस्परसहकारित्वेनैकस्यापि गुणस्याधिष्ठातुः गुणगणनियामकत्वं सम्भवत्येवेति भावः । प्राणिता उत्पत्त्यादितत्तत्क्रियासामर्थ्यशीलाः कृताः । पुनस्त एव निजपदाम्बुजे सञ्जिताः स्वपदाम्बुजध्यानैकप्रवणाः कृताः । मञ्चिताश्च मञ्चस्थानापन्नाः कृताः । तदुक्तं त्रिपुराध्याने—

'तदस्मिन् त्वां ध्यायेत् कहरिहररूद्रेश्वरपदाम् ।' इति ।
( परा० तन्त्रे )

गतास्ते मञ्चत्वं द्रुहिणहरिरूद्रेश्वरभृतः
शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः ।
त्वदीयानां भासां प्रतिफलनरागारूणतया
शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥
( सौ० ल०, ९२ )

मणिद्वीपे नीपवने चिन्तामणिसुमन्दिरे ।
पञ्चब्रह्ममये मञ्चे रूपं त्रैपुरसुन्दरम् ॥ इति ।
( त्रि० र०, २०।३७ )

पञ्चब्रह्ममये = ब्रह्मविष्णुरूद्रेश्वरात्मचतुष्पादे सदाशिवात्मफलक इत्यर्थः ।
मदनदृष्टि इति । मदनः कामो दृष्टौ यस्य तत् ।
टीकायां—प्रेषितवतीत्याहुरिति । तदुक्तम्—

जो सत्त्व रज तम गुणत्रय तथा त्रिगुणात्मक प्रपञ्च के नियन्त्रण में तत्पर ब्रह्म विष्णु शिवादि को स्वकीय शाक्तस्फार से अनुप्राणित कर निज चरणारविन्दों में प्रवृत्त करता है एवं अनुग्रहवशात् उन्हें स्वकीय मञ्चस्थानीय बनाता है, ऐसे मदनदृष्टि भगवती श्री कामाक्षी स्वरूप त्रिपुरात्मक तेजस्तत्त्व ( चिद्घन ) का मैं ध्यान करता हूँ ॥१॥

गुणेश्वरा अपि स्वमक्षतां यन्नीताः, तत्तस्याः परमुचितम्, अचिन्त्यचरितैश्वर्यत्वात्। मदनदृष्टीति। कामाक्षीतिप्रसिद्धेः। दहनात् पुरैव कामं मुख्यं स्वाराधकाग्रेसरतया नेत्रयोः संस्थाप्य कृत्रिमं तं भगवतो भवस्य पुरः प्रेषितवतीत्याहुः। अस्मदर्थस्य प्राणभूता दृष्टिर्यस्येति चार्थः। त्रैपुरमिति। त्रिमूर्तिसर्गपूर्वभाविन्याः शिवशक्तिसामरस्यात्मिकायाः सविशेषब्रह्मप्रथमविभक्तेः किमपि = अनिर्देश्यं महो मन्महे = स्वात्मतयाऽनुसन्दध्मः। व्यपदेशिवद्भावेन त्वत्र तद्धितः पर्यवस्यति। निष्कृष्टस्येवैश्वर्योपबृंहितस्यापि च चैतन्यस्य स्वात्मतयाऽनुसन्धानं नानुपपन्नम्, यदाहुः—

'अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि।
तदात्मतासमापत्तिरिच्छतः साधकस्य या॥' —इति स्पन्दे

'न ध्यानं मुखमुद्रादिकलानां परिकल्पनम्।
ध्यानं शक्तिसमावेशात्सुमहत्सामरस्यकम्॥'
—इति च नित्याषोडशिकार्णवे

कलानाम् = अवयवानाम्। शक्तिसमावेशात् = शक्तिसमावेशमादाय सुमहता ब्रह्मणा सामरस्यं = ऐक्यं यत्रेत्यर्थः। ताटस्थ्येनानुसन्धानं तु कृपणा काचिद् दशा।

इत्युक्त्वा मन्मथं वीक्ष्य दृशिस्वस्यां समाहरत्।
ततः सा त्रिपुरा लोके कामाक्षीत्यभिविश्रुता॥ इति।
( त्रि० र० म०, ३६।१७ )

त्रैपुरमिति। त्रिभ्यः ब्रह्मविष्णुशिवादिभ्यः पुरेति त्रिपुरा। त्रिपुराया इदम् त्रैपुरम्, त्रिपुरात्मकमित्यर्थः। राहोः शिर इतिवत् व्यपदेशिवद्भावेनाणः सार्थक्यम्। मह इति। महनम् महः, पूजार्थकाद् मह इत्यस्मात् भावे घञ्। संज्ञापूर्वकत्वाद् वृद्ध्यभावः। अथवा, 'पुंसिसंज्ञायां घः प्रायेण' इत्यनेन घः। यद्वा-महति महः, पचाद्यच्। तच्च त्रिपुरात्मकं महः ब्रह्मतत्त्वमेव। तदाह श्रुतिः—'साब्रवीदहं ब्रह्मस्वरूपिणी।' ( दे० अथर्व० ) तस्यैव च सृष्टेः प्राक् सत्त्वं नेतरस्य। तदाह—'सदेव सौम्येदमग्र आसीत्' ( छा० ६।२।१ ) इति।

पुरा सर्गादिसमये त्रिपुरा चितिरूपिणी।
एकासीन्नेतरत्तत्र तस्याः किञ्चिदपि स्थितम्॥ इति च।
( त्रि० र० म०, १०।१८ )

शक्तिरेषा चिद्रूपा न तु वेदान्तिनामिव शक्तिरनिर्वचनीया मायापदाभिषिक्ता। तदाह—

चितिरेव महासत्ता साम्राज्ञी परमेश्वरी।
त्रिपुरा भासते यस्यामविभिन्नं विभिन्नवत्॥
( त्रि० र० ज्ञा०, ७।९१ )

**अथ ज्ञेयस्य ज्ञानानात्मकत्वेनेव तदात्मकत्वेनापि निरूपणानर्हतया मिथ्यात्वेन ज्ञानमेवैकं परमार्थसदिति वेदान्तमते मतेरुज्ज्वलीकरणाय ज्ञेयस्य क्षणिकज्ञानात्मकत्वं क्षणिकज्ञानसहितस्यैव वा मिथ्यात्वं नित्यज्ञानात्मकत्वं वेति मतत्रयमवलम्ब्य क्रमेण प्रत्यवस्थीयते । तथाहि—**

त्रिपुरा हि चितिरेव चिद्रूपैव स्वरूपपरिनिष्ठिता निस्तरङ्गाब्धिकल्पा तुरीया । सैव यदा स्वस्वातन्त्र्याच्चितिक्रियाकर्तृत्वरूपचेतनतामासादयति तदेश्वर इत्युच्यते, कार्यब्रह्मेति यं वेदान्तिनः प्राहुः सा च महासत्ता अपरिच्छिन्नसद्रूपा । अतएव स्वप्रकाशा—

अन्यानपेक्षणेनैव चितिः स्वस्मिन् प्रकाशते इत्युक्तेः । (त्रि० र० ज्ञा०, ११।५१)

अत्रैव च सर्वं जगत् कल्पितम् । तदुक्तम्—

आदर्शनगरप्रख्यं जगदेतच्चराचरम् ।
तद्रूपैकत्वतस्तत्र नोत्तमाधमभावना ॥ इति ।
(त्रि० र० ज्ञा० ७।९२ )

या च श्रीत्रिपुरा प्रोक्ता परमाकाशरूपिणी ।
यस्यां सर्वमिदं विश्वं प्रविभक्तं प्रकाशते ॥ इति च ।
( त्रि० र० म०, १०।११ )

सा च त्रिपुराऽद्वैतस्वरूपा 'एकमेवाद्वितीयम्' (छा० ६।२।१ ) इतिश्रुतेः ।

या साङ्गोपाङ्गवेदेषु चतुर्ष्वेकैव गीयते ।
अद्वैता ब्रह्मणः शक्तिः सा मां पातु सरस्वती ॥ इति श्रुतेश्च ।
( स० र० उ०, २ )

ननु ब्रह्मणः शक्तिरित्युक्त्या शक्तेस्तावद्ब्रह्मातिरिक्तत्वमायातीति चेन्मैवम्, शक्तिशक्तिमतोरैक्यात् । न ह्यग्नेः स्वरूपं दाहकशक्तेरन्यदुपलभामहे ।

अत एवोक्तम्— स शिवश्चितिमात्रैकरूपश्चितिरविग्रहा ।
त्रिपुरानन्तशक्त्यैकरूपिणी सर्वसाक्षिणी ।
सा चितिः सर्वतः पूर्णा परिच्छेदविवर्जनात् ॥ इति ।
( त्रि० र० ज्ञा०, ११।४४-४५ )

जैसे ज्ञेयपदार्थ का ज्ञानभिन्नरूप से निरूपण करना सम्भव नहीं है, वैसे ही ज्ञानरूप से भी निरूपण नहीं किया जा सकता । अतएव "ज्ञेय प्रपञ्च मिथ्या है; ज्ञान ही एक परमार्थ सत्य वस्तु है" इस वेदान्त मत विषयक मति को उज्वल करने हेतु—१. ज्ञेय पदार्थ क्षणिक विज्ञानरूप है, २. क्षणिक विज्ञान के सहित ज्ञेयपदार्थ मिथ्या है, ३. ज्ञेय पदार्थ नित्य ज्ञानरूप है, इस मतत्रय का अवलम्बन कर क्रमशः पूर्वपक्ष प्रस्तुत करते हैं ।

शक्तिमद्व्यवहारस्तु राहोः शिर इतिवद् औपचारिकः। विस्तरस्तु विवर्तवादे भगवतैव निरूपयिष्यते।

किमपीति। विशेषतो निर्देष्टुमशक्यमित्यर्थः। चतुष्टयी वै शब्दानां प्रवृत्तिः, तस्या अत्राभावात्। न च तर्हि शास्त्रयोनित्वाधिकरणविरोध इति वाच्यम्, अतद्व्यावृत्त्या ब्रह्मबोधकत्वेन शास्त्रस्य प्रामाण्यसम्भवात्। तदाह भगवान् भाष्यकारः—'अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य। नहि शास्त्रमिदंतया विषयभूतं ब्रह्म प्रतिपिपादयिषति, किं तर्हि प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्यवेदितृवेदनादिभेदमपनयति' ( ब्र० सू० १।१।४ ) इति।

'शास्त्रं त्वन्त्यं प्रमाणमतद्धर्माध्यारोपणमात्रनिवर्तकत्वेन प्रामाण्यमात्मनः प्रतिपद्यते न त्वज्ञातार्थज्ञापकत्वेन' ( गी० भा०, २।१८ ) इति च।

अत्र श्रुतयोऽपि—

यस्यामतं तस्य मतं मतं यस्य न वेद स।
अविज्ञातं विजानतां विज्ञातमविजानाताम्॥ ( केन०, २।३ )

न दृष्टेर्द्रष्टारं पश्येः न विज्ञातेर्विज्ञातारं विजानीयाः' ( बृह०, ३।४।२ )
यन्मनसा न मनुते ( केन०, १।५ )।
यद्वाचानभ्युदितम् ( केन०, १।४ ) इत्याद्याः।

अतएव न तत्प्रमाणतोऽपि विशेषतया निर्देश्यम् प्रमाणादीनां स्वभावतो जड़तया चित्यतिशयानाधायकत्वात्। तदुक्तम्—

प्रमाणञ्च प्रमेयञ्च प्रमाता प्रमितिस्तथा।
यत्प्रसादात्प्रसिद्ध्यन्ति तत्सिद्धौ किमपेक्षते॥

आगमोऽप्यत्र—

'एतदुक्तं भवति—न कारकव्यापारो भगवति, नापि ज्ञापकव्यापारोऽयमपि तु मोहापसारणमात्रमेतत्, व्यवहारसाधनानां प्रमाणानां तावत्येव विश्रान्तेरि (ई० प्र० अ० १, आ० १, का० २)ति।

'नोपायजालं हि शिवं प्रकाशयेद्' इति च।

ननु तर्हि तादृशं त्रैपुरं तत्त्वं नास्त्येवेति चेत्, मैवम्, प्रमाणागोचरत्वाद्वा, निरस्तत्वाद्वा, नाद्यः तस्य प्रमाणागोचरत्वेऽपि स्वयंप्रकाशतया स्वतएव सिद्धेः। तदुक्तं खण्डनकृद्भिः—'वस्तुतस्तु स्वात्मसिद्धमेव चिद्रूपम्' इति। स्वात्मसिद्धमेव = मानमनपेक्ष्यैव सच्चिदंशे संशयाद्यविषय इति तदर्थः। न द्वितीयः निराकर्त्रा स्वस्य निराकर्तुमशक्यत्वात्, 'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्, अस्ति

ब्रह्मेति चेद्वेद सन्तमेनं ततोविदुरि' (तै० २।६)ति श्रुतेः। आत्मैव च त्रैपुरं तत्त्वम् पुरोदीरितरीत्या त्रिपुरायाः ब्रह्मात्मत्वेनात्मरूपत्वसिद्धेः। ब्रह्मणश्चात्मत्वं— 'तत्त्वमसि' (छा. ६.८.७) 'अहं ब्रह्मास्मि' (बृह. १.४.१०) 'अयमात्मा ब्रह्म' (बृह. २.५.१९, माण्डु. २) 'प्रज्ञानं ब्रह्म' (ऐत. ३.३) ब्रह्मवेद ब्रह्मैव' (मुण्ड. ३.२.९) 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति' (तै० २.७) 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (का० २.४.१०) 'एको देवः सर्वभूतेषु गुढः सर्वव्यापी सर्वभूतान्तरात्मा' (श्वे० ६.११) 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्' (का० १.२.२१) 'अनेन जीवेनात्मनाऽनुप्रविश्य' (छा० ६.३.२) 'नान्योऽतोऽस्ति विज्ञाता' (बृह० ३.७.२३.) 'क्षेत्रज्ञं चापि मां विद्धि' (गी० १३.२) इत्यादिश्रुति-स्मृतिवाक्येभ्यः। 'अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः' 'आत्मा च ब्रह्म' (ब्र० सू० १.१.१) इत्यादिभाष्याच्च।

ननु तर्हि जीवेश्वरभेदबोधकानां 'द्वा सुपर्णा' (मु० ३.१) 'यो विज्ञाने तिष्ठन्' (बृह० ३.७.२२) इत्यादिवाक्यानां का गतिरिति चेन्न–औपाधिकभेदमादायाविद्या-दशायां तत्प्रामाण्यसम्भवात्। एतच्चोक्तं 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' (ब्र० सू० १.२.२०) सूत्रभाष्ये भाष्यकृता—'अविद्याप्रत्युपस्थापितकार्यकरणोपा-धिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः। एको हि प्रत्यगात्मा भवति, न द्वौ प्रत्यगात्मानौ सम्भवतः। एकस्यैव तु भेदव्यवहार उपाधिकृतो यथा घटाकाशो महाकाश इति। ततश्च ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनि च प्रमाणानि संसारानुभवो विधिप्रतिषेधशास्त्रञ्चेति सर्वमेतदुपपद्यते। तथाच श्रुतिः—'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यविद्याविषये सर्वं व्यवहारं दर्शयति। 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति विद्याविषये सर्वं व्यवहारं वारयति' इति। एतेन श्रुत्यादिप्रमाणानां सिद्धान्ते तत्त्वाप्रकाशकत्वेन वैयर्थ्यापत्तिरपि निरस्ता, अविद्यादशायां तत्सार्थक्यसम्भवात्। तदुक्तम्—

देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणंत्वाऽऽत्मनिश्चयात्॥ इति। (ब्र० सू० १.१.४)

खण्डनकृताऽपि—'तदेतत्तु श्रुत्या प्रमाणेनोपलक्षणन्यायात् तात्पर्यतः प्रकाश्यते, तेन परमार्थतोऽभिधानाभिधेयभावविरहे तात्पर्यतः श्रुतिस्तस्मिन्नविद्यादशायां पराभ्युपगमरीत्या प्रमाणमित्युच्यते' इति। मानाधीना मेयसिद्धिरिति पराभ्युपग-मात् ब्रह्मणोऽवस्तुत्वशङ्कानिवृत्यै श्रुतिस्तत्र प्रमाणतयोपन्यस्यते, मन्मते तु स्वतः सिद्धमेव वस्तु' इति च तत्रत्यशारदायाम्।

नन्वविद्यादशायामपि कथं श्रुतिस्तत्र प्रमाणम्, जात्यादिनिमित्ताभावेन तस्य

संसर्गागोचरत्वेन तत्र वृत्तिमात्रायोगादिति चेन्न, वृत्तिमन्तरेणापि सुप्तोत्थापकवाक्यस्येव वेदान्तवाक्यस्यापि तत्र प्रामाण्यसम्भवात् । तदुक्तं वार्तिककृद्भिः—

अगृहीत्वैव सम्बन्धमभिधानाभिधेययोः ।
हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिता परैः ॥
जाग्रद्वन्न हि सम्बन्धं सुषुप्ते वेत्ति कश्चनः ॥ इति ।

रथोद्धतावृत्तम्, रान्नरौलघुगुरुरथोद्धता' इत्युक्तेः ॥१॥

अथेति । प्रकरणमुपक्रम्यत इत्यर्थः । ज्ञानानात्मकत्वेनेवेति । ज्ञानानात्मकत्वं ज्ञानभिन्नत्वम्, तत्र भेदस्य प्रथमे चतुर्थे च खण्डन-शारदायां निरस्तत्वेन ज्ञानानात्मकत्वस्य तदायत्तनिरूपणकत्वेन ज्ञेयस्य तेन रूपेणाशक्यनिरूपणत्वम् । किञ्च ज्ञानभिन्नञ्चेत् ज्ञेयं, तद्धि सद्वाऽसद्वोभयात्मकं वा स्यात्, तत्र न तावत्सद्, 'एकमेवाद्वितीयम्' (छा० ६.२.१) 'नेह नानास्ति किञ्चन' (बृह० ४.४.१९) 'इन्द्रो मायाभिः पुरुरूप ईयते' (बृह० २.५.१९) ।

इक्षेत विभ्रममिदं मनसो विलासं ।
दृष्टं विनष्टमतिलोलमलातचक्रम् ॥
विज्ञानमेकमुरुधैव विभाति माया ।
स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥

(श्रीमद्भागवत, ११.१३.३४)

यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
नश्वरं गृह्यमाणं च विद्धि मायामनोमयम् ॥

(श्रीमद्भागवत, ११.७.७)

अविद्यायोनयो भावा सर्वेऽमी बुद्बुदा इव ।
क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥
तस्मिश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥
रज्जुसर्पादिवद् विश्वं नाज्ञातसदिति स्थितम् ।
प्रबुद्धदृष्टिसृष्टित्वात्सुषुप्तौ च लयश्रुतेः ॥ (यो. वा.)

इत्यादि श्रुतिस्मृतिबोधितबाधविरोधात् । नाप्यसत् स्वरूपेणासतोऽपरोक्षानुभवानुपपत्तेः । नाप्युभयात्मकम्, परस्परविरोधात् । तथा च न ज्ञानानात्मकत्वेन निरूपणार्हं ज्ञेयमिति स्थितम् । तदात्मकत्वेनापीति । अपिना दृष्टान्तं द्रढयति । तदा ज्ञानपरामर्शः । घटाद्यात्मकस्य ज्ञेयस्य जड़त्वेनानुभूयमानतया ज्ञानात्मकत्वेन तन्निरूपणेऽनुभवविरोध इति भावः । किञ्च ज्ञानात्मकत्वं हि ज्ञानाभिन्नत्वं वा ज्ञानसामग्रीजन्यत्वं वा स्यात्, तत्र नाद्यः, भेदस्य खण्डने प्रथमे चतुर्थे चोक्तरीत्या

## विज्ञानवादः

**अस्ति तावत्समस्तसंसारसर्वस्वायितं कलसः स्फुरति सुख स्फुरतीत्यादि-**

कलस इति । अयं शब्दोऽमरटीकायां केन = जलेन लसतीत्येवं व्युत्पादितः, 'अव-लम्बितकर्णशष्कुलीकलसीकं रचयन्नवोचत' 'कलसे निजहेतुदण्डजः' 'कलसं जलसम्भृतं पुरः कलहंसः कलयम्बभूव सः' इतिनैषधादौ प्रयुक्तश्च । कलश इति तु रूपान्तरम् । अभेदनियतमन्यदिति । तत्स्फुरणसामग्रीजन्यत्वमित्यर्थः ।

दुर्निरूपत्वेन तत्प्रतियोगिकतया तदायत्तसिद्धिकत्वेनाभेदस्यापि दुर्निरूपत्वात् । अतएव न ज्ञानभिन्नाभिन्नत्वमपि तत् । न द्वितीयः, जन्यतावच्छेदकानिरुक्तेः । ननु तर्हि शून्यमेव स्यादिति चेत्तत्राह—ज्ञानमेवैकं परमार्थसदितीति । न च ज्ञान-मपि किमिति आस्थीयत इति वाच्यम्, तस्य स्वतः सिद्धसर्वानुभवस्यानपलपनीय-त्वात् । तदुक्तम् खण्डने—'न च तैर्दोषैर्नास्त्येव ज्ञानमित्यास्थेयम्, स्वतः सर्व-सिद्धस्य दुरपह्नवत्वात्,' इति । ज्ञानस्य पारमार्थिकत्वे च 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २.१) इत्यादि श्रुतिर्मानम् । मतेरुज्ज्वलीकरणायेति । मतेरुज्ज्वली-करणत्वञ्च—अप्रामाण्यज्ञानानास्कन्दितत्वम् । मतत्रयमिति । योगाचारमाध्यमिक-स्वातन्त्र्यवादिनां यथासंख्यमित्यादिः ।

### विज्ञानवादः

#### स्फुरणस्यावश्योपेयत्वम्

सर्वस्वायितमिति । तत्त्वञ्च सर्वव्यवहारमूलकत्वात् । प्रतीतिद्वयं बाह्यान्त-रसंग्रहाय । न दूरतोऽपीति । विप्रतिपत्तिविषयतावच्छेदकधर्मशून्यत्वात् । प्रकाश इति । प्रकाशस्य अपूर्वत्वेन प्रकाशो नास्ति सर्वदैव तस्य प्रकाशमानत्वेन 'अनपह्नवनीयत्वाद् इति व्यर्थं तत्र प्रमाणपरिकल्पनम् । तथाहि—तदा तस्यापूर्वत्वेन प्रकाशः स्यात्, यद्यसौ पूर्वमधिगतत्वेनाप्रकाशमानः स्यात्, तथाभावश्च तद्रहितपूर्वकालस्मृतौ सत्यां भवेत् । स्मृतिरपि एवं रूपमनुभवं विना नोत्पद्यते, अनुभूतविषयासंप्रमोषात्मकत्वात्तस्याः, न च प्रकाशरहित-त्वेन पूर्वकालानुभवोऽस्ति, तस्यैवानुभवस्य प्रकाशात्मकत्वात्, स एव हि प्रकाश इति कथं पूर्वमपि तदभावः, अतश्च सर्वदाऽस्यावभासमानत्वेनानादिसिद्धत्वात् न प्रमाणव्यपेक्षासिद्धिः । अनपह्नवनीयत्वात् = अनपलपनीयत्वात्, अपलपयितुम-शक्यत्वादिति यावत् । शारदोक्तरीत्येति । खण्डन–शारदोक्तरीत्येत्यर्थः । रीतिश्चेय-मित्थम्—'विज्ञानं तावत्स्वप्रकाशं स्वत एव सिद्धस्वरूपम् । न खलु विज्ञाने सति जिज्ञासोरपि कस्यचिद् 'जानामि न वेति संशयः, न जानामीति वा विपर्ययः, व्यतिरेकप्रमा वा । तेन जिज्ञासितस्य अतत्त्वज्ञानव्यतिरेकप्रमाणामभावसमुदायः स्वव्यापकं जिज्ञासितस्य प्रमितत्वमानयति । अन्यथा हि जिज्ञासितप्रमितत्व

**प्रतीत्या समर्पितं विप्रतिपत्त्या न दूरतोऽप्यालोकितं स्फुरणतत्त्वम्, शून्यवादिनोऽपि न तत्स्वरूपे विप्रतिपत्तिरपि तु पारमार्थिकत्वे एव । आहुश्च—**

**प्रकाशो नाम यश्चायं सर्वत्रैव प्रकाशते ।**
**अनपह्नवनीयत्वात्किं तस्मिन् मानकल्पनैः ॥—इति तन्त्रालोके**

व्यतिरेकव्यापकं जिज्ञासितव्यतिरेकोल्लेखि ज्ञानमविघ्नितजिज्ञासितस्य स्यात् । अतः सर्वजनस्वात्मसंवेदनसिद्धमेवास्य बोधस्य स्वरूपम् । १ (ख.)

तत्र-आनयति = अनुमापयतीत्यर्थः । अनुमानञ्च कृष्णीयघटज्ञानं कृष्णीयस्वप्रमाव्याप्यसत्ताकं कृष्णीयसंशयाद्यविषयत्वात् इति । अत्र स्वरूपासिद्धिपरिहारार्थं तावदाह—न खल्विति । उपेक्षाविषयेषु मार्गे गच्छतः स्पृष्टेषु तृणादिषु व्यभिचारवारणाय जिज्ञासोरिति । वस्तुतस्तु पक्षे जिज्ञास्यत्वस्य विशेषणतालाभाय जिज्ञासोरितिपदम् । विपक्षवृत्तित्वशङ्काबाधकं तर्कमाह—अन्यथेति । अत्र कालिकव्याप्तिविवक्षया कृष्णीयघटज्ञानं यदि कृष्णीयस्वप्रमाव्याप्यसत्ताकत्वाभाववत्स्यात् कृष्णीयसंशयादिविषयतान्यतमवत् स्याद्' इत्याकारकमापादनम् । अत्र हि—यथा पर्वतो वन्हिमान् धूमादित्यत्र पर्वतो यदि निर्वन्हिः स्यान्निर्धूमः स्यादित्यापादने पर्वते धूमस्य दृश्यमानत्वेन तत्र तदभावस्य वक्तुमशक्यतया विपर्ययपर्यवसानबलात् पर्वतस्य धूमाभावाभावात् वन्ह्यभावाभाववत्त्वं सिद्ध्यति तथा प्रकृतेऽपि—संशयादिविषयत्वसामान्याभावात् जिज्ञास्यत्वविशिष्टस्य स्वप्रमाव्याप्यसत्ताकत्वस्याभाव इति विपर्ययपर्यवसानम् विशेष्याभावमादाय भवति । जिज्ञास्यत्वस्य तत्र सत्त्वाद् विपर्ययानुमाने जिज्ञास्यत्वस्य पक्षे विशेषणाच्च—कृष्णजिज्ञास्यं कृष्णीयघटज्ञानं कृष्णजिज्ञास्यत्वविशिष्टस्य कृष्णीयस्वप्रमाव्याप्यसत्ताकत्वाभावस्याभाववत् कृष्णीयसंशयाद्यविषयत्वादजिज्ञासितघटादिवदिति विपर्ययानुमानम् । यद्यपि निरुक्तानुमानेन साक्षिण एव सिद्धिर्न तु तत्स्वप्रकाशत्वस्य, तथापि साक्षिणोऽन्यभास्यत्वोपगमेऽनवस्थापत्त्याद्यनेकदूषणं स्यादिति तर्क-

## विज्ञानवाद

### स्फुरण की अवश्य स्वीकर्तव्यता

समस्त संसार का सर्वस्वभूत वादियों की विप्रतिपत्तियों से सर्वथा असंस्पृष्ट "कलसः स्फुरति, सुखं स्फुरति" इत्यादि प्रतीतियों से सिद्ध एक स्फुरण—तत्त्व है । शून्यवादी भी उसके स्वरूप में विप्रतिपन्न नहीं है, अपितु उसके पारमार्थिकत्व में ही । तन्त्रालोक में श्री अभिनवगुप्त ने कहा है—"प्रकाश उस तत्त्व का नाम है जो सर्वत्र ही प्रकाशित रहता है एवं जिसका अपलाप नहीं किया जा सकता, ऐसे तत्त्व के लिए प्रमाण कल्पना की कोई आवश्यकता नहीं हैं ।"

**तच्च स्वप्रकाशवादे शारदोक्तरीत्या स्वप्रकाशम्। एवं च तेनैव निर्वाह-सम्भवे तदतिरिक्ताभ्युपगमो गौरवेणावहेलनीयः। तदतिरिक्तोपनायकानि**

प्रतिसंधानसहकृतं पुनरनुसन्धीयमानमुक्तानुमानमेव साक्ष्यात्मकप्रमायामविषय-त्वान्यानपेक्षव्यवहारकत्वादिरूपस्वप्रकाशत्वसाधनायालमीश्वरानुमानवत्। अत एव स्वप्रकाशत्वं निगमयन्नाह—अतः सर्वजनस्वात्मसंवेदनसिद्धमेवास्य बोधस्य स्वरूपमिति। अत एव च जिज्ञासितं घटज्ञानं स्वप्रकाशं संशयादिरहितत्वादिति वस्तुगतिः पर्यवस्यति। तथा चैकस्मिन् विषयविषयिभावोपगन्तृमते लाघवात् स्वविषयत्वमेव प्रकाशत्वम्, स्वातिरिक्तमनपेक्ष्यसंशयाद्यविषयत्वञ्चेत्यपि स्वप्रकाशत्वमवगन्तुर्नो न हीयते किञ्चित्। एवञ्चेति। स्वप्रकाशत्वसिद्धे च। निर्वाहसम्भवेनेति। सर्वविधव्यवहारस्येत्यादि। अवहेलनं तिरस्कारः।

ननु सन्ति प्रत्यक्षादीनि प्रमाणानि ज्ञानातिरिक्तसाधकानीति तदभावे वैयर्थ्यं तेषां स्यादित्यत आह—तदतिरिक्तोपनायकानीति। विमनीभावो वैयर्थ्यम्।

नासौ स्फुरेदिति। तथा चोक्तं विज्ञानवादिना—

'अन्यच्चेत्संविदो नीलं न तद्भासेत संविदि
भासते चेत्कुतः सर्वो न भासेतैक संविदि
नियामकं न सम्बन्धं पश्यामि नीलतद्धियोः' इति।

ननु नीलतद्धियोर्भेदेऽपि विषयविषयिभावसम्बन्धेन नीलादिस्फुरणं सम्भवतीत्यत आह–न चेति। परिहरति–भेदनियतेति। निपूर्वकयमधातोर्व्याप्यत्वमर्थः। व्याप्यत्वञ्च व्याप्तिरेव, प्रकृतिजन्यबोधेप्रकारीभूतत्वात्। अत एव नियमो व्याप्तिरित्युक्तिः। निपूर्वकयमधातोर्व्यापकत्वमर्थ इत्युक्तिस्तु तन्निरूपकत्वाभिप्रायेण बोध्या। भेदस्य दुर्निरूपत्वेन तन्नियतविषयविषयिभावस्यापि दुर्निरूपत्वात्। भेदो हि स्वरूपान्योन्याभाववैधर्म्यपृथक्त्वभेदेन चतुर्विधः दुर्निरूप एव। तथाहि—स्वरूपभेदपक्षे सप्रतियोगिकस्याधिकरणात्मकत्वेनानुयोगिप्रतियोगिनोरभेदापत्तेः। अन्योन्याभावपक्षे तस्याधिकरणातिरिक्तत्वेऽपि प्रतियोगिविशिष्टस्यानुयोगिवृत्तित्वे प्रतियोगिनोऽप्यनुयोगिधर्मत्वापत्त्याऽद्वैतापत्तिः; धर्मधर्मिणोरभेदाभ्युपगमात् वैधर्म्यपक्षे वैधर्म्ये वैधर्म्यान्तराभ्युपगमेऽनवस्थापत्तिरस्वीकारे च तयोरैक्यापत्त्याऽभेदे पर्यवसानात्। पृथक्त्वस्य च भेदरूपत्वे विवादात् कथञ्चित् तद्रूपत्वस्वीकारेऽपि स्वाश्रये भिन्नेऽभिन्ने वेति विकल्पाभ्यां स्वाश्रयत्वाद्यापत्त्या निरस्तत्वात्। एवञ्च भेदनियतत्वस्य सार्थक्यम्। न केवलं व्यापकाभावाद्व्याप्याभाव इति

वह प्रकाशतत्त्व खण्डन—शारदोक्त रीति से स्वयंप्रकाश है।

घटादि में स्फुरणभेद मानने में बाधक

अनपलपनीय प्रकाश के स्वयंप्रकाश मानने पर उस स्वयंप्रकाश—चैतन्य से ही

**प्रमाणान्येवं विमनीभावं भजेरन्निति तु न सुमनसामोजोजृम्भणम्, को जानाति स्फूर्त्यनात्मकोऽपि कोऽप्यस्तीति, तथासति नासौ स्फुरेत्, न च विषयविषयिभावो नियामकः; भेदनियततन्निरासस्य शारदायां तुरीये उपवर्णितत्वात्। कलसो यदि स्फुरणानात्मकः स्यात् स्फुरणविषयो न स्यादित्यापादने विषय-**

नियमानुरोधेन भेदनियतस्य विषयविषयिभावस्य भेदनिरासेनैव निरासोऽपि तु तस्य सम्बन्धत्वानुपपत्त्यापीत्याह—तन्निरासस्येति। विषयविषयिभावो हि नैकः सम्बन्धः, तस्य हि नैकस्मिन्नपि सम्बन्धिनि वर्तमानत्वं प्रागेव तु द्वयोः। न चोभयसाधारणोऽखण्डोपाधिरेवासौ, विषयत्वादिनैव विशिष्टबुद्ध्युपपत्तौ तस्याप्रामाणिकत्वात्। न चास्तु विषयत्वविषयित्वयोः प्रत्येकमेव सम्बन्धत्वम्, संयोगस्यैक सम्बन्धेन सम्बन्धिद्वयसम्बद्धस्यैव सम्बन्धत्वदर्शनेन तयोश्च तथात्वासम्भवेन सम्बन्धत्वानुपपत्तेः। अथाप्रयोजकमिदम्, जगद्वैचित्र्यभङ्गप्रसङ्गात्, सम्बन्धिद्वयसम्बद्धत्वमात्रं त्वपेक्ष्यताम्, तच्चैकेन सम्बन्धेन वा, सम्बन्धद्वयेन वेत्यन्यत्, प्रकृते च विषयत्वं स्वरूपेण विषये निरूपकतासम्बन्धेन च विषयिणि सम्बद्धमिति न काप्यनुपपत्तिरिति चेन्न—एवमपि स्वरूपसम्बन्धस्य निरूपकतासम्बन्धस्य च सम्बन्धिद्वयसम्बद्धतायाः कथमप्युपपादनासम्भवादन्यथाऽनवस्थानादिति स्वरूपे निरुपकतायाञ्च सम्बन्धत्वविलोपे विषयविषयित्वयोरपि सम्बन्धिद्वयसम्बद्धत्वानुपपत्तौ सम्बन्धत्वविलोप एव। मास्तु सम्बन्धत्वम्, ते तु स्यातामिति चेत्तर्हि ज्ञानज्ञेययोरसम्बद्धत्वमेव, अभिन्नत्वमेव वा, तथा च न किमपि सिद्धेत्, ज्ञानमेव वैकं तत्त्वं स्यादिति जितं शून्यवादिना विज्ञानवादिना वा। अनुभवविरोधेन तयोरवहेलने चानिर्वचनीयसम्बन्धमाश्रित्य वेदान्तिन एव विजयेरन्। एवञ्च न केवलं विषयत्वादेः सम्बन्धत्वानुपपत्तिरेवापितु स्वरूपमपि तस्य दुर्निरूपमेवेति तत्र तत्र खण्डनाद्वैतसिद्ध्यादौ समुट्टङ्कितं विस्तरभयान्नेह प्रतन्यते।

स्फुरणविषयत्वेनापि घटादीनां स्फुरणात्मकत्वसाधके 'घटादिकं स्फुरणात्मकं स्फुरणविषयत्वादित्यनुमाने विषयपरिशोधकं तर्कमाचष्टे—कलसो यदीति। आहार्यव्याप्यवत्ताभ्रमजन्याहार्यव्यापकवत्ताभ्रमजन्यज्ञानात्मके तर्के आपाद्यव्यतिरेकनिश्चयः कारणमापाद्यापादकयोर्व्याप्तिनिश्चयोऽपीति तार्किकसमयः। तर्क-

समस्त कार्यों का निर्वाह हो जाता हैं। अतः तदतिरिक्त पदार्थ का मानना गौरवग्रस्त होने से व्यर्थ है। "ज्ञान से भिन्न पदार्थ के न मानने पर ज्ञानातिरिक्त वस्तुसाधक प्रमाण व्यर्थ हो जायेङ्गे" ऐसी आशंका विद्वानों के द्वारा नहीं की जा सकती, क्योंकि ज्ञान से भिन्न भी कोई पदार्थ है" यह कौन जान ( कह ) सकता है, यदि भिन्न है तो उसका प्रकाश ही न हो सकेगा। उस ज्ञानातिरिक्त वस्तु के प्रकाश का नियामक विषयविषयिभाव सम्बन्ध हो जायेगा, यह भी नहीं कह सकते, क्योंकि ज्ञान ज्ञेय के भेद के अधीन

**विषयिभावेन प्रत्यवस्थितेन तर्काकौशलोन्मीलनाच्च, आपाद्यव्यतिरेकादि-**
दोषाननुद्भाव्य कुत्रापि तर्के प्रत्यवस्थातृत्वं तर्कानभिज्ञत्वं ज्ञापयति—तर्काकौश-लोन्मीलनाच्चेति। तर्कदोषाश्च षट् स्वीक्रियन्ते—आश्रयासिद्धिरनुकूलत्वं मूल-शैथिल्यमिष्टापादनं विपर्ययापर्यवसानं मिथोविरोधश्चेति। तदुक्तमुदयनाचार्येण—मिथोविरोधमूलशैथिल्येष्टापादनानुकूलत्वविपर्ययापर्यवसानैः तर्काभासत्वादिति ( आ० वि० पृ०, २४६ )।

व्याप्तितर्काप्रतिहतिरवसानं विपर्यये।
अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम्॥
अङ्गान्यतमवैकल्ये तर्कस्याभासता भवेद्।
( ता० र० पृ०, १८७ )

इति वरदराजोक्ते,

तत्रानुकूलत्वमिथोविरोधौ द्वौ मूलशैथिल्यमतस्तृतीयम्।
विपर्ययापर्यवसानमिष्टप्रसञ्जनं द्वे इति तर्कदोषाः॥

इति केषाञ्चित्संग्रहश्लोके चाश्रयासिद्धिर्न गणिताऽनुमानसाधारण्याभिप्रायेण। अनुकूलत्वम्—विपर्यये सिद्धसाधनमित्यर्थः। यथा हिमं यदि दाहकतेजोविशिष्टं न स्यात्तृणादिविकारकारि न स्यादित्यत्र भवति च तृणादिविकारकारि तस्माद्-दाहकतेजोविशिष्टमिति विपर्यये, यदाहुः—'नहि त्रैलोक्यपरिपाकहेतोः सावित्रस्य रश्मेस्तुहिनादपगमः क्षमते' इति। मूलशैथिल्यम्—पर्वतो यदि निर्धूमः स्यान्नि-र्वह्निः स्यादित्यादिस्थले आपादके आपाद्यनिरूपितव्याप्यत्वासिद्धिरित्यर्थः। अत्र विपर्ययेऽपि व्याप्यत्वासिद्धिरेव। तादृशव्याप्तिनिश्चयापादकाभ्युपगमयोरन्यतर व्यातिरेक इत्यपि केचित्। इष्टापादनम् आपाद्यवद्धर्मिकत्वं विपर्यये स्वरूपासिद्धि-र्वेत्यर्थः। यथा मिथ्यात्वं यदि दृश्यत्वव्यापकं स्यात्तीर्थशास्त्रादिवृत्ति स्यादित्यादौ। विपर्ययापर्यवसानम्—आपादकवद्धर्मिकत्वम्, अतएव विपर्यये बाध इति केचित्।

विषयविषयीभाव का खण्डन खण्डन-शारदा के चतुर्थ परिच्छेद में कर दिया गया है। "घट यदि ज्ञानानात्मक ( ज्ञान से भिन्न ) हो तो ज्ञान का विषय नहीं होना चाहिए" इस बौद्ध कृत आपादन पर विषयविषयीभाव के द्वारा प्रत्यवस्थित विरुद्धरूपेण उपस्थित अर्थात् विरोध करने वाला नैयायिक तो अपने ही तर्काकौशलत्व को व्यक्त करता है। ( भाव यह है कि—नैयायिक का "यदि घटादि स्फुरणात्मक हो तो विषयविषयिभाव नहीं बनेगा" इस प्रकार का विरोधोद्भावन नहीं हो सकता, क्योंकि मैं ( बौद्ध ) घटादिविषय को स्फुरणात्मक मानते हुए विषयविषयिभाव को भी मानता हूँ। अतः नैयायिक विषय-विषयिभाव के द्वारा विरुद्ध तर्क नहीं कर सकता, यदि करता है तो वह तर्काकुशल है )। क्योंकि आपाद्य व्यतिरेक कोटि का निश्चय तो आपत्ति देने वाले मेरे (बौद्ध) मत में भी

**निश्चयस्यापत्तिप्रसवितुर्ममापि सद्भावात्, आपादकविधूननायैव यतनीयत्वात्। अथ भवानपि मादृश एव, सर्वस्य स्फुरणात्मकत्वे आपादकाप्रसिद्धेः, आपाद्यापादकयोस्तत्स्फुरणोपादाने तत्स्फुरणानात्मकत्वस्य पटादौ स्फुरणान्तरात्मके**

वस्तुतस्त्वापाद्याभावलिङ्गकापादकाभावसाध्यकानुमित्यनौपायिकत्वमित्यर्थः। तच्च मूलशैथिल्यादिप्रयुक्तं वा विपर्यये बाधप्रयुक्तं वेत्यन्यत्। एवञ्च मूलशैथिल्यादिस्थलेऽपि तर्के बहुलं विपर्ययापर्यवसायित्वव्यवहा स्य नासंगतिः। अस्य चासङ्कीर्णोदाहरणदौर्लभ्यमेव। मिथोविरोधः—परस्परविरुद्धापाद्यकत्वमित्यर्थः। यथा वायुर्यदि बहिरिन्द्रियविषयः स्यादरूपिद्रव्यं न स्यात्, वायुर्यदि प्रत्यक्षो न स्यात्प्रत्यक्षस्पर्शाश्रयो न स्यादित्येतयोः। अधिकञ्चात्र सर्वत्र हेत्वाभासेष्वेवानुसन्धानार्हमिति नेहाऽयस्यते। न च प्रकृततर्के कश्चिद्दोषस्तदुद्भावनञ्चास्तीति भावः। नहि तार्किकेण 'कलशो यदि स्फुरणात्मकः स्यात् स्फुरणविषयो न स्यादित्यापादयितुं शक्यते, विपर्ययपर्यवसाने ज्ञानान्तर्भावेण व्यभिचारित्वात्, सत्यपि तस्मिन् क्रियमाणे तर्काकौशलत्वं स्पष्टमितोऽपि। अप्रसिद्धापादकघटिततर्कं कुर्वतो भवतोऽपि तर्कानभिज्ञत्वं तुल्यमित्याह—अथेति। आपादकाप्रसिद्धेरिति। स्फुरणानात्मकत्वाप्रसिद्धेरित्यर्थः। ननु स्फुरणानात्मकत्वमात्रस्याप्रसिद्धावपि स्फुरणविशेषाणां परस्परभिन्नतयैकस्यापरानात्मकत्वं प्रसेत्स्यतीत्याह—आपाद्यापादकयोरिति। विपर्ययपर्यवसानासम्भवादिति। आपाद्यकोटेरित्यादिः। आपाद्यकोटेर्विपर्ययपर्यवसाने सत्येवापादकस्य निरासः सम्भवति, तच्चासम्भव इति भावः।

स्वीकृत है। (जो व्याप्य दल होता है वह आपादक होता है। और व्यापक दल आपाद्य होता है। जैसे 'निर्वन्हिः स्यात् निर्धूमः स्यात्' यहाँ पर निर्वन्हि अर्थात् वन्ह्यभाव व्याप्य है, अतएव वह आपादक है। निर्धूम अर्थात् धूमाभाव व्यापक है, अतएव वह आपाद्य है, व्यापकाभावाद् व्याप्याभाव नियमानुसार आपाद्य व्यतिरेक निश्चय से आपादकाभाव का निश्चय होता है। धूमाभावाभाव = धूम निश्चय से वन्ह्यभावाभाव = वन्हि का निश्चय होता है। इसी प्रकार यहाँ स्फुरणानात्मकत्व व्याप्य होने से आपादक है एवं स्फुरणविषयत्वाभाव व्यापक होने से आपाद्य है)। स्फुरणविषयत्वरूप आपाद्यव्यतिरेक निश्चय तो 'घटो यदि स्फुरणानात्मकः स्यात्' इत्यादि आपत्तिदाता मेरे ( बौद्ध ) मत में भी स्वीकृत है। अर्थात् मैं भी मानता हूँ। अतएव मुझे ( बौद्ध ) केवल स्फुरणानात्मकत्वरूप आपादक के निरास का ही प्रयत्न करना है। अर्थात् मैं सभी वस्तुओं को स्फुरणरूप मानता हूँ। अतः स्फुरणानात्मकत्व का मुझे खण्डन करना है।

शङ्का—( नैयायिक ) आप भी तो मेरे सदृश ही हैं। अर्थात् जैसे मैं तर्काकुशल हूँ वैसे ही आप भी तर्काकुशल है। सभी वस्तुओं के स्फुरणात्मक होने से आप ( बौद्ध )

**प्रसिद्धावपि विपर्ययपर्यवसानासम्भवात्, तथाहि—तत्स्फुरणविषयत्वं तत्स्फुरणाभिन्नत्वं न सम्भवति, साध्याविशेषात्, नाप्यभेदनियतमन्यत् किञ्चित्, अभेदसिद्धिं विनाऽसिद्धेः; नापि भेदनियतम्, विरुद्धत्वापत्तेः, नापि भेदसाधा-**

तथाहीति। तथा हि—इति युक्त्युपक्रमं द्योतयति। दृश्यताम् किल इत्यर्थः। तथा इत्यनेन साध्यं सूच्यते, हिना हेतुः, तथा च प्रकृतसाध्यं हेतुसिद्धयायत्तमुपक्रम्यते। प्रकृते च सिषाधयिषितं विपर्ययापर्यवसानं तत्र हेतुप्रकारं दर्शयतीत्यर्थो वा। यद्वा तथाहि–इति पदद्वयसमुदायस्तत्र तथेति 'प्रकारवचने थालि' तिसूत्रसम्पादितथाल् प्रत्ययान्तस्तत्प्रकारवचनः। यत्तदोर्नित्यसम्बन्ध इति नियममनुसृत्य थाल् प्रत्ययान्तो यथेतिशब्दोऽध्याहार्यः। तच्छब्दस्य च बुद्धविषयतावच्छेदकधर्मावच्छिन्ने शक्ततया प्रकृतपरामर्शकत्वम्। 'हि' इत्यनेकार्थत्वाज्जानीहीत्यर्थकः। तथा च यथा विपर्ययपर्यवसानासम्भवस्तत्प्रकारं जानीहीत्यर्थः। साध्याविशेषादिति। घटः स्फुरणात्मकः स्फुरणविषयत्वादित्यनुमान इति शेषः। तथा च परामर्शकालावच्छेदेन सिद्धसाधनत्वादनुमितिरेव न स्यात्तस्य पक्षताविघटकत्वादिति-भावः। नाप्यभेदनियतमन्यदिति। तत्स्फुरणाभेदाधिकरणवृत्तित्वविशिष्टत्वेन हेतू भवत्। अभेदसिद्धिमिति। तत्स्फुरणसामग्रीजत्वस्य तत्त्वेन हेतुत्वेऽपि तत्स्फुरणाभेदसिद्धिं विना पक्षे दुरवधारणत्वम्, तत्स्फुरणाभेदाधिकरणवृत्तित्वविशिष्ट-

के मत में स्फुरणानात्मकत्वरूप आपादक ही अप्रसिद्ध है। ( नियम यह है कि आपादक-कोटि के कुत्रचित् प्रसिद्ध होने पर ही तर्क किया जाता है, जैसे 'निर्वन्हिः स्यात् निर्धूमः स्यात्' इस तर्क में वन्ह्यभाव आपादक कोटि ह्रदादि में प्रसिद्ध। प्रकृत में तो स्फुरणानात्मकत्वरूप आपादक कहीं भी प्रसिद्ध नहीं है। तब उसके द्वारा तर्क कैसे कर सकते हैं ) यदि आपाद्य आपादक कोटि में तत्स्फुरण का निवेश करने पर ( कलसः यदि तत्स्फुरणानात्मकः स्यात् तत्स्फुरणविषयो न स्यात् ) तत्स्फुरणानात्मकत्वरूप आपादक कोटि स्फुरणान्तरात्मक ( पटविषयकस्फुरणरूप ) पटादि में प्रसिद्ध हो भी जाय तो भी आपाद्यकोटि का विपर्यय में पर्यवसान असम्भव है। तथाहि—( विपर्यय पर्यवसानासम्भव को दिखाते ) तत्स्फुरणविषयत्व तत्स्फुरणाभिन्नत्व तो हो नहीं सकता, क्योंकि साध्य से अभिन्न ( साध्यरूप ) हो जायेगा। ( भाव यह है कि यदि आपाद्यकोटि का विपर्यय में पर्यवसान हो जाय तो तत्स्फुरणविषयत्वरूप आपाद्याभाव के द्वारा तत्स्फुरणात्मकत्वरूप आपादकाभावरूप साध्य को सिद्ध करना होगा। यहाँ अनुमिति का आकार यह होगा कि घटः तत्स्फुरणात्मकः तत्स्फुरणविषयत्वात्। यहाँ पर तत्स्फुरणविषयत्व का यदि तत्स्फुरणाभिन्नत्व अर्थ करें तो तत्स्फुरणात्मकत्वरूप होने से साध्य के साथ हेतु की एकता हो जायेगी, हेतु साध्य के एक होने से सिद्धसाधन दोष हो जायेगा। एवं सिद्धसाधन के पक्षताविघटकतया अनुमितिप्रतिबन्धक होने से अनुमिति ही न हो

**रणम्, अप्रयोजकताया दुर्वारत्वात्। एतेन प्रकाशमानत्वं हेतुरपास्तः, प्रकाशाभिन्नत्वप्रकाशविषयत्वाद्यर्थकत्वे उक्तदोषात्, प्रकाशाश्रयत्वार्थकत्वे स्वरूपासिद्धेः, अप्रसिद्धेश्च, भवता प्रकाशस्य निराधारत्वाभ्युपगमादिति चेन्न, तत्स्फुरणविषयतात्वेनैव हेतुताया वक्तव्यत्वात्, अभेदनियतत्वस्य प्रागसिद्धावपि क्षत्यभावात्, भेदनियतत्वस्याप्यसिद्धेः, सर्वं प्रमेयमित्यादिज्ञानानां स्वविषयक-**

त्वेन हेतुत्वे तु सुतरामिति भावः। अप्रयोजकताया इति। अप्रयोजकत्वं व्यभिचारशङ्कानिवर्तकतर्कशून्यत्वम्। उक्तदोषादिति। सिद्धसाधनत्वादित्यर्थः। निराधारत्वाभ्युपगमादिति। आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो हि विज्ञानस्कन्धत्वेनाभिमतस्तायिनां नातोऽतिरिक्तः कश्चिच्चेतनः। तदाश्रयो हि भवन् न तार्किततर्कित आत्मा-ईश्वरो वा, 'आत्मधर्मोपचारो हि विविधो यः प्रवर्तते' (त्रि० १) त्रिंशिकायां वसुबन्धूक्तविज्ञानपरिणामत्वेन विकल्पत्वात् 'उत्पादाद् वा तथागतानामनुत्पादाद्वा स्थितिरेवैषा धर्माणां धर्मता धर्मस्थितिता धर्मनियामकता च समुत्पादानुलोमता' इति भगवद्बुद्धसूत्रव्याख्यानावसरे भामतिकल्पतर्वादिषु महनीयमतिभिस्तथैव तत्सिद्धान्तस्य व्याख्यातत्वाच्च निराधारैव चित्सन्ततिरिति सूष्ठूक्तं प्रकाशस्यनिराधारत्वाभ्युपगमादिति। ईशविषयकानुमात्वश्रद्धेया, तदनुमानस्याप्रयोजकत्वात्। अभेदनियतत्वस्येति। तत्स्फुरणाभेदाधिकरणवृत्तित्वविशिष्टत्वस्य, तेनाभेदस्यैवात्र साध्यतया तन्नियतत्वस्य हेतौ पूर्वं निर्णेतव्यत्वेऽपि न क्षतिः। क्षत्यभावादिति। तादृशविशिष्टत्वस्य हेतुतावच्छेदकत्वे प्रयोजनाभावादिति भावः।

पायेगी)। यदि तत्स्फुरणविषयत्व का अर्थ तत्स्फुरणाभेदनियत अन्य ही कुछ अर्थात् तत्स्फुरणसामग्रीजन्यत्वादि ही माना जाय तो वह भी ठीक नहीं है, क्योंकि वह अभेद सिद्धि के बिना असिद्ध है। भेदनियत तत्स्फुरणजन्यफलाधारत्वादिरूप भी तत्स्फुरणविषयत्व का अर्थ नहीं कर सकते, क्योंकि उसके भेदनियत होने से तत्स्फुरणात्मकत्वरूप साध्य से विरुद्ध हैं। एवं भेद साधारण जो तत्स्फुरणाभिन्न की तरह तत्स्फुरणभिन्न में भी उपपन्न होने योग्य हो, यह भी नहीं कह सकते, क्योंकि अप्रयोजक (हेतुरस्तु साध्यमास्तु इत्याकारकव्यभिचारशंकानिवर्तकतर्कशून्य) है। इसी युक्ति से प्रकाशमानत्व हेतु भी निरस्त हो जाता है, क्योंकि प्रकाशमानत्व का अर्थ है प्रकाशविषयत्व, वह यदि प्रकाशाभिन्नत्वरूप है तो पूर्वोक्त प्रकार से साध्यरूप हो जाने से सिद्धसाधन हो जायेगा, और यदि प्रकाशाश्रयत्वरूप मानें तो घटरूप पक्ष में न रहने से स्वरूपासिद्ध हो जायेगा। एवं प्रकाशाश्रयत्वरूप हेतु कहीं अन्यत्र प्रसिद्ध भी नहीं है। आप (क्षणिक विज्ञानवादी) के मत में प्रकाश निराधार माना जाता है। (अतः आप भी मेरे ही सदृश तर्काकुशल होने से तर्क नहीं कर सकते)।

त्वस्य भवतोऽप्यनुमतत्वात् । यदि हि विषयविषयिभावस्याभेदे विरोधः स्यात्तदा रूपभेदेनापि तत्परिहारस्य 'नहि दण्ड्यपि देवदत्तः कुण्डलिनं स्वमारोहती' ति न्यायेनासम्भवात् । विषयतात्वं च वस्तुगत्या स्वविषयकज्ञानात्मकमेवेति न तन्निर्वचनानुयोगः, अभेदासिद्धिदशायाञ्च प्रतीतिविशेषसाक्षिकत्वेन तन्निवेशः सुकरः ।

न च व्याप्तिग्रहस्थलाभावः, स्वप्ने भासमानानां स्फूर्त्यात्मकताया एव

तत्स्फुरणजन्यफलाधारत्वादिरूपं वा स्वरूपसम्बन्धविशेषो वाऽतिरिक्तः पदार्थो वा तत्स्फुरणविषयत्वं यदि तत्स्फुरणभिन्नत्वव्याप्यं स्यात्, तदाह—

नापि भेदनियतमिति । यदि तु तत्स्फुरणाभिन्ने इव तत्स्फुरणभिन्नेऽप्युपपद्यमानम्, तदाह नापि भेदसाधारणमिति ।

रूपभेदेनेति । वस्तुत्वादिना विषयत्वम्, तज्ज्ञानव्यक्तित्वेन च विषयित्वम् । तत्स्फुरणस्यैव दृष्टान्तत्वोक्तौ प्रभाकरमत इव तत्स्फुरणवत्तत्स्फुरणभिन्नेऽपि कलसे तत्स्फुरणविषयत्वसम्मानयाऽप्रयोजकत्वशङ्का न शक्यो सामान्यव्याप्तावपि वारयितुमित्याशयेन परैः स्फुरणभिन्नतया स्वीकृतेष्वेव व्याप्तिं ग्राहयितुं प्रयतते—स्वप्न इति । ननु 'अत्रायं पुरुषः स्वयं ज्योतिः' ( बृह० २.३.९) इति श्रुत्या स्वप्ने

समाधान—( बौद्ध ) आप ( नैयायिक ) का कथन ठीक नहीं है, क्योंकि तत्स्फुरणविषयतात्वरूप से ही हेतुता विवक्षित है । यदि शङ्का हो कि—यह तो हेतुतावच्छेदक मात्र का निर्देश आपने किया है, तत्स्फुरणविषयत्व क्या है, यह तो नहीं बताया—अतः कहते हैं—अभेदनियत अर्थात् तत्स्फुरणसामग्रीजन्यत्वादिरूप ही कुछ मान लेङ्गे ।' अभेदनियतत्व के अभेदसिद्धि से पूर्व असिद्ध होने पर भी कोई क्षति नहीं है, क्योंकि भेदनियतत्त्व भी तो सिद्ध नहीं है । ( तात्पर्य यह है कि भेदनियतत्व के सिद्ध होने पर तत्स्फुरणात्मकत्वरूप साध्य सिद्ध नहीं हो सकता, क्योंकि वह तत्स्फुरणात्मकत्व से विरुद्ध है किन्तु जब भेदनियतत्व सिद्ध नहीं है तब तत्स्फुरणात्मकत्व के सिद्ध होने में कोई विरोध ही नहीं है । अतः कोई हानि नहीं है ।) 'सर्वं प्रमेयमित्यादि' ज्ञानों में अभेद में स्वविषयकत्व आप (नैयायिक) भी मानते हैं । यदि अभेद में विषय-विषयिभाव का विरोध हो अर्थात् अभेद में विषय-विषयिभाव न बने तो रूपभेद से भी उस विरोध का परिहार असम्भव है, जैसे कि दण्डविशिष्ट देवदत्त कुण्डलविशिष्ट स्वयं पर आरूढ़ नहीं हो सकता ( क्योंकि देवदत्त का स्व के साथ अभेद है ) । और विषयतात्व तो वस्तुतः स्वविषयक ज्ञानरूप ही है, इसलिए—विषयतात्व का निर्वचन नहीं हो सकता, ऐसा आक्षेप नहीं किया जा सकता । अभेद ( ज्ञानज्ञेयाभेद ) असिद्धि दशा में भी 'घटस्तत्स्फुरणविषयतावान्' इत्यादि प्रतीतिसाक्षिक विषयता विशेष ही विषयतात्व है । इस प्रकार उसका हेतुरूप से निवेश करना सम्भव है ।

वक्तव्यत्वात्, अविद्ययापि भवन्मते विलक्षणस्य ज्ञानस्यैवोत्पादनौचित्यात्, विषयोत्पत्तौ गौरवान्निष्प्रयोजनत्वात् । एवं सति बाह्यप्रपञ्चापलापः स्यादित्यस्य बाह्यनिराकरणे सन्नद्धान् प्रति वक्तुमशक्यत्वात् । न चैवं जाग्रति चक्षुरादिव्यापारवैयर्थ्यम्; दृष्टिसृष्टिवादे भवतामपि समानत्वात्, स्वप्नदृष्टान्तेन नियोगपर्यनुयोगानर्हत्वोक्त्या फलबलेन कार्यकारणभावविशेषकल्पनया वा समाधान-

कार्यकारणभावविशेषकल्पनयेति । यादृशज्ञानानन्तरं यादृशज्ञानमनुभूयते तादृशज्ञानस्य समनन्तरप्रत्ययविधया तादृशज्ञानजननस्वभावतेत्यग्रे वक्ष्यते, अज्ञातं तु चक्षुरादिकं दृष्टिसृष्टिवादेऽपि नास्ति । प्रायो ज्ञानमात्रस्यैव भ्रमत्वादिति । ज्ञानस्य स्वलक्षणं यद्वपुस्तन्मात्रविषयकस्यैव ज्ञानस्य प्रमात्वम्, ननु स्वस्मिन् ग्राह्यतां ग्राहकतां वा विकल्पयतः, सुतरां तु तत्तेदन्तास्थिरताव्यापकतादिविषयकस्येति भावः ।

आत्मनः स्वयं ज्योतिष्ट्वप्रतिपादिकयाविरोधाद् वासनामयव्यावहारिकसूक्ष्मेन्द्रियजत्वं निराकृत्य मतभेदेनानवच्छिन्नावच्छिन्नचैतन्याश्रिताविद्या क्षुब्धा सती स्वप्ने विषयतज्ज्ञाने जनयतीति वेदान्तिनः प्राहुः । तथा च तयैव भगवत्याऽघटितघटनापटीयस्या निर्वाहात् कथङ्कारं स्वप्ने भासमानानां पदार्थानां स्फूर्त्यात्मकत्वं मन्यामह इत्यत आह—अविद्यापीति । 'तत्रालयविज्ञानं विपाकः सर्वबीजकम्' । ( विज्ञ० त्रि० २ पृ० ३६ )

इति सर्वबीजभूतालयविज्ञानमेव अविद्याद्वारा विलक्षणविज्ञानानि जनयिष्यतीति वैयर्थ्यं विषयोत्पत्तेः । गौरवान्निष्प्रयोजनत्वादिति । अप्रकाशितस्य तस्याकिञ्चित्करत्वात्प्रकाशापेक्षणे विलक्षणप्रकाशेनैव निर्वाहात् स एवोररीकर्तव्य इति भावः । वसुबन्धुरपि—विज्ञप्तिमात्रमेवैतदसदर्थाविभासनादिति ( विज्ञ० वि० १ ) स्वीचकार । एवं चेद् बाह्यप्रपञ्चमपलपति भवानिति चेत्, साधो त्वयापि मयेव स्वस्थेन भाव्यम् दुःखकारणाभावादित्याह—एवं सतीति । न चैवमिति । कल्पित-

## ज्ञानज्ञेयाभेदव्याप्तिग्रह के स्थलनिरूपण

'यत्र यत्र स्फुरणविषयत्वं तत्र स्फुरणात्मकत्वम्' इत्याकारक व्याप्तिग्राहक स्थल का अभाव है, ऐसा नहीं कह सकते । क्योंकि स्वप्न में भासित यावत् पदार्थों को स्फुरणात्मक ही मानना पड़ता है । ( अतः स्वाप्निक पदार्थ में स्फुरणविषयत्व भी है, और स्फुरणात्मकत्वसाध्य भी) वेदांन्तीमत में गौरव एवं प्रयोजन राहित्य होने से अविद्या के द्वारा भी विषय की उत्पत्ति न मानकर विलक्षण ज्ञान से ही उसकी उत्पत्ति मानना उचित है । बाह्यनिरावर्ता ( बौद्ध ) के सामने वाह्य प्रपञ्चापलाप की विभीषिका नगण्य है । सबके स्फुरणात्मक सिद्ध होने पर जागरा में चक्षुरादि के सन्निकर्षात्मक व्यापार के वैयर्थ्य की आशंका भी ठीक नहीं, क्योंकि प्रमाण व्यापार वैयर्थ्य तो दृष्टिसृष्टि बाद में वेदान्ती मत में भी समान है । स्वप्न दृष्टान्त के द्वारा प्रश्नाद्यनर्हत्वकथन से

स्यापि समानत्वात् । अन्यथाख्यातिवादेऽपि ज्ञानप्रत्यासत्तेर्गजं पश्यामीत्यादि-प्रतीतिसाक्षिकविषयताविशेषनियामकत्वाभावेन दोषस्यैव च तथात्वेन तदायत्त-विलक्षणविषयतयैव निर्वाहौचित्यात् । दोषत्वस्य चानुगतस्य क्वचिन्नियन्त्रि-

स्याज्ञातसत्त्वं नोपपद्यत इति सकलस्य प्रपञ्चजातस्य दृष्टि समसमयसृष्टिमुपेत्य चक्षुःसन्निकर्षजप्रतीतेरपि विषयाभावेनासत्त्वाज्जाग्रतप्रपञ्चस्यापि स्वप्नाविशेष, इति भवन्मत इव मयापि स्वप्नदृष्टान्तेनाऽक्षेपादिकं समाधास्यते, यादृश-ज्ञानानन्तरं यादृशज्ञानमनुभूयते तादृशज्ञानस्य समनन्तरप्रत्ययविधया तादृशज्ञानजननस्वभावतेति वक्ष्यमाणकार्यकारणभावेन वा शङ्कापङ्कं प्रक्षा-लयिष्यत इति किमनुपपन्नमिति भावः । अन्यथाख्यातिवादेऽपीति । प्राच्यनव्य-भेदेनास्ति तावन्मतद्वयमन्यथाख्यातिविषये । तत्र प्राच्याः पुरोवार्तीनि रजता-र्थिनः प्रवृतिदर्शनाद् भस्मकादिवदौत्सर्गिककार्यं निरूद्धय कार्यान्तिरोपजनन-सामर्थ्यवद् दोषोपहितेन्द्रियेणेदमर्थसम्प्रयुक्तेन देशान्तरीयमेव रजतमिदमर्थे गृह्यत —इदं रजतमिति । नव्यास्तु तादृशदोषोपहितेन्द्रियेणापि मध्यवर्तिनोऽग्रहणान्न देशान्तरीयं रजतं तद्गोचरोऽपितु पुरोवार्तिपदार्थ एव । स च न स्वात्मना-प्रकाश्यतेऽपितु तद्गतदोषवशाद् रूपान्तरेण रजतत्वादिनैवेति वदन्ति । अत-एवोक्तभ्रमस्यान्यथाख्यातिपदप्रतिपाद्यता । ज्ञानप्रत्यासत्त्या एकेन्द्रियसन्निकर्षेऽ-परत्र भानं जन्यते, तदपि विशेषणमेवेति 'उपनीतं विशेषणतयैव भासत' इति प्राहुः । तैरपि स्वप्नस्थले तद्विषयकत्वाभावात् तादृशविशेषणताविशेषनियाम-कत्वामेव दोषस्यैव नियामकत्वं स्वीकृतमिति मन्यते तदायत्तविलक्षणविशेषणतयैव निर्वाहे का क्षतिः । एवञ्च गजं पश्यामि—इत्यत्रैकस्यैव गजस्य भानाद् दोषस्यैव

एवं फल ( व्यवहार ) बलात् कार्यकारणभाव विशेषकल्पना से समाधान भी समान है ।

अर्थात् जैसे दृष्टि-सृष्टिवाद में निखिल आक्षेपोंकापरिहार स्वप्नदृष्टान्त से अर्थात् 'यादृश ज्ञान के अनन्तर यादृश ज्ञानोत्पत्ति होती है उसके प्रति वह कारण है' इदृश कार्यकारण-भावविशेष की कल्पना से वेदान्ती करता है, तथैव हम ( बौद्ध ) भी उसी को समनन्तर-प्रत्ययविधया कारण मानकर कर लेंगे । अन्यथाख्यातिवाद में भी ज्ञानलक्षणाप्रत्यासत्ति को 'गजं पश्यामि' इत्यादि प्रतीतिसाक्षिकविषयताविशेष का नियामक न मान कर दोष को ही मानते हैं । अतः दोषाधीन तादृशविलक्षणविषयता से ही 'घटं पश्यामि' इत्यादि जागर-व्यवहार का निर्वाह करना उचित है । व्यक्तिविशेष में नियन्त्रित एवं अनुगत दोषत्व के सम्भव न होने से व्यवहारानुरोधेन उसे ( दोष ) पूर्ववर्ति ज्ञान में ही

**तस्याभावेन फलबलेन पूर्ववर्तिज्ञाने एव तस्य वक्तुं शक्यत्वात्, बहिष्ट्वादि-विषयकतया प्रायो ज्ञानमात्रस्यैव भ्रमत्वात्। घटो द्रव्यमित्यादौ तादात्म्य-सम्बन्धस्य क्लृप्तत्वात् सर्वं प्रमेयमित्यादिव्यवहारे च तेन सम्बन्धेन ज्ञानस्य**

नियामकत्वमिति भावः। ननु दोषस्याप्यतिरिक्तस्य सिद्धिप्रसङ्ग इति मैवं वोचः, यतो दोषबुद्धिरेव स इति कथं कथय दोषत्वं परिचिनुयाम्, यतो न तावद्दोषत्व-मनुगतं किञ्चित् पश्यामः एकत्र दोषत्वेन दृष्टस्यापरत्र गुणत्वदर्शनात्। तथा च पूर्ववर्ति ज्ञानात्मक एव स। पूर्ववर्तिज्ञाने = वासनात्मके, निलीनं हि ज्ञानं वासना। ननु तत्किं सर्वत्र ज्ञानानां भ्रमरूपतैवेति चेत्सत्यम्, स्वलक्षणवपुमात्रविषयं ज्ञानं परित्यज्य सर्वस्य तद्रूपतैवेत्याह—प्राय इति। एवञ्च ज्ञानज्ञेययोरभेद एव। घटोद्रव्यमिति। अत्र हि सामानाधिकरण्यात् तादात्म्यमेवाभ्युपेयम्। चतुर्धा हि सामानाधिकरण्यम्; अध्यासे—इदं रजतमित्यादौ, बाधायां—स्थाणुः पुमानि-त्येवमादौ विशेषणविशेष्यभावे—नीलमुत्पलमित्यादौ अभेदे—"तत्त्वमसी" त्येवमादौ। सर्वत्रापि च तादात्म्यप्रतीतिर्जायते, अध्यासे तावत् आधारारोप्ययोः, बाधायां बाध्यमानाधिष्ठानयोः, विशेषणविशेष्यभावे विशेषणविशेष्ययोः, अभेदे च तयोर्द्वयोरिति प्रकृतेऽपि तथा। ननु तर्हि घटो घट इत्यपि स्यादिति चेत् मैवं मंस्थाः, तादात्म्यसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रमात्वावच्छिन्नमेव वा प्रति तद्धर्मभेदस्य कारणतायाः क्लृप्तत्वात्। अत एवोक्तं खण्डने—

नातत्तन्मन्यसे तावन्न तत्तदपि मन्यसे।
सामानाधिकरण्यं हि रूपभेदमपेक्षते॥ ( ख० २९ )

इति। एवं सर्वं प्रमेयमिति व्यवहारोऽपि ज्ञानप्रयोजकतादात्म्यनिबन्धन एवेति सर्वत्रैवौचित्यं चुम्बति।

स्यादेतत्, ग्राह्यग्राहकयोरभेदे घटः स्फुरति इत्यत्रापि घटस्फुरणयोरभेदात् तादात्म्याध्यवसाय एव स्यात्। न चात्राख्यातार्थाश्रयत्वादेर्भानाद् घटे स्फुरणा-श्रयत्वप्रतीतिर्बाधिकेति वाच्यम्, ज्ञानज्ञेययोरभेदसिद्धावाश्रयत्वप्रतीतेरेवासम्भ-वात्। यथा मणिकारादिमते चैत्रो जानातीत्यादौ ज्ञानकर्तृत्वादेरननुभवात् ज्ञाना-श्रयत्वादिलक्षणायां गौरवाच्च—आश्रयतासम्बन्धेन ज्ञानप्रकारकधीस्वीकारादा-ख्यातं न कर्तृत्वादिकमाह, किन्तु साधुत्वमात्रार्थम्। यथा च वेदान्तनये "अस्ति

कहना चाहिए। बहिष्ट्वादिविषयकतया प्रायः ज्ञानमात्र ही भ्रम होता है। घटो द्रव्यम् इत्यादि में तादात्म्यसम्बन्ध सिद्ध होने से तथा सर्वं प्रमेयम् इत्यादि व्यवहार के प्रति तादात्म्यसम्बन्ध से ज्ञानगत-प्रयोजकता के निश्चित होने से अन्यत्र घटः पटः सामान्यतः व्यवहार मात्र में भी तादात्म्य सम्बन्ध से ज्ञान को प्रयोजक मानना ही

**प्रयोजकताया अपि क्लृप्तत्वाच्चान्यत्रापि तथैवौचित्यात् । घटः स्फुरतीत्यादावपि तादात्म्याध्यवसाय एवेति तु न मन्यामहे, यौक्तिको ह्ययमर्थो नत्वानुभविकः, नचेदेवं घटः स्फुरणमित्यपि कुतो नानुभूयेत्, भेदग्रहस्य प्रतिबन्धकत्वं तु समानम् । इदन्तु स्यात्—यदि घटः स्फुरतीत्यादौ तादात्म्यातिरिक्तसम्बन्धभानं तदा तादात्म्यसिद्धौ सत्यां तस्याः प्रतीतेरप्रमात्वमेव वक्तव्यम्, यदि तु तादात्म्यभानं तदा तत्प्रमात्वमेवेति ।**

यदि तु तादात्म्यभानमिति । भेदाग्रहदशायामपि तादात्म्यभानस्य नियन्त्रणा नास्ति, कस्यचित्तादात्म्यविलक्षणविषयविषयिभावस्यापि भानसम्भवादित्याशयेन यदि त्विति ।

ब्रह्म" इत्यादौ ब्रह्मसत्ताया अनादित्वेन तां प्रति ब्रह्मणः कर्तृत्वासम्भवान्नाख्यातार्थः कर्तृत्वम्, निर्धर्मितावच्छेदक शाब्दबुद्ध्यसम्भवेनाश्रयत्वस्याख्यातेनाबोधादाख्यातं साधुत्वमात्रार्थम्, तथा प्रकृतेऽपि स्फुरणातिरिक्तस्य घटादेरसत्वेनाख्यातेनाश्रयत्वभानासम्भवात् साधुत्वमात्रार्थमेव तदिति चेत्तत्राह—घटः स्फुरतीति । तत्र तादात्म्यस्य युक्तिसिद्धत्वेऽपि तद्विषयकानुभवाभावान्नैवमिति ।

ननु द्विविधं हि तादात्म्यमुपलभ्यतेऽत्यन्ताभेदे भेदाभेदयोश्चेति, तत्र न्यायनयेऽत्यन्ताभेदे तादात्म्यमभ्युपेयते—यथा द्रव्यगुणयोः कार्यकारणभावे कार्यकारणयोः सामानाधिकरण्यसंपादनार्थं कारणतावच्छेदकतया तादात्म्याभ्युपगतिः । तदितरेत्वत्यन्ताभेदे तादात्म्ये प्रमाणाभावाद् भेदसहिष्णु एव तादात्म्यमभ्युपगच्छन्ति । तदुक्तं चन्द्रिकाकृद्भिः—"अत्यन्ताभावस्यैव प्रतियोगिता भेदसहिष्णुना तादात्म्येनावच्छिन्ना, न तु भेदस्य, तादृशतादात्म्यस्य भेदाविरोधित्वात्, भेदा-

उचित है । घटः स्फुरति इत्यादि में भी घट का ज्ञान के साथ तादात्म्य निश्चित है यह नहीं मान सकते, क्योंकि इसमें तादात्म्य युक्तिसिद्ध होने पर भी अनुभवसिद्ध नहीं है । अनुभव से तो घट में स्फुरणाश्रयत्व प्रतीत होता है । यदि घटः स्फुरति में तादात्म्य अनुभव सिद्ध मान लिया जाय तो 'घटः स्फुरणम्' यह भी अनुभव क्यों नहीं होता, अर्थात् होना चाहिए । यदि कहा जाय कि घटः स्फुरणम्' इस प्रकार के अनुभव में घट स्फुरण का भेदग्रह प्रतिबन्धक है, अतएव घटः स्फुरणम् यह अनुभव नहीं होता, तो घटः स्फुरति' में भी घटस्फुरण का भेदग्रह प्रतिबन्धक उपस्थित होने से तादात्म्यानुभव नहीं मान सकते ।

वस्तुस्थिति तो यह है कि यदि घटः स्फुरति इत्यादि में तादात्म्यातिरिक्त सम्बन्ध ( विषयविषयिभाव ) का भान होता है, तो तादात्म्य की सिद्धि होने पर तादात्म्यातिरिक्त सम्बन्धविषयक प्रतीति में अप्रमात्व कहना होगा । और यदि तादात्म्यातिरिक्त सम्बन्ध का भान न होकर तादात्म्य का ही भान होता है तो उसे ( तादात्म्य विषयक प्रतीति ) ही प्रमा मान लेंगे ।

**अथ तादात्म्य भेदाभेदरूपमेव क्लृप्तम्, नत्वत्यन्ताभेदरूपम्, तस्य सम्बन्धताया अप्रामाणिकत्वात्, घटो द्रव्यमित्यादौ भेदाभेदयोरेवानुभवात्, तथाच ज्ञानज्ञेययो भेदाभेदवाद एवापतितः, प्राचीनग्रन्थेषु च सौगतनये आकाराकारिणोरभेद एव सिद्धान्ततया प्रसिद्धः, 'चित्तमात्रं भो जिनपुत्रा' इति सौगत-**

सहिष्णु च तादात्म्यं नास्त्येव, अत्यन्ताभेदे तादात्म्यादिसम्बन्धासम्भवात्' इति। उपाध्यायेनापि—'एतन्मते कपालादौ घटादेस्तादात्म्यं सम्बन्धः, न तु घटादौ' इति। तथा च प्रकृते कीदृशं तादात्म्यमभिप्रेतमित्यत आह—अथेति। अप्रामाणिकत्वादिति। सम्बन्धमात्रस्य द्विष्ठत्वघटितत्वेनैकप्रतियोगिकापरानुयोगिकत्वस्य सर्वत्र दृष्टतयाऽत्यन्ताभेदे च तादात्म्यस्य तदसम्भवान्न तादात्म्यस्य सम्बन्धत्वं सम्भवति। वस्तुतस्तु भेदत्वमखण्डोपाधिरिति वदद्भिर्नव्यतार्किकैरपि परित्यक्त एवात्यन्ताभेदे तादात्म्यपक्षः। ननु भवद्भिरपि घटो द्रव्यमित्यादावत्यन्ताभेद एव तादात्म्यमुररीकृतमितिचेत्तत्राह—घटो द्रव्यमित्यादाविति। प्राचीनग्रन्थेषु = बिज्ञप्तिमात्रतासिद्ध्यादिषु।

चित्तमात्रमिति। 'चित्तमात्रं भो जिनपुत्रा यदुत त्रैधातुकम्' इति पूर्णं सूत्रम्। त्रैधातुकं = धातुत्रयात्मकं सर्वं जगत् चित्तमात्रं विज्ञप्तिमात्रमित्यर्थः। चित्तं मनो विज्ञानं विज्ञप्तिरिति पर्यायाः। त्रैधातुकमित्यनेन रूपधात्वरूपधातुकामधातवो गृह्यन्ते। धातुशब्देन धर्माः सन्तानात्मकजगतोऽवयवा वोपकरणानि वोच्यन्ते, एवं लोकवाचकोऽपि धातुशब्दः। ते चाष्टादश भवन्ति, तत्रेन्द्रियाणां षट्कम्, विषयषट्कं, विज्ञानषट्कञ्चेति। यथा—

| इन्द्रियषट्कम् | विषयषट्कम्, | विज्ञानषट्कम्, |
|---|---|---|
| १. चक्षुर्धातुः। | १. रूपधातुः। | १. चाक्षुषज्ञानं-चक्षुर्विज्ञानधातुः। |
| २. श्रोत्रधातुः। | २. शब्दधातुः। | २. श्रावणज्ञानं-श्रोत्रविज्ञानधातुः। |
| ३. घ्राणधातुः। | ३. गन्धधातुः। | ३. घ्राणजज्ञानं-घ्राणविज्ञानधातुः। |
| ४. जिह्वाधातुः। | ४. रसधातुः। | ४. रासनज्ञानं-जिह्वाविज्ञानधातुः। |
| ५. कामधातुः। | ५. स्प्रष्टव्यधातुः। | ५. स्पर्शजज्ञानं-कायविज्ञानधातुः। |
| ६. मनोधातुः। | ६. धर्मधातुः। | ६. आन्तरवस्तुज्ञानं-मनोधातुः। |

पूर्वपक्ष—तादात्म्य भेदाभेदरूप ही है न कि अत्यन्ताभेदरूप, अर्थात् तादात्म्यसम्बन्ध भेदसहिष्णु-अभेद में होता है, अत्यन्ताभेद में तादात्म्य नहीं होता। क्योंकि अत्यन्ताभेदरूप तादात्म्य के सम्बन्धत्व में कोई प्रमाण नहीं है। 'घटो द्रव्यम्' इत्यादि में भी भेदाभेदरूप तादात्म्य का ही अनुभव होता है। ( घटत्वेन द्रव्यत्वेन भेद है, एवं पृथ्वीत्वेन पदार्थत्वेन अभेद है ) तथा च आप के (बौद्ध ) मत में भी ज्ञान-ज्ञेय का भेदाभेद ही सिद्ध हो रहा है। इष्टापत्ति भी नहीं की जा सकती, क्योंकि प्राचीन ग्रन्थों

**सूत्रञ्चेदमेवाचष्ट इति चेत्का क्षतिः ? भवतु नव्यविज्ञानवाद एवायम् । युक्ति-बलादागतो ह्यर्थो न केनानुरुध्येत, अपसिद्धान्तस्याकिञ्चित्करतायाः 'रिक्तस्य जन्तो' रित्यादिवदद्भिः सौगतैः स्वीकारात्, भेदस्यापि ज्ञानात्मकत्वेन वस्तु**

**रिक्तस्य जन्तोरिति । 'रिक्तस्य जन्तोर्जातस्य गुणदोषमपश्यतः । विलब्धा बत केनामी सिद्धान्तविषयग्रहाः' ॥ इति सम्पूर्णः श्लोकः । विलब्धा इति । अन्तर्भावितण्यर्थतयोत्पादिता इत्यर्थः । वस्तु ज्ञानात्मकमेवेत्यादि । ज्ञानज्ञेययोर्भेदाभेदाभ्युपगमे भेदस्यापि ज्ञेयतया**

'कामधात्वाप्ताः सर्वे' इत्युक्त्या सर्व एवाष्टादशधातवः कामधातौ संगृहोताः । 'विना गन्धरसघ्राणजिह्वाविज्ञानधातुभिरि'त्युक्त्या गन्धादिचतुष्टयं त्यक्त्वाऽव-शिष्टाश्चतुर्दशधातवो रूपधातौ भवन्ति । 'आरूपाप्ता मनोधर्म मनोविज्ञानधातवः इत्युक्त्याऽऽरूपधातौ मनोधातुधर्मधातुमनोविज्ञानधातवाऽन्तर्भूताः । अन्येषां पञ्च-दशानां तत्राभावः । एवञ्चतत्रत्यजोवेषु यथायोग्यमेतेधातवः सन्ति । नहि सर्वे सर्वत्रेति द्रष्टव्यमभिधर्मकोशादाविति प्रकृतमनुसरामः । तथा च सूत्रेणानेन तयोरभेद एव प्रतिपाद्यते ।

युक्तिबलादागतस्य भेदाभेदपक्षस्य स्वीकारे नव्यविज्ञानवाद एवास्त्वित्याह–भवत्विति । अपसिद्धान्तोऽप्यकिञ्चित्कर एवेत्याह–रिक्तस्येति । सौगतानां मते भेदस्यापि ज्ञानात्मकत्वेन भेदाभेदाभ्युपगमेऽपि 'सर्वं वस्तु ज्ञानात्मकमेवेति मूल-सिद्धान्तः स्वस्थ एवेत्याह—भेदस्येति । ज्ञानात्मकमेवेति । एवकारेण ज्ञानात्यन्त-

में बौद्ध सिद्धान्त में आकार-आकारी ( विषयविषयी ) का अभेद ही सिद्धान्तरूप से प्रसिद्ध है । 'चित्तमात्रं भो जिनपुत्राः' ( हे बौद्ध पुत्र ! ज्ञानमात्र ही सभो पदार्थ हैं ) यह सौगतसूत्र ज्ञानज्ञेय के अभेद का प्रतिपादन करता है ।

सिद्धान्तपक्ष—तादात्म्य के भेदाभेदात्मक मानने से भो हमारी ( बौद्ध ) कोई क्षति नहीं है क्योंकि इसे नव्यविज्ञानवाद ही मान लिया जाय । यौक्तिकपदार्थ का अपलाप कौन कर सकता है । अपसिद्धान्त की विभीषिका भी उचित नहीं, क्योंकि वस्तु के युक्ति सिद्ध होने पर अपसिद्धान्त अकिञ्चित्कर हैं । इसके अकिञ्चित्करत्व का प्रतिपादन करते हुए बौद्धों ने कहा है—

रिक्तस्य जन्तोर्जातस्य गुणदोषमपश्यतः ।
विलब्धा बत केनामी सिद्धान्तविषयग्रहाः ॥

सभी प्राणी रिक्त अर्थात् सिद्धान्तहीन होकर ही उत्पन्न होते हैं । उस काल में वह किसी के गुण-दोष को नहीं जानता, ऐसी स्थिति में किसी भी सिद्धान्त के प्रति ममत्व होना भ्रान्तिमूलक है, तथा चित्त में सिद्धान्तविषयक आग्रह किसी वञ्चक के द्वारा प्राप्त वञ्चनामात्र है' । इस प्रकार भेद के ज्ञानात्मक होने से 'सर्वं वस्तु ज्ञानात्मकमेव' इस सिद्धान्त का भङ्ग ज्ञानज्ञेय भेदाभेद पक्ष में भी नहीं होता ।

**ज्ञानात्मकमेवेति सिद्धान्तस्य तथाप्यभङ्गाच्च। लघुचन्द्रिकाकृतस्तु— 'घटादिकं विषयितास्थानीयो ज्ञानधर्मो ज्ञानाद्भिन्नाभिन्नतया बौद्धैरुच्यत' इत्येवाचचक्षिरे। किञ्च 'आकारसहिता बुद्धिर्योगाचारस्य सम्मते'ति सौगतोक्तिराकारस्य भिन्नाभिन्नत्वे एव स्वरसतः सङ्गच्छते, अत्यन्ताभेदे साहित्यानुपपत्तेः, अत्यन्तभेदे च बाह्यस्य स्वीकारप्रसङ्गेन तेन तस्यानुपपादनीयत्वात्। न च विरुद्धयोर्भेदाभेदयोरेकज्ञानात्मकत्वासम्भवः, अनाहार्यग्रहे एकत्र तयोर-**

स्वविषयकज्ञानेन भेदाभेद एव नत्वत्यन्ताभेद इति यद्यपि, तथापि वस्तु ज्ञानात्मकतां न जहातीतिसिद्धान्तो नैतावतापि हीयत इति भावः। तेन = अत्यन्तभेदेन। तस्य = साहित्यस्य। अनाहार्यग्रहे इति। आहार्यज्ञाने त्विच्छामहिम्नैव भेदाभेदयोरवगाहनमनु-

भेद एव व्यवच्छिद्यते। विषयितास्थानीय इति। एतेन विषयिताया बौद्धमतेऽनुपगम उक्तः। ज्ञानधर्म इति। तादात्म्येनेति शेषः। भिन्नाभिन्नतयेति। अत्यन्तं भेदेऽभेदे वा तादात्म्येन धर्मधर्मिभावानुपपत्तेरिति भावः। आकारसहितेति। पारमार्थिकाकारसहितेत्यर्थः। योगाचारस्येति। शिष्यैस्तावद्योगश्चाचारश्चेति द्वयं करणीयम्। तत्राप्राप्तस्यार्थस्य प्राप्तये पर्यनुयोगो योगः। गुरूक्तस्यार्थस्याङ्गीकरणमाचारः। गुरूक्तं भावनाचतुष्टयं बाह्यार्थस्य शून्यत्वं चाङ्गीकृत्यान्तरस्य शून्यत्वं चाङ्गीकृतं कथमिति पर्यनुयोगस्य करणात्केषांचिद् योगाचारप्रथा। एषा हि तेषां परिभाषा—स्वयं वेदनं तावदङ्गीकार्यम्। अन्यथा जगदान्ध्यं प्रसज्येत।

तत्कीर्तितं धर्मकीर्तिना—

अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति। इति।
'केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः।'

इति शेषार्द्धः। स्वारस्यमेव स्फोरयति—अत्यन्ताभेद, इति। अनाहार्यग्रह इति। आहार्यन्तु स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकं ज्ञानम्, तत्रेच्छाया माहात्म्यात्स्याद्विरुद्धयोरप्यवगाहनम्। एकत्रेति। सामानाधिकरण्य-

इस विषय में लघुचन्द्रिकाकार ने भी कहा है कि—'घटादिकं विषयितास्थानीयो ज्ञानधर्मो ज्ञानादभिन्नाभिन्नतया बोद्धैरूच्यते' ( घटादिपदार्थ विषयितास्थानीय ज्ञानधर्म है और वे ज्ञान से भिन्नाभिन्नरूप से बौद्ध द्वारा स्वीकृत है )।

किञ्च—'आकारसहिता बुद्धिर्योगाचारस्य सम्मता' ( आकार = घटादि विषय सहित बुद्धि योगाचार को अभिमत है ) यह सौगत का कथन आकार अर्थात् घटादिविषय को ज्ञान से भिन्नाभिन्न मानने पर ही स्वरसतः सङ्गत होता है। क्योंकि अत्यन्ताभेद पक्ष में साहित्य नहीं बनेगा। और अत्यन्तभेद पक्ष में बाह्यवस्तु के स्वीकृत हो जाने से अत्यन्तभेद के द्वारा साहित्य का उपपादन नहीं किया जा सकता है। अर्थात् जब बाह्य-

**वगाहनस्याप्यसम्भवेन समानत्वात् । समाधानस्यापि कथञ्चित्समानत्वाच्च । चित्राकारस्य वक्ष्यमाणत्वाच्च । वस्तुतस्तु घटमहं जानामीतिप्रतीतेरेवाकार-**

**मन्यते । समानत्वाच्चेति । भेदसामानाधिकरण्योपलक्षिताभेदस्य त्वयाऽवगाहनं स्वीक्रियते, मया तस्यैव ज्ञानात्मकत्वं स्वीकार्यम् । विषयितासम्बन्धेनेव तत्स्थानीयेन स्वविषयक-ज्ञानात्मकेन सम्बन्धेन भेदाभेदयोर्ज्ञाने विरोधाभावश्च शक्यो वक्तुम् । ननु तादृशसम्बन्ध-स्यैव दुर्निरूपतया कथमेवम्, तत्राह चित्राकारस्येति ।**

स्थल इति शेषः। तदुक्तं वाचस्पत्ये—'सामानाधिकरण्यप्रत्यये हि भेदाभेदौ भासेते' इति। समाधानस्यापीति। अभेदे भेदसामानाधिकरण्योपलक्षितत्वस्य विशेषणोपलक्षणत्वाभ्यां विकल्पे दोषतादवस्थ्यादुक्तं कथञ्चिदिति। स्वरसतः साहित्यविषयिकायाः प्रतीतेराकारविषयत्वाभावादाह—वस्तुतस्त्विति। प्रतीति-रेवेति। एवकारेण साहित्यविषयकप्रतीतिर्व्यवच्छिद्यते। तद्विषय इति। तदा

वस्तु मान ही ली गयी तो अत्यन्तभेद के द्वारा ज्ञान के साथ उसका साहित्य कहना ही व्यर्थ है। परस्पर विरुद्ध भेदाभेद के एकज्ञानात्मकत्वासम्भव को शंका नहीं को जा सकती, क्योंकि अनाहार्य ज्ञान में एकत्र ( एक विषय में ) भेदाभेद का अवगाहन करना भी असम्भव होने से वेदान्ती भी हमारे ( बौद्ध ) समान ही हैं। ( भाव यह है कि आहार्यज्ञान में तो इच्छा माहात्म्य से विरुद्ध भेदाभेद का भी एकत्र अवगाहन हो जाता है, किन्तु अनाहार्यज्ञान में भो विषय का भेदाभेद तादात्म्य जैसे वेदान्ती मानता है, वैसे ही मेरे बौद्ध मन में भी विरुद्ध भेदाभेद एक ज्ञानात्मक हो सकता है )। भेदसामानाधिकरण्योपलक्षित अभेद का अवगाहन होने से विरोध का समाधान हो सकता है, तो मैं भी उसी को ज्ञानात्मक मानता हूँ। अतः समाधान भी समान ही है। यदि विषयिता सम्बन्धेन एक ज्ञान में भेदाभेदावगाहन में विरोध नहीं है, तो मेरे ( बौद्ध ) मत में भी विषयितास्थानीय स्वविषयक ज्ञानात्मक सम्बन्धेन भेदाभेद ज्ञान में क ई विरोध नहीं है। और ज्ञान की चित्राकारता भी अग्रे वक्ष्यमाण है।

वस्तुतस्तु 'घटमहं जानामि' इस प्रतीति के आकार ( घटादि ) विषयक होने से तथा इस प्रतीति के विषयभूत घटादि में ज्ञानाभेद साधक यत्र-यत्र ज्ञानविषयत्वं तत्र तत्र ज्ञानभिन्नत्वं इत्याकारक व्याप्ति के दृढ़ होने से ज्ञानज्ञेय का अत्यन्ताभेद पक्ष ही मानना उचित है। साहित्य-व्यवहार के विकल्पात्मक होने से तद्विषयक साहित्य भी विकल्पात्मक ही है, अतएव अत्यन्ताभेद पक्ष में भी 'आकारसहिता' इत्यादि साहित्य-व्यवहार की अनुपपत्ति नहीं कहो जा सकती। अर्थात् वस्तु के सर्वथा न रहने पर भी जैसे 'शशशृङ्गम्' यह व्यवहार होता है, वैसे हो शब्द के माहात्म्य से साहित्यव्यवहार भी हो सकता है। शब्दज्ञानानुपातो वस्तुशून्यो विकल्प' ऐसा योगसूत्र में कहा गया है।

**विषयकत्वेन तद्विषये तदभेदव्याप्तेश्च दृढ़त्वेनात्यन्ताभेदपक्ष एवोचितः, साहित्यव्यवहारस्य विकल्पात्मकत्वात्, एवञ्च साहित्यमपि विकल्पात्मकमित्यन्यत् ।**

**एतेन बहिष्ट्वं तावज्ज्ञानभिन्नत्वेदन्त्वाद्यपरपर्यायम्, तच्चालीकं वाऽनलीकं वा, आद्ये अयं घटः इत्यादिज्ञानविषयस्यापि तस्य ज्ञानात्मकत्वासम्भवेन तत्र व्यभिचारो दुर्वारः, द्वितीयेऽपि ज्ञानभिन्नस्य कस्यचिदावश्यकत्वेन व्यभिचार**

ज्ञानपरामर्शः । दृढ़त्वेनेति । व्याप्तिगतदृढत्वञ्च—अप्रयोजकत्वशंकोपशमकतर्कसाहित्यादिरूपत्वम् ।

अत्यन्ताभेदपक्ष एवोचित इति । तथा चोक्तं धर्मकीर्तिना—

धियोनीलादिरूपत्वे बाह्योऽर्थः किं निबन्धनः ।
धियोऽनीलादिरूपत्वे बाह्योऽर्थः किं निबन्धनः ॥ इति ।

अन्यत्रापि— न चित्तेषु बहिर्भूता इन्द्रियार्थाः स्वभावतः ।
रूपादिप्रतिभासेन चित्तमेव हि भासते ॥ इति ।

तस्माच्चित्तमेव चित्राकारं परं निरपेक्षप्रकाश्यं प्रकाशते इति साकारविज्ञानवादियोगाचाराः ।

नन्वेवं तर्हि 'आकारसहितेति सौगतोक्तसाहित्यव्यवहारोऽनुपपन्नः स्यादित्यत आह—साहित्यव्यवहारस्येति ।

एतेनेति । एतेन नाशङ्कनीयमिति योजना । इदन्त्वादीति । आदिना तत्तादिपरिग्रहः । इत्यादिज्ञानविषयस्यापीति । इदं ज्ञानं स्वविषयत्वरूपस्वप्रकाशत्वपक्षे स्वरूपतः स्वात्मानमवगाहते, एतेन तादृशस्वप्रकाशत्वपक्षे घटमहं जानामीत्येव ज्ञानं जायत इति निष्फलो हठस्त्याज्य एव, अयं घट इति सर्वानुभवसिद्धज्ञानस्यानपलापात् । ज्ञानात्मकत्वासम्भवेनेति । सदसतोरभेदासम्भवादिति भावः । नन्वेकज्ञानभिन्नं ज्ञानान्तरमस्मन्मतेऽस्त्येवानलीकमित्या-

पू० प०—इदन्त्व के अपर पर्याय ज्ञानभिन्नत्व ही यदि बहिष्ट्व है, तो वह अलीक है ? अथवा अनलाक है ? प्रथम पक्ष में 'अयं घट' इत्यादि ज्ञान का विषयीभूत इदन्त्व विशिष्ट घट भी ज्ञानात्मक नहीं हो सकता, क्योंकि इदन्त्व विशिष्ट घट तो अलीक है और ज्ञान अलीक है नहीं, अतः इन दोनों की एकता कैसी होगी । अतः यत्र ज्ञानविषयत्वं तत्र ज्ञानात्मकत्वं इस व्याप्ति का व्यभिचार है । (यहाँ इदन्त्व विशिष्ट घट में ज्ञान विषयत्व तो है किन्तु ज्ञानात्मकत्व नहीं है, अतः व्यभिचार स्पष्ट है ।) द्वितीय पक्ष में भी ज्ञान से भिन्न किसी वस्तु के आवश्यक होने से तथा उस ज्ञानभिन्न वस्तु के ज्ञानात्मक न होने से व्यभिचार ही है । ज्ञानान्तर ही उक्त ज्ञान का विषय है' यह भी कहने योग्य नहीं है, क्योंकि घटादि भी ज्ञान के विषय होते हैं । एवं एक ज्ञानभिन्न ज्ञानान्तर

**एव, नहि ज्ञानान्तरमेवोक्तज्ञानविषयः, तद्विषयो वा कथं तदन्य इति नाशङ्कनीयम्, ज्ञानभिन्नत्वस्यापि स्वविषयकज्ञानात्मकत्वात्, क्वचित्तस्यालीकत्वोक्तिस्तु यादृशं ज्ञानभिन्नत्वं तार्किकप्रसिद्धं तदनङ्गीकारमात्राभिप्रायेण । हन्त तदपीदृशज्ञानविषयतां नातिवर्तते इति चेत्किमेतावता ? अलीकं न किञ्चित्स्यादिति चेत्, तत्किमलीकरक्षणायैव धृतव्रतोऽसि । शशशृङ्गमस्तीत्यादेरपीदृश्येव गतिः। अतएव विज्ञानवादानुसारिभिः स्वातन्त्र्यवादिभिरपि—**

शङ्कयाह—नहीति । एवं सति प्रकृतैकज्ञानभिन्नत्वरूपं बाह्यत्वम् 'अयं घट' इति प्रकृतज्ञाने भासमानं वाच्यम्, न चैवं सम्भवति ज्ञानस्य स्वमात्रविषयकत्वादिति भावः । तद्विषय इति । बहिष्ट्वं ज्ञानविषयः सन् कथं ज्ञानान्यः, बौद्धमते ज्ञानविषयस्य ज्ञानात्मकत्वनियमात् । क्वचिदिति । प्रथममिथ्यात्वव्याख्यानावसरेऽद्वैतसिद्धौ चन्द्रिकाकाराः—'ज्ञानातिरिक्तरूपेणालीक एव प्रपञ्चो विकल्पविषय इति प्रतिपेदिरे । विठ्ठलोऽपि तत्रैव—अभेदः तृतीयार्थः । ज्ञानादत्यन्तभिन्नः प्रपञ्चोऽलीक एवेत्यर्थः, साकारवादिबौद्धमतमिदम् । तन्मते हि अयं घट इत्यादिविज्ञानेषु बाह्योऽर्थो घटादिर्न भासते, किन्तु विज्ञानमेव स्वप्नविज्ञानवदिति प्रत्यपादि । अथ चाचकथत्पार्थसारथिमिश्रोऽपि—

"ज्ञानमेवैवमाकारमात्मना प्रथते कुतः ।
नाप्रत्यक्षस्य तस्यास्ति प्रमाणान्तरतो गतिः ॥
सवेद्यत्वाच्च नीलादेर्ज्ञानाकारत्वनिश्चयः ।
अर्थान्तरस्य न ग्राह्यलक्षणं नहि युज्यते ॥"
( शा० दी०, १.१.५ पृ० ५२ )

उक्त ज्ञान में भासित भी नहीं है । यदि वह ज्ञान का विषय है तो ज्ञानभिन्न भी कैसे होगा, क्योंकि बौद्धमत में ज्ञानविषय को ज्ञानात्मक मानते हैं ।

सि० प०—ज्ञानभिन्नत्व भी स्वविषयकज्ञानात्मक ही है । कुत्रचित् ज्ञानभिन्नत्व के लिए अलीकत्वकथन तो यादृश = स्वविषयकज्ञानानात्मकज्ञानभिन्नत्व तार्किक मत में प्रसिद्ध है, उसे हम ( बौद्ध ) नहीं मानते, इस अभिप्राय से है । यदि कहा जाय कि तार्किक मत में प्रसिद्ध ज्ञानभिन्नत्व भी तो इदृशज्ञान अर्थात् 'सर्वं स्वविषयकज्ञानात्मकम्' इत्याकारकज्ञानविषयता का अतिक्रमण नहीं करता, तो इससे = सर्वं स्वविषयकज्ञानात्मकम् इदृश ज्ञानविषय होने से क्या हुआ । यदि वह ज्ञानभिन्नत्व अलीक नहीं हो सकता' यही सिद्ध हुआ, तो क्या आप ( नैयायिक ) अलीक रक्षणार्थ धृतव्रत हैं ? ( अर्थात् यदि अलीक सिद्ध नहीं हो रहा है तो न सही । यदि कहें कि शशशृङ्गादि की क्या गति होगी तो ) शशशृङ्गमस्ति इत्यादि की भी यही गति है । ( अर्थात् शशशृङ्गमस्ति इत्यादि ज्ञानस्थल में भी शशशृङ्गादि स्वविषयकज्ञानात्मक है, अलीक नहीं ।

**"कः सद्भावविशेषः कुसुमाद्भवति गगनकुसुमस्य ।**
**यत्स्फुरणानुप्राणो लोकः स्फुरणञ्च सर्वसामान्यम् ॥"**

**( महार्थमञ्जर्याम् )**

**इति "महासत्ता हि खपुष्पादिकमपि व्याप्नोती" ति चोक्तम् । वेदान्तिना तु**

वेदान्तिना तु तस्येति । तस्य = शशशृङ्गमस्तीत्यादेः । अनिर्वाच्यविषयकत्वोपगमस्तु सत्तादात्म्यावगाहननिबन्धनः । तदनवगाहनस्थले त्वलीकविषयकत्वम्, अलीकस्य सत्तादात्म्यानापन्नत्वादित्याशयेनाह विकल्पवृत्तिस्त्विति ।

"ज्ञानाकारो ज्ञानस्य तादात्म्य सम्बन्धेन धर्मो विषयितास्थानीयः, तादात्म्यञ्च भिन्नाभिन्नयोरेवेति ज्ञानादत्यन्तभिन्नो विषयोऽलीक एवेति" । ( शास्त्रदी० )

नन्वेवं शशशृङ्गमस्तीत्यादेः का गतिरित्यत आह—शशशृङ्गमिति । ईदृश्येव = ज्ञानात्मिकैवेत्यर्थः ।

कः सद्भावविशेष इति । प्रसिद्धकुसुमात् गगनकुसुमस्य सद्भावे को विशेष इति चेन्न कश्चिदित्यर्थः, तत्र हेतुमाह—यत्स्फुरणानुप्राण इति । यतो हि सर्वो लोकः स्फुरणानुप्राणः, स्फुरणमेव-अनुप्राणो बीजभूतं यस्य स तथा, विश्वव्यवहारे संविदेव भगवती विषयसत्त्वोपगमे शरणमिति भावः । तच्च स्फुरणं विप्रतिपन्ने खपुष्पादौ सम्प्रतिपन्ने पाटलादौ च सामान्यं समपातेन प्रसरति, अन्यथा खपुष्पमपि न स्फुरेत् ।

महासत्तेति । एतद्धि श्रीमदभिनवगुप्तपादैः 'सा स्फुरत्ता महासत्ता·····'इत्यादि कारिकाव्याख्यावसरे ईश्वरप्रत्यभिज्ञायां निगदितम् । तत्र तावत् सत्ता भवनकर्तृता सर्वक्रियासु स्वातन्त्र्यम् । अस्या एव विकल्परूपप्रत्यवमर्शत्वनिवारणाय महच्छब्द प्रयोगः । सा च खपुष्पादिकमपि व्याप्नोति सर्वक्रिया स्वातन्त्र्यात् । एवञ्च शिवदृष्टावपि—

शशशृङ्गादिकेनापि स्याद्विभक्त्या समन्वयः ।
सर्वथाभावशब्दस्य नास्त्यभावात्मकं क्वचित् ॥ ( शिवदृष्टि , ४.३२ )

अत एव विज्ञानवादानुसारी स्वातन्त्र्यवादियों ने महार्थमञ्जरी में कहा है कः सद्भावविशेष इत्यादि ( व्यावहारिक कुसुम से गगनकुसुम के सद्भाव यानी सत्ता में क्या विशेषता है । अर्थात् कोई विशेषता नहीं है, जैसे व्यावहारिक कुसुम की सत्ता है, वैसे ही गगनकुसुम की भी सत्ता है । क्योंकि समस्तलोक हो स्फुरणानुप्राण स्फुरणमात्रसत्ताक ही है, और स्फुरण तो सर्वत्र समान ही है ।

तथा यह भी कहा है—'महासत्ता हि खपुष्पादिकमपि व्याप्नोति' ( महासत्ता = ब्रह्मसत्ता खपुष्प आदि को भी व्याप्त करती है ) ।

वेदान्ति ने शशशृङ्गमस्ति इत्यादि ज्ञान में अनिर्वाच्यपिषयकत्व स्वीकार

**तस्यानिर्वाच्यविषयकत्वोपगमेनेदं रजतमित्यनेन समानयोगक्षेमत्वात् । विकल्पवृत्तिस्तु 'अत्यन्तासत्यपी' ति न्यायविषयीभूताऽस्त्यादिपदाघटितेनासच्छशशृङ्गमित्यादिवाक्येनैव तन्मते जन्यते, मन्मते तु तद्विषयीभूतस्यापि ज्ञानात्मकत्वे नासत्त्वस्यार्थक्रियाकारित्वाभावरूपत्वेन ज्ञानात्मनि चान्ततः स्वध्वंसादिजन-**

यदप्यत्यन्तासत्त्वेनाभिमतं शशशृङ्गादि तत्रार्थे वर्तमानस्य सर्वथैवाभाववाचित्वेन मतस्य शब्दस्य विभक्त्या योगो न स्यात्, शशशृङ्गं ज्ञायतेऽभिधीयते चेति कारकाश्रितत्वाद्विभक्तिनामसतश्च कारकत्वायोगात् क्रियानिमित्तत्वात्कारकस्य, तस्मात् तत्रापि विभक्तियोगेन कारकत्वे सति सत्तैव शिवताख्या। वेदान्तमतमिहाचष्टे—वेदान्तिनेति। शशशृङ्गमस्तीत्यादिवाक्यस्यास्तिपदघटिततया तज्जन्यज्ञानेन सत्तादात्म्यावगाहनात् तस्य चारोपितस्यैव वक्तव्यत्वात् तदादाय तस्येदं रजतमितिवदनिर्वाच्यविषयकत्वमेवोचितम्। अतएव मधुसूदनस्वामिपादा अद्वैतसिद्धौ—इदं रजतमिति प्रात्यक्षिकभ्रमवदस्यापि (शशशृङ्गमस्तीत्यस्यापि) अनिर्वाच्यविषयत्वात्, नचास्याप्यनिर्वाच्यत्वे रूप्याद् भेदो न स्यादिति वाच्यम्, को हि अनिर्वाच्यादनिर्वाच्यं भेत्तुमध्यवसितः यमेवमाक्षिपसि' इत्याहुः।

ननु तद्रूपेण परिणममानाविद्याया एव तन्निष्ठसत्तादात्म्यरूपेण परिणममानत्वनियमादलीकस्यशशशृङ्गादेरविद्यापरिणामत्वाभावे कथं तन्निष्ठसत्तादात्म्यरूपेण तत्परिणतिरितिचेत्तत्राह—विकल्पवृत्तिस्त्विति। असति सत्तादात्म्यासम्भवात् 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इति पातञ्जलसूत्रोक्तविकल्पविषयीभूतमेवालीकम् 'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि' इति न्यायेन शब्दसामर्थ्याद् भासते। तदुक्त चन्द्रिकाकृद्भिः—'तथाचालीकरूपेणाविद्याया अपरिणममानत्वात् नालीकनिष्ठतादात्म्यरूपेण परिणाम इति। अतएवासच्छशशृङ्गमित्याद्यस्तिपदाघटितेनैव वाक्येनालीकप्रतीतिर्जायते न तु सदलीकमिति। नन्वेवं सौगतमते किमायातमित्यत आह—मन्मत इति। तद्विषयीभूतस्यापीति। तदा विकल्पवृत्तिपरामर्शः। स्वध्वंसादिजनकत्वेनैवेति। प्रतियोगिविधया विषय-

करके उसे इदं रजतम् के समान योगक्षेम बताया है। ( अर्थात् यदि शशशृङ्गमस्ति यहाँ पर सत्तादात्म्य का अवगाहन होता है तो इदं रजतं के समान है और यदि उसका अवगाहन नहीं होता है तो आगे विकल्पवृत्तिस्तु ग्रन्थ से कहते हैं ) विकल्पवृत्ति जो 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' योगसूत्र के द्वारा प्रतिपादित है तो 'अत्यन्तासत्यप्यर्थे शब्दः ज्ञानं करोति हि' ( शब्द अत्यन्त असदर्थ शशशृङ्गादि विषयक ज्ञान का भी जनक होता है ) इत्यादि न्यायविषयीभूत अस्ति आदि पद से रहित 'असच्छशशृङ्गम्' इत्यादि वाक्य से ही उन ( वेदान्तियों ) के मत में पैदा होती है। और मेरे ( बौद्ध ) मत में पूर्वोक्त विकल्पवृत्त्यात्मकज्ञानविषयीभूत के भी ज्ञानात्मक होने से तथा उस ज्ञानात्मा

कत्वेनैव तदसम्भवेन तदवगाहितयेदं रजतमित्येतत्तौल्यमेव। तार्किकनये त्वनन्वयनिश्चयदशायां शशशृङ्गादिपदानामबोधकत्वेऽपि तदभावदशायां व्यधिकरणप्रकारकप्रत्ययजनकत्वापगमेन तादृशप्रत्ययस्य च सन्मात्रविषयकत्वस्य सदुपरक्तासद्विषयकत्वस्य वा हेत्वाभाससामान्यलक्षणाक्षेपशेषादौ

तदसम्भवेनेति। अर्थक्रियाकारित्वाभावरूपमसत्त्वं तदा परामृश्यते। लक्षणाक्षेपशेषादावित। तत्र भ्रमस्य सन्मात्रविषयकत्वोपगमे प्रमात्वापत्तिर्दृढीकृता, सदसतोरुपरागासम्भवेन सदुपरक्तासद्विषयकत्वमपि भ्रमस्यासम्भाव्यमेव।

स्यापि ध्वंसं प्रति कारणत्वात्। तदसम्भवेनेति। तादृशासत्त्वस्य वक्तुमशक्यतया रजतवदेव ज्ञानाकारस्यैव शशशृङ्गादेर्बहिरवभासः। रजतवदेव च बहिष्ट्वमात्रबाधादान्तरं ज्ञानं व्यवतिष्ठते। तार्किकनयेत्विति। केवलासद्भाने सामग्रीविरहात्, शशशृङ्गादिशब्दानामर्थैः सह सङ्गतिग्रहणाभावात्तेषामबोधकता। न च यौगिकशब्दानामवयवसङ्गत्यतिरेकेण पृथक्सङ्गत्यनपेक्षत्वम्; अवयवशक्तिप्राधान्येन बोधनेऽखण्डासद्बोधनस्याशक्यत्वात्। अवयवानां स्वशक्त्यपुरस्कारेणाप्रत्यायकत्वात्, नहि पाचकादिः पाकादिमबोधयन् बोधयति। न चानन्वयनिश्चयविरहदशायां प्रवृत्तिपर्यन्तानुभवविरोध इति वाक्यम्, अनन्वयनिश्चयदशायामेवाबोधकतास्वीकारात्, तादृशनिश्चयविरहदशायामपि नाखण्डशशशृङ्गादिबोधकत्वमपितु व्यधिकरणप्रकारकप्रत्ययजनकत्वमित्याह तदभावदशायामिति। तादृशनिश्चयाभावदशायामित्यर्थः। व्यधिकरणप्रकारकेति। स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तन्निरूपकत्वं व्यधिकरणप्रकारकत्वम्। स्वंविशेष्यता। अग्रिमविषयता च विशेष्यतारूपा ग्राह्या। तथा चेदं रजतमित्यत्र स्वं–इदं निष्ठविशेष्यता, तद्व्यधिकरणो यः प्रकारो रजतम्, तदवच्छिन्नाविषयता = स्वशब्देनोपगताविशेष्यता इदंनिष्ठा, तन्निरूपकत्वमिदं रजतमिति प्रत्यये। प्रकृते च शशे शृङ्गारोपेण, शृङ्गे शशीयत्वारोपेण वा सङ्गमनीयम्। सन्मात्रविषयकत्वमिति प्राभाकरमताभिप्रायेण, सदुपरक्तेति मिश्रादिमतमाश्रित्य बोध्यम्। शारदायां निरस्तत्वेनेति। शशशृङ्गमित्यस्य शशे शृङ्गं शशस्य शृङ्गमिति वार्थः,

में अन्ततोगत्वा स्वध्वंसजनकता होने से उसमें अर्थ-क्रिया-कारित्वाभावरूप असत्त्व नहीं हो सकता, अर्थात् वह असत् नहीं रह गया। अतः उसे असत्त्वेन अवगाहन करने वाला 'असत् शशशृंगम्' यह ज्ञान इदं रजतम् के तुल्य ही है।

तार्किक सिद्धान्त में तो अनन्वयदशा अर्थात् शश का शृङ्ग के साथ अन्वय (सम्बन्ध) असम्भव है' इत्याकारक निश्चय काल में शशशृङ्गादि पदों में बोधजनकत्व न होने पर भी पूर्वोक्त निश्चयाभावदशा में व्यधिकरणप्रकारक ज्ञानजनकत्व स्वीकार किया गया है, और उस ज्ञान में सन्मात्रविषयकत्व अथवा सदुपरक्त असद् विषयकत्व का हेत्वा-

**शारदायां निरस्तत्वेन ज्ञाने विलक्षणाकारस्यैव वक्तव्यत्वेन सिद्धं नः समीहितम्, क्लृप्तत्वेनान्यत्रापि तथैवौचित्यात्। नचैवं ज्ञानात्मकस्य शशशृङ्गादेः सत्यत्वेनार्थक्रियाकारित्वापातः; ज्ञानत्वेन तस्य तथात्वेष्टेः, अर्थक्रियाविशेषापादनस्य त्वाकारवैचित्र्येणैव परिहरणीयत्वात्, आकारवैचित्र्यप्रयोजकत्वं तु स्वभावविशेषस्येति वक्ष्यते। एवञ्चायं घट इत्यादेः शुक्तौ 'इदं रजत'मित्यादेश्च प्रत्ययस्यापि साम्यमेव, बहिष्ट्वस्योक्तरीत्या ज्ञानात्मकस्य ज्ञानानात्मकतया व्यवहृतस्योभयत्र स्फुरणात्, स्वप्नजाग्रत्प्रतीतिसाम्यं तु वर्णितं 'आशामोदक-**

तत्र सप्तम्याः षष्ठ्या वा सम्बन्धो भासते, तस्यालीकत्वेऽसत्ख्यात्यापत्तेः, सदसदुपरागासम्भवाच्च। सत्त्वे च तस्य शृङ्गे शशीयत्वमतेः प्रमात्वापत्तेदित्याद्युक्त्याऽधिकन्तु ततएवावगन्तव्यम्। तथात्वेष्टेरिति। अभिलापादिव्यवहारस्येष्टत्वात्। अर्थक्रियाविशेषेति। कण्डूयनादिकम्। स्वाप्निकमोदकादिनाऽपि स्वप्ने रसादिजननात्, तस्य जाग्रदवस्थायामननुवृत्तिस्तु व्यावहारिकमोदकाद्यधीनरसादेः स्वप्नेऽननुवृत्त्या तुल्या, अन्यथा स्वप्ने दौर्बल्याद्यननुभवापत्तेः स्वप्नानुभववज्जाग्रदनुभवेऽपि भ्रमत्वं तुल्यम्। व्यावहारिकवत् स्वप्नार्थस्यापि शुभादिधीजनकत्वेनार्थक्रियाकारित्वमपीत्याह—स्वप्नजाग्रत्प्रतीतिसाम्यमिति। न च स्वप्नार्थज्ञानस्यैव शुभादिधीजनकत्वं न तु स्वप्नार्थस्येति वाच्यम्। केवलज्ञानस्य तादृशधीजनकत्वाभावेन विषयविशिष्टस्यैव तस्य तदिति विषतया जनकतावच्छेदकत्वरूपं प्रयोजकत्वमर्थेऽपि निराबाधमेव। तथा च श्रुतिः—"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात् तस्मिन्स्वप्ननिदर्शने" (छा० ५.२.९) इति। भाष्यकारा अपि—'सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोरिति' (ब्र० सू० ३.२.४) आशामोदकतृप्ताय इति।

आशामोदकतृप्ताये ये चोपार्जितमोदकाः।
रसवीर्यविपाकादि तुल्यं तेषां प्रसज्यते॥

इति पूर्णः श्लोकः।

भाससामान्यलक्षण खण्डन के अन्त में शारदा में निरस्त कर दिये जाने से ज्ञान को विलक्षणाकार ही मानना होगा, अतः हमारा ( बौद्ध ) इष्ट ( शशशृङ्गादि भी सर्वथा अलीक नहीं है, अपितु स्वविषयक ज्ञानात्मक है ) सिद्ध हो गया, क्योंकि घटादि ज्ञानविषयों में स्वविषयकज्ञानात्मकत्व के सिद्धान्त होने से अन्यत्र ( शशशृङ्गादि ) भी स्वविषयक ज्ञानात्मकत्व ही मानना उचित है। 'ज्ञानात्मक शशशृङ्ग के सत्य होने से उसमें अर्थक्रियाकारित्व होना चाहिए' ऐसी शंका करना उचित नहीं है क्योंकि ज्ञानरूप से शशशृङ्ग में सामान्यतः अर्थक्रियाकारित्व तो इष्ट ही है, खर्जु आदि अर्थक्रियाविशेष का आपादन परिहार तो आकार वैलक्षण्य के द्वारा किया जा सकता है। आकार के वेलक्षण्य का प्रयोजक तो स्वभावविशेष है यह आगे व्यक्त करेंगे।

तृप्ताये' इत्यादिकारिकाव्याख्यायाम्, व्यक्तञ्चान्यत्राकरेषु। नचैव त्वयाऽबाधिततया स्वीकृतवस्तुविषयकजाग्रत्प्रत्ययस्यापि भ्रमत्वं स्यात्; न स्यात्, विषयाबाधस्यैव तत्र विशेषात्।

एवं भ्रमत्युत्क्षिपतीत्यादिव्यवहारप्रयोजिकानां क्रियाणां यौगपद्याभावेन

उपार्जितमोदकाः = जीर्णीकृतमोदकाः। यद्यपि निरुक्ततौल्यापत्तिर्वस्तुतो वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्तृपरिज्ञानानुरोधेन विभिन्नग्राह्यग्राहकाकाररूपवत्तया तिमिराद्युपहताक्षणां केशोण्डुकनाडीज्ञानभेदवदनाद्युपल्पववासनासामर्थ्याद् व्यवस्थोपपत्तिमाश्रित्य केनचित्समाहिता, तथापि ईश्वरानुग्रहवशाद्वा योगबलाद्वा मानसशक्तिविशेषशालिनो जनस्य भावनाविशेषसहकृतेन आशामोदकादिनाऽपि रसादिजननात्साम्यमेव तयोः। मिथ्याविषयकत्वेनाप्युक्तप्रतीत्योः साम्यमिति तत्प्रतिपादकमाकरवाक्यं स्मारयति—व्यक्तञ्चेति। तदाह मायामात्रं स्वप्नदर्शनमिति प्रतिपादयन् भाष्यकारः—'न च वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति, प्रतिपादितं हि 'तदनन्यत्वमारम्भणशब्दादिभ्य' (ब्र० सू० ३.२.५) इत्यत्र समस्त प्रपञ्चस्य मायामात्रत्वम् इति। 'सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मताविज्ञानात् सत्यत्वोपपत्तेः स्वप्नव्यवहारस्येव प्राग्प्रबोधादिति' (ब्र० सू० २.१.१४) इति च। न स्यादिति। तत्र हेतुमाह—विषयाबाधस्यैवेति। स्वप्नार्थस्य झगिति बाध्यमानत्वेऽप्याब्रह्मसाक्षात्काराज्जाग्रतप्रपञ्चस्याबाध्यमानत्वात्। तदुक्तं भाष्यकृता—वैधर्म्यं हि भवति स्वप्नजागरितयोः। किं पुनर्वैधर्म्यम्; बाधाबाधाविति ब्रूमः। (ब्र० सू० २.२.२९) इति। प्राक्तु ब्रह्मात्मत्वदर्शनाद्वियदादिप्रपञ्चो व्यवस्थितरूपो भवति। सन्ध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यत' (ब्र० सू० ३.२.४) इति च।

क्रियासमुदायस्य ज्ञानात्मकत्वं स्फोरयति—एवमिति। अयमभिसन्धिः—

एवञ्च अयं घट इत्यादि तथा शुक्ति में जायमान 'इदं रजतम्' इत्यादि ज्ञानों का भी साम्य है, क्योंकि ज्ञानानात्मकतया व्यवहृत तथा पूर्वोक्त प्रकार से ज्ञानात्मक बहिष्ठ का स्फुरण उभयत्र ( अयं घट, इदं रजतम्') होता है। स्वाप्निक एवं जाग्रत प्रतीतियों का साम्य 'आशामोदक तृप्ता ये' इत्यादि खण्डनस्थ कारिका की व्याख्या ( शारदा ) में वर्णित है और अन्यत्र आकर ( भाष्य ) ग्रन्थों में भी उसे व्यक्त किया गया है। यह कहना सम्भव नहीं है कि 'आप ( बौद्ध ) के द्वारा अबाधिततया स्वीकृत वस्तुविषयक जाग्रत ज्ञान भी भ्रम होना चाहिए' क्योंकि जागरा में विषय का बाध नहीं होता है।

एवं भ्रमति उत्क्षिपति इत्यादि व्यवहार प्रयोजक क्रियाओं का योगपद्य न होने से और ज्ञानविषयीभूत क्रिया समुदाय का ज्ञानात्मकता में ही पर्यवसान होने से ज्ञान को

**बौद्धक्रियासमुदायस्य च बुद्ध्यात्मकतायामेव पर्यवसानेन बुद्धेरेवाकारविशेषेण निर्वाह्योऽसौ व्यवहारः, स्थिराणामपि समुदायस्य वक्तव्यरीत्या बुद्ध्याकारत्वे क्रमजन्मनां क्रियाणां समुदायस्य तथात्वे किमु वाच्यम्, अतएव—'क्षणतत्क्रमयोर्नास्ति वस्तुसमाहार इति बुद्धिसमाहारो मुहूर्ताहोरात्रादय' इति योग-**

गुणभूतैरवयवैः समूहः क्रमजन्मनां ।
बुद्ध्या प्रकल्पितोऽभेदः क्रियेति व्यपदिश्यत ॥

इति वाक्यपदीये हरिपादाः। गुणभूतैस्तत्तद्रूपेण भासमानैरवयवैः फूत्कारादिभिर्युक्तः क्रमजन्मनां पौर्वापर्येणोत्पत्तिमतां फूत्कारादिव्यापारणां बुद्ध्या संकलनात्मकैकत्वबुद्ध्या समूहालम्बनात्मिकया वा प्रकल्पितोऽभेदो यत्र सः समूहः क्रियेति व्यपदिश्यत इति तदर्थः। ऐतेन पूर्वापरीभूतक्षणनश्वरक्रमिकव्यापाराणां मेलनासम्भवात् तदात्मकक्रियाया अनैक्यात् 'एकाक्रिया' इति प्रशंसायां सूत्रस्थं भाष्यम्, तादृशावयवानां युगपदवस्थानासम्भवेन कथं समूह इत्यादिकमपि समाहितम्। बुद्ध्या प्रकल्पने बाधकाभावात्, समूहेऽवयवगतपौर्वापर्यस्यारोपतः स्वत एकत्वञ्चेति एकैकावयवेऽपि समूहारोपाद् अधिश्रयणादि एकैकक्रियादशायामपि पचतीत्यादिव्यवहारो न विरुध्यते। एवञ्च तदर्थं बुद्धेरेव शरणीकरणीयत्वेन तदात्मकत्वस्थितौ तदाकारेणैव तादृशव्यवहारस्य निर्वाह्यत्वात्। तत्र बुद्धिरेव तादृशीतिभावः। कैमुतिकन्यायेनाप्याह—स्थिराणामपीति। वृद्धसम्मतिमाह—अतएवेति। क्रियासमुदायस्य बुद्ध्यात्मकत्वादेव। क्षणेति। सर्वतोऽपकृष्टः कालः क्षणः, पूर्वापरभागविकलकालकलेतियावत्। परमाणुश्चालितो यावता कालेन स्वपरिच्छिन्नं देशमतिक्रामति सः कालो वा। तादृशक्षणस्य प्रवाहाविच्छेद एव क्रमः। पूर्वस्मादुत्तरस्य भाविन आनन्तर्यात्मको यः क्रमः सो बुद्धिसमाहार एव = अनन्तर इति बुद्धिविषयत्वमेव, नत्वानन्तर्यमेव बाह्यं किञ्चिद् वस्तुतत्रास्ति। अतोऽयं विकल्पात्मा व्यवहारः। एवं क्षणसमाहारोमुहूर्ताहोरात्रादय इत्यप्येवमेव। अयुगपद्भावित्वात् क्षणानां समाहारस्य (मेलनस्य) वास्तवस्यासम्भवात्, किन्तु बुद्धिमात्रविषयः समाहारः, स खल्वयं कालो वस्तुशून्योऽपि बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकिकानां वस्तुभूत इवावभासते इति भावः। योगभाष्येति। क्षणतत्क्रमयोः संयमनाद् विवेकजं ज्ञानमिति सूत्रमाचष्टे। स्वीकृतश्च बौद्धोऽपि

ही आकार विशेष के द्वारा भ्रमति आदि व्यवहार प्रयोजक मानना उचित है। स्थिर पदार्थों के समुदाय को भी वक्तव्यरीति से जब ज्ञानात्मक मान लिया, तब क्रमजन्म क्रियासमुदाय के ज्ञानात्मकत्व के विषय में तो कहना ही क्या ? अत एव योगभाष्य में कहा है कि 'क्षणतत्क्रमयोर्नास्ति वस्तु समाहार इति बुद्धिसमाहारो मुहूर्ताहोरात्रादय' ( क्षण एवं उसके क्रम में वस्तुभूत समाहार ( मिलन ) नहीं है, अपितु बुद्धिसमाहार ही

**भाष्येप्युक्तम्। एतेनालातचक्रादिप्रत्ययो व्याख्यातः। एवं वनादिविषयकप्रत्ययस्यापि साकारत्वं क्लृप्तप्रायमेव। तथाहि—समुदायस्य न समुदायिपार्थक्यम्, अनभ्युपगमात्, अनुपलम्भबाधाच्च, वृक्षा न वनमिति प्रत्ययापाताच्च। नाप्यभेदः, एकस्मिन्नपि वृक्षे वनप्रत्ययापातात्। समुदिता वृक्षा वनमिति चेन्न, समुदायस्यैव निरूप्यमाणत्वात्। न च वृक्षा वनमिति समानाधिकरणप्रत्ययबलाद्भेदाभेदोऽस्तु; विरोधात्, अवच्छेदकभेदस्य दुर्निरूपत्वात्, अवच्छेदकस्याप्यवच्छिन्नवृत्तिकत्वे आत्माश्रयाद्यापाताच्च, अनवच्छिन्नवृत्तिकत्वे**

पदार्थः मञ्जुषायाम्। आलातचक्रेति। अलातमेव आलातम्, स्वार्थेऽण्। आलातं वन्हिदीप्ताङ्गारस्तस्य चक्रमिव यद् भ्रमणम् तद्विषयकप्रत्यय इत्यर्थः। तत्रापि चक्राकारता बुद्ध्यात्मिकैव न तु वास्तविकी। भेदाभेदमाशङ्क्य निराचष्टे—न चेति। अवच्छेदकभेदस्य दुर्निरूपत्वादिति। अत्रावच्छेदकत्वं वृक्षत्वे समुदायत्वे च। तत्र वृक्षत्वस्य जात्यादिरूपत्वाभावात्, अतद्व्यावृत्तिरूपत्वे तु व्यावृत्तेर्भेदरूपत्वात् भेदस्य ज्ञानानात्मकत्वे भिन्नेऽभिन्नेवेत्यादिविकल्पोपहतत्वाद्दुर्निरूपत्वं तस्य। समुदायत्वस्य तु निराकृतिमनुपदमेव करिष्यति ग्रन्थकारः। एवञ्चावच्छेदकस्य दुर्निरूपत्वे तद्भेदस्य तु सुतराम्। आत्माश्रयाद्यापाताच्चेति। वृक्षा वनमित्यत्र

है, अतः मुहूर्त अहोरात्र इत्यादि सभी बुद्धिकल्पित समाहारमात्र ही है। इससे अलातचक्रादि विषयक प्रत्यय भी व्याख्यात हो गये। क्योंकि तत्रापि योगपद्य के अभाव में योगपद्य बुद्धि हो रही है। एवं वनादि विषयक प्रत्यय का साकारत्व भी सिद्धप्रायः ही है। तथाहि—समुदाय का समुदायी से प्रार्थक्य नहीं हो सकता, क्योंकि वह आचार्यों से अनङ्गीकृत और अनुपलम्भ से बाधित है। यदि उसे माना जाय तो 'वृक्षा न वनम्' यह ज्ञान होना चाहिए। समुदाय समुदायी का अभेद भी नहीं कह सकते, चूंकि एक वृक्ष में भी 'वन' व्यवहार ( ज्ञान ) होने लगेगा। समुदाय के ही निरूप्यमाण होने से समुदित वृक्ष ही 'वन' व्यवहारास्पद है, यह नहीं कहा जा सकता। यदि कहा जाय कि 'वृक्षा वनम्' इत्याकारक समानाधिकरण प्रत्यय (ज्ञान) बलात् समुदाय समुदायी का भेदाभेद ही मान लिया जाय, तो यह भी उचित नहीं है, क्योंकि–भेदाभेद का परस्पर विरोध है। यदि कहें कि ( जैसे एक ही वृक्ष में कपिसंयोग शाखावच्छेदेन रहता है और उसका अभाव रहता है—मूलावच्छेदेन, विरोध नहीं होता, वैसे ही समुदायत्वेन अभेद वृक्षत्वेन भेद, इस प्रकार अवच्छेदक भेद से भेदाभेद रह सकता है, तो यह भी ठीक नहीं है, क्योंकि अवच्छेदक भेद भी दुर्निरूप है, तथा अवच्छेदक को अवच्छिन्न ( वृक्षत्वविशिष्ट अथवा समुदायत्वविशिष्ट ) वृत्तिक मानने पर आत्माश्रयादि दोष भी होते हैं।

(भाव यह है कि यदि वृक्षसमुदायत्वविशिष्ट में वृक्षसमुदायत्व रहता है तो शङ्का होगी कि विशेषणीभूत समुदायत्व और आधेयभूत समुदायत्व एक ही है या दो, यदि

**तु न विरोधशङ्काशमकत्वम्। समुदायत्वस्याभेदप्रयोजकत्वे तस्य धीविशेष-विषयत्वरूपतया विषयबुद्धयोर्विशेषे परस्पराश्रितत्वापत्त्योभयोरप्यसिद्धिर्मा**

वृक्षत्ववनत्वेऽवच्छेदके, वनत्वन्तु वृक्षसमुदायत्वम्, अवच्छिन्नवृत्तिकत्वम् अवच्छेद-कतानिरूपकवृत्तिताकत्वम्। एवञ्च प्रकृतेऽवच्छेदकपदार्थस्यावच्छिन्नवृत्तिकत्वे स्वी-क्रियमाणे तद्घटकावच्छेदकस्य स्वस्य स्वापेक्षितत्व आत्माश्रयः। स्वविशेष्यकस्वा-पेक्षापादककप्रसङ्गस्यैवात्माश्रयत्वात्। तथा चायं प्रकृतावच्छेदकः स्ववृत्तिः स्यात् स्वभिन्नः स्यात्, स्वव्याप्यो न स्याद् वा तथात्वेनोपलभ्येतेति वा प्रसङ्गः। अवच्छेद-कस्य स्वापेक्षापेक्षितत्वेऽन्योन्याश्रयः, स्वविशेष्यकस्वापेक्षापेक्षापादककप्रसङ्गस्यैव तत्त्वात्। तथाचात्रापि--प्रकृतावच्छेदकौ परस्परापेक्षस्थितिकौ स्याताम् स्वभिन्नौ-स्यातामिति प्रसङ्गः। एवं तस्य तृतीयमन्तर्भाव्य तदपेक्षापेक्षापेक्षितत्वे चक्रकम्; स्वविशेष्यकस्वापेक्षापेक्षापेक्षापादकत्प्रसङ्गस्य तत्त्वात्, तथाचावच्छेदको यदि स्व-वृत्तिसापेक्षवृत्तिसापेक्षवृत्तिकः स्यात् स्वभिन्नः स्यात्। एवं चतुःकक्षादावपि चक्र-कम् बोध्यम्। एवमव्यवस्थितपरम्परापेक्षत्वेऽनवस्था, अव्यवस्थितपरम्परारोपनि-बन्धनानिष्टप्रसङ्गस्यैव तत्त्वात्। तथाचात्रापि स्वं यदि तादृशपरम्परावृत्ति-सापेक्षः स्यात्, तथात्वेनोपलभ्येत इति प्रसङ्गः। अधिकमन्यत्रावसेयम्। विषय-बुद्धयोर्विशेष इति। बुद्धिगतविशेषस्य विषयाधीनत्वम्, विषयगतस्य च तस्य

एक है तो अंशतः समुदायत्व में भी समुदायत्व रह गया अतः आत्माश्रय दोष होगा। और यदि वे दोनों भिन्न हैं तो विशेषणीभूत समुदायत्व भी समुदायत्वविशिष्ट में ही रहेगा न कि शुद्ध में अतः उसके अधिकरण को विशिष्ट बनाने के लिए दोनों ही समुदा-यत्व परस्पर सापेक्ष है, अतः अन्योन्याश्रय दोष होगा। यदि अन्योन्याश्रय परिहारार्थ अधिकरण को विशिष्ट बनाने हेतु निरुक्तद्वयातिरिक्त तृतीय समुदायत्व की कल्पना करें तो पूर्वोक्तप्रकार से वे तीनों विशिष्टवृत्तिक ही माने जायेंगे, अतः तीनों परस्पर सापेक्ष होने से चक्रकदोष हो जायेगा। यदि चक्रकदोष परिजिहीर्षया चतुर्थ पञ्चम की कल्पना करें तो अनवस्था हो जायेगी। अतः समुदायत्वादिरूप अवच्छेदक को अवच्छिन्नवृत्तिक नहीं मान सकते)। और यदि अवच्छेदक को अनवच्छिन्न (वृक्षत्वादि से रहित शुद्ध वृक्षमात्र में) वृत्तिक माने तो अवच्छेदकभेद भेदाभेदविरोधशंका का समाधाता नहीं हो सकता। (वस्तुतः समुदायत्व समुदायित्व दोनों ही दोनों से रहित में रहते हैं, अतः इन दोनों का भेदक कोई अवच्छेदक न होने से यह दोनों ही एक हो जायेंगे, इन दोनों के एक होने पर समुदाय समुदायी का भी अभेद ही होगा, न कि भेद। अतः भेदा-भेद नहीं हो सकता। (समुदायत्व को अभेद प्रयोजक मान भी ले तो समुदायत्व के धीविशेषविषयत्वरूप होने से विषय एवं बुद्धि को विशेषता में परस्पर सापेक्ष होने से

**प्रसाङ्क्षीदिति ज्ञाने एव विलक्षणाकारस्य मन्तुमौच्चित्याच्च। एतेन विषयस्येव ज्ञानस्यापि विचित्राकारता विरुद्धैवेत्यप्यनवकाशीकृतम्। वक्ष्यते चाधिकम्। न चावच्छेदकभेदानपेक्षावेव भेदाभेदौ; तथासति वृक्षा वृक्षा इत्यादेरप्यापत्तेः, रूपभेदापेक्षणे च वाचोभङ्ग्यन्तरेणावच्छेदकभेदापेक्षाऽनुमतैव। न च भेदस्याविद्यकत्वेन न विरोधः, अविद्ययापि ज्ञानमात्रस्यैवोत्पादनौचित्यादित्युक्तत्वात्। नच 'विरुद्धमिति नः क्व प्रत्ययो यत्प्रमाणविपर्ययेण वर्तत' इति न्यायावतारः;**

बुद्ध्यधीनत्वमिति भावः। वक्ष्यते चाधिकमिति। अनुपदमेवेति शेषः। रूपभेदापेक्षण इति। रूपभेदमादायावच्छेदकभेदस्तु निरस्तः सविधे। मिश्रवाक्योत्थं भेदाभेदाविरोधमाशङ्क्य परिहरति—न च विरुद्धमितीति। तत्र खलु न च भेदाभेदयोर्विरोधान्नैकत्र समवाय इत्याशङ्क्य विरुद्धमितीति समाधानमुक्तमाक्षेप्त्रा। विरोध एवासिद्ध इति तन्निराकरणमाह—विरुद्धमितीत्यादिना। यत्प्रमाणविपर्येयेण वर्तते तत्र विरुद्धमिति संप्रत्यय इत्यनुषङ्गः। यद् विरोधाख्य वस्तु प्रमाणविपर्ययेण वर्तते अप्रामाणिकत्वेन तिष्ठतीत्यर्थः। तथाच भेदाभेदयोर्विरोधस्याप्रामाणिकत्वान्न विरोधोऽस्तीति भावः। आनुभविकस्य तद्विरोधस्यानपलपनीयत्वादेकत्र तदुभयावगाहिन्याः प्रतीतेः प्रमात्वं दुर्घटमित्याह—भेदाभेदयोरिति। तदुक्तं मिश्रपादैरपि समाधानग्रन्थे—'न च भावाभावयोरविरोधः; सहावस्थानासम्भ-

दोनों ( विषयविशेष-बुद्धि-विशेष ) असिद्ध न हो जाय इसलिए ज्ञान में ही विलक्षण आकार मानना उचित होगा।

ज्ञानीय विलक्षणाकार के औचित्य प्राप्त होने से ही—'घटादिविषय के समान ज्ञान का भी विचित्राकार होना विरुद्ध है" यह संशय भी निरस्त' हो गया। इस विषय में अधिक आगे वक्ष्यमाण है। अवच्छेदक भेद के बिना ही भेदाभेद मान लिया जाय—यह कहना भी ठीक नहीं, क्योंकि ऐसी स्थिति में अर्थात् अवच्छेदक भेद के बिना भेदाभेद मानने पर वृक्षा वृक्षा इत्याकारक सामानाधिकरण्यप्रतीति भी होनी चाहिए। ( सामानाधिकरण्यप्रतीति में उद्देश्यतावच्छेदक एवं विधेय का भेद अपेक्षित है, प्रकृत में दोनों के एक होने से वृक्षा वृक्षाः सामानाधिकरण्य प्रतीति वस्तुतः नहीं होती किन्तु जब अवच्छेदक भेद की अपेक्षा नहीं है तो भेदाभेद में होनेवाली सामानाधिकरण्य प्रतीति भी होनी चाहिए ) यदि कहें कि सामानाधिकरण्य प्रतीतिरूप भेद सापेक्ष है। प्रकृत में रूपभेद न होने से नहीं होती। तो आप ( तार्किक ) ने वाचोभङ्ग्यन्तर से अवच्छेदकभेदापेक्षा मान ही लिया।

यदि कहा जाय कि भेद के आविद्यक होने से—अर्थात् अभेद वास्तविक है और भेद अविद्या कल्पित है ऐसा मानने से भेदाभेद के रहने में विरोध न होगा, तो यह कहना भी उचित नहीं; क्योंकि अविद्या के द्वारा भी ज्ञानमात्र की ही उत्पत्ति मानना

**भेदाभेदयोरन्यत्र विरोधस्य दृष्टत्वेनात्र तदुभयावगाहिन्या मतेः प्रमात्वस्यैवा-विश्वसनीयत्वात् । ज्ञानात्मकतयैवाविरोधस्योपपत्तेश्च । न च शब्दतत्त्वमेव तथा तथाऽवभासते इति वाच्यम्, तस्य ज्ञानात्मकत्वेऽविवादात्, ज्ञानभिन्नत्वे तु**

वादिति । शाब्दिकमतं परिजिहीर्षुस्तन्मतमाचष्टे—न चेति । सर्वं हि वक्तव्यञ्च श्रोतव्यञ्च शब्दाधीनमेव, धर्माद्यवगमोऽपि शब्दायत्त एवेति लौकिको वा पारमार्थिको वा कोऽपि व्यवहारः शब्दं विना न निर्वहति । तदुक्तं हरिणा—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ इति ।
( वाक्य० ब्र०, १२३ )

स च शब्दः स्फोटात्मा, वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्यः शब्दः स्फोट इति तद्विदो वदन्ति । अतएव स्फुट्यते व्यज्यते वर्णैरिति स्फोटो वर्णाभिव्यङ्ग्यः, स्फुटति स्फुटीभवत्यस्मादर्थ इति स्फोटोऽर्थप्रत्यायक इति स्फोटशब्दार्थमुभयथा निराहुः । तथा चोक्तं भगवता पतञ्जलिना महाभाष्ये—'अथ गौरित्यत्र कः शब्दो येनोच्चारितेन सास्नालांगूलककुदखुरविषाणानां सम्प्रत्ययो भवति स शब्द इति ( महा० भा०, पृ० १ पं. ६ ) विवृतञ्च कैयटेन—वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाचकत्वमिच्छन्ति' इत्यादिना । जगन्निदानं स्फोटाख्यो निरवयवो नित्यः शब्दो ब्रह्मैवेति हरिणाप्यभाणि ब्रह्मकाण्डे—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रियाजगतो यतः ॥ (वाक्य०, का० १ )

उचित है, यह प्राक्प्रतिपादित हो चुका है । 'विरुद्धमिति नः क्व प्रत्ययो यत्प्रमाणविपर्ययेण वर्तते' ( भामती, १.१.४) [ विरुद्धम् इत्याकारक ज्ञान वहाँ होता है जहाँ प्रमाण का अभाव हो, यदि प्रमाणविपर्यय नहीं है तो विरोध ही अप्रामाणिक है । तथा च प्रकृत भेदा-भेद में विरोध अप्रमाणिक है । ] एतन्न्यायानुसारी पूर्वपक्ष भी उचित नहीं; क्योंकि घट-पटादि में भेदाभेद का विरोध प्रत्यक्षप्रमाणसिद्ध है (घट में घट का अभेद ही है भेद नहीं, तथा घट पट का भेद ही है अभेद नहीं ) अतः वृक्षा वनम् यहाँ समुदाय समुदायी के भेदाभेदविषयक प्रतीति का प्रमात्व भी विश्वसनीय नहीं है । तस्मात् ज्ञानात्मक मानकर ही विरोध परिहार कर सकते हैं ।

शब्दतत्त्व ही समुदाय समुदायीरूप अथवा भेदाभेदरूप से भासित होता है यह कहना भी संगत नहीं; क्योंकि शब्दतत्त्व के ज्ञानात्मक होने पर तो कोई विवाद ही नहीं है । और यदि उसे ज्ञानातिरिक्त मानते हैं तो शब्द के अश्रवणकाल में अविरोध अनुप-पन्न हो जायेगा । शब्द के अश्रवणदशा में अन्तःसंजल्प (सूक्ष्मशब्द) भी नहीं मान सकते, क्योंकि वह ज्ञानविशेषातिरिक्त रूप से दुर्निरूप है । स्पन्दनाख्य प्राणधर्म का

शब्दाश्रवणदशायामनुपपत्तेः। न च तत्राप्यन्तःसञ्जल्पः; तस्यापि ज्ञानविशेषातिरिक्तस्य दुर्निरूपत्वात्, स्पन्दनस्य प्राणधर्मस्य सम्मेलनेन ज्ञानविशेषे एवान्तःसञ्जल्पशब्दप्रयोगात्। स्पन्दनमपि च मन्मते ज्ञानात्मकमेवेत्यन्यत्। अत एव कैश्चिदुक्तम्—

अन्तःसञ्जल्पो वर्ण्यते मध्यमा वाक्।
सेयं बुद्ध्यात्मा नैष वाचः प्रभेदः॥
बुद्धिर्वाच्यं वा वाचकं वोल्लिखन्ती।
रूपं नात्मीयं बोधभावं जहाति॥

कैश्चिद्वैयाकरणैः शब्दस्य ज्ञानात्मकत्वमुररीकृतमिति तदाह—तस्य ज्ञानात्मकत्व इति। तदुक्तं हरिणा—

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।
कैश्चिद्दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः॥
(वाक्य०, का० १ कारि० १०७)

कैश्चित् वायोः, कैश्चिदणूनां, कैश्चिद्ज्ञानस्य शब्दत्वापत्तिरिष्यते। अत्र प्रवादेषु सिद्धान्तेषु दर्शनभेदोऽनवस्थितोऽव्यवस्थितः, मतत्रयमिति यावत्। अयं खलु मतभेदो वैखरीरूपशब्दविषय इति मञ्जूषाकृतः। शब्दाश्रवणदशायामिति। अन्तःसञ्जल्प इति। तस्यापि उपगृहीताभिधेयाकारस्तिरोभूतस्थूलशब्दस्वभावो बुद्धौ विपरिवर्तमानः शब्दात्मा स्वरूपानुगतमर्थमविभागेनान्तः सन्निवेशयन् अभिजल्प उच्यते। स च बुद्धेरात्मगत एवाकारो युक्तः, न बाह्य। इत्याह—दुर्निरूपत्वादिति। उक्तञ्च बौद्धैः—

जल्पो बुद्धिस्थ एवायं बाह्ययोगविभेदतः।
ततः को भेद एतस्य बुद्धिपक्षादनन्तरात्॥ (तत्त्वसं०, ८९९)

किञ्च—बाह्यशब्दपरिणामस्वीकारे स्वरूपच्युतेः। अनादिनिधनमित्यसङ्गतेः; स्वस्वरूपाच्युतिपक्षे—वधिरस्य नीलादिसम्वेदनकाल शब्दसम्वेदनं स्यादित्येवमादिदूषणानामपि उपलक्षणम्।

सम्मेलन हो जाने से ज्ञानविशेष में ही अन्तःसञ्जल्प शब्द का प्रयोग होता है। और वह स्पन्दन भी मेरे (बौद्ध) मत में ज्ञानात्मक ही है यह अलग बात है।

अतएव किसी आचार्य ने कहा है—'अन्तःसंजल्प' इत्यादि। मध्यमावाक् अन्तःसञ्जल्परूप से वर्णित है और वह मध्यमावाक् ज्ञानात्मक ही है न कि वाणी का प्रभेदरूप, बुद्धि ही वाच्यवाचक का उल्लेख करती हुई भी स्वकीय बोधरूपता का परित्याग कदापि नही करती है। (न्यायमञ्जरी, ६ आ.) पश्यन्ती तो निर्विकल्पात्मकज्ञान का ही कल्पितनामान्तर है। अतः प्रकाशात्मा ज्ञान की कोई भी वाग्रूपता शाश्वती नहीं हो सकती। (न्या. म. ६ आ.)

पश्यन्तीति तु निर्विकल्पकमतेर्नामान्तरं कल्पितम्।
विज्ञानस्य हि न प्रकाशवपुषो वाग्रूपता शाश्वती ॥
( इति न्यायमञ्जर्याम् )

तदित्थं व्याप्तिग्रहस्थलानां न दौर्भिक्ष्यम्। ननु योऽयं ग्राह्यग्राहकभेदो ग्राह्यनीलपीतादिभेदो वा चकास्ति, स किं सत्यो वाऽसत्यो वा, आद्ये बाधः,

वाग्रूपता शाश्वतीति। एतदुत्तरार्धम्—
जातेऽस्मिन् विषयावभासिनि ततः स्याद्वाऽवमर्शो गिरो-
न स्याद्वापि न जातु वाग्विरहितो बोधो जडत्वं स्पृशेत् ॥
—इति न्यायमञ्जर्याम्

स्वमते साधकमुक्त्वा बाधकानि निराकरोति—नन्विति। भवत्वेवम्, तथापि ग्राह्यग्राहकभेदोऽनुभूयते, ग्राह्यं रूपादि, ग्राहकं ज्ञानं तस्माद्भिन्नं, सत्यामपि रूपादिसंवित्तौ, तत्संवित्तेरसंवित्तेः रसादिग्राहकवत् तथा च तयोर्भेदः। ग्राह्याणां परस्परं भेदस्तु स्पष्ट एव, नहि घटः पटात्मक इति तत्रास्माभिः स्पृष्टो व्याचष्टाम्, स किं सत्यो वाऽसत्यो वेत्याह—योऽयमिति। सत्य इति। अत्र सत्यत्वं सर्वथाऽबाध्यत्वं न वक्तुमर्हम्—तस्य महोदय एव स्वीकारात्, क्षणिकत्वादिभावना-प्रचयबलान्निखिलवासनोच्छेदविगलितविविधविषयाकारोपप्लवविशुद्धविज्ञानोदयो महोदय इति तत्र तत्राङ्गीकारात्। तथा चात्र व्यवहारकालाबाध्यत्वमादायैव सत्यत्वमभिहितम्, यद्यपि—आलयविज्ञानाविनाभूतानि प्रवृत्तिविज्ञानानि—तथापि नात्र तादृशी विशुद्धिः, येन तद्वत् तादृशपारमार्थिकत्वं स्यात्। असत्यो वेति। अत्रासत्यत्वं सावृतं ज्ञेयम्, वहिष्ट्ववदेवेत्यादिना ग्रन्थकृद्भिरेवाग्रे तथाऽभ्युपगमात्। बाध इति। सर्वं स्फुरणात्मकं स्फुरणविषयत्वादित्यनुमाने पक्षान्तर्गतभेदे साध्याभावात्। न च स्फुरणविषयत्वरूपहेतुसत्त्वे व्यभिचार एव, न बाध इति वाच्यम्, बौद्धमतानुसारेण बाधस्योक्तत्वात्, तं प्रत्येव दूषणोद्भावनात्, तैः

अतः निरुक्तरीति से व्याप्तिग्रहस्थलों का दौर्भिक्ष्य नहीं है अर्थात् यत्र यत्र ज्ञान-विषयत्वं तत्र तत्र ज्ञानात्मकत्वं इस प्रकार व्याप्तिग्राहकस्थल स्वप्नादि दिखाये जा चुके हैं।

## ज्ञानज्ञेयाभेद में बाधक-निरास

शङ्का—यह जो ज्ञानज्ञेय का भेद तथा ज्ञेय नील पीतादिकों का भेद भासित होता है, क्या वह सत्य है अथवा असत्य है। प्रथम पक्ष स्वीकार करने पर बाध है, अर्थात् यदि भेद को सत्य मानें तो ग्राह्य (विषय) ग्राहक ( ज्ञान ) सदा ही भिन्न रहेंगे, ज्ञानात्मक न हो सकेंगे। अतः सर्वं पक्ष में ज्ञानात्मकत्वरूप साध्य के न होने से सर्वं ज्ञानात्मकम् ज्ञानविषयत्वात् इस अनुमान में बाध हो जायेगा। और यदि द्वितीय पक्ष

**द्वितीये तु नायमात्मा सत्यविज्ञानस्येति व्यभिचार इति चेन्न, भेदस्य स्वविषयकज्ञानात्मकतया सत्यत्वेऽपि बहिष्ट्ववदेवासत्यत्वकाल्पनिकत्वाद्यभिधानात्। अनुमितिपरामर्शयोः पक्षसाध्यविषयकत्वसाम्येनैक्यापत्त्या हेतुहेतुमद्भावा-**

स्फुरणात्मकत्वाभावे स्फुरणविषयत्वस्याप्यस्वीकारात्। ननु तर्हि स्वरूपासिद्धिरप्युद्भाव्येति चेत् सत्यम् साऽप्यस्तु, बाध एवेत्यनुक्तत्वात्। वस्तुतस्तु—न व्यभिचारः 'पक्षे पक्षसमे वा व्यभिचारो न दोषायेति न्यायेन पक्षे व्यभिचारोद्भावनस्याकिञ्चित्करत्वात्। अतएवाद्वैतसिद्धौ मिथ्यात्वानुमानस्य घटादौ संदिग्धानैकान्तिकत्वमाशङ्क्य पक्षसमत्वात् घटादेरिति समाहितम्। नापि स्वरूपासिद्धिः, आनुभविकस्य स्फुरणविषयत्वस्यापलपयितुमशक्यत्वात्। अन्यथा को ब्रूते सोऽस्तीति। अतएवाग्रे ग्रन्थकृद्भिः तत्र तत्सिद्धवत्कृत्य व्यभिचारोद्भावनं कृतम्। व्यभिचार इति। सत्यस्वरूप स्फुरेणात्मकत्वाभाववति भेदे हेतोः सत्त्वात्। समाधत्ते—भेदस्येति। अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति' इति न्यायेन ज्ञानभिन्नबाह्यस्यैवाभावाद् दूरे तद्भेदसत्यत्वम्, यदि स्फुरणविषयोऽस्ति, भवितव्यं तेन स्फुरणात्मकेन, तथा सति नासौ स्फुरदितिपूर्वमेवोपापीपदामः। तस्मात् स्वव्यतिरिक्तग्राह्यविरहात् तदात्मिका बुद्धिः स्वयमेवस्वात्मरूपप्रकाशिका प्रकाशवत् इत्यस्मत्सिद्धान्तः, तथा क्व बाधादयः। भेदो ग्राह्यो भवन् ग्रहणात्मक एवेति स्वविषयकज्ञानात्मकतया सत्यत्वेऽपि न क्षतिः। अतएव—

नान्योनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः।
ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते॥

इत्युक्तं बौद्धैः। अत्रानुभवपदेन नैयायिकाभिमतोऽनुव्यवसायरूपो ग्राह्यः। ननु तथापि तत्प्रतियोगिको भेदः कथं तद्रूप इति चेन्न, भेदो ह्यभावः। न च सोऽनुयोग्यतिरिक्तोऽनुभूतिपथमध्यास्ते इति गुरुमतानुसारिणः संगिरन्ते। अक्षचरणानुसारिणोऽपि तद्रूपत्वमाचक्षत एव तत्र तत्र, किन्तु प्रतियोगितारूपताप्यस्य न नाभ्युपगन्तुमुचिता, अभावे घटादिप्रतियोगित्वस्य तदन्तःपातित्वात् तद्विशेषणत्वात्, उपलक्षणन्त्वतिप्रसक्तमित्यत्र कणेहत्य द्रष्टव्यम्। ननु सर्वस्य ज्ञानाकारत्वे आकारैक्येन तयोरैक्यात् जन्यजनकभावानुपपत्तिरनुमितिपरामर्शयोः, सव्येतरविषाणयोरिव कार्यकारणभावानुपपत्त्येत्याह—अनुमितिपरामर्शयोरिति। कुचोद्य-

अर्थात् भेद को असत्य मानें तो यह असत्य भेद सत्यविज्ञानस्वरूप न होने से तादृश असत्यभेदान्तर्भाविण उक्तानुमान में व्यभिचार हो जायेगा।

समाधान—यह शंका युक्त नहीं; क्योंकि स्वविषयकज्ञानात्मकतया भेद के सत्य होने पर भी उसमें बहिष्ट्व की तरह काल्पनिकत्व असत्यत्व कहे जा सकते हैं।

यदि कहा जाय कि अनुमिति और परामर्श का पक्षसाध्यविषयकत्वेन साम्य होने से

**सम्भव इति तु कुचोद्यम्, परामर्शस्यानुमित्यविषयव्याप्त्यादिविषयकतयाऽऽकारवैचित्र्यात्। अतएव स्थाणुरयमित्येतदपेक्षया स्थाणुर्वा पुरुषो वाऽयमिति प्रत्ययवैचित्र्यम्। ननु स्थाणुत्वपुरुषत्वयोर्विरुद्धत्वेनैकज्ञानात्मकताया असम्भवः तादृशाकारविशेषस्यालीकत्वे तु तदात्मकज्ञानस्यापि तथात्वापत्त्योत्पत्तिविनाशानुभवापत्तिरिति चेदत्रोच्यते, तादृशज्ञानस्य युगपदुत्पन्ननानाज्ञानात्मकत्वेऽविरलक्रमोत्पन्ननानाज्ञानात्मकत्वे वा क्षत्यभावात्। ज्ञानयौगपद्यञ्चानुभव-**

मिति। सर्वथाऽप्यनवधानमूलकातिरभसोक्तत्वात्। तदेव स्पष्टयति—अनुमित्यविषयेति। ननु संशयस्य विरुद्धकोटिद्वयविषयकत्वेन कथं तद्विषयस्य परस्परविरुद्धस्यैकज्ञानात्मकत्वसम्भव इत्याह—नन्विति। अत्रेदं बोध्यम्। एकधर्मावच्छिन्नविशेष्यतानिरूपितविरुद्धनानाधर्मनिष्ठप्रकारताशालिज्ञानं संशयः। अत्राननुगमादीनां परिहारस्तु—विषयिताविशिष्टविषयिताकत्वमिति गदाधरोक्तदिशा बोध्यः। वैशिष्ट्यञ्च स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वस्वसामानाधिकरण्यसम्बन्धाभ्याम्। स च स्थाणुर्वा पुरुषो वेत्याकारकः साधारणधर्मवद्धर्मिज्ञानासाधारणधर्मवद्धर्मिज्ञानविप्रतिपत्तिवाक्यजन्यकोटिद्वय - ज्ञानान्यतमजन्यः। संशयादपि च क्वचित्संशयः। विशेषदर्शननिवर्त्यश्च। तदुक्तम्—समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय इति। ( न्या० सू०, १.१.२३ ) केचित्तु—भावद्वयकोटिक संशयाप्रसिद्धेः 'स्थाणुर्वा पुरुषो वेत्यत्र स्थाणुत्वस्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावरूपचतुष्कोटिक एव संशय इत्याहुः। अतएव—'स संशयो मतिर्या स्यादेकत्राभावभावयो'रित्युक्तम्। तथापि तु भावद्वयकोटिकसंशयस्याप्यानुभविकत्वं मिश्रादिसम्मतत्वञ्च। तथात्वापत्त्येति। आकाराकारिणोरभेदाभ्युपगमात्। इष्टापत्तिं निराचष्टे—उत्पत्तीति। विरुद्धविषयकस्यापि संशयस्य नैकज्ञानात्मकत्वमित्याह—तादृशज्ञानस्येति। युगपद् अविरलक्रमेतिद्वयं स्थलभेदाभिप्रायेण यौगपद्यानुभवस्यैव औचित्यप्राप्तमित्यनेन यौक्तिकत्वाद्वा बोध्यम्। ज्ञानयौगपद्यञ्चेति।

दोनों में एकत्व (अभेद) आपन्न होने से अनुमिति परामर्श में कार्यकारणभाव नहीं बन सकता, तो यह कथन कुचोद्यमात्र है, क्योंकि परामर्श में व्याप्त्यादि भी भासित होते हैं, जो कि अनुमिति का विषय नहीं होते, अतः दोनों का आकारवैचित्र्य होने से कार्यकारणभाव बन सकता है। अतएव 'स्थाणुरयम्' इस ज्ञान की अपेक्षा 'स्थाणुर्वा पुरुषो वा' इस ज्ञान का वैलक्षण्य माना जाता है।

शङ्का—स्थाणुत्व पुरुषत्व दोनों परस्पर विरुद्ध होने से दोनों एक ज्ञानात्मक नहीं हो सकते, यदि स्थाणुत्व एवं पुरुषत्वरूप आकार विशेष को अलीक माना जाय तो तदात्मकज्ञान के अलीक हो जाने से तद्विषयक उत्पत्तिविनाश का अनुभव जो सर्वानु-

**बलात्, यज्जगदे तथागतैः—'तद्यथा विशालमते ! महत उदकौघस्य वहतः स चेदेकस्य तरङ्गस्योत्पत्तिप्रत्ययः प्रत्युपस्थितो भवत्येकमेव तरङ्गः प्रवर्तते, सचेद् द्वयोस्त्रयाणां सम्बहुलानां तरङ्गाणामुत्पत्तिप्रत्ययः प्रत्युपस्थितो भवति, यावत्संबहुलानि तरङ्गाणि प्रवर्तन्ते, न च तस्योदकौघस्य स्रोतसा वहतः समुच्छित्तिर्भवति, एवमेव विशालमते ! तदोघस्थानीयमालयविज्ञानं सन्निश्रित्य प्रतिष्ठाय स चेदेकस्य विज्ञानस्योत्पत्तिप्रत्ययः प्रत्युपस्थितो भवति, चक्षुर्विज्ञानं प्रवर्तते, स चेद् द्वयोस्त्रयाणां स चेत्पञ्चानां विज्ञानानामुत्पत्तिप्रत्ययः प्रत्युपस्थितो भवति, सकृद्यावत्पञ्चानां प्रवृत्तिर्भवती'ति । प्रत्यय शब्दोऽत्र कारणपरः । किञ्च तार्किकनयेऽपि मनसोऽणुत्वेन नयनघ्राणादिनानेन्द्रियकरणकज्ञानानां**

तत्र भगवद्बुद्धवाक्यं प्रमाणमाह—यज्जगद इति । तथान्यत्रापि—

तरङ्गा ह्युदधेर्यद्वत् पवनप्रत्ययेरिताः ।
नृत्यमानाः प्रवर्तन्ते व्युच्छेदश्च न विद्यते ॥
आलयौघस्तथा नित्यं विषयपवनेरितः ।
चित्रैस्तरङ्गविज्ञानैः नृत्यमानः प्रवर्तते ॥ इति ।

ननु भवतु भवतांमते तथा, न्यायनयेतु कथं तद्यौगपद्यमिति चेत्तत्राह—किञ्चेति । मनसोऽणुत्वेनेति । तस्य मध्यमपरिमाणत्वेऽनित्यत्वप्रसङ्गात्, विभुत्वे- आत्ममनःसंयोगरूपासमवायिकारणाभावाज्ज्ञानानुत्पत्तिप्रसङ्गाद्, विभुद्वय- संयोगस्याभ्युपगमे तस्य नित्यत्वेन सुषुप्तिभंगप्रसङ्गः स्यादिति भावः । ननु समूहा-

भवसिद्ध है नहीं हो पायेगा । समाधान—यह शङ्का उचित नहीं है क्योंकि स्थाणुर्वा पुरुषो वा इत्याकारक ज्ञान युगपत् उत्पन्न नाना ज्ञानात्मक है अथवा अविरल क्रमोत्पन्न नाना ज्ञानात्मक है, ऐसा मानने से कोई क्षति नहीं है । ज्ञानों का योगपद्य तो अनुभव बलात् माना जा सकता है । जैसा कि बुद्ध ने कहा है—तत्‌यथा विशालमते········ प्रवृतिर्भवति' हे विशालमते ! जैसे बहते हुए महान् जलसमुदाय से यदि एक तरङ्ग के उत्पत्ति का प्रत्यय (कारण) उपस्थित होता है तो उससे एक तरङ्ग ही उत्पन्न होती है, और यदि दो तरङ्गों का या तीन तरंगों का अथवा बहुत सी तरङ्गों का कारण उपस्थित होता है तो उतने ही अधिक तरङ्ग भी उत्पन्न होती है किन्तु उस बहते हुए जलसमुदाय का स्रोत विच्छिन्न नहीं होता, उसी प्रकार हे विशालमते ! उस जलसमुदाय के स्थानापन्न आलयविज्ञान (अहं इत्याकारक) प्रतिष्ठित होकर यदि एक विज्ञान का उत्पत्तिकारण उपस्थित होता है तो उससे एक चक्षुर्विज्ञान ही उत्पन्न होता है, और यदि दो या तीन, या पाँच विज्ञानों का उत्पत्तिकारण उपस्थित होता है तो युगपत् उतने ही सम्पूर्ण पाचों विज्ञानों की उत्पत्ति हो जाती है । प्रत्यय शब्द यहाँ (बौद्धदर्शन) कारण परक है ।

**यौगपद्यासम्भवेऽपि एकस्येन्द्रियस्य युगपद्घटपटादिभिः सम्बन्धे ज्ञानयौगपद्य-मौचित्यप्राप्तम्, तत्र नानाज्ञानोपगमे गौरवात् समूहालम्बनमेवैकं लाघवात्स्वीक्रियत इति तु न मानसावर्जितसमाधानम्, सामग्रीभेदेन कार्यभेद इत्युत्सर्गस्य लाघवमात्रापेक्षया दौर्बल्ये प्रमाणानाकलनात्। ज्ञातकरणमेकदैकमेव ज्ञान-मर्जयतीत्यस्य परिभाषामात्रत्वात्। समूहालम्बनोच्छेदे द्वित्वादिप्रत्यक्षता न स्यादिति तु न, घटश्च पटश्चेत्यादिद्वित्वाऽविषयकसमूहालम्बनस्यैवाविनिगम्यत्वे**

लम्बनात्मकैकज्ञानमादायैव प्रोक्तव्यवस्था सेत्स्यतीत्यत आह—तत्रेति। शङ्कते-समूहालम्बनोच्छेद इति। आपेक्षाबुद्धिर्हि—अनेकपदार्थविशेष्यकैकत्वप्रकारक-ज्ञानात्मिका। सा च समूहालम्बनरूपा नानामुख्यविशेष्यताशालित्वात्। तथा च प्रथमक्षणे—अयमेकोऽयमेक इति ज्ञानं तत इमौ द्वाविति द्वित्वोत्पत्तिस्ततो द्वित्वत्वद्वित्वोभयनिष्ठतुरीयविषयताशालिज्ञानं निर्विकल्पकम्, ततो द्वित्वत्व-प्रकारताकद्वित्वविशेष्यताकं सविकल्पलौकिकप्रत्यक्षम्, अपेक्षाबुद्धिनाशश्चेति हि तार्किकसृतिः। तथा च समूहालम्बनाभावे द्वित्वादिप्रत्यक्षमेव न स्यादिति शंकितुरभिप्रायः। समाधत्ते—घटश्चेति। भवतु द्वित्वादिस्थले तत्प्रत्यक्षतानुपपत्त्या भगवत्या समूहालम्बनोज्जीवनम्। सात्वेकत्रचरितार्थाऽन्यत्र तदर्थं भूष्णुरिति द्वित्वाद्यविषयकस्थले तु न कांश्चिद्विनिगमनां पश्याम इति ज्ञानयौगपद्ये का

दूसरी बात यह है कि—तार्किकसिद्धान्त में भी मन के अणु होने से चक्षुघ्राणादि नाना इन्द्रियजन्य ज्ञानों का यौगपद्य न होने पर भी एक इन्द्रिय का एकदा नाना घटपटादिकों के साथ सम्बन्ध होने पर ज्ञानों का यौगपद्य मानना ही उचित है। यदि कहें कि एक इन्द्रिय का युगपत् घटपटादि सन्निकर्ष स्थल में भी नाना ज्ञान मानने पर गौरव होने से समूहालम्बन एक ही ज्ञान लाघवबलात् स्वीकर्तव्य है, तो यह समाधान चित्त सन्तोषाधायक नहीं है, क्योंकि 'सामग्रीभेदेन कार्यभेदः' (सामग्रीभेद से कार्यभेद होता है) इस स्वाभाविक नियम को लाघवमात्र की अपेक्षा से दुर्बल मानने में कोई प्रमाण नहीं है अर्थात् प्रमाण के बिना नहीं मान सकते। 'ज्ञान करण एकदा एक ही ज्ञान को उत्पन्न करता है' यह तो आप (तार्किक) की परिभाषामात्र (स्वीय संकेत) है। यदि कहा जाय कि—समूहालम्बन न मानने पर द्वित्वादि का प्रत्यक्ष नहीं होगा, तो यह कथन संगत नहीं; क्योंकि घटश्च पटश्च इत्यादि द्वित्व अविषयक समूहालम्बन के अविनिगम्यत्व में ही तात्पर्य है। [ तात्पर्य यह है कि घटश्च पटश्च इत्याकारक नाना ज्ञान ही हम मानते हैं, क्योंकि द्वित्वाविषयक ज्ञानस्थल पर सर्वत्र हमें नाना ज्ञानों का यौगपद्य ही स्वीकृत है अर्थात् हम (बौद्ध) घटश्च पटश्च इस ज्ञान को समूहालम्बन नहीं मानते, क्योंकि इस प्रकार के समूहालम्बन मानने में विनिगमक (प्रमाण) नहीं है। अतः इमौ द्वौ इत्याकारक समूहालम्बन से द्वित्व का प्रत्यक्ष हो जायेगा, उसके

**तात्पर्यात्, घटपटावित्यादेरपि ज्ञानस्य मन्मते गतेर्वक्ष्यमाणत्वाच्च। यथा च प्राभाकरैः पूर्वोक्तस्थले ज्ञानद्वयीयविषयतयोर्निरूप्यनिरूपकभावमभ्युपेत्य विशेषदर्शनप्रतिबध्यतावच्छेदकाक्रान्तत्वं स्वसमवायिसमवेतत्वकालिक-सम्बन्धाभ्यां कोटिद्वयस्मृतिविशिष्टधर्म्यनुभवात्मके संशयपदार्थे स्वीक्रियते इत्युक्तं चतुर्थे शारदायाम्, तथाऽस्माभिरपि स्वीकरिष्यते इति को विरोधः।**

क्षतिरिति भावः। ननु घटत्वपटत्वरूपविरुद्धाकारता कथमेकस्य ज्ञानस्येत्यत आह–ज्ञानस्येति। यथेति। प्राभाकराः सर्वेषां ज्ञानानां याथार्थ्यलक्षणं प्रामाण्यमभ्युपगच्छन्ति। तत्रेदमनुमानं प्रमाणयन्ति—सर्वे विगीताः संदेहविभ्रमाः यथार्थाः प्रत्ययत्वात्संप्रतिपन्नवदिति। तथा च तन्मते यथा भ्रमपदव्यवहार्ये इदं रजतमित्यत्र रजतत्वनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताशालिबुद्धित्वं नेदं रजतमितिज्ञाननिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकं भवति। विभिन्नज्ञानीयविषयतयोर्निरूप्यनिरूपकभावानङ्गीकारे तदनुपपत्तेः। तथा स्थाणुर्वायं पुरुषो वेत्यत्रापि—स्वसमवायिसमवेतत्वकालिकसम्बन्धाभ्यां कोटिद्वयस्मृतिविशिष्टधर्म्यनुभवस्य संशयपदार्थत्वेनाविरलक्रमोत्पन्नज्ञानद्वयीयविशेष्यताप्रकारतयोरप्यसति बाधके ईदृशस्थले निरूप्यनिरूपकभावोपगमेन तद्विशेष्यकविशेषदर्शननिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकाक्रान्तत्वेनोक्तानुभवस्य नानुपपत्तिः। एवं मन्मतेऽपि प्रोक्तस्थले स्वघटितसन्तानघटकत्वकालिकसम्बन्धाभ्यां कोटिद्वयस्मृति-

निराकरण में 'परिभाषामात्रत्वात्' इस कथन का तात्पर्य नहीं है, अपितु घटश्च पटश्च इस प्रकार के समूहालम्बन के अप्रामाणिकता में ही तात्पर्य है।] यदि शङ्का हो कि घटत्व पटत्व विरुद्धाकारता एक ज्ञान को कैसे हुई तो मन्मते ( बौद्ध ) घटपटौ इत्यादि ज्ञान की विरुद्धाकारता अग्रे वक्ष्यमाण है। जैसे प्रभाकर ने 'स्थाणुर्वा पुरुषो वाऽयम्' इस पूर्वोक्त स्थल में ज्ञानद्वयविषयिताओं में निरूप्यनिरूपकभाव मानकर स्वसमवायिसमवेतत्व एवं कालिक सम्बन्धेन कोटिद्वयस्मृतिविशिष्ट धर्म्यनुभवात्मकसंशय में विशेष दर्शन ( स्थाणुत्वव्याप्यवक्रकोटरादिमानयम् अथवा पुरुषत्वव्याप्यकरचरणादिमानयम् ) की प्रतिबध्यता मानी है, ऐसा खण्डन-शारदा के चतुर्थ परिच्छेद में कहा गया है। उसी प्रकार हम ( बौद्ध ) भी स्वीकार कर लेंगे तो क्या विरोध है। अन्तर यह है कि हमारे ( बौद्ध ) मत में समवाय समवायि के अनङ्गीकृत होने से आद्य सम्बन्ध के स्थान में स्वघटितसन्तानघटकत्व सम्बन्ध मानेंगे। भाव यह है कि 'स्थाणुर्वा पुरुषो वा' इस ज्ञान की विषयताओं का स्थाणुत्वावच्छिन्नविषयतानिरूपित इदन्त्वावच्छिन्नविषयता एवं पुरुषत्वावच्छिन्नविषयतानिरूपित इदन्त्वावच्छिन्नविषयता इस प्रकार निरूप्यनिरूपकभाव मानकर इन विषयताओं का निरूपक संशय जो कोटिद्वयस्मृतिविशिष्टधर्म्यनुभवरूप है, माना है यहाँ विषयताचतुष्टय में प्रथम

आद्यसम्बन्धस्थाने स्वघटितसन्तानघटकत्वं निवेश्यमिति तु विशेषः समवायस्य समवायिनो वाऽनङ्गीकारात् ।

अस्तु वैकज्ञानात्मकत्वमेव संशयस्य, कोटिताख्यविलक्षणविषयतानिरूपकत्वमन्यत्रादृष्टमपि यथा तार्किकादिभिरत्र स्वीक्रियते तथाऽन्यत्रादृष्टमपि विलक्षणाकारत्वमीदृशमनुभवबलादेवास्माभिः स्वीकरिष्यते, विरुद्धप्रवृत्त्यादि-

आद्यसम्बन्धस्थाने इति । कालिकसम्बन्धोऽपि द्वितीयो ज्ञानयौगपद्यपक्षे विज्ञानवादेऽपि सम्भवत्येव । अविरलक्रमोत्पत्तिपक्षे तु प्रथमज्ञानोत्पत्तिद्वितीयक्षणे द्वितीयज्ञानस्योत्पत्तिरिति क्षणद्वयावस्थायित्वपक्षे द्वितीयक्षणमादाय कालिकसम्बन्धसम्भवेऽपि क्षणिकत्वपक्षे तदसम्भवेन स्वाव्यवहितपूर्वक्षणवृत्तित्वं द्वितीयसम्बन्धो वक्तव्यः । क्षणस्य ज्ञानात्मकवस्त्वनतिरिक्ततयाऽऽधाराधेयभावाभावेऽपि तद्व्यवहारस्य वैकल्पिकस्य विज्ञानवादेऽपि स्वीकार्यत्वात् । उच्यतां वा क्षणवृत्तित्वस्थाने क्षणात्मकत्वमेवेति भावः । ज्ञानद्वयीयविषयतयोर्निरूप्यनिरूपकभावस्य स्वयं विवर्तवादे निरसनीयतया संशयस्य नानाज्ञानात्मकत्वे विशेषदर्शनप्रतिबध्यतावच्छेदकेन परस्परनिरूप्यनिरूपकभावापन्नविषयताघटितेनाक्रान्तत्वानुपपत्तिरित्यस्वरसादाह अस्तु वेति ।

विशिष्टानुभवात्मकत्व तादृशप्रतिबध्यतावच्छेदकाक्रान्तत्वञ्चेतिभावः । स्वं कोटिद्वयस्मृतिः । समवायस्येति । विज्ञानस्यैव भगवतो यत्र नित्यत्वं नोररीकृतं दूरतस्तस्मिन् नित्यत्वघटितसमवायस्योररीकरणप्रत्याशा । न वा तत्र सम्बन्धत्वमपि प्रामाणिकमिति समवायसमवायिनोरूभयोरेवाभाव इति व्यक्तं वेदान्तदर्शनादौ ।

यथा तार्किकादिभिरिति । अतएव तत्कोटिताख्यविलक्षणविषयतानिरूपकत्वम् संशयत्वमिति संगिरन्ते । विरुद्धप्रवृत्त्यादीति । प्रवृत्तिर्भवन्ती सकम्पा वा निष्कम्पा वा स्यात्, तत्राद्या तु न दण्डवारिताऽऽवयोः, कृषिप्रतिग्रहादौ प्रेक्षावत्प्र-

विषयताद्वय प्रकारताख्या हैं और द्वितीय विषयताद्वय विशेष्यताख्या है । इदंरूपधर्मिविषयक अनुभव में कोटिद्वय-स्मृति का वैशिष्ट्य स्वसमवायिसमवेतत्व एवं कालिक है । जैसे—स्वं = कोटिद्वय ( पुरुषत्वावाच्छिन्न स्थाणुत्वावच्छिन्न ) को स्मृति, तत्समवायि आत्मा, तत्समवेतत्वं इदंरूपधर्मिविषयक अनुभव में, एवं कालिकसम्बन्ध भी तादृशस्मृति का तादृशानुभव में है । इस प्रकार के उस संशयात्मक ज्ञान में विशेष दर्शन की प्रतिबध्यता प्रभाकर मानता है । [ प्रभाकर के मत में सभी ज्ञान यथार्थ ही होते हैं । अतः 'अयं स्थाणुर्वा पुरुषो वा' यहाँ अयं यह अनुभव है और स्थाणुर्वा, पुरुषो वा ये दोनों स्मृति ज्ञान है । यथार्थ होने पर भी निरूप्यनिरूपकभावापन्न विषयता निरूपक होने से बाध्यता भी मान ली जाती है । स्वघटितसन्तानघटकत्वसम्बन्ध इस प्रकार घटाना है कि स्वं कोटिद्वयस्मृति; तद्घटित सन्तान = अयं स्थाणुर्वा पुरुषो वा इत्याकारक समुदाय, तद्घटकत्व अयं इत्याकारक अनुभव में ।]

**प्रसङ्गवारणस्यापि भवद्भिरिवास्माभिरपि सुकरत्वात्, इयांस्तु विशेषः—यद्भवद्भिः कार्यकारणभावे प्रतिबध्यप्रतिबन्धकभावे च विलक्षणविषयता प्रवेश्या, अस्माभिस्तु विषयस्थानीयो ज्ञानस्य विलक्षणाकारविशेष इति। वस्तुतस्तु विषयतायां बाह्यविषयसंस्पर्शिनो वैलक्षण्यस्य प्रकारान्तराणां वा संशये दुर्निरूपतायाः शारदायामावेदितत्वेन ज्ञानस्य विचित्राकारता भवतामपि**

वृत्तिदर्शनात्। निष्कम्पा तु—परस्परविरुद्धविषयत्वेन चेतसो दोलायमानत्वेनासति सम्मता भवतामपीति तुल्योऽयं पन्थाः। कार्यकारणभाव इति। कार्यकारणभावे साधारणधर्मवद्धर्मिज्ञानादिकार्यतावच्छेदकतया, प्रतिबध्यप्रतिबन्धकभावे विशेषदर्शनप्रतिबध्यतावच्छेदकतया चेति भावः। विषयतागतवैलक्षण्यस्यैव दुर्वचत्वेऽत्वशक्यस्तत्प्रवेशो भवताऽपि कर्तुमित्यत आह—वस्तुतस्त्विति। दुर्निरूपताया इति। विषयगतविशेषमपास्य ज्ञानगतविशेषो नेति तस्यावश्यकल्पनीयत्वे तेनैवोपपत्तौ ज्ञानगतविशेषकल्पना न मानालिङ्गिता, विषयगतविशेषमादायैव तस्य तत्त्वे विषयगतविशेषोऽपि चर्चनीयः। विरोध एवातो वाकरः प्रयुज्यत इति चेत्—न तस्य संशयविषयताया नियमः 'मूलावच्छिन्नो वृक्षः कपिसंयोगी न वा' इत्यत्र भावाभावावगाहितया विरोधविषयकत्वासम्भवात्। विषयताविशेषस्तु तदनुव्यवसाय एव भानार्हः; सोऽपि वा न वक्तुं शक्यः, तस्याखण्डोपाधित्वे स्वरूपसम्बन्धविशेषरूपत्वे वा प्रतीतिविशेषसाक्षित्वेनैव निरूपणीयत्वेनान्योन्याश्रयस्य स्वं न स्वीयमित्यनुभवबाध्यस्य सम्बन्धानवस्थानस्य चापत्तेः, तस्य विकल्परूपत्वे व्रीहिभिर्यजेत यवैर्वा 'इत्यत्रापि तद्दर्शनात्। नह्यसौ समुच्चयार्थः, तथा सत्यनियमानुल्लेखेन संशयरूपत्वाभावप्रसङ्गात्। नाप्युपमानार्थः, धर्मिणस्तदन्यत्वानिश्चयेन तत्तदुपमेयत्वायोगात्। तथा च विषयप्रयुक्तविशेषाभावे संशये समुच्चयाद् वैलक्षण्यमपि नोपपद्यते, परिष्कारादिप्रनाड्या प्रकारान्तराभ्युपगमस्तु बहुशः क्षुण्णमिति तत्रैव मनोहत्यावधेयमिति दिक्।

अथवा 'अयं स्थाणुर्वा पुरुषो वा' इत्यादि संशय को एक ज्ञानात्मक ही मान लिया जाय। ( यदि कहें कि स्थाणुत्व पुरुषत्व ये दोनों विरुद्ध धर्म एक ज्ञानात्मक कैसे होगें तो ) जैसे कोटिताख्यविलक्षणविषयतानिरूपकत्व अयं घट इत्यादि ज्ञानों में अदृष्ट होने पर भी तार्किकों ने 'स्थाणुर्वा पुरुषो वाऽयम्' इत्यादि स्थलों में स्वीकार किया है, वैसे ही अयं घट आदि स्थलों में अदृष्ट भी विलक्षणाकारत्व 'अयं स्थाणुर्वा पुरुषो वा' इत्यादि स्थलों में ईदृश ( अयं स्थाणुर्वा पुरुषो वा ) अनुभव बलात् हमारे द्वारा मान लिया जायेगा।

विरुद्ध प्रवृत्त्यादि प्रसक्ति वारण भी आप ( तार्किक ) के सदृश ही हम ( बौद्ध ) भी कर सकते हैं। ( अर्थात् जैसे आप के मत में निष्कम्प प्रवृत्त्यादि प्रामाण्यनिश्चया-

**स्वीकर्तुमुचितेति समाधिसाम्यमेव। एतेन समूहालम्बनादिस्थले नीलाकारस्य ज्ञानस्य पीताकारत्वेन पीताकारस्य च नीलाकारत्वेनानुपलम्भो नीलपीताकारयोरभेदे बाधकः, अन्यथैकैकाकारस्यापि ज्ञानस्योभयाकारत्वेनोपलम्भप्रसङ्ग इति निरस्तम्, नरसिंहवत्स्वकारणसामर्थ्याज्ज्ञाने वैजात्यस्य स्वीकर्तुं शक्यत्वात्। न चैवं प्रत्येकोचितव्यवहारस्य इदं नीलमिदं पीतमित्यादिकस्यापलापापत्ति; भवदभ्युपगतनीलादिविलक्षणचित्ररूपेण समानयोगक्षेमत्वात्, वैजात्ये-**

विज्ञानत्वं प्रमेयत्वव्यापकं न वेति विप्रतिपत्तिघटकयोगाचारीय विधिकोटौ निषेधकोटिमाटीकमानस्य तर्कचणस्य दोषमुद्भाव्य निराचष्टे—एतेनेति। वित्तेरेव विचित्राकारतोक्तेन वक्ष्यमाणेन चेत्यर्थः। आकारविशेष एवायं विज्ञानस्येति- वदतो विज्ञानवादिनो मते नानाविशेष्यतानिरूपितनानाप्रकारताशालिज्ञानस्थले नीलाकारोऽपि पीताकारः स्यात्, पीताकारोऽपि नीलाकारः स्यात्, तदभिन्नाभिन्नस्य तदभिन्नत्वध्रौव्यादिति न्यायेन नीलरूपाकारात्मकविज्ञानाभिन्नस्य पीताकारस्य नीलाभिन्नत्वनियमाद् वित्तेरेकत्वात्। नीलपीतौ यदि स्वविषयकैक ज्ञानात्मकौ स्याताम् अभिन्नौ स्याताम्, एकज्ञानीयनीलपीताकारौ यदि अभिन्नौ स्याताम्, एकाकारस्य ज्ञानस्यापराकारत्वेनोभयाकारत्वेन वोपलम्भः स्यादिति प्रसङ्गो विज्ञानवादियोगाचारमते विचित्राकारस्यैव ज्ञानस्याभ्युपगमेनापाद्या-

धीन मानते हैं और संशय ज्ञान से कृष्यादि प्रवृत्त्यादिवत् सकम्प प्रवृत्त्यादि मानते हैं, वैसे हम ( बौद्ध ) भी मान लेगें।) इतना ही अन्तर है कि आप कार्यकारणभाव तथा प्रतिबध्यप्रतिबन्धक भाव में विलक्षण विषयता का प्रवेश करते हैं और हम विषयस्थानीय ज्ञान का ही विलक्षण आकार विशेष मान लेते हैं।

वस्तुतस्तु ज्ञान की चित्राकारता आप ( तार्किक ) को भी मानना उचित है क्योंकि संशय स्थल में विषयता में बाह्यविषय संस्पर्शी ( बाह्यविषयाधीन ) वैलक्षण्य अथवा प्रकारान्तरों के दुर्निरूपता का प्रतिपादन खण्डन-शारदा में कर चुके हैं, अतः समाधान समान ही है।

यदि कहा जाय कि समूहालम्बन स्थल में नीलाकार ज्ञान की पीताकारत्वेन और पीताकार ज्ञान की नीलाकारत्वेन उपलब्धि न होना ही नीलाकार और पीताकार के अभेद का बाधक है, अन्यथा एकाकार ( पीताकार या नीलाकार ) ज्ञान भी उभयाकारत्वेन उपलब्ध होना चाहिए। तो यह कहना भी निरस्त हो गया, क्योंकि नरसिंह के समान ज्ञान में भी स्वकारणसामर्थ्यासादित वैजात्य स्वीकार कर सकते हैं। अर्थात् जैसे नरत्व सिंहत्व के विरुद्ध होने पर भी एकत्र नरसिंह शरीर में देखा गया है। तद्वत् यहाँ भी विलक्षणाकार ज्ञानसमग्री उपस्थित होने पर 'स्थाणुर्वा पुरुषो वा' इत्याकारक विलक्षणाकार ज्ञान होता है यह मान सकते हैं।

ऽपि भागोऽयं नरस्य भागोऽयं सिंहस्येति व्यवहारवत्सम्भवाच्च। ननु चित्ररूपस्यातिरिक्ततायां तावद्विवदन्ते तार्किकाः, नीलादेर्नीलाद्यतिरिक्तरूपाजनकत्वनियमात्, समानाधिकरणविजातीयरूपसमुदायादेव चित्रव्यवहारोपपादनात्, तादृशनियमस्याप्रयोजकत्वेऽपि चित्रं रूपमिति प्रतीतावविवाद एव, एवं नर-

प्रसिद्धया इष्टापत्त्या चापास्तः। एवं = चित्राकारज्ञानोपगमे। समानयोगक्षेमत्वादिति। अतिरिक्तचित्ररूपवादिमते प्रत्येकोचितव्यवहारापलापस्येष्टत्वे केवलनीलपीतकपालावच्छेदेन सन्निकर्षकाले तादृशव्यवहारस्येष्टत्वे च तथैवास्माकमपि तादृशसमन्तरप्रत्ययबलादिति तुल्यसमाधिकत्वमिति भावः। योगक्षेमसाम्यसमन्वयस्त्वतिरिक्तचित्ररूपस्वीकारवदतिरिक्तविचित्राकारज्ञानस्वीकारात् तद्रक्षणार्थं तादृशानुपपत्तिविप्रत्तिपत्तीनां समाधानाद्बोध्यः। नन्वतिरिक्तचित्ररूपानङ्गीकर्तॄणां मते प्रत्येकोचितव्यवहारसम्भवात् किमिति चित्रस्थानीये वैजात्य आग्रह इत्यत आह—वैजात्येऽपीति। विवदन्त इति। चित्ररूपविषयेऽस्ति मतद्वयम्; प्राचामर्वाचाञ्च, तत्र प्राञ्चस्तावदतिरिक्तचित्ररूपमुररीकुर्वन्ति, तेषामयमाशयः, रूपस्याव्याप्यवृत्तित्वे नानारूपवदवयवारब्धद्रव्यप्रत्यक्षे समवायेन नानारूपाणां हेतुत्वकल्पनापत्त्या नानारूपेषु चित्रमिति प्रतीतिविषयत्वकल्पनापत्त्या च गौरवापत्तेः। रूपमात्रस्य व्याप्यवृत्तित्वे तु नानारूपवदवयवारब्धपटेऽतिरिक्तचित्ररूपस्यैवोत्पत्त्या तस्यैवाश्रयप्रत्यक्षहेतुत्वं चित्ररूपमितिप्रतीतिविषयत्वञ्च सम्भवतीति नोक्तगौरवप्रसक्तिः। अतएव एकं चित्रमिति प्रतीतेः प्रमात्वमुपपद्यते। चित्ररूपाधिकरणे घटादौ स्वाश्रयसमवेतत्वसम्बन्धेनावयवनीलादीनां कारणानां सत्त्वात् तत्र नीलाद्युत्पत्तिस्तु न चोदनीया, समवायेन नीलं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलातिरिक्तरूपत्वेन प्रतिबन्धकत्वकल्पनात्, एवं पीतादिस्थलेऽपि। अथवा चित्रेतररूपत्वावच्छिन्नं प्रति कार्यकालवृत्तितया चित्रस्य प्रतिबन्धकत्वात्, नीलादिकं प्रति तत्प्रागभावत्वेनैव हेतुत्वोपगमाद्वा। एवञ्च पीतकपालावच्छिन्नचक्षुःसन्निकर्षादिकाले न नीलोपलब्ध्यापत्तिः। तथा च यथा प्राचां मतेऽतिरिक्तं चित्ररूपं कल्प्यते, तथैवास्माभिरपि नीलपीतादिविलक्षणाकारं ज्ञानं कल्प्यते। नव्यास्तु चित्ररूपस्यातिरिक्ततां नाभ्युपगच्छन्ति। अवच्छेदकत्वसम्बन्धेन नीलं प्रति समवायेन नीलस्य कारणतोपगमेनैव नानाजातीयरूपवत्कपालारब्धे घटे पीतकपालावच्छेदेन नीलापत्तिवारणसम्भवे प्रोक्तप्रतिबध्यप्रतिबन्धकभावकल्पने गौरवात्। एवञ्च समवायेन प्रत्येकं नीलादिरूपं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलादेः प्रत्येकं कारणतया नीलादेः स्वातिरिक्तरूपाजनकत्वनियमाद् विजातीयरूपसमुदायादेव चित्रव्यवहारमुपपादयन्ति। तादृशनियमस्येति। अतिरिक्तचित्रवादिमते नीलादितो जन्यस्य व्याप्य-

**सिंहेऽपि नरत्वसिंहत्वयोरनभ्युपगमेन वैजात्यप्रतीतेश्चानुभविकत्वेनादोषः। इमौ नीलपीतौ घटावित्यादौ तु चित्रत्वप्रकारकप्रतीत्यनुदयेन कथं निर्वाहः, तथा च नीलपीतादिप्रत्येकातिरिक्ताकारस्वीकारासम्भवः, एकस्यापि नील-पीताद्यनेकाकारत्वं त्वेकस्याप्यनेकात्मतापर्यवसन्नं व्याहतमेवेति चेन्न, भावा-नवबोधात्, तथाहि 'इमौ नीलपीतौ' इत्यत्र ज्ञाने वैजात्यमनुभूयते न वा, आद्ये**

वृत्तित्वेऽन्यावच्छेदेनापि ( पीतावच्छेदेनापि ) उत्पन्नचक्षुःसंयोगघटितचक्षुःसंयुक्त-समवायरूपसन्निकर्षेण तदुलब्धिप्रसङ्गः, अव्याप्यवृत्तित्वे च रूपस्य व्याप्यवृत्तित्वेन विरोध इत्यापत्तिभिया तादृशनियमस्याप्रयोजकत्वाभ्युपगमेऽपि चित्रं रूपमिति प्रतीतिस्तु विवादानाकलितैव। तथा नरसिंहस्थलेऽपि सङ्करप्रसङ्गात् नरत्व-सिंहत्वयोरेकत्रानभ्युपगमेनानुभविकतत्प्रतीतिस्वीकारात् किं नश्छिन्नम्। तथा च भवत्वस्मत्सद्मनि यथा तथा प्रतीतिर्विप्रतिपत्तिर्वा चित्ररूपे, इमौ नीलपीतौ घटावित्यत्र तु चित्रत्वप्रकारकप्रतीत्यनुदयेन नीलपीतादि प्रत्येकातिरिक्ता-

यदि कहा जाय कि विलक्षणाकार एक ज्ञान मानने पर इदं नीलम्, इदं पीतम्, इत्याकारक प्रत्येक पार्थक्येन जायमान उचित व्यवहार ही लुप्त हो जायेगा, तो यह कहना उचित नहीं' क्योंकि यह आप (तार्किक) के द्वारा स्वीकृत नीलादि विलक्षण चित्ररूप के समान है। अर्थात् जैसे आपके मत में चित्ररूप को पृथक् मानने पर इदं नील इदं पीतम्' इत्यादि पार्थक्येन उचित व्यवहार सम्पन्न होते हैं, वैसे ही मेरे (बौद्ध) मत में भी विलणा-कार एक ज्ञान मानने पर भी पार्थक्येन जायमान इदं नीलं इदं पीतम् इत्यादि उचित व्यवहार हो जायेंगे। और जैसे नरसिंह के विलक्षण आकार होने पर भी 'यह नर का भाग है ' यह सिंह का भाग है यह व्यवहार होता है, वैसे ही स्थाणुर्वा पुरुषो वा यहाँ पर भी विभिन्न आकार की प्रतीति विभिन्न अंश में हो जायेगी।

शङ्का—चित्ररूप के नीलाद्यतिरिक्तता में तार्किक विवाद करते हैं, क्योंकि नील नीलाद्यतिरिक्त रूप का जनक नहीं होता, अर्थात् कारणगत नीलरूप कार्यगत नीलरूप का ही जनक होता है ऐसा नियम है। 'इदं चित्ररूपं' एतादृश चित्रत्व व्यवहार तो एकाधि-करणवृत्ति विजातीय रूप (नीलपीतादि) समुदाय से ही हो जायेगा। निरूक्तनियम के अप्रयोजक होने पर भी चित्रं रूपम् ईदृश प्रतीति में कोई विवाद नहीं है। एवं नरसिंह में भी नरत्व सिंहत्व विरुद्ध धर्म न मानने पर भी 'नरसिंहः' इस विलक्षण प्रतीति के अनु-भव सिद्ध होने से कोई दोष नहीं है। किन्तु 'इमौ नीलपीतौ घटौ' इत्यादि में चित्रत्व-प्रकारक प्रतीति के न होने से चित्ररूप का निर्वाह कैसे होगा। अतः नीलपीतादि प्रत्येकातिरिक्त चित्राकार स्वीकार नहीं कर सकते। एक नील अथवा पीत को भी नील-पीतादि अनेकाकार मानना तो एक के अनेकात्मकता में ही पर्यवसित हुआ है। अतः व्याहत (विरुद्ध) है।

**तदेवास्माभिश्चित्रशब्देनोच्यते इति चित्रत्वप्रकारकप्रतीतेः कः प्रसङ्गः ? ज्ञाने वैजात्यस्य भवतोऽप्यनुमतत्वात्, अन्यथा बाह्यसिद्धिरपि कुतः ? घट इति ज्ञानात्पटस्यापि वा सिद्धिर्न कुतः ? अतएव न विषय एव वैजात्यम्, असंसृष्टस्य विषयत्वे विषयान्तरसाधारण्यात् । एतेन द्वितीयोऽपि परास्तः । तस्माद्विषयाधीनं ज्ञाने वैजात्यं भवता वाच्यम्, बाह्यस्य विषयस्य दुर्निरूपत्वात्तु ज्ञानस्य तत्स्वकारणसामर्थ्यायातं मयाभ्युपगन्तव्यमिति काऽसङ्गतिः ? किञ्च**

असंसृष्टस्येति । ज्ञानेनेत्यादिः ।

कारस्य कथंकारं स्वीकारः नह्येकस्याप्यनेकाकारत्वसम्भवस्तस्यानेकात्मकतापर्यवसितत्वेन व्याहत्यापत्तेरिति—तत्रास्माभिः पृष्टो भवान् व्याचष्टाम्—किं नीलपीतावित्यत्र वैजात्यमनुभूयते न वा, आद्ये चित्रस्य तत्स्थानाभिषिक्तत्वात् तत्प्रसङ्गस्य क्वावसरः । विषयपक्षपातिना भवतापि वैजात्यन्त्ववश्यं स्वीकरणीयमन्यथा विषयोऽपि विषाक्तः स्यात् । किञ्च तदस्वीकारे विषयेष्वासक्तमनसो भवत एवैकस्माज्ज्ञानात् सर्वसिद्धिप्रसङ्गोऽसंसृष्टत्वाविशेषात् । विषये वैजात्यस्वीकारस्तूक्तमेव दूषणमाह्वयति, विषयाधीनवैजात्यस्य स्वीकर्तव्यत्वे विषयस्य दुर्निरूपत्वाद् वित्तौ वैजात्यमङ्गीक्रियते मयेति भावः । ज्ञाने वैजात्यं प्रसाध्यैकस्यानेकात्मत्वपक्षस्यापि निर्दोषत्वं बोधयन् विरोधं विधुनोति—किञ्चेति । विरोधो हि नीलपीतयोर्नीलत्वपीतत्वयोश्च परस्परात्मकत्वाभावरूपः

समाधान—आप (तार्किक) भाव (तात्पर्य) नहीं समझे । भाव यह है कि 'इमौ नीलपीतौ' इस ज्ञान में इदं नीलं इदं पीतं इत्यादि ज्ञानापेक्षया वैजात्य का अनुभव होता है या नहीं, यदि प्रथम पक्ष मानें तो उस वैजात्य को ही हम चित्रशब्द से कहते हैं, अतः चित्रत्वप्रकारक प्रतीति का प्रसंग ही क्या है, अर्थात् चित्रत्वप्रकारक प्रतीति नहीं होती । अतः चित्ररूप कैसे मानें इत्यादि आक्षेप नहीं कर सकते । क्योंकि ज्ञान में वैजात्य (वैलक्षण्य) तो आप (तार्किक) को भी अनुमत है । अन्यथा बाह्य (घटादि) सिद्धि भी कैसे होगी, घटः इस ज्ञान से पटादि की भी सिद्धि क्यों नहीं हो जाती ? अतएव विषयगत वैजात्य भी नहीं कह सकते, क्योंकि असंसृष्ट (ज्ञानासम्बद्ध) विषय मानें तो वह विषयान्तर साधारण है । इसी से द्वितीयपक्ष (वैजात्यं नानुभूयते) भी परास्त हो गया तस्मात् ज्ञान में विषयाधीन वैजात्य ही आप (तार्किक) को मानना चाहिए । यदि कहें कि बाह्य विषय के दुर्निरूप होने से ज्ञान में वह वैजात्य आया कहाँ से ? तो ज्ञान का वह वैजात्य स्वकारण (ज्ञानकारण) के सामर्थ्य से आयात है, यह मैं (बौद्ध) मानता हूँ । ऐसी स्थिति में असंगति क्या है ।

किञ्च नीलपीतादि के ज्ञानात्मकता विप्रतिपत्तिदशा में आयुष्मान आप (तार्किक) ने नीलत्व पीतत्व के विरोध का निश्चय कैसे कर लिया ? क्योंकि ज्ञानात्मकता सिद्ध होने पर विरोध ही नहीं मान सकते, और यदि ज्ञानात्मकता सिद्ध नहीं है तो विरोध का

**नीलत्वपीतत्वादेर्विरोध इत्येव ज्ञानात्मकताविप्रतिपत्तिदशायां कथमवधारितमायुष्मता ? ज्ञानात्मकतासिद्धौ विरोधस्यैवामन्तव्यत्वात्, अन्यथा तु विरोधस्य सन्देहात् । पांसुलपादादयोऽपि नीलमिति बुद्ध्वा पीते न प्रवर्तन्त इति सिद्धएव विरोध इति चेन्नूनं स्वाभीष्टसाधने देहात्मवादिनः पांसुलपादादय एव तव साहाय्यं रचयन्ति न तु विद्वांसः, तथा च स्वीकुरु देहात्मवादमपि । युक्तिविरोधेन प्रत्यवस्थानं तु समानमेव, विरोधभानमेव विरोधो न त्वन्यत्, स च न सर्वपुरुषादिसाधारणः । तत्रापि किन्नियामकमिति तु प्रतिविधास्यते । अन्यथा-**

सहानवस्थानरूपश्च ज्ञानात्मकताविप्रतिपत्तिदशायामवधारयितुमशक्यः, सिद्धौ च तस्मिन् 'भुक्तवन्तं प्रति मा भुङ्क्ष्था किं तेन कृतं स्यादिति न्यायेन विरोधभणितिरेव विरुद्धा । अन्यथेति । ज्ञानात्मकत्वासिद्धौ । संदेहादिति । ज्ञानात्मकत्वाभावस्याप्यनवधारितत्वात् । ननु देहात्मवादोपगमे योऽहं बाल्ये पितरावन्वभवं स एव स्थाविरे प्रणप्तॄननुभवामीत्याद्यनुसन्धानानुपपत्तियुक्तिविरोधात् तस्यानुपादेयत्वेऽपि प्रकृते तु तदभावात्कथङ्कारं विरोधानुपगम इति चेत्तत्राह—युक्तिविरोधेनेति । समानमेवेति । प्रकृतेऽपि पुरोदीरितवक्ष्यमाणयुक्त्या सर्वस्यापि ज्ञानात्मकत्वसिद्धौ तदतिरिक्ताभ्युपगमायत्तविरोधस्वीकारे युक्तिविरोधः स्पष्ट एव । वस्तुतो विरोधोऽपि स्वविषयकज्ञानात्मको न स्वरूपतः, स च वासनाचित्तोत्थ इत्याह—विरोधभानमेवेति । अतएव न सर्वपुरुषसाधारणः । एतेन पूर्वत्र संदिह्यमानविरोधोऽपि भवत्पक्षं प्रक्षेप्स्यतीति प्रक्षिप्तम् । नन्विमौ नीलपीताविति प्रत्ययोऽनेकत्वभ्रान्त्यैवनिर्वाह्यतां, किमिति चित्रं ज्ञानमुपेयसे, विरोधं वा किमिति विधुनोऽसीति चेत्, साधो—अन्यथाकृता चान्यथाख्यातिस्तव पश्यत इत्याह—अन्यथाख्यातीति । तन्मतेऽन्यथाख्यातिस्वरूपन्तु समासत इदम्—व्यधिकरण प्रकारावच्छिन्ना या विषयता, तन्निरूपकत्वं भ्रमत्वम्, स्वाधिकरणावृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वमिति यावत् । स्वं विशेष्यता । इदं रजत-

सन्देह ही होगा, न कि निश्चय । यदि कहें कि पांसुलपादादि (कृषक) भी नील ऐसा जानकर पीत में प्रवृत्त नहीं होते, अतः नीलत्व पीतत्व का विरोध सर्वानुभव सिद्ध है तो यह कहना युक्त नहीं; क्योंकि ऐसा मानने पर—निश्चय ही स्वाभिष्ट साधन में देहात्मवादी पांसुलपादादि ही आप की सहायता करते हैं, न कि विद्वान् । ऐसी स्थिति में देहात्मवाद भी आपको स्वीकार कर लेना चाहिए । यदि कहा जाय कि देहात्मवाद मानने पर युक्तिविरोध आता है, तो नीलत्व पीतत्व के विरोध मानने पर भी युक्ति विरोध तो समान ही है; क्योंकि विरोधभान ही विरोध है, न कि अन्य कुछ, और वह सर्वपुरुष साधारण नहीं है, अर्थात् जिसको विरोधभान होता है उसके लिए विरोध है, दूसरे के लिए नहीं । यदि कहें कि सर्वपुरुषसाधारण न होने में क्या नियामक है तो इसका समा-

**ख्यातिनिरासेन स्वप्ने चैकत्रैव नीलत्वपीतत्वादिप्रत्ययस्यानुभविकत्वेन कार्य-कारणभावप्रतिबध्यप्रतिबन्धकभावमात्रस्य तत्र व्यभिचारित्वात्। यदाह**

मित्यत्र शुक्तिनिष्ठविशेष्यता, तदधिकरणावृत्तिरजतत्वं, तन्निष्ठप्रकारतानि-रूपितविशेष्यता = इदं विशेष्यता, तन्निरूपकत्वस्य तादृशज्ञाने सत्त्वाल्लक्षण-समन्वयः। अत्र चेदं रूप्यमित्यादिभ्रमो रूप्याद्यंशे उपनयसन्निकर्षजन्य इति प्राञ्चः। तत्संस्कारस्योपनयत्वे तज्जन्यप्रत्यक्षस्य स्मृतित्वाद्यापत्त्या स्मृतिरेवोपन-यो न संस्कार इति वदन्ति। नव्यास्तु—उपनयप्रयोज्यस्य विषयत्वस्य लौकिकत्वा-सम्भवेनेदं रूप्यं साक्षात्करोमीति प्रत्ययानुपपत्तेः दोषाणामेव भ्रमीयलौकिक-विषयत्वे नियामकत्वमित्याहुः। निरासेनेति। प्रकृतविशेष्यस्य प्रकारावच्छिन्नत्वे सर्वस्यापि सर्वधर्मावच्छिन्नत्वापत्तेः, सर्वस्य सर्वात्मत्वापत्तेश्च। तदनवच्छिन्नत्वे च तयोरसत एवावच्छेद्यावच्छेदकभावस्य ज्ञानेन विषयीकरणाच्छून्यवादस्यैव विजयश्रीः। न च विषयतयोर्निरूप्यनिरूपकभावः, विषययोस्तस्याभावे विषय-तयोरपि तदसम्भवात्। तदुक्तं भट्टाचार्येण—'न हि ययोः सम्बन्धो न भासते, तद्विषयतयोर्निरूप्यनिरूपकभावो दृष्टचर' इति। न च दोषविशेषात्तथेति वक्तुं शक्यम्, दोषविशेषाणामननुगमात्। किञ्च—अन्यथाख्यातिरिति किं गतमन्य-थात्वं गृह्यते, न तावज्ज्ञानगतं, तस्य स्वाकारसमर्पकत्वरूपत्वे रजताकारं ज्ञानं प्रति शुक्त्याकारसमर्पणासम्भवात्। नापि विषयगतं तत्, तस्य तादात्म्यरूप-त्वेऽत्यन्तभिन्नयोः शुक्तिरूप्ययोर्वास्तवतादात्म्यासम्भवादित्यादियुक्त्या तन्नि-रासोऽवधेयः। आत्मख्यातिस्तु ममापीष्टैव, अन्यख्यातयस्तु भवतोऽपि नानुमता अतोऽन्यथाख्यातेरेव निरासः। वस्तुतोऽनुभवविरोधस्य वार्तैव नोदेतीति स्वी-यनिरकृष्टानाक्षेप्यसिद्धान्तमाह–स्वप्नेचेति। ननु निरूक्तकार्यकारणभावप्रतिबध्य-प्रतिबन्धकभावयोः का गतिरिति चेत् दुर्गतिरेव तयोः स्वप्ने व्यभिचारित्वादि-त्याह—कार्येति। विषयेऽस्मिन्मध्ये मनस्विनां शिरोमणिं श्रीहर्षं पातयति–यदाहेति।

धान अग्रे वक्ष्यमाण है। अन्यथाख्याति के निरस्त हो जाने से और स्वप्न में एकत्र ही नीलत्व पीतत्व प्रत्यय (ज्ञान) के अनुभव सिद्ध होने से सभी कार्यकारणभाव एवं प्रति-बध्यप्रतिबन्धकभाव स्वप्न में व्यभिचरित है। जैसा कि खण्डनखण्डखाद्य के रचयिता श्रीश्रीहर्ष ने कहा है कि—'स्वप्नदृशः सर्वविशेषोपलम्भात्' (स्वप्नद्रष्टा को स्वप्न में सभी विशेष नीलत्व पीतत्वादि उपलब्ध होते हैं। स्वप्न में जाग्रत वैधर्म्य (वैलक्षण्य) तो घटादि बाह्य पदार्थों की सिद्धि तथा बाह्य विषयक प्रतीति में प्रमात्वनिरूपण के बिना सिद्ध नहीं किया जा सकता। (तात्पर्य यह है कि बाह्य के विवादास्पदत्व दशा में तद्-विषयक प्रतीति में प्रमात्वनिर्णय नहीं होता, एवं बाह्यपदार्थ अनुपद ही निरसनीय भी है। अतः स्वप्न में जाग्रत्वैलक्षण्य सिद्ध नहीं कर सकते)। एवञ्च नरसिंह में विरोधपरिहार

**खण्डनकारः 'स्पनदृशः सर्वविशेषोपलम्भा' दिति। जाग्रद्वैधर्म्यं तु स्वप्ने बाह्य-सिद्धिं विना तत्प्रतीतेः प्रमात्वनिरूपणञ्च विना न शक्यं निरूपयितुम्। एवञ्च नरसिंहे पूर्वोक्तनरत्वसिंहत्वव्यवहारानुरोधेन तादृशान्वर्थसञ्ज्ञानुरोधेन च तत्र**

**बाह्यसिद्धिं विनेत्यादि। बाह्यस्य विवादास्पदत्वदशायां तत्प्रतीतेः प्रमात्वं न निर्णीतम्, निरसनीयं चानुपदं बाह्यमिति भावः।**

स्वप्नदृशः = स्वप्नतत्तद्भ्रमवतः। सर्वविशेषेति। जाग्रतितत्तद्भ्रमप्रतिबन्धक-तावच्छेदकविषयताश्रयेत्यादिः। जागरायां चारितार्थ्यंन्तु तेषां तयोर्वैधर्म्यमन्तरा दुःशकमित्याह—जाग्रदिति। जागराऽपि स्वप्न एव तद्वैधर्म्याभावाद् विषयादि-प्रयुक्तमेव वैधर्म्यं तत्रोच्यते तत्र विषयवराको न स्वरूपं धारयितुं भूष्णुः, दूरे वैधर्म्यकथा। न वा वैधर्म्यं निरूपयितुमपि शक्यं बाह्यसिद्धेरभावात्, तत्सिद्धौ तत्प्रतीत्याश्रयणेऽन्योन्याश्रयात् तत्प्रतीतेः प्रमात्वस्य खण्डनभागित्वादिति भावः। द्वयोः स्वप्नत्वाविशेषेऽपि, दीर्घत्वमेकत्र, नान्यत्र, अतएवाह भगवान् वसिष्ठः—

दीर्घस्वप्नमिमं विद्धि दीर्घं वा चित्तविभ्रमम्।
दीर्घं वा मनोराज्यं विद्धयेनं रघुनन्दन॥

इति ( यो० वा० )

सिंहावलोकनन्यायेन नरसिंहस्थलेऽपि विप्रतिपत्तिं निरस्यति—एवञ्चेति। पूर्वोक्तेति। भागोऽयमित्यादिना। नरसिंहस्थले नरत्वसिंहत्वव्यवहारानुरोधेन व्यवहारस्याहार्यत्वेऽन्वर्थसंज्ञानुरोधेन तत्र नरसिंहे नरत्वसिंहत्वयोरावस्यकत्वम्, भगवट्टीकोक्तरीत्या तत्र तयोरभावस्यापि सत्त्वेनावच्छेदकपक्षे च टीकोक्तरीत्या

कर लेना चाहिए; क्योंकि पूर्वोक्त नरत्वसिंहत्वविषयकव्यवहारानुरोधेन तथा 'नरसिंह' एतादृश अन्वर्थ (अर्थानुसारिणी) संज्ञानुरोधेन नरसिंह में नरत्व सिंहत्व भी मानना आवश्यक है और हेत्वन्तरविशेष से उन दोनों का अभाव मानना भी आवश्यक है। (यहाँ हेत्वन्तरविशेष का तात्पर्य यह है कि अंशभेदेन नरसिंह में नरत्वसिंहत्व के अभाव का भी अनुभव होता है और जाति तो व्याप्यवृत्ति होती है तथा प्रकृत में प्रत्येक नरत्वावच्छिन्न सिंहत्वावच्छिन्न के प्रति क्लृप्त कारण मात्र का भी अभाव है। अतः नरसिंह में नरत्व सिंहत्व इन दोनों का अभाव भी मानना ही होगा। यदि किञ्चिद्अवच्छेदेन नरत्व तथा किञ्चिद् अवच्छेदेन सिंहत्व कहें, तो अनवस्थादि दोष हो जायेंगे। अतः तत्रापि (नरसिंह स्थल में) विरोधपरिहार कर लेना चाहिए। एवं चित्ररूपस्थल में भी ज्ञानाकारता मानना ही उचित है।

किञ्च एक ज्ञान को नीलादि अनेकाकार मानने में क्या हानि है? यदि कहें कि व्याघात अर्थात् एकत्व अनेकत्व धर्मद्वय का एकत्र ज्ञान में समावेश मानना विरुद्ध है तो

**तयोरावश्यकत्वेन हेत्वन्तरविशेषाच्च तत्र तयोरभावस्यापि ध्रौव्येणावच्छेदक-पक्षे चानवस्थानादिप्रसङ्गेन तत्रापि विरोधो भञ्जनीयः; एवं चित्ररूपस्थलेऽपीति ज्ञानाकारतैव युक्तेति।**

**किञ्चैकस्यापि नीलाद्यनेकाकारत्वे का क्षतिः ? व्याघात इति चेन्न, अनेक-**

हेत्वन्तरविशेषाच्चेति। नरत्वसिंहत्वयोरभावस्याप्यंशभेदेनानुभवात्, जातेश्च व्याप्य-वृत्तित्वात्, प्रत्येकं नरत्वसिंहत्वावच्छिन्नं प्रति क्लृप्तानां कारणानामत्राभावाच्चेत्यर्थः। अवच्छेदकपक्षे चेत्यादि। नरत्वतदभावादेरवच्छिन्नवृत्तिकत्वेऽवच्छेदकस्यापि किञ्चिदवच्छिन्न-वृत्तिकताया अवश्यं वाच्यत्वात्, अन्यथा विरोधप्रसङ्गतादवस्थ्यादिति समुदायचर्चायां प्रागुक्तमिति भावः।

विरोधाभावेन ज्ञानात्मकता विशुद्धैवेति भावः। अत्रत्यो योजनाप्रकारः भगवट्-टीकायां द्रष्टव्यः। तयोरिति। नास्माकं मते जातिः स्वीक्रियतेऽपोहस्वीकारात्। समाधिकरणबिजातीयरूपसमुदायादेव चित्रव्यवहारोपपत्तिपक्षे चित्ररूपस्थलेऽपि नरसिंहवदेकांशे नीलपीतादिव्यवहारसद्भावाच्चित्रेत्यन्वर्थसंज्ञाबलाच्च तत्रैव नीलत्वपीतत्वयोस्तदभावयोश्चावश्यमङ्गीकार्यत्वेन तयोरप्यविरोध एवेत्याह—एवमिति। नहि नीलत्वपीतत्वयोरपि जातित्वमव्याप्यवृत्तित्वादपोहस्वीकाराच्च, ज्ञानाकारतैव च भगवती महौषधं सर्वरुक्प्रतिकारकारणमिति सैवोपादेयेति भावः।

यत्त्वनेकाकारत्वस्यैकस्याप्यनेकात्मता पर्यवसन्नस्य व्याहतत्वमुक्तं तत्रा-पाकृतविरोधस्याप्यधिकविवक्षया पर्यालोचयितुं पृच्छति—किञ्चेति। शङ्कते—व्याघात इति। स च तर्कात्मकः, तर्कस्य च व्याघातात्माश्रयेतरेतराश्रयचक्रका-श्रयानवस्थाप्रतिबन्दिकल्पनालाघवकल्पनागौरवोत्सर्गापवादवैजात्यभेदेनैकादशवि-धत्वम्। तत्र व्याघातो नामासंबद्धार्थकं वचनम्, तदधिकरणे तद्-विरुद्धधर्माभ्युपगमनिबन्धनः प्रसङ्ग इति यावत्। अत्रात्माश्रयादिव्यावृत्त्यर्थं तद्भिन्नत्वमपि देयम्। यथा घटो यदि पटत्ववान् स्यात्, घटत्वाभाववान् स्यादिति प्रसङ्गः। तथा च प्रकृते—एकं यदि नीलपीताद्यनेकाकारत्ववत् स्यादेकत्वाभाव-वत् स्यात्, एकं यद्यनेकत्ववत् स्यादेकत्वाभाववत् स्यादित्यादिप्रकारप्रसङ्गः। एवञ्च नीलपीतादावेकज्ञानात्मकत्वसाध्यकानुमितेः प्रतिबन्ध इति शङ्कितुरभि-प्रायः। परिहरति—अनेकत्वस्येति। व्याहतौ तावदापाद्यव्यतिरेकनिश्चयविधया द्वयोस्तयोः परस्परविरहरूपताऽपेक्षते। सा प्रकृते नास्ति, नह्येकत्वाभावोऽनेकत्वं

यह कहना युक्त नहीं; क्योंकि नीलादिगत अनेकत्व विषयतासम्बन्धेन बुद्धिविशेषरूप ही माना गया है। और वह ( बुद्धिविशेषात्मक अनेकत्व ) तो व्याघात का प्रयोजक नहीं है।

**त्वस्य नीलादौ विषयतासम्बन्धेन बुद्धिविशेषस्यैवोपगमात्, तस्य च व्याघाताप्रयोजकत्वात्। एतेन—घटपटाविति धीः किङ्गतं द्वित्वमवगाहते, न स्वगतम्, तस्या एकत्वात्, नापि विषयगतम्, ज्ञानातिरिक्तस्याभावात्, एवं परचित्तविषयकं योगिज्ञानमपि किङ्गतं परत्वमवगाहत इत्यपि नाशङ्कनीयम्, द्वित्वस्य परत्वस्य च स्वज्ञानाकारमात्रत्वे एतादृशविकल्पानवकाशात्। यथाहि भवन्मते रूपादावपेक्षाबुद्धिरेव विषयतासम्बन्धेन द्वित्वादि न त्वन्यत्, तथा मन्मते सर्वत्रैव। वसुबन्धुस्त्वभ्यधात्, न केवल परचित्तविषयकमेवापि तु स्वविषयकमपि चित्तमयथार्थमेव ग्राह्यग्राहकविकल्पस्याप्रहीणत्वादिति। तत्तु ऋजुतयो-**

तत्तु ऋजुतयोपेक्षितमिति। ज्ञाननिर्विकल्पकदशाया उत्कर्षसमर्थने सति परविषयकस्यापि चित्तस्यायथार्थताया वक्तुं शक्यत्वेऽपि व्यावहारिककक्ष्यानुरूपं द्वयोरेव तादृशचित्तयोः काञ्चिद्गतिमनिरूप्य न निस्तार इति भावः।

तदनभ्युपगमाद् अपितु विषयतासम्बन्धेन बुद्धिविशेष एव तत्, तथा च स्वप्नन्यायेन दोषात् भ्रमरूपज्ञानसौलभ्यात् व्याघाताप्रयोजकत्वादिति भावः। एवं द्वित्वादीनामपि स्वविषयकज्ञानाकारमात्रत्वमेवेत्यतिदिशति—एतेनेति। बुद्ध्यतिरिक्तत्वेनाभिमतस्य बुद्ध्यात्मकत्वे निदर्शनमाह—यथेति। द्वित्वादौ संख्यारूपत्वस्वीकारे गुणे गुणानङ्गीकाराद्विरोधः प्रसिद्ध एव। वसुबन्धुस्त्विति। तु शब्दोऽधिकार्थसंग्रहाय। अभ्यधादिति। विंशतिकाप्रकरण इत्यादिः। आचार्यवसुबन्धुनोक्तमर्थंत उत्थापयति—न केवलमिति।

परचित्तविदां ज्ञानमयथार्थं कथं यथा।
स्वचित्तज्ञानमि'त्यादि　　　तद्वचः॥

तत्र स्वचित्तज्ञानस्य निदर्शनतया निर्देशात् यन्निदर्शनेनापरत्र यत्साध्यते तस्य तु तत्सुतरामिति तत्र सिद्धस्यैवायथार्थत्वस्य परचित्तविषयकज्ञाने प्रतिपादनात् सुतरां स्वचित्तज्ञानस्यायथार्थत्वम्। तत्र हेतुमाह—ग्राह्यग्राहकेति। अप्रहीणत्वात् = अपरित्यक्तत्वात्। यावद्धि तादृशविकल्पः तावदयथार्थत्वम्, स्वलक्षणमात्रविषयकस्यैव याथार्थ्याभ्युपगमात्। ऋजुतयेति। निर्विकल्पदशामाश्रित्य तथा स्वीकारेऽपि व्यवहारकक्ष्याऽपि देयावधानेति रभसा तथोक्तौ ऋजुत्वम्, तच्च

शंका—घटपटौ इत्याकारकबुद्धि किंगत द्वित्व का अवगाहन ( विषय ) करती है? स्वगत द्वित्व तो कह नहीं सकते, क्योंकि वह ( बुद्धि ) एक है। और न विषयगत द्वित्व ही कह सकते, क्योंकि ज्ञानातिरिक्त विषय का अभाव है। एवं परचित्त विषयक योगीज्ञान भी किंगत परत्व का अवगाहन करता है? ( क्योंकि वहाँ भी उक्त प्रकार से विकल्प होगा कि—यदि स्वगत ( ज्ञानगत ) परत्व कहें तो वह स्व है, उसमें परत्व कैसे रहेगा। और यदि विषयगत परत्व कहें तो ज्ञानातिरिक्त विषय का अभाव है )।

पेक्षितम्। उत्पलदेवोऽप्यवादीत्—"योगिनामपि भासन्ते न दृशो दर्शनान्तरे।

न दृशो दर्शनान्तरे इति। वेदान्तिनोऽपि दृष्टिसृष्टिवादे पुरुषान्तरीयज्ञानसुखादिकं न ज्ञायते किन्तु पुरुषान्तरीयत्वेन स्वस्मिन्नेव कल्प्यत इत्याकलयन्ति।

व्यवहारे चातुरीसंचारविधुरत्वं ज्ञेयम्, व्यक्तन्तु टीकायाम्। उत्पलाचार्यसम्मतिमपि दर्शयति—योगिनामपीति। मेयपदेऽपि वेत्यवशिष्टांशः। योगिनाम् यदेतत् दर्शनान्तरम् = परचित्तविषयः (अन्यज्ञानविषयः) ज्ञानविशेषस्तत्र दृशः = उपलब्धयः ज्ञानानीति यावत् न भासन्ते न भान्ति। तथाहि—सौगतानान्तावत् स्वप्रकाशैकरूपं ज्ञानं, तच्चेत् ज्ञानान्तरेण वेद्यम् तर्हि यदस्य निजं वपुरनन्यवेद्यतया प्रकाशनं नाम, न तत् प्रकाशितं स्यात् (स्वप्रकाशत्वव्याघातापातादिति भावः) सांख्यानामपि पुरुषच्छायैव (बुद्धौ पुरुषप्रतिबिम्ब एव) उपलब्धिः (ज्ञानाख्यबुद्धिवृत्तिभिन्नं प्रकाशाख्यं फलम्) पुरुषश्च असंवेद्यपर्वा (असंवेद्यस्वरूपः) इति कथं वेद्या स्यात्। वैशेषिकानामपि आत्मन्यभेदेन समवायि संवेदनं परगतं मनसा कथं गृह्यत अन्तःशरीरवृत्तिना। तच्छरीरान्तरानुप्रवेशे तु तस्यैव (परशरीरस्यैव) अहमिति शरीरीकरणात् (स्वशरीरतया संपादनात्) अहन्तावभासितत्वादात्मनो भेदो विगलेत्, नित्यानुमेयत्वन्तु नात्मन उपपद्यते, ज्ञानस्य च ज्ञानान्तरवेद्यत्वेऽनवस्थानाद्युक्तम्। तस्माद् योगिनः परचित्तवेदनावसरे इयान् प्रकाशः, एतत् देहप्रकाशसहचारी घटसुखादि प्रकाश इति। तत्र घटसुखादि—इदन्तया भाति तद्गतस्तु प्रकाशोऽहमित्येव स्वप्रकाशतया प्रकाशते। प्रमात्रीकृत परदेहप्राणादि समवभाससंस्कारात् (प्रमात्री कृतम्—अव्युत्पन्नत्वेन पूर्वमप्रमातृरूपमपि प्रमा-

समाधान—द्वित्व परत्व को स्वविषयक ज्ञानाकारमात्र मानने पर पूर्वोक्तविकल्पों का अवकाश ही नहीं है। जैसे आप (तार्किक) के मत में रूपादिगुणगत द्वित्व विषयतासम्बन्धेन अपेक्षाबुद्धिरूप ही है अन्य कुछ नहीं। वैसे ही मेरे (बौद्ध) मत में सर्वत्र ज्ञानरूप ही द्वित्वादि हैं। वसुबन्धुने तो कहा है –'न केवल परचित्त विषयक ज्ञान ही, अपितु स्वविषयक ज्ञान भी अयथार्थ होता है; क्योंकि वहाँ ग्राह्यग्राहक विकल्प निवृत्त नहीं हुआ।' (बौद्धसिद्धान्त में ज्ञान का जो स्वलक्षण अर्थात् असाधारण स्वरूप है। तन्मात्रविषयक ज्ञान में ही प्रमात्व माना जाता है क्योंकि वह (ज्ञान) अपने में ग्राह्यता व ग्राहकता का अवगाहन नहीं करता; ग्राह्यता ग्राहकतावगाही ज्ञान तो भ्रम ही होता है)। किन्तु वसुबन्धु का यह कथन विचारमन्तरा उपेक्षित है (क्योंकि ज्ञाननिर्विकल्पक दशा का उत्कर्ष सिद्ध होने पर परविषयक के समान स्वविषयक चित्त भी अयथार्थ कहा जा सकता है, किन्तु उन दोनों (चित्त) की व्यावहारिक कक्षा के अनुरूप गति माने बिना निस्तार नहीं है)। उत्पलदेव ने कहा है—

**स्वसंविदेकमानास्ता भान्ति"....... । ( इतीश्वरप्रत्यभिज्ञायाम् )**

**ननु भवदुक्तमपि प्रलापमात्रम्, एकस्मिन् भेदनियतापेक्षामतेरेवासम्भवात्, एवमन्यत्रापि तत्तद्विचित्राकारस्य किन्नियामकम्, कदाचित्कः क्वाचित्कश्चाकारः**

तृया संभावितं यत्परदेहप्राणादि, तस्मिन् यः समवभासः = इदन्तया ज्ञानं, तस्य यः संस्कारः पूर्वभ्रामितचक्रभ्रमणरूपः तस्मात् ) तु तन्निष्ठामिदन्तामेव प्रकाशभागेऽपि मन्यमान इदं परज्ञानमित्यभिमन्यतेऽविगलितस्वपरविभागो योगी। प्राप्तप्रकर्षस्तु सर्वमात्मत्वेन पश्यन् स्वसृष्टमेव स्वपरविभागं मन्यत इति ज्ञानस्य न योगिज्ञानेन प्रकाश्यता।

तत्तद्व्यक्तिमात्रनिष्ठेदन्त्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताशालिन्यात्मिकाया अपेक्षाबुद्धेस्तत्तद्व्यक्तिघटितत्वेन निरूप्यनिरूपकभावापन्नविशेष्यता प्रकारताघटितत्वेन च भेदनियततया भेदस्योदीरितरीत्या दुर्निरूपत्वेन भेदमन्तरा दुर्घटत्वं तादृशबुद्धिविशेषस्यैवेति कुतस्तरामेकनिष्ठस्यानेकत्वस्य बुद्धिविशेषात्मकत्वम्, कुतस्तमां च बाह्याभ्युपगतिमन्तरा ज्ञानाकारस्य क्वाचित्कता कादाचित्कता चेत्याह—नन्विति। ननु बाह्यानुपगमेऽपि समनन्तरप्रत्ययबलादेव तादृशप्रत्ययोद्भवस्तस्य क्वाचित्कत्वादिकञ्च सेत्स्यति। चतुर्विधान् हेतून्प्रतीत्य चित्तचैत्ताः ( चित्तं रूपादिविज्ञानं, चैत्ताः = चित्तात्मकाः सुखादयः ) जायन्त इति ह्ययं सुगतसमयः। तत्र चतुर्विधा हेतवश्चालम्बनप्रत्ययः समन्तरप्रत्ययोऽधिपतिप्रत्ययः सहकारिप्रत्ययश्चेति। एत एव च लोके विषयसंस्कारकरणसहकारीत्यभिधानपदवीमध्यासते। साकारं चित्तं ज्ञानपदवाच्यम्। तस्य चाकारग्रहणशक्तिरेव बोधरूपता। यथा पूर्वक्षणिकाद्घटात्तत्सदृशो घट उत्तरक्षण उत्पद्यते, तथा पूर्वक्षणिकादाकारग्रहणसमर्थाज्ज्ञानात्तत्सदृशमुत्तरक्षणे ज्ञानमुत्पद्यते। सोऽयं ज्ञानप्रवाहोऽनादिः। आकारश्च द्विविधोऽहमाकार इदमाकारश्च। तत्राद्यः पूर्वक्षणि-

योगिनामपि भासन्ते न दृशो दर्शनान्तरे
स्वसंविदेकमानास्ता भान्ति"....................

( ई० प्र०,१।५पृ० १३५ )

इति ( योगियों के परचित्तविषयज्ञान में भी ज्ञान यानी अन्य उपलब्धियाँ भासित नहीं होती, क्योंकि ज्ञान स्वात्मक संविद् के द्वारा ही प्रकाशित होता है अर्थात् स्वप्रकाश है )।

शंका—आप ( बौद्ध ) का कथन भी प्रलापमात्र ही है क्योंकि एक वस्तु में भेदनियत अपेक्षाबुद्धि हो नहीं हो सकती। एवं अन्यत्र भी ज्ञान के तत्तद् विचित्राकार होने में क्या नियामक है, क्योंकि ज्ञान के कादाचित्क क्वाचित्क आकार को देखकर कादाचित्क एवं क्वाचित्क कारण की कल्पना करें तो बाह्य पदार्थ को स्वीकार करना होग

**कादाचित्कं क्वाचित्कं च कारणमाक्षिपेत्, तथाच स्वीकार्यं बाह्यम्, समनन्तरप्रत्ययस्य साधारण्यात्, न च वासनाप्रबोधो नियामकः; वासनानां मात्रयापि ज्ञानातिरेकेऽपसिद्धान्तात्, प्रबोधार्थं च नियामकस्य गवेषणीयत्वात्, स्वविषयक-**

काज्ज्ञानाज्जायते न तत्र कारणान्तरापेक्षा। स चानादिः सार्वदिक एकरूपश्च। अयं घट इत्यादिप्रवृत्तिविज्ञानं यदा जायते तदाप्यहमाकारो वर्तत एव। द्वितीय इदमाकारस्तु कादाचित्कोऽत एव कारणान्तरसापेक्षः सादिर्भिन्नभिन्नरूपश्च। ज्ञाने स्वाकारसदृशाकारसमर्पकः शब्दस्पर्शादिरनेकविधो विषयस्तत्तदाकारात्मकप्रवृत्तिज्ञानस्य कारणम्। विषय एवालम्बनप्रत्यय इत्युच्यते। प्रवृत्तिविज्ञानस्य विषयालम्बनत्वात्। उत्तरक्षणिकज्ञाने आकारग्रहणसामर्थ्यं ददत्पूर्वक्षणिकं ज्ञानं समनन्तरप्रत्यय इत्युच्यते। ज्ञाने वैशद्यं दददालोकःसहकारिप्रत्यय इत्युच्यते। मनः संयोगादिकं सहकार्येव। इन्द्रियमधिपतिप्रत्यय इत्युच्यते। अधिपतिर्नियामकः। यथा चक्षुरिन्द्रियं हि ज्ञाने रूपाकारमेव समर्पयति। रसनेन्द्रियं हि रसाकारमेव दापयतीत्यादि। एतदन्यप्रक्रियानुसारेण निर्दिष्टमपि योगाचारमते प्रमाणप्रमेयादिकं सर्वमप्यन्तस्थमेवेत्यवधेयम्। तथा च किमर्थं बाह्योपगम इति चेत्तत्राह—समनन्तरप्रत्ययस्येति। स चोत्तरक्षणिक ज्ञान एव कारणम्, न तु तदाकारस्य क्वाचित्कत्वादावपि। तथा च क्वाचित्कत्वादौ तु कः समाधिस्तस्य साधारण्यादिति भावः। ननु—तथापि यथा लाक्षारसावसिक्तानां कार्पासबीजादीनामङ्कुरादिपारम्पर्येण कार्पासादौ रक्तिमनियमः। यथा वा बीजपूरकुसुमस्य लाक्षारसावसेकः लाक्षासवर्णफलप्रसवहेतुस्तथा प्रकृतेऽपि वासनाप्रबोधस्यैव नियामकत्वमस्तु, यथोक्तम्—

यस्मिन्नेव हि संताने आहिताकर्मवासना।
फलं तत्रैव बध्नाति कार्पासे रक्तता यथा॥
कुसुमे बीजपूरादेर्यल्लाक्षाद्यवसिच्यते।
शक्तिराधीयते तत्र काचित्तां किं न पश्यसि॥

इति चेत्तत्राह—नचेति। न च वासनाया एव प्रयोजकत्वसम्भवे किमिति प्रबोधपर्यन्तानुधावनमिति वाच्यम्, निलीनज्ञानात्मिकाया वासनायाः सत्त्वेऽपि तत्कार्यादर्शनात्। वासनायां प्रबोधश्च तादृशप्रत्ययजनकतावच्छेदकः शक्तिविशेषः। अथ ज्ञानात्मकवासनाया एव तत्प्रयोजकत्वाभ्युपगमे नापसिद्धान्त इत्यत आह—प्रबोधार्थमिति। स्वविषयकज्ञानात्मकत्व इति। नियामकस्ये-

क्योंकि समनन्तर प्रत्यय सर्वसाधारण है। यदि कहा जाय कि वासना प्रबोध ही ज्ञानीय विचित्राकारता का नियायक है तो यह वक्तव्य ठीक नहीं; क्योंकि वासना के लेश भी ज्ञानातिरिक्त होने पर अपसिद्धान्त हो जायेगा, तथा उस वासना के उद्‌बोध के लिए भी

**ज्ञानात्मकत्वे तदभावेऽभावप्रसङ्गेन नियामकत्वासम्भवात्, नहि वासनाविषयिण्यपि धीधारा समुन्मिषति, समनन्तरप्रत्ययविधयैव चैवं कारणतापर्यवसानेनान्यवासनात्मकघटप्रत्ययतः कथमपरवासनात्मकपटप्रत्ययसमुद्भवः, अयमेव हि वासनासङ्क्रमो भवतां यन्नाम तादृशवासनात्मकज्ञानात्तादृशवासनात्मकज्ञानोत्पत्तिरिति, अन्यथा ज्ञानातिरिक्तस्थिरवासनास्वीकारप्रसङ्गात्, तथापि वा प्रबोधकस्यापेक्षणीयत्वादिति चेदत्रोच्यते—बाह्यार्थाभ्युपगमेऽपि चक्षुरादिना तत्सन्निकर्षमात्रेण न तत्प्रत्यक्षम्, तत्सद्भावेऽपि मनोऽनवधाने प्रत्यक्षानुत्पादात्, मनोऽवधाने च निमित्तं मृग्यमाणमदृष्टविशेषो वा विषयविशेषबुभुत्सा**

त्यादिः। तदभाव इति। तदा ज्ञानपरामर्शः। अभावप्रसङ्गेनेति। नियामकस्येत्यादिः। वासनाधीधाराभ्युपगमे क्षणिकस्य स्वप्रकाशतया स्वविषयकस्य निलीन ज्ञानस्य वासनापदार्थत्वेन समन्तरप्रत्ययविधयैव कारणत्वं वासनाया प्रसज्यत इत्याह—समन्तरेति। तथा चान्यवासनात्मकघटप्रत्ययतोऽपरवासनात्मकपटप्रत्ययानुद्भवप्रसङ्गः, वासनासंक्रमस्य तिरस्कृतत्वात्। अन्यथेति। वासनायाः स्वविषयकज्ञानात्मिकायाः संक्रमास्वीकार इत्यर्थः। वासनासंक्रमस्त्रोकारेऽपि प्रबोधकस्त्वाश्रयणीय एवेत्याह—तथापीति। बाह्यसन्निकर्षतत्तदाकारज्ञानकादाचित्कत्वयोर्व्यभिचारान्न प्रयोज्यप्रयोजकभाव इत्याशयेन परिहरति—अत्रोच्यते इति। व्यभिचारमेव स्फुटयति—बाह्यार्थाभ्युपगमेऽपीति। ननु न केवलं सन्निकृष्टबाह्यस्य कारणताऽपितु—आलोकसहकृतमनःसमवहितचक्षुःसन्निकृष्टबाह्यस्यैवेति नान्वयव्यभिचार इति चेत्तत्राह—मनोऽवधाने चेति।

नियामक की गवेषणा करनी होगी। यदि वह ( नियामक ) भी स्वविषयक ज्ञानात्मक है तो ज्ञानाभाव होने पर उस नियामक का भी अभाव हो जायेगा तो फिर वह नियामक ही कैसे बन सकता है। वासनाविषयक भी धीधारा होती है यह नहीं कह सकते, क्योंकि समनन्तर प्रत्ययविधया ही उसमें कारणता पर्यवसित होगी ऐसी स्थिति में भी अन्य वासनात्मक घटज्ञान से अन्य वासनात्मक पटज्ञान की उत्पत्ति कैसे होगी। और आप ( बौद्ध ) के मत में तादृशवासनात्मक ज्ञान से तादृशवासनात्मक ज्ञान की उत्पत्ति होना ही वासनासङ्क्रम माना जाता है।

अन्यथा ( वासनासंक्रमाभाव में ) ज्ञानातिरिक्त स्थिरवासना स्वीकृत होने लगेगी। और यदि कथञ्चित् स्थिर वासना मान भी लें तो भी उसके उद्बोधक की अपेक्षा होगी ही।

समाधान—बाह्य पदार्थों के स्वीकार करने पर भी सन्निकर्षमात्र के द्वारा चक्षुरादि से उनका प्रत्यक्ष सम्भव नहीं, क्योंकि मनो अनवधान दशा में चक्षुसन्निकर्ष के रहने पर भी प्रत्यक्षज्ञानोत्पत्ति नहीं देखी जाती। यदि समवहितमनस्क व्यक्ति के चक्षुःसन्निकर्ष को प्रत्यक्ष के प्रति कारण मानें तो मन-अवधान के निमित्त की भी गवेषणा करनी होगी।

**वा स्यात्, नाद्यः, तथा सत्यदृष्टविशेषादेव तत्तदाकारज्ञानकादाचित्कत्वस्य निर्वाहसम्भवेन घटादेरकिंचित्करत्वात्। न चादृष्टविशेषोऽपि ज्ञानातिरिक्त एवेति न ज्ञानातिरिक्तमात्रस्य प्रतिक्षेप इति वाच्यम्, अदृष्टविशेषो यदि प्रागप्यासीत् तदा तदापि कुतो नेदानीन्तनं प्रत्ययमजीजनत् ? सन्नपि न सहकारिसमवहित आसीदिति चेत्सहकारिणो दुर्निरूपत्वात्, बुभुत्साविशेषस्य सहकारित्वे द्वितीयकल्पेऽन्तर्भावात्, घटादेस्तत्सन्निकर्षस्य वा तथात्वे तु तस्य प्रागपि सत्त्वेनातिप्रसङ्गतादवस्थ्यात्। यदि चादृष्टविशेष इदानीमेवोत्पन्नः, तदा तस्यापि पूर्व-**

मनोऽवधानस्यापि कादाचित्कत्वात्तत्रापि कादाचित्कं किञ्चित्कारणमपेक्षते, तच्चादृष्टविशेषो वा विषयविशेषबुभुत्सा वेति विकल्प्याद्यं निराकरोति—नाद्य इति। तत्र हेतुमाह—तथा सतीति। तथा च बाह्यस्यान्यथासिद्धत्वेन कारणत्वमेव नास्तीति भावः। नन्वदृष्टविशेषस्यापि ज्ञानातिरिक्ततया बाह्यत्वान्न तेन तस्यान्यथासिद्धिरित्याशंकां परिहर्तुकामोऽदृष्टविशेषस्य प्राक्तनत्वमिदानींतनत्वं वेति विकल्प्याद्यं दूषयति—तदेति। अथादृष्टविशेषस्य प्राक्सत्त्वेऽपि न तन्मात्रात्प्रत्ययजनिः सम्भवति, सामग्रीतः कार्योत्पत्तेः। तस्याश्च कारणकलापात्मतया तदन्तर्वर्तिसहकारिणोऽभावादित्याशंक्य परिहरति—सहकारिणो दुर्निरूपत्वादिति। बुभुत्साविशेषः सहकारी, उत घटादिबाह्य, आहोस्वित् तत्सन्निकर्ष इति विकल्प्य प्रथममाद्यद्वितीयेऽन्तर्भावयति—द्वितीयकल्प इति। द्वितीयतृतीययोर्वैयर्थ्यमुपस्थापयति—घटादेरिति। अतिप्रसङ्गतादवस्थ्यादिति। मनोऽनवधानदशायामित्यादिः। द्वितीयविकल्पस्य द्वितीयं दूषयितुमुपन्यस्यति—यदीति। अदृष्टविशेषस्यानित्यतया तस्यापि कारणविशेषस्यावश्यकत्वेनान्यस्य च कस्यचिदभावात्

वह ( निमित्त ) अदृष्टविशेष है या विषयविशेषबुभुत्सा, इनमें प्रथम तो युक्त नहीं, क्योंकि अदृष्टविशेष को निमित्त मानने पर उस अदृष्टविशेष के द्वारा ही तत्तदाकार ज्ञान के कादाचित्कत्व का भी निर्वाह हो जायेगा, तदर्थ घटादि बाह्यवस्तु अकिञ्चित्कर ( व्यर्थ ) है। यदि शंका हो कि अदृष्ट विशेष के ज्ञानातिरिक्त होने से ज्ञानातिरिक्तमात्र का प्रतिक्षेप ( निराकरण ) तो नहीं हो पाया, तो यह शंका उचित नहीं, क्योंकि अदृष्टविशेष यदि पहले भी था तो तत्काल में भी इदानीन्तन ज्ञान को उत्पन्न क्यों नहीं किया। यदि कहें कि पहिले रहते हुए भी सहकारी समवहित न होने से इदानीन्तन ज्ञानोत्पादक न हुआ, तो यह भी कहना सम्भव नहीं, क्योंकि सहकारी ही दुर्निरूप है। यदि बुभुत्सा विशेष को सहकारी माना जाय तो द्वितीय विकल्प में अन्तर्भाव हो जायेगा, और यदि घटादि या घटादि-सन्निकर्ष को सहकारी मानें तो पूर्वकाल में भी उनके विद्यमान होने से अतिप्रसङ्ग (इदानीन्तन ज्ञानोत्पत्त्यापत्ति) तदवस्थ ही रह जायेगा। यदि अदृष्टविशेष अभी उत्पन्न हुआ है, ऐसा मानें तो उसकी भी पूर्व-अनुत्पत्ति सिद्धि के लिए

**मनुत्पत्तिसिद्धये कारणविशेषो वक्तव्यः। यदि ह्यदृष्टविशेषस्य कारणमदृष्टविशेषान्तरमेव, तस्यापि चादृष्टविशेषान्तरमेवेति प्रवाहः, तदा ज्ञानप्रवाहेण, किमपराद्धम्, अन्ततः स्वभावविशेषस्य सर्वत्र शरणीकरणीयत्वेन यादृशज्ञानानन्तरं यादृशज्ञानं दृश्यते तादृशज्ञानं प्रति समनन्तरप्रत्ययविधया तादृशज्ञानस्य जननस्वभावतोक्तेर्निर्बाधत्वात्, विषयविषयिभावस्य च भेदे दुर्निरूपत्वेऽदृष्ट-**

सोऽप्यदृष्टविशेष एव वक्तव्य इति तस्याप्यन्य इत्येवं रीत्याऽनवस्था दुरवस्था स्यात्, यदि च तत्प्रवाहस्य प्रामाणिकत्वान्न दोषावहत्वं तर्हि ज्ञानप्रवाह एव तथा किमिति न स्वीक्रियतेऽच्छमतिना चतुरेणानिच्छतापि। निरुक्तकथन्तानिवृत्तिश्चावश्यशरणीकरणीयस्वभावविशेषादेवेति भावः। अदृष्टविशेषस्यापि न ज्ञानातिरिक्तत्वं वक्तुं शक्यम्, तथासति भेदनियतविषयविषयिभावस्यैव तत्प्रकाशनियामकत्वं वक्तव्यम्, तच्च न सम्भवति, भेदस्य दुर्निरूपत्वेन तदायत्तविषयविषयिभावस्यापि निरूपयितुमशक्यत्वादित्यवोचाम इत्याह—विषयविषयिभावस्येति। वासनापरिपाक इति। विज्ञानवादिनये—

तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम्।
तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत्॥

इत्युक्त्याऽहमित्याकाराणां क्षणिकानामालयविज्ञानानां संतानपरम्परा प्रतिजीवं भिन्ना, चैत्रीयालयविज्ञानसंतानघटकमालयविज्ञानं चैत्रीयप्रवृत्तिविज्ञानं जनयति, तथाचालयविज्ञाननिष्ठा या प्रवृत्तिविज्ञानजननशक्तिः, सैव वासना, तस्या वासनायाः प्रवृत्तिविज्ञानरूपस्वकार्योत्पादने यदाभिमुख्यं सस्तस्याः परिपाकः। वासनानामपि क्षणिकत्वेन प्रतिक्षणं भिन्नानां वासनानां मध्ये कासांचिदेव परिपाकजन्यस्य प्रवृतिविज्ञानस्य सर्वदा उत्पत्त्यदर्शनात्। तथा च यादृशवासनात्मकज्ञानानन्तरं यादृशवासनात्मकं ज्ञानं जायते तं प्रति तस्य जननस्वभावता इत्यादिरीत्या निष्कर्षो बोध्यः। घटमहमज्ञासिषमित्यनुभवो हि पूर्वकालीनघटज्ञानं विषयीकरोति, तयोश्च ग्राह्यग्राहकयोः क्षणिकत्वेन यौगपद्यासम्भवात्तादृशानुभवानुपपत्तिरात्मनो स्थायित्वाभावे इत्याशंकामवश्यानुसरणीयस्वभावविशेषपाथसैव प्रक्षाल-

कोई कारणविशेष कहना होगा। यदि अदृष्टविशेष का कारण भी अदृष्टविशेषान्तर और उसका भी पुनः अदृष्टविशेषान्तर इस प्रकार अदृष्टविशेषों का प्रवाह स्वीकार करें तो ज्ञानप्रवाह ने क्या अपराध किया, अर्थात् ज्ञानप्रवाह ही क्यों न मान लिया जाय।

अन्ततोगत्वा स्वभावविशेष मानकर ही सर्वत्र समाधान करना होगा, अतः यह कथन भी निर्बाध है कि यादृशज्ञान के अनन्तर यादृशज्ञान देखा जाता है समनन्तरप्रत्ययविधया तादृशज्ञान का तादृशज्ञान को उत्पन्न करना स्वभाव है। और भेद में होने वाले विषयविषयीभाव के दुर्निरूप होने से अदृष्टविशेष को भी ज्ञानात्मक ही मानना होगा,

**विशेषस्यापि ज्ञानात्मकताया एव वक्तव्यत्वात्, अन्यथाऽलीकतापत्तेः । इत्थमेव विज्ञानवाद्यभ्युपगतो वासनापरिपाको निष्कर्षणीयः । एतेन—आत्मनः स्थायिनोऽभावे घटमहमज्ञासिषमित्यनुभवो नोपपादयितुं शक्यः, पूर्वकालीनज्ञानस्यैतत्कालीनज्ञानभिन्नत्वेन तद्विषयत्वासम्भवादिति तादृशानुभवाधीनलोकव्यवहारमर्दनमिति—नाशङ्कनीयम्, स्थाय्यात्मोपगमेऽप्युक्तरीत्या स्वभावविशेषालम्बनध्रौव्येण स्थायित्वे वक्ष्यमाणबाधकेन च पूर्वप्रत्ययरूपस्वकारणसामर्थ्यकल्पनयैव तादृशाकारस्योपपादनीयत्वात् । नापि द्वितीयः, विषयविशेषबु-**

इत्थमेवेति । उक्तजननस्वभावतापर्यवसायितयैवेत्यर्थः । घटमहमज्ञासिषमिति । अहमर्थविषयकत्वावच्छेदेनायं ग्रहोऽनुभवः, घटज्ञानविषयकत्वावच्छेदेन तु स्मृतिः ।

नीयत्वेनातिदिशति—एतेनेति । मनोऽवधाननिमित्तं विषयविशेषबुभुत्सैवेति द्वितीयपक्षं प्रतिक्षिपति–नापीति । बुभुत्सा हि बोद्धुमिच्छा, सा चानुभूतविषयिण्येव, न तु सर्वथाननुभूतविषयिणी, तस्याः स्वसमानविषयकज्ञानजन्यत्वनियमात्, तथा च न सर्वथा ज्ञानासिद्धौ, नापि च तत्सिद्धौ, ज्ञातत्वादेव तस्येति भावः । न च सामान्यतो ज्ञानसत्त्वेऽपि बुभुत्साविषयतावच्छेदकरूपेण ज्ञानाभावाद् भवतीच्छा

क्योंकि ज्ञानातिरिक्त मानने पर अलीकतापत्ति हो जायेगी । इसी प्रकार विज्ञानवादी से स्वीकृत वासनापरिपाक ( कार्योत्पादन के प्रति आभिमुख्य ) का भी निष्कर्ष कर लेना चाहिए ।

शङ्का—आत्मा के स्थायित्वाभाव में 'घटमहमज्ञासिषम्' यह अनुभव नहीं बन पायेगा, क्योंकि पूर्वकालीन ज्ञान के एतत्कालीन ज्ञानातिरिक्त होने से वह एतत्कालीन ज्ञान का विषय नहीं हो सकता, अतः तादृश अनुभवाधीन लोकव्यवहार भी लुप्त हो जायेंगे ।

समाधान—आत्मा के स्थायित्वपक्ष में भी पूर्वोक्त रीति से स्वभावविशेष का आलम्बन ध्रुव (आवश्यक) होने से, तथा स्थायित्व पक्ष में बाधक (दोष) के वक्ष्यमाण होने से पूर्वप्रत्ययरूप स्वकारण के सामर्थ्य की कल्पना से ही 'घटमहमज्ञासिषम्' एतादृश आकार का उपपादन कर लेना चाहिए । मनो अवधान का निमित्त विषयविशेषबुभुत्सा ही है' यह द्वितीय विकल्प भी संगत नहीं है, क्योंकि विषयविशेषबुभुत्सा के विषयविशेषज्ञानाधीन होने से तादृशबुभुत्सा के पूर्व विषयविशेषज्ञान होने पर तद्विषयकबुभुत्सा ही नहीं हो सकती । यदि कहा जाय कि सामान्य ज्ञान तो है किन्तु बुभुत्साविषयतावच्छेदकरूपेण (अनुमितित्वेन) विशेषज्ञान नहीं है । अतः तादृश बुभुत्सा हो सकती है, तो कथन युक्त नहीं; क्योंकि वुभुत्साविषतावच्छेदरूप अर्थात् पर्वते वन्ह्यनुमितिर्मे स्यात् इत्याकारक बुभुत्साविषयतावच्छेदक = अनुमितित्वरूप से अनुमितित्वावच्छिन्न (अनुमित्यात्मक) ज्ञानासिद्धि दशा में तादृशबुभुत्सा के सम्भव होने पर भी तादृशबुभुत्सा का कारणीभूत

भुत्साया विषयविशेषज्ञानाधीनतया तत्सिद्धौ बुभुत्साऽनुपपत्तेः, बुभुत्साविषयतावच्छेदकरूपेण ज्ञानासिद्धौ च तदनवच्छिन्नज्ञानोत्पत्तौ बीजजिज्ञासायां निरस्तकल्पे एव पर्यवसानम्। तस्मात् सूक्ष्मसंसारापर्यालोचननिबन्धन एव बाह्याभ्युपगम इति युक्तमुत्पश्यामः।

किञ्च ज्ञानं तावद्विषयनिरूप्यमिति भवतोऽप्यनुमतम्, विषयोऽपि च यदि

बुभुत्साविषयतेत्यादि। पर्वतेऽग्न्यनुमितिर्मे स्यादिति बुभुत्साविषयतावच्छेदकमनुमितित्वमिति तदवच्छिन्नज्ञानासिद्धिदशायां तादृशबुभुत्सायाः सम्भवेऽपि तस्याः कारणीभूतं यदनुमितित्वानवच्छिन्नमग्निज्ञानं तस्योत्पत्तिरपि मनोऽवधानेन साध्या, तच्चादृष्टविशेषेण वाऽग्निबुभुत्सया वा, आद्ये दत्तमुत्तरम्, द्वितीये त्वनवस्था, एतयाऽप्यग्निबुभुत्सया स्वविषयतावच्छेदकधर्मानवच्छिन्नस्याग्निज्ञानस्यापेक्षणीयत्वादितिभावः।

इत्याह—बुभुत्साविषयतावच्छेदक रूपेणेति। विवृतञ्चैतत्स्वयमेव श्रीश्रीचरणैष्टीकायाम्।

## ज्ञानभिन्नविषयखण्डनम्

परमते बाधकानि निरूपयति—किञ्चेति। विषयनिरूप्यं हि ज्ञानमित्युक्त्या विषिण्वन्ति अवबध्नन्ति स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावदिति विषयशब्दव्युत्पत्त्या च वित्तेर्विषयनिरूप्यत्वम्, अथ च मानाधीना मेयसिद्धिरित्युक्त्या विषयस्यापि तद्भिन्नस्य तदायत्ततया परस्परसापेक्षत्वात्तन्निरूपणयोर्भवत्यन्योन्याश्रयः। वस्तुतः ज्ञानातिरेकस्य प्रमाणानालिङ्गितत्वाद् यदीत्युक्तम्। ननु ज्ञानानुव्यापारस्यैव निरूपणपदार्थत्वात् व्यापारस्य चाभिज्ञाऽभिवदनहानाद्यर्थक्रियाकारित्वभेदेन चतसृषु विधास्वभिज्ञारूपस्यापि सत्त्वात् "फलव्यापारयोर्धातुरिति हरिवाक्ये प्राचीनैः फले व्यापारे च खण्डशः शक्तिस्वीकारात् प्रकृतेऽपि विवक्षावैचित्र्यात् व्यापारांशस्य प्रमोषेण तयोरभेदान्वयाभ्युपगमाद् वा फलमात्रं धात्वर्थ इति

अनुमितित्वानवच्छिन्नवन्हिज्ञान की उत्पत्ति में भी कारण जिज्ञासा होने पर निरस्तकल्प में ही पर्यवसान मानना होगा; (अर्थात् तादृशवन्हिज्ञान के प्रति भी मनो अवधान को ही कारण मानना होगा, और उस मनो अवधान में कारण अदृष्टविशेष को मानें या अग्निबुभुत्सा को; प्रथम के विषय में उत्तर दे चुके हैं, द्वितीयकल्प में अनवस्था होगी, क्योंकि इस अग्निबुभुत्सा में स्वविषयतावच्छेदकधर्मानवच्छिन्न अग्निज्ञान की अपेक्षा है)। तस्मात् सूक्ष्मसंसार के अपर्यालोचननिमित्तक ही बाह्यपदार्थों का उपगम (स्वीकृति) है यह कल्पना उचित ही है।

### ज्ञानभिन्नविषय का खण्डन।

किञ्च 'ज्ञानं तावद् विषयनिरूप्यम्' (ज्ञान विषयनिरूप्य है) यह नियम आप (तार्किक) को भी अभिमत है और विषय भी यदि ज्ञानातिरिक्त है तो विषयनिरूपण भी ज्ञान-

**ज्ञानादतिरिच्यते तदा विषयनिरूपणमपि ज्ञाननिरूपणायत्तमेव, न च विषयज्ञानमेव विषयनिरूपणम्; विषयनिरूपणं हीह न विषयप्रकाशनमात्रं विवक्षितम्, अपि तु विषयस्य सत्यत्वनिरूपणम्, तच्च प्रमात्वेन ज्ञाननिरूपणे आयतत इत्यन्योन्याश्रयः। बाह्यानां लक्षणान्तरखण्डने च सति तल्लक्षणमपि प्रतीतिविशेषसाक्षिकतयैव निरूप्यमित्येवमप्यन्योन्याश्रय इत्युभयोरपि मा भूद सद्धिरिति "सर्वनाशे समुत्पन्ने" इति न्यायेन ज्ञानस्यैव स्वविषयकस्य परिशेषः समुचितः, तस्य बाह्याभ्युपगमेऽपि ध्रौव्यात्। नह्येवं सति 'जानामी' त्येवानुभवो भवेदिति शक्यमापादयितुम्, विलक्षणाकारस्यैव ज्ञानस्याभ्युपगमात्।**

पक्षमाश्रित्य वा विषयज्ञानमेव विषयनिरूपणमस्त्वित्याह—न चेति। एवञ्च न तन्निरूपणयोः परस्परायत्तत्वमिति भावः। न च नहीत्यर्थः। अन्योन्याश्रय इति। विषयस्याबाध्यत्वे तद्विषयकत्वेन ज्ञानस्य प्रमात्वं, प्रमात्मकज्ञानाधीनञ्च तदिति स्वस्य स्वापेक्षितापेक्षितत्वादन्योन्याश्रयप्रसङ्गः। बाह्यानामिति। बाह्यविशेषाणां द्रव्यादिरूपाणां बहुशः खण्डनादौ निरस्तत्वात्, सामान्यतः बाह्यस्य च ज्ञानभिन्नत्वेदन्त्वादिरूपस्य प्राक् प्रत्यादेशात्।

किञ्च लक्षणप्रमाणाभ्यां वस्तुसिद्धिरितिन्यायेन बाह्यवस्तूनां लक्षणप्रमाणाधीनसिद्धिकत्वेन तयोश्च ज्ञाताधिकरणत्वादिज्ञातत्वाज्ञातत्वादिविकल्पैः खण्डनादौ निरस्तत्वेन बाह्यवस्तुसामान्यस्यैव निराकृतिः। प्रतीतिसाक्षिकत्वे तस्य तदात्मकत्वमेव, अन्यथा बाह्यघटादितत्प्रतीतीनां तत्तद्विशेषमादायान्योन्याश्रयः स्यादिति भावः। ननु माभूदन्योन्याश्रयाद्यापत्त्या तज्ज्ञानं, स्वरूपन्तु स्यादज्ञातस्यापि वस्तुनः स्वरूपाभ्युपगमादितिचेत्तत्राह—किञ्चेति। मायिकं माया-

निरूपणाधीन ही मानना होगा। विषयज्ञान ही विषयनिरूपण है यह नहीं कह सकते, क्योंकि विषयनिरूपण से यहाँ विषय का प्रकाशमात्र विवक्षित नहीं है, अपितु विषयगतसत्यत्वनिरूपण ही विषयनिरूपण है और वह (विषयसत्यत्वनिरूपण) तो प्रमात्वेन ज्ञाननिरूपण होने पर ही सम्भव है अतः अन्योन्याश्रय दोष है। एवं बाह्य पदार्थों के लक्षणान्तर खण्डित हो जाने से उन बाह्यपदार्थ) का लक्षण भी प्रतीतिविशेषसाक्षिकतया ही करना होगा, अतः विषयनिरूपण प्रतीत्यधीन और प्रतीतिगतविशेष के विषयरूपतया प्रतीतिनिरूपण विषयाधीन होने से भी अन्योन्याश्रय दोष होता है। ऐसी स्थिति में विषय विषयी दोनों की ही असिद्धि न हो जाय, इसलिए 'सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः' (सर्वनाश प्राप्त होने पर विवेकी जन अर्धभाग का परित्याग कर देते हैं) एतन्नियमानुसारेण स्वविषयज्ञान को ही अवशिष्ट रखना उचित है। यदि कहें कि बाह्यपदार्थ के न मानने पर 'जानामि' इतना ही अनुभवाकार होना चाहिए—तो यह कहना उचित नहीं है क्योंकि ज्ञान का ही विलक्षण आकार मानते हैं।

**किञ्च बाह्यं घटादि मायिकं वाऽमायिकं वा, नाद्यः, मायिकवादे दृष्टिसृष्टिवादस्यैव मुख्यत्वेन तत्र बाह्याभ्युपगमस्य निष्प्रयोजनतादेरुक्तत्वात् । द्वितीये तु परमाणुसमुदायो वा, तदतिरिक्तावयवी वा मृदाद्यवस्थाविशेषो वा, न तृतीयः—अवस्थायां विशेषस्य दुर्निरूपत्वात्, सदसत्कार्यवादयोश्चतुर्थे शार-**

विशेषस्य दुर्निरूपत्वादिति । चूर्णपिण्डकपालघटानां मृदवस्थात्वमविशिष्टमिति तेषां विशेषस्यान्ततः प्रतीति विशेषसाक्षिकतयैव निरूपणस्यादर्तव्यत्वेन प्रतीतिगतविशेषस्य विषयगतविशेषस्य च परस्परापेक्षाप्रसङ्गः, न च प्रत्यक्षसिद्ध एव विशेषः; प्रत्यक्षस्य स्वप्नसाधारण्यात् । किञ्च उक्तावस्थाविशेषाणां मृदो भिन्नत्वे पटादेरपि मृदवस्थात्वप्रसङ्गः, अभेदे तु मृदोऽपि तत्कार्यकारित्वप्रसङ्गः, भेदाभेदस्तु समुदायचर्चायां प्राङ्निरस्तः । मृदेव तत्त्वमवस्थासु तु नादर इत्युक्तौ तु तस्या अपि परमाणुपर्यन्तं प्रकृतिपर्यन्तं वा धावनं स्यात्, तयोश्चानुपदं निराकरणीयतेति भावः ।

प्रयोज्यमित्यर्थः । तेन केषांचिन्मते साक्षान्मायाजन्यत्वाभावेऽपि घटादेर्न क्षतिः, नवाऽनादिदृश्यानां मायाजन्यत्वाभावेऽपि तेषां मायिकत्वानुपपत्तिः । उक्तत्वादिति । दृष्टिसृष्टिवादे भवतामपि समानत्वादित्यादिग्रन्थेनेत्यादिः । अज्ञातबाह्यस्य मायिकत्वामायिकत्वाभ्यां विकल्प्याज्ञातस्य स्वरूपमेव नास्तीत्यभिप्रायेणाद्यं निराकरोति—नाद्य इति । द्वितीयपक्षे पक्षत्रयमुपस्थाप्य सूचिकटाहन्यायेन तृतीयं निरस्यति—न तृतीय इति ।

किञ्च—बाह्य घटादि मायिक है ? या अमायिक ? प्रथम पक्ष ठीक नहीं; क्योंकि मायिकवाद में दृष्टिसृष्टिवाद ही मुख्य है और उस (दृष्टिसृष्टिवाद) में बाह्यपदार्थों का उपगम निष्प्रयोजन कहा गया है । द्वितीय कल्प में बाह्य घटादि परमाणुसमुदायरूप है, या परमाणु पुञ्ज के अतिरिक्त अवयवी है अथवा मृदादि की ही अवस्थाविशेष है । इनमें तृतीय कल्प युक्त नहीं; क्योंकि अवस्थागत विशेष दुर्निरूप है । [तात्पर्य यह है कि चूर्ण, पिण्ड, कपाल, घट, ये सभी मृद् की ही अवस्थायें हैं । इनमें विशेष का निर्णय अन्ततोगत्वा प्रतीतिविशेषसाक्षिकतया ही करना होगा । ऐसी स्थिति में प्रतीतिगतविशेष और विषयगतविशेष दोनों परस्पर सापेक्ष होने से अन्योन्याश्रय दोष हो जायेगा । विशेष को प्रत्यक्ष सिद्ध भी नहीं कह सकते, क्योंकि प्रत्यक्ष तो स्वप्नसाधारण है । दूसरी बात यह है कि उक्त अवस्थाविशेषों को यदि मृद् (मिट्टी) से भिन्न मानें तो पटादि भी मृद् की ही अवस्था हो जायेंगे और यदि उसे (अवस्थाविशेष) मृद् से अभिन्न मानें तो मृद् में भी तत्कार्यकारित्व होना चाहिए । भेदाभेद पक्ष तो समुदायचर्चा में पूर्व ही निरस्त किया जा चुका है । यदि कहें कि मृद् ही तत्त्व है । अवस्था में हमारा कोई आदर नहीं है' तो उस मृद् का भी बिचार करने पर परमाणुपर्यन्त या प्रकृतिपर्यन्त धावन करना होगा और वे दोनों (परमाणु तथा प्रकृति) तो अभी आगे निराकरणीय है । ऐसी स्थिति में अवस्थागत

मायिकं घटादि तस्य मृदाद्यवस्थाविशेषत्वमिति पक्षे-अवस्थानम् अवस्था, अङ्प्रत्ययेऽवस्थितिरित्यर्थस्तस्याश्च विशेषो यदि सामान्यस्य भेदकः प्रकारस्तदा भिन्नस्य भेदकत्वमभिन्नस्य वेति भिन्नत्वपक्षे तस्यापि भेदकपरि-मार्गणेऽनवस्था, अभिन्नत्वेऽवस्थारूप एवेति तस्यां विशेष इति वाचोयुक्तिरयुक्ता। ननु भवत्वेवं तथापि दोषदृष्टिमपसार्यानुभवोऽप्यनुरोद्धव्यः। अनुभूयन्ते हि सर्वे पदार्थाः, एवञ्चासत्कार्यवादमाश्रित्य मृदवस्थायां पूर्वमसन् घटः स्वकारणतः घट-रूपो विशेषो भविष्यति, सांख्यमतानुसारेण वा कार्याणां कारणात्मकतया सूक्ष्म-रूपेण कारणे स्थितत्वाद् उत्पत्तेः प्राक् याऽवस्था प्रागभावस्थानीया साऽनागता-वस्था, ततः कारकव्यापारेणाभिव्यक्त्यवस्था, ततः ध्वंसस्थानीया कारणे लयरूपा तिरोभावावस्था—इत्यवस्थायां तत्तद्विशेषोऽवगम्यतामिति चेत्तत्राह—सदसत्का-र्यवादयोरिति। निरस्तत्वादिति। अस्त्वेवम्, तथापि पूर्वं तार्किकतनय पृच्छामः, पूर्वं घटोऽसन् भवन् भवन्मते कारणजन्यो वा सामग्रीजन्यो वा, प्रथमस्तु भवतो-ऽङ्गीकारपराहतः। अन्त्यपक्षे सामग्रीस्वरूपं चर्च्यताम्। कारणान्येव सामग्रीति चेत्, तस्यामतीन्द्रियत्वादिविरुद्धधर्माध्यासेन सामग्र्यामेकत्वस्यासम्भवात् एक-सामग्रीजन्यत्वं दुर्घटम्, मिलितानां कारणानां तत्त्वे च मेलकार्थस्यैव पृष्टत्वात्। यदि सामग्र्यतिरिच्यते तदा कुतस्त्येति वक्तव्यम् कारणेभ्यो निष्कृष्य दर्शयितुम-शक्यत्वात्, तत्कारणस्य दुर्निरूपत्वाच्च। तस्या घटकारणेभ्य उत्पत्तिस्वीकारे तस्या घटकारणान्तर्गतत्वे स्वस्मात्स्वोत्पत्तिविरोधः। तदनन्तर्गतत्वे घटं जनयति सेति वाचो वस्तुशून्यतैव। स्वातिरिक्तेभ्य घटकारणेभ्य उत्पद्य सा घटं जनय-तीति चेन्न तया घटजनने घटकारणनामन्यथासिद्धत्वापातात्। सामग्र्यास्तेषां व्यापकत्वं स्यादिति चेन्न, तेष्वन्यतमस्य सामग्र्युपधायकत्वं मिलितानां वा तेषाम्, आद्ये घटादिस्थलेऽपि सामग्र्या अकिञ्चित्करत्वापातः। द्वितीये घटादिकारणाना-मेव सामग्री तेषां सामग्रीमपेक्षत इत्यात्माश्रयः। सामग्रीद्वयाद्युपगमेऽन्योन्या-श्रयादिः। सन्त्वनन्ता एव सामग्र्य इति चेन्न, तासां क्रमेणोत्पत्तिर्युगपद् वा, आद्ये क्रमेणानन्तपदार्थोत्पादनस्यानित्येनासम्भवेन दण्डादीनां नित्यत्वप्रसङ्गः, द्वितीये कार्यकारणभावविरोधः, सामग्र्युत्तरमेव कार्यस्योत्पत्तेः। कथञ्च दण्डादीनामेव सामग्र्याभिन्नजातीयं सामग्र्यात्मकं घटाद्यात्मकञ्च कार्यमर्जयेत्। अभिन्नजातीयत्वे च घट एव घटं जनयतीत्यापन्नम्। एतेन कारणेभ्यो भिन्नाभिन्ना सामग्रीत्यप्य-पास्तम्, उक्तसर्वदोषोन्मेषात्। अभिव्यक्तिपक्षे तस्याः प्राक् सत्त्वे कारक-

विशेष का निरूपण दुःशक्य है]।

यदि कहा जाय कि सत्कार्यवादानुसारेण सन्निवेशविशेषात्मनाभिव्यक्ति एवं असत्कार्य-वादानुसारेण अपूर्वसन्निवेश ही विशेष है तो यह कथन युक्त नहीं; क्योंकि सत्कार्यवाद

व्यापारवैयर्थ्यम्, अभिव्यक्तेरप्यभिव्यक्तिरिति पक्षे चानन्ताभिव्यक्त्यभ्युपगमप्रसङ्गेन तासां क्रमेणाभिव्यक्तावुक्तरीत्या दोषः, घटादेः सर्वदाऽभिव्यक्तत्वप्रसङ्गश्च। अन्यथा तदभिव्यक्त्यभिव्यक्तेरसम्भवात्। युगपदभिव्यक्तौ नानासामग्र्यभिव्यङ्ग्यत्वे तासां पृथक्निरूपणीयतापत्तिः, उक्तदोषश्च। अनन्ताभिव्यक्त्यनुभवप्रसङ्गश्च, योग्यत्वात्। एक सामग्र्यभिव्यङ्ग्यत्वे चैक्यापत्तिः तथा च कथमभिव्यक्तेरभिव्यक्तिरात्माश्रयात्। यदि च घट एवाभिव्यक्तिस्तदा ज्ञानज्ञेययोरैक्यापत्तिः। असत्त्वे च सर्वस्य सर्वत उत्पत्तिप्रसङ्गः। प्रागभाव एव नियामक इति चेन्न, तस्यैव सर्वत्रापाद्यत्वात्, अनादेश्च तस्य नियामकानपेक्षत्वात्।

अत्र यदि मन्येथाः 'तदेतत् त्रैलोक्यं व्यक्तेरपैति कस्मात् नित्यत्वप्रतिषेधात्, अपेतमप्यस्ति विनाशप्रतिषेधात् संसर्गश्चास्य सौक्ष्मम्' इति योगभाष्यात्—अनागतावस्थायां स्वरूपेण घटः सन् व्यक्तावस्थया चासन्, तथोत्पत्त्युत्तरं स्वरूपेण घटः सन्, अनागतावस्थया चासन्, तथा मुद्गरपातादिना घटस्यादर्शनेऽतीतावस्थया सन्नन्यावस्थया चासन् इत्येवमवस्थातो विनाशित्वं स्वरूपेण च नित्यत्वं सर्वकार्याणाम्, तेन तेषां सदसत्त्वोपगमेनावस्थानामुपजनापायधर्मवत्त्वाङ्गीकारात् व्यक्तावस्थाख्याऽविर्भावरूपाऽभिव्यक्तिरप्यसत्येवोत्पद्यत इत्यभ्युपगमे न काचित् क्षतिः, न वा सत्कार्यवादापवादः सूक्ष्मावस्थाया एवासत्तारूपत्वाभ्युपगमात्, न चाभिव्यक्तेरप्यभिव्यक्तिस्वीकारेऽनवस्था, तस्या अदोषत्वाभिधानात्, तथा च सांख्यसूत्रम्—'पारम्पर्यतोऽन्वेषणा बीजाङ्कुरवद्' (सा. सू., १-१२२) इति। तदपि न भद्रम्, अवस्थानिष्ठानागतत्वातीतत्वादेर्निरूपयितुमशक्यत्वात्। न च तत्कालावच्छिन्नत्वमेव तत्, निर्विशेषस्य कालस्यापि किञ्चिदुपाधिमन्तराऽतीतत्वादेर्वक्तुमशक्यत्वात्, उपाधीनाञ्च क्रियाध्वंसप्रागभावादीनां खण्डनादौ निरस्तत्वात्। कार्यस्य स्वरूपतो नित्यत्वस्यानुभवविरुद्धत्वात्। अपेक्षाकृतसदसत्त्वयोः सर्वत्रावच्छेदकविशेषमनादृत्याशक्यत्वात्। अवच्छेदकस्य च निरवच्छिन्नसावच्छिन्नवृत्तित्वाभ्यां निरस्तत्वात्। अनवस्थाया अदोषत्वेऽप्यनन्ताभिव्यक्तीनां क्रमेण युगपद्वोत्पत्तिस्वीकारे पूर्वोक्तदोषप्रसङ्गात्। अवस्थागतसूक्ष्मत्वस्य चूर्णादिसाधारण्यात्। अन्ततः प्रतीतिसाक्षिकरणेऽन्योन्याश्रयात्। किञ्चानागतावस्थायामतीतावस्थातोऽविशेषोऽस्ति न वा, नास्ति चेदविशेषप्रसङ्गात् नोक्तव्यवस्था सिद्ध्येत्। अस्ति चेदसौ निर्वक्तुमशक्य इत्युक्तं प्राक्।

ये तु—उत्पत्तेरुत्पत्तिरस्ति न वा, प्रथमेऽनवस्था, द्वितीयेऽसत्त्वाभ्युपगमे न कदाचिदुत्पद्येत, इति सर्वदाऽनुपलम्भप्रसङ्गः, नित्यत्वाभ्युपगमे सर्वदा कार्योपलम्भप्रसङ्ग इत्याशङ्कायां वैशेषिकादिभिरुत्पत्तेः स्वयमेवोत्पत्तिरूपत्वान्नोत्पत्त्यन्तरकल्पनावकाश इति समाधीयते यथा तथाऽस्माभिरप्यभिव्यक्तेः स्वयमेवाभिव्यक्तिरूपत्वान्नाभिव्यक्त्यन्तरकल्पनावकाश इति, नात्रानवस्थेति समाधास्यत इति

**दायां निरस्तत्वाच्च, अतएव न द्वितीयः, किञ्च अव्यासज्यवृत्तित्वे प्रत्यवयव-**

संगिरन्ते, तान् प्रति ब्रूमः—नैष समाधिः साधुः साधो यत उत्पत्तिर्ह्याद्यक्षण-सम्बन्धः, स च स्वरूपसम्बन्धविशेषः, न तु संयोगः, प्रध्वंसादावभावात्, स्वरूप-सम्बन्धश्चानुयोगिरूपः, अनुयोगी च घट इति तस्योत्पत्तिवदुत्पत्त्यनभ्युपगमे सर्वदाऽसत्त्वं सत्त्वं वा स्यात्। अभिव्यक्तिरपि कार्यात्मनाऽवस्थितिः, संस्थान-विशेषो वा प्रतीतिर्वा, यद्याद्यस्तर्हि प्रस्थितं सत्कार्यवादेन, तादृशावस्थितेः पूर्वम-सत्त्वात्। द्वितीये संस्थानविशेषो घटात्मकस्तर्हि स सन् वाऽसन् वेत्युक्तमावर्तते, तत्र च दूषणमभाणि। तृतीये तु प्रोक्तवर्त्मना ज्ञानज्ञेयोरैक्यापत्तिः। यत्तु पुनः घटोत्पत्तेरुत्पत्तेः घटोत्पत्तिरूपत्ववद् अभिव्यक्तेरप्यभिव्यक्तेस्तथात्वमिति नान-वस्थेति तन्न, वाग्भङ्ग्यन्तरमात्रत्वादस्य। घटोत्पत्तेरुत्पत्तेस्तदुत्पत्तिस्वरूपत्वे युक्तेस्तौल्यात्, घटोत्पत्तेरपि घटस्वरूपत्वे उक्तदोषाणां जागरूकत्वात्। अत्र पक्षेऽ-भिव्यक्तिः सती चेदनवस्था, असती चेत् घटादिसमानयोगक्षेमता। इतरे तु—कार्याणामनागतावस्थैवाभिव्यक्तेरप्यनागतावस्था, सैव चाभिव्यक्त्युत्पत्तौ नियामिकेति नासतः नरविषाणादेरभिव्यक्तिरिति। अन्ये चाप्यत्रैव—व्यवहारोप-योगितत्तत्कार्याभिव्यक्तेस्तत्तत्कार्यनिष्ठसत्वगुणरूपतया नित्यत्वेऽपि तमसा प्रति-बद्धत्वान्न व्यवहारोपयोगित्वम्। अभिव्यञ्जकसामग्र्या तूत्तेजकेन मणेरिव तमस प्रतिबन्धात् व्यवहारक्षमत्वमिति सामग्र्या उत्तेजकत्वमात्राङ्गीकारात् सत्कार्यवादे बाधाभावादित्याहुः—तदेतदप्यपेशलम्, अभिव्यक्तेः संविद्रूपत्वे प्रोक्तवर्त्मना ज्ञानज्ञेययोरैक्यसम्भवात् किमनेन वागवैचित्र्यमात्रेणेत्युपेक्षणीयम्। तस्मात्—

यथा सतो जनिर्नैवमसतोऽपिजनिर्न च।
जन्यत्वमेव जन्यस्यानिर्वाच्यत्वसमर्पकम्॥ इति

सूष्ठूक्तं निरस्तत्वादिति। वैदान्तिकैस्तु स्वीकृतोऽप्यसौ सत्कार्यवादः सांख्यादितो विलक्षणः मिथ्याभूतोऽनिर्वचनीयाविद्योपादानकत्वेनाविद्यात्मकः तुच्छवैलक्षण्य-मात्रसाधको न तु परमार्थसत्ताक इति व्यक्तमाकरे।

शारदोक्तं निरासमाश्रित्य द्वितीयं पक्षं प्रतिक्षिपति—**अतएवेति**। प्रकारान्तरेणावयविनमपलपितुमाह—किञ्चेति। एकत्वानवच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोगित्वं व्यासज्यवृत्तित्वम्। पर्याप्तिश्च स्वरूपसम्बन्धविशेषः 'एको द्वावि' ति प्रतीत्यापत्ते 'रेको न द्वावि' ति प्रतीत्यनुपपत्तेश्च वारणार्थमुपगतः।

असत्कार्यवाद दोनों ही खण्डन—चतुर्थपरिच्छेद-शारदा में निरस्त हो चुके हैं। अतएव द्वितीयकल्प भी ठीक नहीं है। किञ्च—वह अवयवी अव्यासज्यवृत्ति है या व्यासज्यवृत्ति, यदि अव्यासज्यवृत्ति मानें तो प्रत्येक अवयव भी अवयवीरूप कार्य का उत्पादक होना चाहिए। और यदि व्यासज्यवृत्ति मानें तो यावत् अवयव प्रत्यक्ष के बिना अवयवी का

मवयविकार्यकारित्वं स्यात्, व्यासज्यवृत्तित्वे तु यावदवयवप्रत्यक्षं विना प्रत्यक्षासम्भवः, व्यासज्यवृत्तिप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात् । अस्याप्रयोजकत्वेन द्वित्वादिवैलक्षण्यमित्यत्र तु भण नियामकम् । प्रत्यक्षात्मकं फलमन्यथानुपपन्नमिति चेन्न, ज्ञानात्मकतायामप्युपपत्तेरन्यथानुपपत्तेरप्रसरात्, अन्यथाऽवयव-

अस्याप्रयोजकत्वेनेति । द्वित्वादिप्रत्यक्षस्थले गृहीतस्य व्यासज्यवृत्तिप्रत्यक्ष—यावदाश्रयप्रत्यक्षयोः कार्यकारणभावस्यानुकूलतर्कशून्यतया प्रकृते त्याज्यतेति भावः ।

तदुक्तं मणिना—"पर्याप्तिश्चायमेको घट इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष" इति । अस्येति । व्यासज्यवृत्तिप्रत्यक्षं प्रति यावदाश्रयप्रत्यक्षं कारणमिति कार्यकारणभावस्येत्यर्थः । अप्रयोजकत्वेनेति । व्यासज्यवृत्तित्वात्तयोरेकत्र तद्धेतुताऽपरत्र नेत्यत्र नियामकाभावात्तत्त्यागोऽनुचित इति भावः । अत्रापि तत्स्वीकारे प्रत्यक्षात्मकं फलं यावदवयवप्रत्यक्षमन्तराऽनुपपन्नं स्यादित्याह—प्रत्यक्षात्मकं फलमिति । अवयविन इत्यादिः । अन्यथा = निरुक्तकार्यकारणभावाङ्गीकारे । ज्ञानात्मकतायामिति । तस्य ज्ञानात्मकतास्वीकारे त्वदुक्तदोषाभावात् । द्वित्वादिस्थले ज्ञानात्मकत्वन्तूक्तं प्राक् ।

किञ्चावयवी खल्ववयवेषु वर्तमान एकस्मिन् कात्स्न्येंन वर्तते एकदेशेन वा, एकस्मिन् कात्स्न्येंन वर्तते चेत् शेषावयववैयर्थ्यम्, नहि शेषैरवयवैः किञ्चनावयविनः क्रियते । एकद्रव्यश्चासावयवी भवन् नोपलभ्येत, किं कारणम्, महदनेकद्रव्यवत्त्वस्योपलब्धिकारणत्वात् । न चास्य विनाशः प्राप्नोति कारणद्रव्यविभागासम्भवात् । नह्येकस्य विभागः सम्भवति, न वैकेनारभ्यमाणस्य महत्वं युक्तं कारणबहुत्वमहत्वप्रचयासम्भवात् तन्नैकस्मिन् कात्स्न्येंन वर्तते । नाप्येकदेशेन, न ह्यस्य कारणव्यतिरेकेणान्ये एकदेशा भवन्ति, सोऽयमेकदेशोपलब्धावयवी उपलभ्यमानो न कृत्स्न उपलभ्यते, सेयमेकदेशोपलब्धिरनिवृत्तैव । अथोपलभ्य-

प्रत्यक्ष ही नहीं होगा; क्योंकि व्यासज्यवृत्ति पदार्थ के प्रत्यक्ष में यावत् आश्रयप्रत्यक्ष हेतु हैं । द्वित्वादिप्रत्यक्षस्थल में गृहीत—व्यासज्यवृत्तिप्रत्यक्ष एवं यावदाश्रयप्रत्यक्ष के कार्यकारणभाव को अनुकूलतर्कविरहवशात् यदि प्रकृत में न मानें, तो अवयवी में द्वित्वादिवैलक्षण्य कैसे सिद्ध होगा । (तात्पर्य यह है कि 'व्यासज्यवृत्ति प्रत्यक्षं प्रति यावदाश्रयप्रत्यक्षं कारणम्' एतन्नियमानुसारेण द्वित्वप्रत्यक्ष के प्रति यावदाश्रयप्रत्यक्ष कारण होता है और अवयवी प्रत्यक्ष के प्रति यावदाश्रयप्रत्यक्ष कारण नहीं होता है । अतः द्वित्वापेक्षया अवयवी में क्या वैलक्षण्य है, जिससे कि दोनों के व्यासज्यवृत्ति होने पर भी द्वित्वस्थल में स्वीकृत उक्त नियम अवयवी में नहीं माना गया । यदि कहा जाय कि अन्यथा अर्थात् उक्त नियम के रहने पर अवयवी का प्रत्यक्ष नहीं होगा, अतः तदर्थ नियम परित्याज्य है तो यह कहना उचित नहीं; क्योंकि नियमपरित्याग के बिना भी

**भिन्नत्वाविशेषेऽप्यवयवी तत्रैव वर्तते न त्वन्यत्रेत्यत्र किन्नियामकम्। समवायस्यायुतसिद्धत्वस्य च चतुर्थे निरस्तत्वात्। अतएव घटादौ गुरुत्वादेर्द्वैगुण्य-**

मानोऽवयवी कथमुपलभ्येत, यदि गृह्यमाणेष्ववयवेषु कृत्स्नः परिसमाप्तः स्यात्। न चायं गृह्यमाणेषु परिसमाप्तः शेषावयववैयर्थ्यप्रसङ्गादित्युक्तम्, अशेषावयवोपलब्धिरपि नास्ति मध्यभागपरभागयोरर्वाग्भागेन व्यवधानात्, तेनावयविनो न ग्रहणविकल्पः सम्भवति, नापि वृत्तिविकल्प, एकस्मिन् कृत्स्नैकदेशशब्दासम्भवात्।

नन्ववयविनो यत्र समवायस्तत्रैव स इति नावयवान्तरे सत्त्वमित्यत आह—समवायस्येति।

समवायो हि भवन्ननवस्थाभयेनाधारमध्यास्ते स्वरूपेणैवेत्यपरस्यापि तथैवास्तु कृतं तेन, गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वाद् दण्डी पुरुष इति विशिष्टबुद्धिवदित्यनुमानन्त्वप्रयोजकम्, क्लृप्तेन स्वरूपेणैव निर्वाहात्। न च स्वरूपस्य नानात्वमेकत्वञ्च समवायस्येति मन्तव्यम्, तस्यापि नानात्वात्, तथा चोक्तं पदार्थतत्त्वनिरूपणादौ—'समवायो हि नैको जलादेर्गन्धादिमत्त्वप्रसङ्गात्'। न च जल गन्धनिरूपितत्वविशिष्टसमवायाभावान्न दोष इति वाच्यम्, विशिष्टस्यातिरिक्तत्वाभावेन जलेऽपि विशिष्टसमवायसत्त्वात्, तथाविधविशिष्टनिरूपिताधिकतणताया अतिरिक्तत्वे तु किमपराद्धं विभिन्नसमवायैरिति। एवमयुतसिद्धत्वमपि न क्षोदक्षमम्, यन्निष्ठाधेयता कालनिरूपिता यदवच्छिन्ना तदुभयञ्चायुतसिद्धम्, न च घटीयरूपादिनिष्ठाधेयतायाः कालनिरूपितायाः घटावच्छिन्नत्वं, न तु पटावच्छिन्नत्वमिति समवायसिद्धिं विना सिद्धयतीत्यन्योन्याश्रय इति त्याज्यम्। अधिकन्त्वाकरतोऽवसेयम्।

अतएवेति। प्रोक्तवर्त्मनाऽवयविनो निरासादेवेत्यर्थः। घटदाविति। अतिरिक्तावयविवादिमत इत्यादिः। आरम्भवादिनां नये ह्युपादानकारणं स्वस्माद्भिन्नं कार्यमुत्पादयति। यद्यपि पटे तन्तवः पटश्चेति वस्तुद्वयं पार्थक्येन नोपलभ्यते तथाऽनुपलब्ध्या बाधितमपि कारणातिरिक्तं कार्यं यदि प्रकल्प्येत, तर्हि तन्मते पटोत्पत्त्यनन्तरमप्यविनष्टास्तन्तवो विद्यन्त एवेति तदानीं तन्तुपटरूपवस्तुद्वयसत्त्वात् गुरुत्वादिद्वैगुण्यमुपलभ्येत। तथा चावयवी स्वावयवातिरिक्तः स्यात् गुरुत्वादिद्वैगुण्यवान् स्यात्।

अवयवी ज्ञानात्मक मानने से ही प्रत्यक्ष उपपन्न हो जायेगा। अतः अन्यथानुपपत्ति ही नहीं है, और यदि ज्ञानातिरिक्त मानें तो अवयवभिन्नत्वसाम्यात् वह अवयवी उसी अवयव में रहता है अन्यत्र नहीं, इसमें क्या नियामक है। यदि समवाय या अयुतसिद्धत्व को नियामक मानें तो वह खण्डन-शारदा के चतुर्थपरिच्छेद में निरस्त हो चुका हैं। अतएव

**प्रसङ्गोऽपि युक्त एव। किञ्च तत्कपालवृत्तित्वविशिष्टोऽवयवी एतत्कपाल-वृत्तित्वविशिष्ट इति भवताऽपि न स्वीकार्यम्, विरोधात्, उपलक्षणत्वञ्च तत्तत्क-पालवृत्तित्वयोरविद्यमानत्वगर्भं जीवत्यवयविनि न सम्भवदुक्तिकम्, उपाधित्वं तु स्यात्, तथा च यत्र घटत्वे सत्येतत्कपालवृत्तित्वं तत्र तत्कपालवृत्तित्वमित्ये-वोक्तं स्यात्, एवञ्चैतत्कपालवृत्तिर्घटः कथं तत्कपालवृत्तिरिति जिज्ञासाया नेदमभिधानं निवारकमित्यनुत्तरम्। तथा च कथमनेकावयवसमवेतोऽवयवी।**

नेदमभिधानमित्यादि। तादृशजिज्ञासावता घटत्वे सत्येतत्कपालवृत्तित्वस्य प्रागेव ज्ञातत्वेन तदभिधानस्य तादृशजिज्ञासानिवारकत्वानुपपत्तिः स्पष्टैव; नहि ब्राह्मणः क इति जिज्ञासा ब्राह्मण एव ब्राह्मण इत्यभिधानेन निवार्यते। स्वभाव एव प्रतिव्यक्तिविश्रान्तः कोऽपि तादृशो येनासौ घट एतत्कपालवृत्तिः सन् तत्कपालवृत्तिर्जात इत्येवं स्वभावनिर्णयस्य त्ववयवावयविभाववासनासमुत्थतया न प्रमात्वं निर्णीतमिति भावः।

कपालद्वयवृत्तिघटे तदेतत्कपालवृत्तित्वं विशेषणमुपलक्षणं वोपाधिर्वेति विकल्प्याद्यं निराकरोति—तत्कपालवृत्तित्वेति। विशेषणस्य स्वान्वितविधेयभूत-क्रियान्वितत्वे सति स्वधर्मीतरभेदानुमापकत्वात् तत्कपालनिष्ठाधिकरणतानि-रूपिताधेयतायास्तन्मात्रवृत्तिघट एव सत्त्वात् तद्विशिष्टघटस्यापि तन्मात्र-वृत्तित्वम् इति भावः। स्वरूपेण वैशिष्ट्यं बोध्यम्। उपलक्षणपक्षं प्रतिक्षिपति—उपलक्षणत्वञ्चेति। विशेषणलक्षणेऽनुक्तमपि वर्तमानत्वमर्थत एव प्राप्तं भवति, किन्तूपलक्षणलक्षणेऽवर्तमानत्वं प्रविष्टमेव काकादौ तथा दर्शनात्। तथा च घटे तादृशवृत्तित्वोपलक्षितत्वं स्वपूर्वकालीनप्रतियोगिसमानाधिकरणतदभाववत्त्वं, तत्सम्बन्धोत्तरकालीनतत्समानाधिकरणतदभाववत्त्वं वा स्यात्, तच्च न सम्भव-तीत्याह—न सम्भवदुक्तिकमिति। तत्र हेतुमाह—जीवतीति। अवयविनो वर्तमानत्वे तत्र तद्वृत्तित्वस्याप्यवश्यं वर्तमानत्वात्। उपाधित्वपक्षे सम्भावनां व्यनक्ति—उपाधित्वं तु स्यादिति। सम्भावनायां लिङ्। उत्कटान्यतरकोटिकं ज्ञानं सम्भावनमित्युच्यते। उपाधित्वाङ्गीकारे फलाभावं स्फोरयति—नेदमभिधा-नमिति। उपसंहरति—तथाचेति।

अतिरिक्तवादि के मत में कार्योत्पादन के अनन्तर भी घट और कपालादि वस्तुद्वय होने से घटादि में गुरुत्वादिद्वैगुण्य (द्विगुणित) होना चाहिए। किञ्च—तत्कपालवृत्तित्वविशिष्ट अवयवी एतत्कपालवृत्तित्वविशिष्ट है, यह तो आप (तार्किक) को भी मन्तव्य नहीं है क्योंकि विरोध है। और अवयवी के विद्यमान रहते तदेतत्कालवृत्तित्व का अविद्यमानत्वगर्भ (अविद्य-मानत्वघटित) उपलक्षणत्व की सम्भव नहीं। यद्यपि उसे (तदेतत्कपालवृत्तित्व) उपाधि मान सकते हैं किन्तु उपाधि मानना व्यर्थ है क्योंकि तथासति 'यत्र घटत्वे सति एतत्क-पालवृत्तित्वं' यही उक्त होगा, और यह कथन एतत्कपालवृत्ति घट तत्कपालवृत्ति कैसे

किञ्च तद्देशवृत्तित्वविशिष्टस्यैतद्देशवृत्तित्वविशिष्टेन भेदाभेद एव स्यात्स च ज्ञानाकारतां विना न निर्वहतीत्यावेदितमधस्तात्। एतेनावयविन्यावृतत्वानावृतत्वग्रहणाग्रहणसकम्पत्वनिष्कम्पत्वादिविरुद्धधर्माध्यासप्रसङ्गोऽपि बौद्धैरुक्तः समर्थनीयः, स हि कतिपयावयवावरणेऽप्यवयविनोऽनावरणमेवेत्यादिरीत्या कैश्चित्समाधीयते, परन्तु तदावयविनोऽनावरणे प्राग्वत्परिमाणविशेषोपलम्भप्रसङ्गः, न चावयविनि परिमाणविशेषस्य समवायो न त्वभेद इति नावयव्युपलम्भेऽपि परिमाणविशेषोपलम्भप्रसङ्ग इति वाच्यम्, समवायनिरासात्। किञ्च य एव घटोंऽशेनावृतः स एवांशेनानावृतः, य एव घटोंऽशेन सकम्पः स एवांशेन निष्कम्पः, य एव घटोंऽशेन गृहीतः स एवांशेनागृहीत इत्यनुभवो दुरपन्हवः, तस्य प्राप्ताप्राप्तविवेकन्यायेनांशयोरेवावृतत्वानावृतत्वाद्यवगाहितोक्तौ तु संयोग-

अस्तु वा यथा कथञ्चिदविचारितरमणीयमीदृशाभिधानं लोके तथापि तयोर्भेदाभेदयोरसम्भवदुक्तिकत्वेन भेदाभेदस्यैव वक्तुं शक्यतया तस्य च ज्ञानाकारतानान्तरीयकत्वात् सिद्धोऽस्मत्सिद्धान्त इत्याह—किञ्चेति। अवयविनोऽतिरिक्तत्वे बौद्धोक्तं विरुद्धधर्माध्यासमपि स्मारयति—एतेनेति। नन्वेकस्मिन्नावृतत्वानावृतत्वादिविरुद्धधर्माङ्गीकारेऽनुभवविरोध इति चेत्तत्राह—किञ्चेति। अथैकस्मिन् विरुद्धावृतत्वाद्यनुभवस्यापलपितुमशक्यत्वेऽपि तदंशयोरेव तदङ्गीकृत्य विरोधः परिह्रियतामिति चेत्तत्राह—तस्येति। प्राप्ताप्राप्तविवेकन्यायेनेति। प्राप्तस्याप्राप्तस्य च यो विवेकस्तस्मिन् कृते सति यः प्रामाणिकः पक्षः सोऽभ्युपेयः। यथा सविशेषणे

हुआ' इस जिज्ञासा का समाधाता उत्तर नहीं है। ऐसी स्थिति में अनेक अवयवों में समवेत अवयवी कैसे हो सकता है। किञ्च—तद्देशवृत्तित्वविशिष्ट का एतद्देशवृत्तित्वविशिष्ट के साथ भेदाभेद ही होगा, और वह ज्ञानाकारता के विना सम्भव नहीं है, यह प्राक् प्रतिपादित है। एवं ज्ञानाकारता मानने से ही अवयवी में आवृतत्व अनावृतत्व ग्रहण अग्रहण सकम्पत्व निष्कम्पत्व आदि बौद्धोक्त विरुद्धधर्माध्यास भी समर्थित हो जाता है। यद्यपि कतिपय विद्वान् विरुद्धधर्माध्यास का समाधान—'कतिपय अवयवों के आवरण होने पर भी अवयवी अनावृत ही रहता है' इत्यादि रीति से करते हैं, परन्तु तादृश स्थिति में अवयवी के अनावरण होने पर प्रागवत् अवयवी में परिमाणविशेष उपलब्ध होना चाहिए। यदि कहें कि अवयवी में परिमाण विशेष का समवाय है, न कि उसका अभेद। अतः अवयवी के उपलम्भ होने पर भी परिमाणविशेष का उपलम्भ प्रसक्त नहीं होता, तो यह कहना उचित नहीं है क्योंकि समवाय निरस्त हो चुका है। दूसरी बात यह है कि जो घट अंशेन आवृत है, वही अंशेन अनावृत है। जो घट अंशेन सकम्प है, वही घट अंशेन निष्कम्प है, एवं जो घट अंशेन गृहीत है वही घट अंशेन अगृहीत है, एतादृश अनुभव अनपलपनीय है। यदि प्राप्ताप्राप्तविवेकन्यायेन (जिसमें प्राप्त है उसमें मानना, तथा

**तदभावावपि नैकत्र सिद्ध्येताम्, अवयवयोरेव तयोर्वक्तुं शक्यत्वात्, अनुभवानुरोधेनोत्तरं तु समानम्। अवयवधर्मैरेवावयविनि तत्तत्प्रकारकप्रतीतिनिर्वाहे चावयविनो निर्धर्मकत्वापत्तिः, परमाणुरेव त्रसरेणुरेव वा तत्तद्धर्मकः स्यात्, एकाकारधर्मप्रकारकप्रतीतेः क्वचित्साक्षात्सम्बन्धावगाहित्वं क्वचिच्च परम्परासम्बन्धावगाहित्वमिति दौःस्थ्याच्च ! बाधकसद्भावासद्भावाभ्यामावृतत्वादिधियो भ्रमत्वमेकत्र संयोगतदभावादिबुद्धेश्च प्रमात्वमिति चेन्न; भेदापत्तिरूप-**

परमाणोरतीन्द्रियतया तद्धर्माणां प्रत्यक्षानुपपत्त्या न तद्धर्मैरवयविनि तत्तत्प्रकारकप्रतीतिनिर्वाहसम्भव इत्यरुचेराह त्रसरेणुरेव वेति।

एकाकारेत्यादि। रूपवान् घटः रूपवान् त्रसरेणुरिति प्रतीत्यो रूपवत्तांशे समानाकारत्वेऽपि घटे रूपस्य परम्परया त्रसरेणौ तु साक्षात्सम्बन्धेन भानं कथमनुमन्तव्यम्। एवं वृक्षः कपिसंयोगी, शाखादिकं कपिसंयोगीत्यत्रापि द्रष्टव्यम्। अवयवधर्मैरेवावयविनि तत्तत्प्रकारकप्रतीतिनिर्वाहपक्षे घटादौ परिमाणविशेषोपलम्भस्य सर्वथैव निर्दलत्वप्रसङ्गस्तु स्पष्ट एव, त्रसरेणौ तादृशपरिमाणस्याभावेन परम्परया घटे तद्भानस्यासम्भाव्यत्वात्।

हि वर्तमानौ विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति न्यायानुसारेण घटाकाशमानय न मण्याकाशमित्यत्रानयनविषयकौ विधिनिषेधौ विशेष्ये आकाशे बाधात् घटादिरूपं विशेषणमुपसंक्रामतः, तथा तत्रैव विवेके कृते सति आकाश आनयनस्याप्राप्तत्वात् घटादावेवानयनं बोध्यते तद्वत् प्रकृतेऽप्यंशयोरेवावृतत्वादिप्राप्तिः। नैकत्र सिद्ध्येतामिति। तथा च संयोगस्याव्याप्यवृत्तित्वसिद्धान्तस्तव भज्येते हि भावः। ननु—'इह पर्वते नितम्बे हुताशनसंयोगो न शिखरे' इत्यनुभवानुरोधेन संयोगस्याव्याप्यवृत्तित्वमभ्युपेयमिति चेत्तत्राह—अनुभवानुरोधेनेति ( समानमिति ) प्रकृतेऽप्यनुभवस्य दर्शितत्वात्। अंशयोरेव तत्तद्धर्माङ्गीकारे दूषणान्तरमाह—अवयवधर्मैरेवेति। अवयवपरम्परायाः परमाणावेव विश्रामात्, तस्य च परैर्निरवयवत्वाभ्युपगमादाह—परमाणुरेवेति। परमाणोरप्रत्यक्षत्वादाह—त्रसरेणुरेव वेति। रूपवान् घट इत्यनुभवानुरोधेन घटे रूपाद्यभ्युपगमेऽप्याह

जिसमें अप्राप्त है उसमें छोड़ देना, जैसे शिखी ध्वस्त में ध्वंस शिखा में ही माना जाता है।) उसे (अनुभव) अंशावच्छेदेन ही आवृतत्वानावृतत्वादि का अवगाही माना जाय तो संयोग संयोगाभाव भी एकत्र सिद्ध नहीं हो पायेंगे, उन दोनों को भी वृक्ष के अवयवों में ही मान सकते है। यदि अनुभवानुरोधेन आवृतत्वादि का विभिन्न अंशावच्छेदेन ही मानना उचित है तो संयोगतदभाव में भी अनुभव विद्यमान है। अवयवों के धर्मों से ही अवयवी में तत्तत्प्रकारकप्रतीति हो जाने से अवयवी निर्धर्मक हो जायेगा। अन्ततोगत्वा परमाणु अथवा त्रसरेणु ही तत्तद्धर्माश्रय होगा। एकाकारधर्मप्रकारक प्रतीति अर्थात् रूपवान् घटः रूपवान् त्रसरेणु इन दोनों प्रतीतियों के रूपवत्त्वांश में समानाकार

**बाधकभियैवेत्थं परिकल्पने संयोगस्थलेऽपि तत्तौल्यात् । न चैवमस्त्ववच्छेदक-भेदेनैवाविरोधः; अवच्छेदकस्य सर्वथैव घटादिभिन्नत्वे तद्भेदेन विरोधसमाधा-नासम्भवेन सर्वथैवाभेदस्य चानुभवविरोधेनासम्भवेन समवायेन प्रत्यवस्थानस्य च निराकृतत्वेन भेदाभेदोपगमस्य च दत्तोत्तरत्वेनावच्छेदकस्य चानवच्छिन्न-वृत्तिकत्वे विरोधतादवस्थ्येनावच्छिन्नवृत्तिकत्वे चात्माश्रयान्योन्याश्रयचक्रका-नवस्थान्यतमप्रसङ्गेनावयविविलोपस्य दुर्वारत्वात् ।**

—एकाकारेति । एकत्रेति । य एव घटोऽनावृतः स एव आवृत इत्यनयोरेकत्र । भेदापत्तीति । आवृतत्वविशिष्टघटेनानावृतत्वविशिष्टघटस्य भेदापत्तिभिया एकत्र भ्रमत्वाङ्गीकारे । संयोगस्थलेऽपीति । वृक्षः कपिसंयोगी तदभाववान् इत्यत्रापि तदापत्तिः समैव । अवच्छेदकभेदेनाविरोधमाशङ्क्य परिहरति—न चैवमिति । अवच्छेदकं हि घटादिभिन्नं वा स्यादभिन्नं वा स्यात्, नाद्यः भिन्नेन तेन घटगता-वृतत्वादिविरोधपरिहारस्याशक्यत्वात् । द्वितीयस्त्वनुभवपराहत इत्याह—अव-च्छेदकस्येति । न चावच्छेदकमपि समवायेन घटसम्बद्धं सद्विरोधं विरोत्स्यतीति चेत्तत्राह—समवायेनेति । दत्तोत्तरत्वेनेति । ज्ञानात्मकतामन्तराऽशक्यसमर्थनो भेदाभेदपक्ष इत्युक्तं प्राक् । शेषं व्याख्यातमधस्तात् ।

होने पर भी घटमें रूप परम्परा से और त्रसरेणु में साक्षात्सम्बन्ध से अवगाहन करती है, यह दुःस्थिति भी हो जायेगी ।

शङ्का—बाधकसद्भावात् घटादिस्थल में आवृत्तत्वानावृत्तत्वादिप्रतीति भ्रमात्मक है, और बाधकाभावात् संयोगतदभावादिविषयक प्रतीति प्रमा है ।

समाधान—आवृतत्वानावृतत्वादिविरुद्धधर्मद्वयविशिष्ट होने से घट में प्राप्त भेदापत्ति के भय से उक्त कल्पना करें तो संयोगस्थल में भी एक ही वृक्ष में संयोगतदभावादि-विरुद्धधर्मद्वयविशिष्टत्वेन आपतित भेदापत्ति समान ही है । यदि शङ्का हो कि अवच्छेदक भेद से एकत्र घटादि में आवृतत्वादिविरुद्धधर्मद्वयावगाहि ज्ञान में विरोध न होगा, तो यह शङ्का संगत नहीं; क्योंकि वह अवच्छेदक घट से सर्वथा भिन्न है या सर्वथा अभिन्न । यदि सर्वथा भिन्न मानें तो उस अवच्छेदकभेद से घट में उक्त विरोध का समाधान सम्भव नहीं है । सर्वथा अभिन्न मानना भी अनुभवविरोध होने से युक्त नहीं है । समवायाधीन प्रत्य-वस्थान प्राक्निराकृत हो चुका है तथा भेदाभेदज्ञानाकारता के बिना अनुपपन्नत्वेन दत्तो-त्तर है । एवं अवच्छेदक के अनवच्छिन्नवृत्तिक होने पर उक्तविरोध तदवस्थ ही रहेगा, और यदि अवच्छिन्नवृत्तिक मानें तो पूर्वप्रतिपादितरीत्या आत्माश्रय, अन्योन्याश्रय, चक्रक, अनवस्था दोषचतुष्टय में अन्यतम दोष प्रसक्त हो जायेगा, ऐसी स्थिति में अवयवीविलोप दुर्वार है ।

**न च परमाणुरेवान्तिमोऽवच्छेदकः; तत्रापि युगपदनेकमूर्तसंयोगित्वस्यानेकदिगवच्छेदेनाभ्युपगतत्वेन पूर्वदिगवस्थितस्य परमाणोः परदिगवस्थितेन परमाणुना परदिगवच्छेदेनावृतत्वस्यावश्यकत्वेन च परमाणुनिष्ठसंयोगस्यावच्छेदकेऽप्यवच्छेदकान्तरस्य वक्तव्यत्वेनानवस्थाया दुर्वारत्वात्। एतेन दिग्दशकसंयोगनिबन्धनो दशावयवकत्वप्रसङ्गः परमाणौ, एवं तदवयवेष्वपीतिशून्यतैवेत्यपि समर्थितम्। तत्तद्दिक्सम्बन्धस्य परमाणौ व्याप्यवृत्तित्वेऽवच्छेदकताऽनुपपत्तेः। एतेन धर्मिग्राहकमानेन परमाणोर्निरवयवत्वसिद्धौ तव तत्तत्सम्बन्धस्य**

एवं च परमाणोरन्तिमावच्छेदकत्वस्यासम्भवदुक्तिकत्वेऽपि दूषणान्तराभिधित्सयैव 'न च परमाणुरेवे'त्यादिनाऽग्रे आशङ्कितम्। शून्यतैवेत्यपि समर्थितमिति।

नन्ववच्छेदकस्यावच्छिन्नवृत्तिकत्वस्यात्माश्रयाद्यनवस्थानान्तदूषणप्रसञ्जकत्वं किमित्युच्यतेऽन्तिमेऽवच्छेदके जीवति परमाणौ जगदारम्भक इति चेत्तत्राह– न चेति। तत्रास्माभिः पृष्टो भवान् व्याचष्टाम्—कीदृशः परमाणुरायुष्मता स्वीक्रियते—निरवयवः सावयवो वा, नान्त्यः, भवताऽनभ्युपगमात्। नाद्यः तत्र युगपदनेकमूर्तसंयोगित्वस्यानेकदिगवच्छेदेनाभ्युपगतत्वात् दिशोऽवच्छेदकीकृत्य, तस्यावृतत्वे परमाणुनिष्ठसंयोगस्याव्याप्यवृत्तेः स्वीकारादवच्छेदकपरम्परापातेनानवस्थातादवस्थ्यात्। एतेनेति। प्रोक्तवर्त्मना परमाणुनिष्ठाव्याप्यवृत्तिसंयोगस्वीकारेण। तथा चैकस्य पूर्वदक्षिणपश्चिमोत्तरोर्ध्वाधराग्नेयनैर्ऋतवायव्येशानरूपेण दिशां दशकेन सह निरवयवस्य परमाणोर्युगपत्सम्बन्धो न भवितुमर्हति, भवति चेन्निरवयवत्वं तस्य न सम्भवति. अतः परमाणोः दशावयवत्वप्रसङ्गः। परमाणुनिष्ठतत्तत्संयोगस्य व्याप्यवृत्तित्वेऽवच्छेदकत्वानुपपत्तिरपसिद्धान्तापत्तिश्च 'वृत्तेरव्याप्यवृत्तित्वे' इत्यादिशिरोमणिग्रन्थेन त्वयैव तस्य तथात्वाभ्युपगमात्। किञ्चावच्छेदकत्वास्वीकारे कार्त्स्न्येन संयोगः स्यादिति द्व्यणुकस्य प्रथिमानुपपत्ति, नीरक्षीरयोरिवैकलोलीभावात्। एतेनेति। अवच्छेदकतानुपपत्तिप्रदर्शनेन। धर्मिग्राहकमानेनेति। अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाण-

यदि शंका हो कि—परमाणु ही अन्तिम अवच्छेदक है, तो यह कथन युक्ति संगत नहीं, क्योंकि परमाणु को अन्तिम अवच्छेदक होने पर—परमाणु में अनेकदिगवच्छेदेन युगपद् अनेक मूर्तसंयोगित्व मानने से तथा पूर्वदिशा में स्थित परमाणु का परदिग् स्थित परमाणु से परदिगवच्छेदेन आवृतत्व मानना आवश्यक होने से परमाणु निष्ठ संयोग के अवच्छेदक के भी अवच्छेदकान्तर अवश्यवक्तव्य होने से अनवस्था दोष दुर्वार है। इससे यह भी समर्थित हो गया कि परमाणु में दस-दिशाओं के संयोग प्रयुक्त दश अवयवों की प्रसक्ति एवं उन दश अवयवोंमें भी दश दिग्संयोगनिमित्तके दश-दश अवयवों की प्रसक्ति होगी, अतः अन्ततोगत्वा शून्यता ही परिशिष्ट रहेगी। यदि परमाणु में दशदिग्

**व्याप्यवृत्तित्वमेवोपेयमिति नाशङ्कनीयम्, एतादृशरीत्या धर्मिग्राहकमानस्यानुपपन्नताया एव प्रदर्श्यमानत्वाच्च । न च परमाणोः सावयवत्वेऽनवस्थाऽन्यथानु-**

तारतम्यत्वात् महत्परिमाणतारतम्यवदिति धर्मिग्राहकमानन्तु संयोगस्य व्याप्यवृत्त्यव्याप्यवृत्तित्वाभ्यां दूषणगणग्रासादपमाननीयम् । किञ्चात्र परमाणुसिद्धौ महत्वविरुद्धाणुपरिमाणसिद्धिस्तत्सिद्धौ परमाणुसिद्धिरित्यन्योन्याश्रयोऽपि । अस्वीकृतश्चायं परमाणुवादः शिरोमणिनाऽपि पदार्थतत्त्वनिरूपणे 'परमाणुद्व्यणुकयोश्च मानाभावः, त्रुटावेव विश्रामादि'त्यादिग्रन्थसन्दर्भेण । तत्वसारादावपि—'त्रुटौ द्रव्यस्य विश्रामाद् द्व्यणुकादेरलीकता' इत्याद्युक्तम् । किञ्च द्रव्यं महत्वशून्यासमवेतं परिमाणवत्त्वात्, त्रुट्यादिकं महत्वशून्यासमवेतं महत्त्ववत्त्वादित्याद्यनुमानसाम्राज्येन त्रटीनां महत्वशून्यासमवेतत्वसिद्धावर्थत एव द्व्यणुकपरमाण्वसिद्धिः । न च द्व्यणुकादिसिद्ध्यनुगुणानुमानानामपि सत्त्वेन न कथं तेषां सिद्धिरिति वाच्यम् सत्प्रतिपक्षसम्बलने द्वयोरेवासिद्ध्या द्व्यणुकाद्यसिद्धावेव पर्यवसानात् । द्व्यणुकादि साधकानुमानविषयहेतोरप्रयोजकत्वशंकाकवलितत्वाच्च । तयैव रीत्याऽस्माभिरपि परमाणुसावयवत्त्वस्य साधयितुं शक्यत्वात् । अथानवस्थाभयेन परमाणूनामवयवाः सेद्धुं नार्हन्तीति चेत्, परमाणूनां सावयवत्वसिद्धावेव भवतामनवस्थाप्रसङ्गभयं, न पुनः त्रुटीनामप्रामाणिकावयवसिद्धाविति निनिगमकाभावादप्रामाणिकम् । वस्तुतस्तु मूर्तत्वस्य सावयवत्वव्याप्यत्वात् मूर्तस्य निरवयवत्वमनुभवविरुद्धमिति न साध्वीयं त्वत्प्रक्रिया । न च परमाणुस्वीकारे किञ्चित्प्रयोजनं पश्याम इत्याह—अन्यथाऽनुपपत्तिर्वेति । न चेति पूर्वेणान्वयः अन्यथा = निरवयवपरमाणुं विना । अनुपपत्तिः = पृथिव्यादिसृष्ट्यनुपपत्तिः पृथिव्यादिसर्गस्य परमाणुप्रयोज्यत्वाभावात् । तदुक्तम्—

स्वतो वा परतो वापि निरंशे न क्रिया भवेत् ।
तदभावान्न संयोगस्तदभावात्पराणुषु ॥
नोपपन्नोद्व्यणुस्तद्वत् त्र्यसरेण्वादिकं जगत् ।
विचित्रेश्वरशक्त्या चेत् किं तेन परमाणुना ॥ इति ।

सम्बन्ध को व्याप्यवृत्ति मानें तो परमाणु में अवच्छेदकता ही अनुपपन्न हो जायेगी, क्योंकि व्याप्यवृत्ति का कोई अवच्छेदक नहीं होता । इससे यह आशंका है कि—'अणुपरिमाणतातारतम्यं क्वचित् विश्रान्तं परिमाण तारतम्यत्वात् महत्परिमाणतारतम्यवत्' इदृश अनुमान से परमाणु में निरवयवत्व सिद्ध होने पर परमाणु में तत्तत्सम्बन्ध ( दिग्सम्बन्ध ) भी व्याप्यवृत्ति ही मन्तव्य है—'निरस्त हो गयीं, क्योंकि एतादृशरीति से धर्मिग्राहक प्रमाण की अनुपपन्नता का ही प्रदर्शन हुआ । यदि कहा जाय कि परमाणु के सावयव मानने पर अनवस्था होती है । अन्यथा अर्थात् यदि उसे निरवयव मानें तो परमाणु ही अनुपपन्न

**पपत्तिर्वा; बाह्यानुपगमेनैव सर्वानुपपत्तिशान्तेः। निरवयवद्वये च तद्विलक्षण-परिमाणकं द्व्यणुकं वेदान्तिगोष्ठीसिद्धा माया परमुत्पादयेन्नत्वन्यः कश्चिदिति मन्दधीधन्धकोऽयं परमाणुवादः। संख्यायाः स्थौल्यप्रयोजकत्वमित्यपि तार्कि-**

मूर्तस्य निरवयवत्वमनुभवयुक्तिविरुद्धमिति हृदयम्। सांख्यरीत्या तु परमाणूनां पञ्चतन्मात्रस्थानीयत्वेन तज्जन्यत्वेन वाऽन्ततोऽहङ्काराविद्वारा प्रकृतौ पर्यवसानं लये इति प्रकृत्यात्मिकैवावस्था निरवयवा, न तु मूर्तात्मिकेत्यन्यत्। मूलतत्त्वस्य शून्यत्वे ततः परमाण्वादिपरम्परयाऽन्यथा वा जगदारम्भ इति मनोरथमात्रम्। एवं मूल-तत्त्वस्य व्यापकप्रकृत्यात्मकत्वेऽपि, व्यापकान्महदादिपरम्परयापि परमाणुकणानामपल-पितुमशक्यानामुत्पत्तिः, ततश्च पृथिव्यादेरिति न स्वप्नेऽपि श्रद्धामर्हति। वक्ष्यते चैतद्वि-वर्तवादे। तस्मात्सर्वत्र परमनिर्भरौचित्यास्पदाचिन्त्यचमत्कारसारमायावादस्यैवाप्रतिहत-स्वातन्त्र्यमिति तत्त्वम्। ननु परमाणुना यस्य कस्यापि संयोगो व्याप्यवृत्तिरेवेति कथञ्चि-दास्ताम्, न चैवं परमाणुद्वयसंयोगस्यापि तथात्वे द्व्यणुकादौ प्रथिमानुपपत्तिः, परमाणु-गतसङ्ख्यावशात्तदुपपत्तेः, अत आह निरवयवद्वये चेति। परमाणूपरिवर्तमानपटलयोरेव संयोगस्ततश्च द्व्यणुकादिक्रमेण जगज्जनिरिति त्वतिवेलमापाततः कस्यचिदभिधानम्, पटल-योर्निरवयवत्वे उक्तदोषतादवस्थ्येन परमाणुस्वीकारवैयर्थ्येन तदन्तः परमाणुप्रवेशस्याप्य-सम्भवदुक्तिकत्वेन च सावयवत्वस्य वाच्यत्वे जन्यत्वध्रौव्येण परमाणुसंयोगद्वारैव तदुत्पत्तेः प्रार्थनीयत्वे उक्तदोषानिर्मोक्षात्।

व्यक्तमाकरेऽप्येतत्। अतएव वक्ष्यति भगवान् ग्रन्थकारोऽनुपदमेव—'मन्दधीधन्धकोऽयं परमाणुवाद' इति। सत्येवैतस्मिन् कतिपयदर्शनसाधारणे हेतावुपेक्ष्य तं सौगतप्रकरणानुगतं हेत्वन्तरमाह—बाह्यानुपगमेनैवेति। अधिकन्तु टीकायां कर्णेहत्य द्रष्टव्यम्। निरवयवद्वये चेति। परमाणोर्निरवयवत्वे तद्द्वयं कथं तद्विलक्षणपरिमाणकं द्व्यणुकं जनयेत् ऋते मायायाः। न चात्र किञ्चिन्निदर्शन-मुपलभामहे। नन्वत्र द्वित्वसंख्यैवासमवायिकारणमिति तस्यास्तज्जनकत्व-मस्त्विति चेत्तत्राह—संख्याया इति। द्वित्वस्येश्वरापेक्षाबुद्धिजन्यत्वात्, पर-मेश्वरापेक्षाबुद्धेश्च नित्यत्वात् संख्याया अपि नित्यत्वापातात्। किञ्च द्वित्वादीनाम-प्यपेक्षाबुद्ध्यात्मकत्वमिति पूर्वमवोचाम इति सर्वस्यैव बुद्ध्यात्मकत्वे सर्वोऽपि

हो जायेगा, तो यह कहना भी उचित नहीं; क्योंकि बाह्य पदार्थों के अनुपगम से ही सभी अनुपपत्तियों की शान्ति सम्भव है। दो निरवयव परमाणुओं में उन परमाणुओं के परिमाण से विलक्षण परिमाणयुक्त द्व्यणुक की उत्पत्ति तो वेदान्त-सिद्धान्त-सिद्ध माया ही कर सकती है, अन्य कोई नहीं। तस्मात् एतादृश परमाणुवाद मन्दबुद्धियों का वञ्चना-मात्र है। यदि कहें कि द्व्यणुकगतपरिमाणोत्पत्ति के प्रति परमाणुद्वयगत द्वित्वसंख्या ही कारण है, तो इस प्रकार संख्या को स्थूलपरिमाण का प्रयोजक मानना भी केवल

**काणां स्वगोष्ठीसमय एवेति त्रसरेणोः स्थौल्यानुपपत्तावन्त्यावयविपर्यन्तं तदनुपपत्तिरेव। एतेन परमाणुसमुदायपक्षोऽपि परास्तः। परमाणोरेव निराकृतत्वात्। अतीन्द्रियत्वप्रसङ्गश्च घटादौ तार्किकैरप्यत्र पक्षे समर्थितः। एतादृशरीत्या परमाणुनिराकरणं तत्सिद्ध्यसिद्धिपराहतमिति तु कुशकाशावलम्बनमेवानन्यशरणस्य। भवदभ्युपगतत्वेनैव निराकार्यत्वात्, वक्ष्यते च विकल्पबलाद्व्यवहारोपपत्तिः शून्यवादे।**

**ज्ञानाकारतायामनुभवविरोध इति चेत्, बाह्योऽपि युक्तिविरोधं किन्न पश्यसि? एवं सत्यनिर्वाच्यवादिन एव विजयेरन्निति चेन्नात्रातीव खेदः, ते ह्यस्माकं सतीर्थ्याः, बाह्याभिनिवेशिनो भवतस्तु पराजय एव। प्रबलयुक्ति-**

**वक्ष्यते चेति। तथा च विकल्पोपनीतपरमाणोर्निराकरणसम्भव इति भावः। सतीर्थ्या इति। अनिर्वाच्यवादिषु शून्यवादिनां विज्ञानवादिसतीर्थ्यत्वं तावत्स्पष्टम्, वेदान्तिनामपि**

व्यवहारो बुद्ध्यैव निर्वाह्यतां कृतमन्येन। किञ्च सर्वत्र कारणमहत्वमुपेक्ष्य संख्ययैव महत्वमुत्पाद्यताम्। अनुभवविरोधमादाय समाधाने तु मूर्तस्य निरवयवत्वेऽप्यनुभवविरोध इत्यत्रापि किमिति न दृष्टिर्निपात्यते। न च स्थितिहेतुकादृष्टस्य नाशात् संख्यानाश इति वाच्यम्, अदृष्टस्य पूर्वसत्त्वासत्त्वाभ्यां प्रत्यादेशात्। वक्ष्यते च प्रपञ्चानुपादानत्वम्, तेन कस्यचिद् योगीश्वरस्यापेक्षाबुद्धिमाश्रित्य तत्समाधानमवधीरणीयम्। अत एवोक्तम्—स्वगोष्ठीसमय एवेति। तत्सिद्ध्यसिद्धिपराहतमिति। परमाणुसिद्धौ भुक्तमितिन्यायेन तन्निराकरणमशक्यम्, तदसिद्धौ तु कस्य निराकरणमित्युभयथा व्याहतिः। कुशेति। कुशः काशश्च तृणविशेषः। यथा जले निमज्जतः कुशाद्यालम्बनेनोद्धारो न सम्भवति, कुशादीनामतिलघुत्वात्

तार्किक समाजसिद्ध ही है, अतः त्रसरेणु के स्थूल परिमाण के अनुपपन्न होने से घटादिरूप अन्त्यावयवीपर्यन्त स्थूल परिमाण की अनुपपत्ति ही है। इससे परमाणुसमुदाय पक्ष भी निरस्त हो गया, क्योंकि परमाणु ही निराकृत हो चुका है। इस परमाणु समुदायत्व पक्ष में प्रसक्त घटादि में अतीन्द्रियत्वापत्ति तो तार्किकों से भी अनुमोदित है।

यदि कहें कि एतादृशप्रकारेण परमाणु निराकरण तो परमाणु की सिद्धि एवं असिद्धि के द्वारा पराहत है अर्थात् यदि परमाणु सिद्ध है तो दूषण क्या करेगा, जैसे, 'भुक्तवन्तं मा भुङ्क्था किं तेन कृतं स्यात्' (जैसे कि जो खा चुका है उसके लिए यह कहना कि 'मत खाओ' व्यर्थ है, वैसे ही परमाणु के सिद्ध होने पर दोष देना व्यर्थ है) और यदि परमाणु सिद्ध नहीं है तो दोष किसमें देगें, उभयथा भी दोष देना व्याहत है तो यह कथन अनन्यशरण के लिए कुशकाशावलम्बन के सदृश है। आप के द्वारा अङ्गीकृत होने मात्र से ही निराकार्य हो जायेगा, तथा विकल्पवृत्तिबलात् भी व्यवहारोपपत्ति का कथन शून्यवाद में करेंगे।

**विरोधे च बाह्यप्रतीतिर्ज्ञानाकारमेव भेदमुल्लिखन्ती समर्थ्यमाना न कामपि क्षतिमावहति, चिन्तितञ्च बहिष्ट्वम्, बुद्धिस्त्वमूर्ता भवतोऽपि सम्मतेति न तस्याः परमाणुवत्खण्डनभागिता ।**

**एवं विमतं ज्ञानाभिन्नं ज्ञानाविषयकप्रतीत्यविषयत्वादित्यपि 'सहोपलम्भ-**

**त्वस्त्येव तत्, उभयेषामपि प्रत्येकं नारायणात्मनो बुद्धात्मनश्च विष्णोः शिष्यत्वात् । शाक्यबुद्धस्य न विष्ण्ववतारत्वमपि तु त्रिपुरदैत्यवधकालोत्पन्नस्यान्यस्यैव, तेनैव कलि-पर्यन्तं स्थितेन सौगतमतसूत्रपातसम्पादनम्, सर्वेषामपि विचाराणां वस्तुतोऽनादितया सुगतमतानुगतानां तेषां प्रचारणमेव वा, शाक्येन तु पश्चात्तद्वर्धनमेव कृतमित्युपगमेऽपि बाह्यखण्डनकर्तृत्वसाम्येन सतीर्थ्यत्वोक्तिर्न विरुद्ध्यते, लक्षणया सदृशेऽपि सतीर्थ्यशब्द-प्रयोगात् । बाह्यखण्डनं पुनरनिर्वाच्यत्वस्य ज्ञानाकारत्वस्य वा सिद्धये इत्यन्यत् ।**

तथा परमाणुस्वीकारे निरुक्तदोषाणां समुद्धरणासम्भव इति दोषसागरे निमज्जत-स्तव कणभक्षतनयस्योद्धारो न सम्भवतीति भावः । बुद्धिस्त्वमूर्तेति । परिच्छिन्न-परिमाणवत्त्वाभावात् क्रियावत्त्वाभावाच्च ।

ज्ञानाभेदसाधकं द्वितीयमनुमानमुत्थापयति—एवमिति । विमतमिति । विपदस्य विरुद्धोभयकोटिकत्वार्थकत्वेन विप्रतिपत्तिविशेष्यमित्यर्थः । तत्र विप्रति-पत्तिमात्रस्य निवेशे ज्ञानमादाय सिद्धसाधनं स्यात् । घटादिमात्रविशेष्यकविप्र-तिपत्तिनिवेशे च न ज्ञानातिरिक्तमात्रस्य ज्ञानाभिन्नत्वसिद्धिः । यदि ज्ञानभिन्न-विशेष्यकविप्रतिपत्तिस्तर्हि घटो घटो न वेतिवज्ज्ञानभिन्नं ज्ञानभिन्नं न वेति संशयविषयत्वानुपपत्तेः । तथा च ज्ञानातिरिक्तत्वेनाभिमतत्वावच्छिन्नविशेष्यिका—ज्ञानातिरिक्तत्वेनाभिमतं ज्ञानभिन्नं न वेत्यात्मिकैव ग्राह्या । अत्र विधिकोटिरन्येषां निषेधकोटिर्विज्ञानवादिनाम् । ज्ञानाभिन्नमिति । ज्ञानत्वावच्छिन्नप्रतियोगिताक-

यदि कहें कि ज्ञानाकारता में अनुभव विरोध है तो बाह्य में युक्तिविरोध क्यों नहीं देखते । यदि कहें कि बाह्यपदार्थ में युक्तिविरोध स्वीकार करने पर अनिर्वचनीयवादी का ही विजय होगा; तो यह हमें विशेष खेदकर नहीं, क्योंकि वे हमारे ( विज्ञानवादी ) सतीर्थ्य है । बाह्याभिनिवेशी ( बाह्यास्तित्वदुराग्रही ) आपका तो पराजय हो गया । और प्रबलयुक्तिविरोध होने पर बाह्यविषयक प्रतीति भी ज्ञानाकार विशेष को विषय करती है, ऐसा मानने से कोई हानि नहीं है । बहिष्ट्व के विषय में विचार किया जा चुका है । बुद्धिगत अमूर्तत्व आपको भी अभिमत है, अतः परमाणु के समान वह खण्डनीय नहीं है ।

## ज्ञानज्ञेय-एकता में द्वितीयानुमान

एवं 'सहोपलम्भनियमादभेदो नीलतद्धियोः' [ ज्ञानज्ञेय के नियत सहोपलम्भ ( साथ में उपलब्धि ) से नील-नीलज्ञान का अभेद है ] इस बौद्धोक्ति से निःसृत 'विमतं

**नियमादभेदो नीलतद्धियो' रिति बौद्धोक्तेर्विनिःसृतं समर्थनीयम्, तदविषयक-प्रतोत्यविषयस्य तदात्मकतादर्शनात्, न च रूपप्रभयोर्भेदेन व्यभिचारः, प्रभाया**

भेदवत्वात्यन्ताभाववत्। तेन यत्किञ्चिज्ज्ञानव्यक्तिप्रतियोगिताकभेदमादाय न बाधः। न वा तद्भेदप्रतियोगिकभेदमादाय ज्ञानातिरिक्तस्य भेदत्वेनभेदात्मकत्वा-भावेन तद्भेदसत्त्वात् सिद्धसाधनम्। एवञ्च ज्ञानभेदस्य विकल्पोपनीतत्वान्ना-प्रसिद्धिरपि। अत्यन्ताभावोऽपि स्वरूपसम्बन्धावच्छिन्नभेदत्वावच्छिन्नप्रतियो-गिताको बोध्यः। तेन न कालिकसम्बन्धेन काल तादृशभेदस्य सत्त्वेऽपि काला-द्यंशमादाय बाधः। नवोभयाभावमादाय सिद्धसाधनम्। ज्ञानाविषयकेति। प्रकृता-भिप्रायेण ज्ञानपदमुपात्तम्। हेतुस्तु तदविषयकप्रतीत्यविषयत्वमेव, अतएवाग्रे तदविषयकप्रतीत्यविषयस्य तदात्मकतादर्शनादित्युक्तम्। तन्निष्ठविषयत्वानिरूपक प्रतीतिविषयत्वात्यन्ताभाववत्त्वमित्यर्थः। अत्यन्ताभावश्च तादृशविषयतात्वा-वच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः। तेन नोभयाभावमादाय सम्बन्धान्तरमादाय वा तादृशविषयताश्रये पटादावत्यन्ताभावसत्त्वात्तत्र व्यभि-चारप्रसक्तिः। हेतुतावच्छेदकसम्बन्धश्च स्वरूपसम्बन्धस्तेन स्वविषयकज्ञान-वत्त्वसम्बन्धेन हेतुमादाय न स्वरूपासिद्धिः। अत्र ज्ञानपदेन घटज्ञानमादाय ज्ञाना-विषयिणीप्रतीतिः = पटमहं जानामीत्यात्मिका, तदविषयत्वं घटे पक्षे, ज्ञान-सामान्यमादाय च ज्ञानात्मके दृष्टान्ते समन्वयः। अत्र नञ एकैकानुपादाने साधन-विकलतादृष्टान्तस्य, एकदैवोभयोरनुपादाने तु ज्ञानविषयकप्रतीतेः ज्ञानमात्रविषय-कत्वेन घटादेस्तदविषयत्वात् स्वरूपासिद्धिरित्युभयोरुपादानम्। ज्ञानविषयत्व-न्तूक्तं प्राक्। न च ज्ञानत्वमुपाधिस्तस्य साधनव्यापकत्वात्। विक्षेप च सहोप-लम्भनियमाभावो बाधकः। नापि विरुद्धो विकल्पोपनीतज्ञानभिन्ने विपक्षे हेतोर-वृत्तेः। अत एव न व्यभिचार इत्याह—तदविषयकप्रतीत्यविषयस्येति। ज्ञाना-न्तर्भावेण व्याप्तिग्रहः।

ननु रूपभिन्नायाः प्रभाया रूपाविविषयकप्रतीत्यविषयत्वात् तत्र व्यभि-चार इति चेत्तत्राह—न चेति। न हीत्यर्थः। तत्र हेतुमाह—प्रभाया इति। ननु 'भूतले घट' इत्यादिप्रतीतिविषययोराधाराधेयत्वाद्योः परस्पराविषयकप्रतीत्य-विषयत्वेऽपि परस्परात्मताभावात्तत्र व्यभिचार इत्याह—नन्विति। नन्वाधाराधेय-

ज्ञानाभिन्नं ज्ञानाविषयक प्रतीत्यविषयत्वात्' (विवादास्पद ज्ञेयपदार्थ ज्ञान से अभिन्न है ज्ञानाविषयक प्रतीति का अविषय होने से) इत्याकारक अनुमान भी समर्थनीय है, क्योंकि जो तदविषयक प्रतीति का अविषय होता है, वह तादात्मक देखा जाता है।

यदि कहा जाय कि रूप एवं प्रभा का भेद होने से प्रभा में रूपाविषयक प्रतीत्य-विषयत्व हेतु के रहने पर भी रूपाभिन्नत्व साध्य के न रहने से व्यभिचार है तो यह

**रूपाविषयकप्रत्यक्षाविषयत्वेऽपि रूपाविषयकशाब्दादिविषयत्वदर्शनेन तदविषयकप्रतीतिविषयतासामान्याभावस्याभावात् । नन्वाधाराधेयत्वाद्योस्तुल्यवित्तिवेद्यत्वेन तत्र व्यभिचारः, यदि चाधारादिपदजन्योपस्थितिविषयत्वस्याधेयत्वादावदर्शनेन न परस्पराविषयकप्रतीतिविषयत्वसामान्याभाव इत्युच्यते, तदा ज्ञानपदाधीनोपस्थितेर्ज्ञानसामान्यविषयिकाया अपि घटादिविषयकत्वाभावेन घटादावपि स्वविषयकज्ञानाभेदो न सिद्धयेत्, प्रतीतिशब्देनानुभवमात्रविवक्षणेऽपि ज्ञानमस्तीत्यादिवाक्यजानुभवस्यापलापासम्भवेनोक्तदोष एव, न च ज्ञानमस्तीति बोधस्य स्वमात्रावगाहित्वम्, नतु सामान्यतोऽपि 'अयं घट' इत्यादिज्ञानान्तरा-**

**न तु सामान्यतोऽपीत्यादि । तथा च ज्ञानमस्तीत्यत्र घटस्येव तज्ज्ञानस्याप्यभाने तयोः परस्पराविषयकप्रतीत्यविषयत्वं निर्बाधमिति भावः ।**

त्वाद्योः परस्पराविषयकप्रत्यक्षाविषयत्वेऽपि आधारादिपदजन्योपस्थितिविषयत्वस्याधारत्वादावेव सत्त्वान्न व्यभिचार इत्याह—यदीति । अथ प्रतीतिशब्देन नोपस्थितिर्विवक्षिताऽपित्वनुभव एव, तथा च नोक्तदोष इति चेत्तत्राह—प्रतीतिशब्देनेति । उक्त दोष एवेति । घटादावपि स्वविषयकज्ञानाभेदासिद्धिः । ज्ञानमस्तीतिवाक्यजानुभवस्यापि ज्ञानसामान्यविषयकत्वेन घटादिविषयकत्वाभावात् । स्यादेतत् ज्ञानमस्तोति वाक्यजज्ञानस्य घटाविषयकत्वमिव घटज्ञानाविषयकत्वमपीति घटाविषयकं=निरुक्तवाक्यजन्यज्ञानं, तदविषयत्वस्य घटे सत्त्वान्नोक्त दोषः, एवं ज्ञानमस्तीति वाक्यजज्ञानाविषयकम्=अयं घट इत्यादिज्ञानं तद-

कथन युक्त नहीं; क्योंकि प्रभा के रूपाविषयक प्रत्यक्षाविषय होने पर भी रूपाविषयक शाब्दबोधादि विषयता के प्रभा में रहने से तदविषयक प्रतीति विषयता सामान्याभावरूप हेतु प्रभा में नहीं हैं । अतः व्याभिचार नहीं है ।

शंका—आधारत्व आधेयत्वादि के समान वित्तिवेद्य होने से उन ( आधारत्वादि ) में व्यभिचार हैं । (आधारत्वाविषयक प्रतीत्यविषयत्व आधेयत्व में है और आधारत्वाभिन्नत्व साध्य नहीं है । अतः व्यभिचार है एवं आधारत्व में भी) यदि कहें कि आधारादि पदजन्य उपस्थिति विषयत्व के आधेयत्वादि में न देखे जाने से परस्पराविषयक प्रतीतिविषयत्व सामान्याभाव उन दोनो में नहीं है । अतः व्यभिचार नहीं है, तो ऐसी स्थिति में ज्ञानपदाधीन उपस्थिति के ज्ञान सामान्यविषयक होने पर भी घटादि विषयक न होने से घटादि में भी स्वविषयक ज्ञानाभेद सिद्ध न होगा । यदि प्रतीति शब्द से अनुभव मात्र की विवक्षा की जाय, तथापि 'ज्ञानमस्ति' इत्यादि वाक्यजन्य अनुभव के अनपलपनीय होने से पूर्वोक्तदोष ( घटादि में स्वविषयक ज्ञानाभेदासिद्धि ) रह जायेगा । यदि कहा जाय कि 'ज्ञानमस्ति' इत्याकारक अनुभव स्व ( ज्ञानव्यक्ति ) मात्र विषयक है, न कि 'अयं घट' इत्यादि ज्ञानान्तरावगाही, तो यह कहना ज्ञानज्ञेयों की ऐक्य सिद्धि के

वगाहित्वमिति वाच्यम्, ज्ञानज्ञेयैक्यसिद्धिं विनैवं वक्तुमशक्यत्वात्, ज्ञानविषयत्वेनैव ज्ञानाभेदसाधने चास्यानुमानस्य निष्फलत्वात्, तस्मात्प्रतीतिः प्रत्यक्षरूपैव विवक्षणीया, तत्र च तमसो रूपवद्द्रव्यत्वपक्षस्यैव यौक्तिकत्वेन प्रभाऽ-

## तमश्चर्चा

तमसो रूपवद्द्रव्यत्वपक्षस्यैव यौक्तिकत्वेनेति । प्रौढप्रकाशयावत्तेजोऽभावो न तमः, तारतम्यस्य तमस्युपलभ्यमानस्य भावधर्मत्वात् । अथ तादृशतेजोऽभावाधिकरणेऽप्रौढप्रकाशतेजस्तारतम्येनैव तमस्यापाततस्तारतम्यव्यवहार इति चेत्तथापि निद्रां त्यजतः सहसैव निशीथे उन्मीलितलोचनस्य तमः प्रत्यक्षमुपजायमानं नाभावविषयकं शक्यते वक्तुम् । प्रतियोगितावच्छेदकप्रौढ प्रकाशतेजस्त्वप्रकारकज्ञानस्य तदानीमभावात् । अभावज्ञाने प्रतियोगितावच्छेदकप्रकारकज्ञानस्य न कारणत्वमपि तु तत्कारणानामेवाभावज्ञाने प्रतियोगितावच्छेदकरूपेण प्रतियोगिविषयकत्वप्रयोजकत्वमिति मतेनापि नात्र प्रत्यवस्थानसम्भवः, तमोबोधेऽपि तदा प्रौढप्रकाशतेजस्त्वावच्छिन्नप्रतियोगिताविषयकत्वाभावात् । एवं जागरायामपि लब्धुं शक्यमीदृशं तमःप्रत्यक्षोदाहरणम् । न चेदृशस्थलेषु तमोरूपाभावस्य निर्विकल्पक एव बोधः, अभावत्वेन रूपेणाभावस्य सविकल्पकनियमेऽपि स्वरूपतो निर्विकल्पकवेद्यत्वस्यापि सम्भवादिति वाच्यम्, तमः पश्यामीति प्रत्ययस्य तदा जायमानस्य निर्विकल्पकेनानिर्वाह्यत्वात् । तस्माद्विवर्तवादे निरूपयिष्यमाणमूलशक्तिविलासीभूतप्रकृतेरवस्थैव काचिद्रूपवती तम इति युक्तम् । एवं च तत्र नैल्यप्रतीतेर्भ्रमत्वमपि न वक्तव्यमापद्यते । नन्वस्तु पृथिवीछायैव तमः, न चैवमन्तरिक्षे तमःप्रतीतिर्न स्यादिति वाच्यम्, प्रभाया इव च्छायाया अपि प्रसृत्वरद्रव्यताया वक्तुं शक्यत्वात् । वृक्षादेस्तु यावति देशे पृथिव्यामालोकसम्बन्धप्रतिबन्धकता तावति देशे व्यवह्रियमाणा छाया वस्तुतः पृथिव्या एव भवन्ती तादृशप्रतिबन्धकतामादायैव वृक्षादेर्व्यवह्रियत इति चेन्न, पृथिव्या अभावदशायामपि 'तम आसीत्तमसा गूढमग्रे' (ऋ०) 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्' (मनु०) इत्यादौ तमोवर्णनात् । अथ न तत्रान्धकारपरस्तमःशब्दः किन्त्वर्थान्तरपर इतीष्यते, तथापि प्रलयदशायामालोकाभावेऽपि नान्धकारसद्भाव इति न बुद्धावारोहयितुं शक्यते । 'नासीत्तमो ज्योतिरभून्न चान्यद्' इत्यादिकं तु वचः प्रलये सुषुप्त्यादाविव सतोऽपि तमसोऽदर्शनाभिप्रायेण कथञ्चिदेव नेतव्यम् । प्रकृतेरवस्थापि चेयमालोकाऽऽगमे नश्यति तदपसारणे च त्वरयैवोत्पद्यते इत्येतदपेक्षया नैसर्गिक्या अस्या आलोकाऽऽगमेन प्रतीतिप्रतिबन्ध एव

विषयत्वस्य दृष्टान्ते सत्त्वान्नापि साधनवैकल्यमपीत्याशयेनाशङ्क्य परिहरति—

बिना सम्भव नहीं; यदि ज्ञानविषयत्व हेतु से ही ज्ञानाभेद साधन करें तो यह ज्ञानाविषयकप्रतीत्यविषयत्व हेतुक अनुमान व्यर्थ हो जायेगा, अतः प्रतीति शब्द से प्रत्यक्षात्मक प्रतीत्ति ही संग्राह्य होगी ऐसी स्थिति में प्रभा में व्यभिचार दुर्वार है क्योंकि तम को रूपवद्द्रव्य मानना ही युक्तिसंगत होने से प्रभा अविषयक प्रत्यक्षविषयत्व के रूप

विषयकप्रत्यक्षविषयत्वस्य रूपे दर्शनेऽपि रूपाविषयकप्रत्यक्षविषयत्वस्य प्रभायामभावेन व्यभिचारो दुर्वारः, रूपं च तत्प्रभाया वाऽन्यस्य वेत्यन्यत्, एवं यस्य यूकादेः शरीरविशेषप्रत्यक्षविषयत्वं नियतं तत्रापि व्यभिचार इति चेन्न, विशिष्य तज्ज्ञानाविषयकप्रतीत्यविषयत्वे तज्ज्ञानाभेदनिरूपितायास्तज्ज्ञानेऽवगताया व्याप्तेर्विवक्षायामदोषात्, अनुकूलतर्कोक्त्याऽप्रयोजकतायाः परिहृतत्वात्। तज्ज्ञानत्वं तु न तज्ज्ञानातिरिक्तमिति न व्यभिचारः।

अथवा तदविषयकज्ञानविषयतायोग्यत्वाभावे तदभेदव्याप्यत्वमिति सामा-

वक्तुं युक्तः प्रतिभाति। आलोके पूर्वमनुभूयमानेऽपि योगैश्वर्येण तमःसर्जनव्यवहारस्त्वालोकापसारणनिबन्धनोऽपि स्यात्। एवं नैसर्गिकस्य प्रतीतिमात्रप्रतिबन्धे आलोकेनेव तमसो ब्रह्मज्ञानेनाज्ञानस्य विलय इत्यौपनिषदानामभिधानमसमञ्जसं स्यादिति चेदत्र विवर्तवादे प्रतिवक्ष्याम इति।

अप्रयोजकतायाः परिहृतत्वादिति। विशेषव्याप्तावप्रयोजकत्वशङ्का तावत्सत्वरमेव मतिं व्याकुलीकरोति, घटादेस्तज्ज्ञानभिन्नत्वे तज्ज्ञानविषयत्वाभावापादनेन तत्परिहारे त्वापाद्याभावेन तज्ज्ञानविषयत्वेनैवाभेदसाधनसम्भवेन प्रकृतहेतोरकिञ्चित्करत्वमित्यस्वरसादाह अथवेति।

ज्ञानज्ञेयैक्यसिद्धिमिति। प्रभायामभावेनेति। एवं सत्यपि परस्पराविषयकप्रत्यक्षविषयता तु नास्तीत्येवं न प्रत्यवस्थानमुचितम्, परस्परत्वस्यानुगतस्याभावादिति भावः। ननु तज्ज्ञानभिन्ने तज्ज्ञानत्वे तज्ज्ञानाविषयकप्रतीत्यविषयत्वसत्त्वात्तत्र व्यभिचार इति चेत्तत्राह—तज्ज्ञानत्वमिति। तज्ज्ञानत्वस्यातद्व्यावृत्तिरूपस्य तज्ज्ञानरूपत्वात्।

ज्ञानाभिन्नत्वे हेत्वन्तरमाह—अथवेति। अस्वरसस्तु टीकोक्तो बोध्यः। तदविषयकेति। तदा ज्ञानपरामर्शः। तन्निष्ठविषयत्वानिरूपकज्ञानविषयता-

में रहने पर भी रूपाविषयक प्रत्यक्षविषयत्व प्रभा में नहीं है। रूप चाहे प्रभा का हो या अन्य का। एवं जिस यूका में ( जूँ या, ढील ) शरीर विशेष प्रत्यक्षविषयत्व नियत है, उस ( यूका ) में भी व्यभिचार है।

समाधान—तज्ज्ञानाविषयक प्रतीत्यविषयत्व में तज्ज्ञानाभेदनिरूपित विशेषव्याप्ति—जो कि तज्ज्ञान में गृहीत है, मानने से दोष नहीं है। ( इस कल्प में 'विमतं तज्ज्ञानाभिन्नं तज्ज्ञानाविषयकप्रतीत्यविषयत्वात् तज्ज्ञानवत्' इत्याकारक अनुमान होगा ) इसमें अनुकूल तर्क के कथन से अप्रयोजकत्वशंका निरस्त हो चुकी है तथा तज्ज्ञानत्व के तज्ज्ञानातिरिक्त न होने से व्यभिचार भी नहीं है।

अथवा तदविषयकज्ञानविषयतायोग्यत्वाभाव में तदभेदनिरूपित सामान्य व्याप्ति ही मन्तव्य है। जैसे तदविषयक ज्ञान = ज्ञानाविषयकज्ञान अर्थात् पटमहं जानामि इत्या-

न्यत एव वक्तव्यम्, योग्यतावच्छेदकं तु तदवृत्तित्वविशिष्टधर्मवत्त्वम्, यूकविशेषादौ चैतदक्षतमिति न व्यभिचारः। भूतले घट इत्यादिप्रतीतिविषयस्याधाराधेयभावस्य तु विषयविषयिभाववदखण्डत्वमेवोचितमित्यपि ध्येयम्। नचैवं पक्षे हेतुमत्तासन्देहः, बाह्यस्य निरस्ततया स्थौल्यादेर्विकल्पात्मकत्वस्यैव वक्तव्यतया

हेतुमत्तासन्देह इति। ज्ञानावृत्तित्वविशिष्टस्थौल्यादेर्घटादौ विरहस्यानिश्चयेन तदवृत्तित्व विशिष्टधर्मवत्त्वाभावस्य पर्यवसितहेतोस्तदभेदरूपसाध्यसमानयोगक्षेमत्वादिति भावः।

योग्यतात्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः। तथा च ज्ञानाविषयकं ज्ञानं=पटमहं जानामीत्याकारकं पटज्ञानं, तद्विषयत्वयोग्यता पटे तदभावश्च घटाद्यात्मके पक्षे हेतु सङ्गतिः। एवं ज्ञानसामान्येऽपि तदभावसत्त्वात् दृष्टान्तसङ्गतिः। व्यापकघटकतच्छब्देन घटज्ञानं ग्राह्यम्। ननु या या योग्यता सा सा किञ्चिद्धर्मावच्छिन्नेति नियमात् तदविषयक ज्ञानविषयतायोग्यता किञ्चिद्धर्मावच्छिन्ना इत्यस्य प्राप्ततया नावच्छेदकज्ञानं विना योग्यता ज्ञानं, तथा च न तदभावज्ञानमपीत्यत आह—योग्यतावच्छेदकमिति। समानाधिकरणयोः पदार्थयोरवच्छेद्यावच्छेदकभावस्य सर्वानुभवसिद्धतया स्थिरस्यावच्छेदकत्वं कल्पितस्यावच्छेद्यत्वमिति नियमेन योग्यताया अवच्छेद्यत्वं तदवृत्तित्वविशिष्टधर्मस्यावच्छेदकत्वम्। ज्ञानावृत्तिधर्मवत्त्वमिति तु नोक्तम्, तथा सति साधनवैकल्याद्यापत्तेः।

न च शरीरविशेषप्रत्यक्षविषयत्वनियते यूकविशेषादौ व्यभिचारः; शरीरावृत्तित्वविशिष्टयूकत्वधर्मस्य तत्र विद्यमानत्वेन प्रकृतहेतोरभावादित्याह—यूकविशेषादाविति। तदवृत्तित्वविशिष्टधर्मवत्त्वमित्यत्र तद्वृत्तित्वञ्च तन्निष्ठाधिकरणतानिरूपितनिरूपकत्वम्, तच्च योग्यतावच्छेदकतावच्छेदकसम्बन्धेन विवक्षणीयम्, तेन कालिकविशेषणतादिना यूकत्वस्य शरीरादौ विद्यमानत्वेऽपि न क्षतिः। न वा विषयितासम्बन्धेन घटत्वादेः ज्ञाने सत्त्वेऽपि तादृशधर्माप्रसिद्धिः। सर्वेषाञ्च धर्माणां विकल्पात्मकत्वात् तद्विरहस्यापि घटादौ विद्यमानत्वेन न पक्षधर्मताहानिः। तदधिकरणनिरूपितवृत्तित्वाभावश्च वृत्तित्वसामान्याभावो बोध्यः। तेन तादृशवृत्तित्व-घटत्वोभयत्वावच्छिन्नाभावस्य ज्ञानत्वे सत्त्वेऽपि न निदर्शनस्य साधनवैकल्यम्।

आधारत्वादौ प्रोक्तं व्यभिचारमुद्धरति—भूतले घट इति। अखण्डत्वमेवो-

कारक पटज्ञान, तादृश ज्ञानविषयता योग्यता पट में है, न कि घट में, अतः घटरूपपक्ष में तादृश योग्यत्वाभाव है वह वहाँ तदभेद ( ज्ञानाभेद ) को सिद्ध करेगा। योग्यतावच्छेदक तो ज्ञानावृत्तित्वविशिष्टधर्मवत्त्व है। उसके यूकविशेष में विद्यमान रहने से व्यभिचार नहीं है। यहाँ तादृशधर्म यूकात्व है। भूतले घट इत्यादि प्रतीतिविषयीभूत आधाराधेयभावको विषयविषयिभाव के समान अखण्ड धर्म मानना ही उचित है। पक्ष में हेतुमत्ता सन्देह

**पक्षधर्मतानिश्चयादिति। न चायं घट इतिव्यवहारापलापः, घटमहं जानामीतिज्ञानावगाहिन एव भवता व्यवहारस्य वाच्यत्वादिति वाच्यम्, घटं जानामीत्येवानुभवेऽपि घटोऽयमिति व्यवहारे बाधकाभावात्। घटोऽयमित्यनुभवस्यापि शपथेन निर्णये तु श्रीरामानुजानुयायिनामिवास्माकमपि तत्र स्वरूपतो ज्ञानभानाभ्युपगमसम्भवात्; जात्यखण्डोपाध्यतिरिक्तस्य न स्वरूपतो भानमित्यस्य परिभाषामात्रत्वात्।**

**ननु तत्तदाकाराविशेषितरूपेण ज्ञानस्योत्पत्त्याद्यननुभवाल्लाघवाच्च ज्ञान-**

घटं जानामीत्येवानुभवेऽपीति। अयं घट इति जानामीत्यस्याप्युपलक्षणमिदम्।

चितमिति। खण्डश आधारत्वादेस्तत्पतनप्रतिबन्धकत्वादिरूपस्य खण्डनादौ बहुशः क्षुण्णत्वात्। ननु घटमहं जानामीत्यस्यैवाकारविषयत्वादयं घट इत्यस्य तदभावात् साकारवादिनस्तवायं घट इति व्यवहार एवापलप्येतेत्याह—न चेति। बाधकाभावादिति। विकल्पबलादपि व्यवहारस्योपपत्तेर्वक्ष्यमाणत्वात्। शपथेनेति। शपथः सत्यतानिर्धारणार्थं प्रतिज्ञाविशेषः। यथा—एतद् यदि मिथ्या स्यात् तदा मे एतदनिष्टं स्यादित्यादि। परिभाषामात्रत्वादिति। जात्यखण्डोपाध्यतिरिक्तस्याप्याकाशस्याकाशपदात्स्वरूपतो भानाभ्युपगमात्। अत एव—घटादिपदाच्छिद्रेतरत्वादेरन्वयावगमो मा भूदिति वृत्त्या शब्दोपस्थापितेनैव शब्दस्यान्वयबोधकताया उपेयत्वे कथमाकाशपदशक्यत्वतदवच्छेदकत्वाभ्यां विधुरस्य शब्दाश्रयत्वस्य तत्पदजन्यबोधीयविषयतेत्याशङ्क्य 'अस्तु वा पदादपि निर्विकल्पकमिति' शब्दमणावभाणि मणिकारेण स्वयमेव। उट्टङ्कितश्चैतच्छक्तिवादगादाधर्यां गदाधरभट्टाचार्येणापि।

वेदान्तिना सहकलहमुत्थापयति—नन्विति। नन्वेवं सति ज्ञानज्ञेययोरैक्यमप्युपपादितं त्यक्तव्यं भविष्यति, उत्पत्त्यादिनाऽनुभूयमानज्ञेयस्य नित्यैकव्यापक-

भी सम्भव नहीं; क्योंकि बाह्य पदार्थों के निरस्त हो जाने से स्थूलत्वादि भी विकल्पात्मक ही वक्तव्य है, अतः पक्षधर्मता हेतु में निश्चित ही है। यदि कहें कि अयं घट इत्याकारक व्यवहार का अपलाप हो जायेगा, क्योंकि आपके द्वारा घटमहं जानामि इत्याकारक ज्ञानावगाही व्यवहार ही मन्तव्य है; तो यह कथन उचित नहीं; क्योंकि घटमहं जानामि इत्याकारक अनुभव मानने पर भी घटोऽयम् इत्याकारक व्यवहार में कोई बाधक नहीं है। यदि शपथपूर्वक 'घटोऽयम्' इत्याकारक अनुभव ही माने तो हमारे मत में भी श्रीरामानुज अनुयायियों के समान उस अनुभव को स्वरूपत ज्ञान का भान मान लिया जा सकता है। 'जात्यखण्डोपाध्यतिरिक्तस्य न स्वरूपतो भानम्' ( जाति अखण्डोपाधि से अतिरिक्त का स्वरूपत भान नहीं होता ) यह नियम तो परिभाषा ( स्वीयसंकेत ) मात्र है।

**स्यैकत्वं नित्यत्वं व्यापकत्वञ्चास्थाय वेदान्तिना सन्धीयताम्, विषयस्यानिर्वाच्यताया एव शक्यवचनत्वादिति चेन्न, निराकारज्ञानस्यानुभवबाधितत्वेन लाघवादेरकिञ्चित्करत्वात्। किञ्च तादृशं ज्ञानं कालासम्बन्धि वा तत्सम्बन्धि वा, आद्येऽलीकत्वप्रसङ्गः, द्वितीये तु पूर्वक्षणवृत्तित्ववैशिष्ट्यस्योत्तरक्षणवृत्तित्ववैशिष्ट्येन विरोधोऽस्ति न वा, आद्ये यत्पूर्वक्षणवृत्तित्वविशिष्टं तन्नोत्तरक्षणवृत्तित्वविशिष्टमिति कथं नित्यत्वादिकम्। द्वितीये तु पूर्वक्षणवृत्तित्वविशिष्टं ज्ञानमेतत्क्षणवृत्तित्वविशिष्टमितिज्ञानस्य प्रमात्वापत्तिः, न चैतत्पूर्वक्षणस्यैतत्क्षणदशायामविद्यमानत्वे शक्यमुररीकर्तुम्। अवच्छेदकभेदेनाविरोध इति चेन्नूनमस्वस्थोऽसि, येन भूयः श्रावितमप्यनवस्थादिकं न स्मरसि। पूर्वक्षणवृत्तित्वो-**

ज्ञानात्मकतानुपपत्तेरित्यत आह—विषयस्येति। निराकारज्ञानस्येति। ज्ञानगतनिराकारत्वस्य। यथाऽनुमिनोम्युपमिनोमीत्यादिप्रतीतिसिद्धा अनुमितित्वोपमितित्वादयो धर्माः ज्ञानगता एव, तथैव घटमहं जानामीत्यनुभवसिद्धा घटाद्याकारताऽपि ज्ञानस्यैवाकारविशेषः। तथा च निरूक्तानुभवबाधितं ज्ञानस्य निराकारत्वमिति भावः। ज्ञानस्य नित्यत्वं निराचष्टे—किञ्चेति। आद्य इति। कालासम्बन्धित्वं हि सर्वकालवृत्त्यत्यन्ताभावप्रतियोगित्वं तदेवालीकत्वमपीति ज्ञानस्य तथात्वेऽलीकत्वापत्तिः। न चेष्टापत्तिः, जगदान्ध्यप्रसङ्गात्। नित्यत्वादिकमिति। पूर्वक्षणवृत्तित्वविशिष्टस्योत्तरक्षणवृत्तिध्वंसं प्रति प्रतियोगित्वात्। क्षणत्वं निरूक्तमधस्तात्। अस्वस्थोऽसीति।

## ज्ञान के नित्यत्व का खण्डन

शङ्का—तत्तदाकार से अविशेषितरूपेण ज्ञान के उत्पत्त्यादि का अनुभव न होने से, तथा लाघव होने से ज्ञान को एक नित्य तथा व्यापक मानकर वेदान्ती के साथ सन्धी ( एकवाक्यता ) कर ली जाय।

समाधान—ज्ञानगत निराकारत्व के अनुभव बाधित होने से लाघवादि अकिञ्चित्कर है। दूसरी बात यह है कि तादृश ज्ञान कालासम्बन्धी है या कालसम्बन्धी; प्रथम पक्ष में ज्ञान अलीक हो जायेगा, क्योंकि अलीक ही कालासम्बन्धी होता है। द्वितीय कल्प में—पूर्वक्षण वृत्तित्व वैशिष्ट्य का उत्तरक्षणवृत्तित्ववैशिष्ट्य के साथ विरोध है, या नहीं; यदि विरोध है तो जो पूर्वक्षणवृत्तित्वविशिष्ट है वह उत्तरक्षणवृत्तित्वविशिष्ट नहीं हो सकता, ऐसी स्थिति में नित्यत्व एकत्व एवं व्यापकत्व उसमें कैसे होगा। और यदि द्वितीय पक्ष ( विरोधाभाव ) मानें तो 'पूर्वक्षणवृत्तिविशिष्टं ज्ञानमेतत्क्षणवृत्तित्वविशिष्टम्' इत्याकारक ज्ञान में प्रमात्वापत्ति हो जायेगी। और यह प्रमात्व स्वीकार नहीं कर सकते; क्योंकि एतत्क्षणकाल में पूर्वक्षण विद्यमान ही नहीं है। यदि कहें कि अवच्छेदक भेद से विरोधपरिहारसम्भव है, तो निश्चित ही आप अस्वस्थ है। जिससे कि

**अनवस्थादिकं न स्मरसीति। अधीगर्थदयेशामिति षष्ठी कर्मणः शेषत्वविवक्षायां न त्वन्यथा, अतएव 'षष्ठी शेषे' इत्यनेनैव षष्ठीप्रयोगस्य शेषत्वविवक्षायां निर्वाहेऽपि 'प्रतिपदविधाना षष्ठी न समस्यते' इति समासनिषेधमात्रकृते 'अधीगर्थेति' सूत्रमिति वैयाकरणैरुच्यते, अतएव च 'वाचा निर्मलया सुधामधुरया यां नाथ शिक्षामदाः, तां स्वप्नेऽपि न संस्मराम्यहमहम्भावावृतो निस्त्रपः।' इत्यादौ कवीनां बहुलं द्वितीयाप्रयोगा इतिभावः।**

"समदोषः समाग्निश्च समधातुमलक्रियः।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते॥"
( सुश्रु० सं०, १५।४१ )

इति स्वस्थलक्षणस्य भवत्यभावात्।

अत्र—दोषा वातपित्तकफाः, समाश्चैते यस्य स तथा। समदोषत्वमिदं यद्यपि ऋत्वहोरात्रावस्थानियततत्तद्दोषवृद्धिक्षययुक्तत्वेन नास्ति, तथापि तस्याल्पत्वेनाव्यपदेश्यस्यासम्भवाद् व्यपदेश्यदोषवैषम्यविरहि समदोषत्वमिह गृह्यते, अत एव सुस्थ इत्यभिधीयत इति पारिभाषिकमुत्तेजकदोषवैषम्यविरहि दोषसाम्यं स्वास्थ्यमुक्तम्। सुष्ठु निर्विकारत्वेनावतिष्ठत इति स्वस्थः। समदोषत्वमेव कुतो ज्ञायत इत्याह—समाग्निः समधातुमलक्रिय इति। समाग्निरित्यनेन विषमाग्नितीक्ष्णाग्नी व्यवच्छिद्येते। समाकृती धातूनां मलानाञ्च क्रिया प्राकृतकर्मरूपा यस्य स तथा। अत्र क्रियाग्रहणं समक्रियैव धातुमलानां परोक्षाणां प्रायः साम्यावगतिरिति सूचनार्थम्। धातवः सप्तविधाः रसरक्तमांसमेदोऽस्थिमज्जाशुक्रभेदात्। धातुग्रहणेनोपधात्वादीनाञ्च धारकाणां ग्रहणम्। अग्न्यादिसमतयैव दोषाः समा लक्ष्यन्ते, एतेन दोषसाम्येनैवाग्न्यादिसाम्यस्य लब्धत्वेन तदुक्तिः पुनरुक्तिरिति निरस्तम्। अथ समाग्नित्वाद्यप्यन्तर्वर्तितया दुर्विज्ञेयमिति तत्राह—प्रसन्नात्मेन्द्रियमना इति। आत्मादिप्रसादश्चात्मनि व्यक्त एव। परमात्मनि च सः स्वप्रसन्नतयैव गम्यते। आत्मादित्रयाभिधानञ्च त्रिभिरेव मिलितैर्निर्दुःखताज्ञानरूपप्रसन्नतानुभवात्। यदुक्तम्—'आत्मा ज्ञः करणैर्योगाज्ज्ञानं स्वस्य प्रवर्तते' ( च० शा० अ०, १ ) इति। करणानि च ज्ञाने मनः सहितानीन्द्रियाणि, तेन प्रसन्नात्मेन्द्रियमनस्त्वमेव स्वास्थ्यलक्षणमव्यभिचारीति भिषक् सम्प्रदायः।

वस्तुतस्तु प्रसन्नात्मेन्द्रियमनस्त्वमादाय स्वास्थ्यन्तु तादृशचितिशक्तिस्वीकृतिमन्तरा दुर्घटम्, न हि चिन्नाथपरिरम्भणमन्तरेन्द्रियादीनां प्रसत्तिः। न वा तामन्तरा तत्स्वास्थ्यं सम्भवतीति चरमवादवादिन एव स्वस्था इति तत्रैवावधेयम्। न स्मरसीति। स्मृतिवैकल्ये समदोषाद्यभावो हेतुः। तत्सत्त्वेऽनपायिनी ते सा स्यादिति भावः। ननु न पूर्वक्षणवृत्तित्वं विशेषणमपितूपलक्षणम्,

**पलक्षितमेतत्क्षणवृत्तित्वविशिष्टमिति स्वीकारे न विरोध इति चेदेतत्क्षणवृत्तित्व-विशिष्टं यत् तदेव पूर्वक्षणवृत्तित्वोपलक्षितमिति कथं ज्ञेयम्, उपलक्ष्यतावच्छेद-काज्ञानात्, स्वरूपस्य क्षणान्तरसाधारण्यात् । अहो सिद्धमेतावतैव समीहित-मिति चेदनवसरे प्रमोदोऽयं ते, यतः स्वरूपस्यैकस्य नानाक्षणमेलनासम्भवस्यै-**

उपलक्ष्यतावच्छेदकाज्ञानादिति । काकस्य गृहे उपलक्षणत्वं ह्युत्तृणत्वा-दिकमर्पयतो दृष्टम्, नचात्र पूर्वक्षणवृत्तित्वेन किञ्चिदर्पणीयं पश्याम इति भावः । ननु प्रकृष्टप्रकाशश्चन्द्र इत्यादौ स्वरूपमात्रमप्युपलक्ष्यमाकलितमस्मद्दर्शने, तत्राह स्वरूपस्ये-त्यादि । बहुक्षणसाधारण्यं हि स्वरूपस्य भवताऽभ्युपगतम्, उपलक्षणं च तदेव येनाविद्य-मानेन क्वचित् स्वासम्बद्धाद्व्यावृत्तिमतिः प्रसूयते, पूर्वक्षणवृत्तित्वासम्बद्धं च क्षणान्तर-सम्बद्धतादशायां वस्तुस्वरूपमिति स्वस्मादपि स्वस्य व्यावृत्तौ कथं भवदभीष्टसिद्धिः । न च वाच्यम्—कदाचिदप्युपलक्षणेनासम्बद्धं यत् तस्मादेव तेन व्यावृत्तिः प्रत्याय्यते इति; पूर्वं निमित्तविशेषवशादप्रसक्तवायससंसर्गा अप्यद्यत्वे वायसवन्तो देवदत्तस्य गृहा इत्यनुभवेन तथा नियमनानुपपत्तेः, स्थैर्यपक्षे वायसोपलक्षितत्वकालीना एव हि वायससंसर्ग-प्रसक्तिकालीन अपि गृहाः, येऽत्र व्यावृत्ततया प्रतीयन्ते । अथास्तु स्वस्मादपि स्वस्य व्यावृत्तिः, किन्त्वभेदसमानाधिकरणा सेति चेन्न, भेदाभेदपक्षस्य समुदायनिरासे निरस्त-त्वात् । न च भेदाभेदयोर्विरोधोद्भावने भेदस्याविद्यकत्वेन समाधिरस्तु; अभेदस्यैवाविद्य-कत्वं भेदस्तु परमार्थ इत्येव किन्न स्यात्, नित्यवस्तुनः सिद्धि विना हि नात्र विनिग-मनोपन्यासो मान्यः । न चैकस्मिन् क्षणे ज्ञानेऽभेदो भवताप्यभ्युपगत इति स एव पारमार्थिकः किन्न स्यादिति वाच्यम्, एकस्मिन् क्षणे भेदकस्याप्रसक्ततया तथोपगमोपपत्तावपि चिरस्था-यिन्युक्तरीत्या भेदकप्रसक्त्या तथोपगमासम्भवादित्यभिप्रायः । तमेतमजानान आपाततः प्रतीयमानमर्थमादायैवाशङ्कते अहो सिद्धमिति ।

तस्य चावर्तमानत्वेऽपि व्यावर्तकत्वान्न विरोध इत्याह—पूर्वक्षणेति । सन्दर्भोऽयं टीकायां कृतव्याख्यानः । टीकायाम्—इत्यादाविति । आदिना—

श्रियौ नरेन्द्रस्य निरीक्ष्य तस्य स्मरामरेन्द्रावपि न स्मरामः ।
वासेन तस्मिन्क्षमयोश्च सम्यग् बुद्धौ न दध्मः खलु शेषबुद्धौ ॥
( नैषध०, ३।३६ )

इत्यादीनां परिग्रहः । अत्र 'स्मरामरेन्द्रावित्यत्र कर्मणः शेषत्वेनाविवक्षणाद्

पौनःपुन्येन श्रावित भी अनवस्थादि दूषण आपके स्मृतिपथ में नहीं आ रहे हैं । यदि पूर्वक्षणवृत्तित्वोपलक्षित को एतत्क्षणवृत्तित्वविशिष्ट मानकर विरोधपरिहार करना चाहें तो—जो एतत्क्षणवृत्तित्वविशिष्ट है वही पूर्वक्षणवृत्तित्व से उपलक्षित है' यह कैसे जानें, क्योंकि उपलक्ष्यतावच्छेदक का ज्ञान ही नहीं है । स्वरूप को उपलक्ष्यतावच्छेदक मानना भी सम्भव नहीं; क्योंकि वह क्षणान्तर साधारण है । यदि कहें कि बड़े हर्ष की बात है कि इतने से ही हमारा इष्ट = क्षणिकत्वनिराकरण सिद्ध हो गया, तो यह आपका

वेत्थमभिधित्सितत्वात् । एकदा मा भूत्कालभेदेन तु तत्कुतो न स्यादिति चेद्दत्तोत्तरत्वात्, पूर्वादिक्षणस्य पूर्वादिक्षणावच्छेदेन मेलनोपगमे आत्माश्रयादिप्रसङ्गात्, अन्यथाऽनवस्थानात्, तत्तत्क्षणसम्बन्धानां कालानवच्छिन्नत्वे सर्वेषां सर्वदा प्रतीतेः प्रमात्वस्य दुष्परिहरत्वात् । एवमेव सहकारिभिराधीयमानाति-

दुष्परिहरत्वादिति । तथा च क्षणत्वेनाभिमतानामक्षणत्वप्रसङ्ग इति भावः । कालानवच्छिन्नस्यालीकत्वमते त्वलीकत्वापत्तिरप्यत्रोपक्षेप्तुं शक्यत इति द्रष्टव्यम् ।

आत्माश्रयादिप्रसङ्गादिति । न चादिपदासाङ्गत्यम्, पूर्वक्षणस्य क्षणान्तरावच्छेदेन सम्बन्धशङ्काया एवानुदयेनात्माश्रयातिरिक्तदोषस्यासम्भाव्यत्वादिति वाच्यम्, क्षणिकवस्त्वात्मकतया पूर्वक्षणानामप्यानन्त्यात् परस्पराद्यवच्छेदेन मेलनोपगमेऽन्योन्याश्रयादिसम्भवात् । न चानन्त्ये एक एव पूर्वक्षण इति व्यवहारः कथम्, उपाध्यात्मकतापक्षेऽपि पर्यनुयोगस्यास्य तौल्यात् । प्रतिक्षणं प्रकृतिपरिणामानामप्यानन्त्येन क्षणस्य तदात्मकतापक्षेऽपि दोषसाम्यात् । वाङ्मात्रेण क्षणेऽतिरिक्त पदार्थतायाश्चाश्रद्धेयत्वात् ईश्वरस्य सङ्कल्पः प्रभावो वा काल इत्यत्रापि पूर्वोक्तदोषस्य जागरूकत्वात्, तत्तदन्तर्याम्यात्मना भगवतः प्रभावसंकल्पयोरानन्त्यसम्भवात् । एकक्षणत्वेन व्यवह्रियमाणकाले भगवत एक एव संकल्पो नानार्थगोचर इति तु नियन्तुमशक्यम्, प्रत्युतास्मदादिदृष्ट्याऽनन्तयुगानामपि भगवतः क्रमातिक्रमणपटोरेकक्षणत्वेन सङ्कल्पकवलीकारोपपत्तेरिति कल्पनामात्रप्राणैव कालकलनेति सर्वैरप्यनुमन्तव्यम् । सहकारिभिरिति । अत्राधिकं तत्त्वपदार्थखण्डनशारदाराजहंसयोर्द्रष्टव्यम् ।

'अधीगर्थ' इत्यनेन न षष्ठ्यपितु द्वितीयैव । अक्षणिकस्यार्थक्रियासामर्थ्यं स्वीकृत्य सर्वदाऽर्थक्रियासम्पत्तिपरासनार्थं सहकारिविशेषालम्बनेऽप्यक्षणिकवादः क्षयिष्णुरेवेत्याह—एवमेवेति । सहकारीति । अयंभावः—सलिलपवनादिसहाकारिजन्यो बीजनिष्ठोऽप्यतिशयो भिन्नोऽभिन्नो वेति विमृष्टव्यम् । आद्ये भिन्नो बीजनिष्ठोऽतिशयो बीजेऽतिशयान्तरमुत्पादयति, नोत्पादयति वा । अन्त्ये बीजनिष्ठोऽपि बीजादत्यन्तभिन्नोऽतिशयो बीजेऽतिशयान्तरं नोत्पादयति चेत्तर्हि किं सहकारिजन्यातिशयेन । कुतो वा सहकारिजन्यातिशयोत्पत्तेः पूर्वं बीजान्नाङ्कुरोत्पत्तिः ।

हर्ष अनवसर प्राप्त है क्योंकि एक स्वरूप का नानाक्षणों के साथ मेलन ( सम्बन्ध ) सम्भव नहीं है, यही हमारा ( बौद्धों ) का वक्तुमिष्ट है । यदि कहें कि एकदा भले ही स्वरूपमेलन सम्भव न हो, कालभेदेन तो क्यों नहीं होता, तो इसका उत्तर दिया जा चुका है, पूर्वादिक्षण का पूर्वादिक्षणावच्छेदेन मेलन मानने पर आत्माश्रय दोष आपन्न है और यदि अवच्छेदकान्तर मानें तो अनवस्था दोष आता है । यदि तत्तत्क्षणसम्बन्धों को कालानवच्छिन्न मानें तो सभी पदार्थों की सर्वदा प्रमात्मक प्रतीति दुष्परिहर है । इसी प्रकार सहकारी के द्वारा आधीयमानातिशयविशिष्ट के अपूर्व होनेसे क्षणभङ्गवादका

**शयविशिष्टस्यापूर्वत्वेन क्षणभङ्गोज्जीवनम्। न च सहकारिसमवधानमेवातिशयः तद्विशिष्टस्यैवोक्तरीत्या भेदाभेदादिना च विकल्पोपहतत्वात्। एतेन**

तद्विशिष्टस्यैवोक्तरीत्येति। समवहितत्वं हि सामानाधिकरण्यम्, तथा च सहकार्यधिकरणवृत्तित्ववैशिष्ट्यस्य सहकार्यनधिकरणवृत्तित्ववैशिष्ट्येन समं विरोधोऽस्ति न वा, आद्ये स्थिरत्वभङ्गः, न चान्यान्यक्षणावच्छेदेनोक्तवैशिष्ट्यद्वयसमावेशः स्यात्, तत्तत्क्षणसम्बन्धस्य कालानवच्छिन्नवृत्तिकत्वे विरोधतादवस्थ्यात्, स्वावच्छिन्नवृत्तिकत्वे त्वात्माश्रयात्। यथा हि ज्ञानं स्वयं क्षणात्मकम्, क्षणिकत्वव्यवहारस्तु वैकल्पिक इति मया स्वीक्रियते, तथा न भवानपि स्वीकर्तुं शक्नोति, स्थिराणां क्षणात्मकताया असम्भाव्यत्वात्। तस्मात् 'क्षणु हिंसायाम्' इति धातुव्युत्पादितान्वर्थनामाऽयमनपलपनीयः क्षणः सर्वं स्वात्मतां नयन् स्थेमानं नैवानुमनुते क्वचिदिति तत्त्वम्। द्वितीये त्वेकक्षणावच्छेदेनापि तादृशवैशिष्ट्यबुद्धिप्रमात्वप्रसङ्ग इति भावः।

भेदाभेदादिनेति। आदिना भेदाभेदः। सहकार्यधिकरणवृत्तित्वविशिष्टस्य बीजस्य सहकार्यनधिकरणवृत्तित्वविशिष्टेन तेनात्यन्तभेदे स्थिरत्वव्याकोपः, अत्यन्ताभेदे तु सहकार्यनधिकरणवृत्तित्वदशायामप्यङ्कुरोत्पत्तिप्रसङ्गः, सहकार्यधिकरणवृत्तित्वदशायामपि वाऽङ्कुरानुत्पत्तिप्रसङ्गः। भेदाभेदपक्षस्तु निरस्तपूर्व इति।

प्रथमे सहकारिजन्यः प्रथमोऽतिशियो बीजे द्वितीयमतिशयमुत्पादयति चेत् सोऽपि द्वितीयोऽतिशयो बीजादत्यन्तभिन्नो बीजे तृतीयातिशयमुत्पादयति न वा। एवं तत्र तत्राप्यनवस्था। अथ भावादभिन्नोऽतिशयः सहकारिभिराधीयत इति द्वितीयं पक्षं कक्षीकरोति, तर्हि प्राचीनो भावोऽनतिशयात्मा निवृत्तोऽन्यश्चातिशयात्मा परिणामोन्नुखरूपी जायत इति सिद्धं नः समीहितम्। सहकारिभिरतिशयोत्पादनेऽपि बाजादिरवस्थान्तरं न प्राप्नोति किन्तु पूर्वावस्थ एवावतिष्ठत इत्युच्यमानेऽतिशयस्य वैयर्थ्यमेवेति किं सहकारिसंनिधानेन। अवस्थान्तरस्य प्राप्तौ तु चोक्तमिति **क्षणभङ्गोज्जीवनम्**। उपलक्षणमिदम्। कुशूलस्थतादशावच्छिन्नं बीजं यद्यङ्कुरसमर्थं स्यादङ्कुरोपधायकं स्यात्, न चैवं तस्मान्न समर्थमिति क्षेत्रस्थबीजात्समर्थाद्भेदसिद्धौ क्षणिकत्वे पर्यवसानम्। फलोपधायकत्वं हि यदि सत्त्वं, तदा तदभावे व्योमकुसुमान्तेवासितां गतस्य कथं सामर्थ्यम्। एतेन योग्यतासद्भावेऽपि सहकारिविरहान्न कार्यमिति नात्र सावसरम्, तथा सति फलोपधायकस्य सत्त्वरूपतात्यागात्। अपूर्वत्वेनेति। उपयन्नपयन् धर्मो विकरोत्येव धर्मिणमि' तिनियमात्। विकरोति = उत्पत्तिविनाशभाजं करोति। अत एव—धर्मधर्मिणोस्तादात्म्यस्यानुभवसिद्धत्वात्, समवायस्य निरासाद्, धर्मस्योत्पत्तिविनाशाभ्यां धर्मिणस्तया-

उज्जीवन (सिद्धि) सम्भव है। सहकारिसमवधान ही तो अतिशय हो नहीं सकता, क्योंकि वह पूर्वोक्त रीति से भेदाभेद विकल्प से उपहत है। इससे व्यापकत्व भी प्रायः

व्यापकत्वमपि निराकृतप्रायम्, तद्देशसम्बन्धानुयोगित्वविशिष्टस्यैतद्देशसम्बन्धानुयोगित्वविशिष्टत्वमस्ति न वेत्यादिविकल्पकवलितत्वात्। उक्तञ्चैतदनुपदमवयविनिरासे। एवं कालाकाशादीनामपि नित्यत्वव्यापकत्वे प्रत्याख्येये। विषयस्यानिर्वाच्यत्वं यदुक्तं तदपि न; तस्य ज्ञानभिन्नत्वे ज्ञानविषयत्वासम्भवात्। तदभिन्नत्वे तु न मिथ्यात्वम्, ज्ञानस्य क्षणिकत्वेऽपि परमार्थसत्त्वाभ्युपगमात्। न च परमार्थिकत्वं यद्यर्थक्रियाकारित्वं तदा न तन्मिथ्यात्वं विरुणद्धीति

पारमार्थिकत्वं यद्यर्थक्रियाकारित्वमिति। 'अर्थक्रियासमर्थं यत्तदत्र परमार्थसत्। अन्यत्संवृतिसत्प्रोक्त'मिति हि प्रमाणवार्तिके धर्मकीर्तिः।

रावश्यकत्वेनात्मनः सधर्मकत्वेऽनित्यत्वप्रसङ्गो वेदान्तिभिरेवोद्घोष्यत इति भावः। समवायपक्षे तु धर्मिणो निर्विकारता सम्भाव्येत। इह कपालो घट इत्यनुभवः शिक्षामात्रसमुत्थः। सन्निवेशविशेषयुक्तं कपालद्वयं घट इति स्वरसवाह्यनुभवः। यथा ह्यङ्गुलिद्वयसंयोगोऽवृत्तिनियामकः, घटभूतलसंयोगस्तु नैवम्। एवं तादात्म्यमपि कपालघटादिस्थलेऽवृत्तिनियामकम्, घटे रूपम् 'अहं सुखी' त्यादिस्थले तु वृत्तिनियामकम्। तत्र तत्र घटादिधर्म्यात्मना नित्यतोक्तिस्तु धर्मिणोऽपि कञ्चित्प्रति धर्मत्वेनान्ततो निर्धर्मकसन्मात्रे वस्तुनि पर्यवस्येत्, यदि तस्यालीकता न प्रसज्येतेति तत्त्वम्। तथाचेयमनित्यतैव क्षणिकतायां पर्यवस्यन्ती केन शक्या वारयितुम्। प्रत्याख्येय इति। कालाकाशावनित्यावनित्यगुणवत्त्वात् घटादिवत्। न चात्मनि व्यभिचार, आत्मन्यनित्यगुणवत्त्वासिद्धेः। एवमनित्यत्वादिनाऽऽव्यापकत्वमपि साधनीयम्। नन्वर्थक्रियाकारितैव सत्ता बौद्धाभिमता, सैव च पारमार्थिकी, तदुक्तं बौद्धैः—

एकापाये फलाभावाद्विशेषेभ्यस्तदुद्भवः।
स परमार्थिकोभावो य एवार्थक्रियाक्षमः॥

( प्र० वा०, १६८ ) इति।

निराकृत हो गया, क्योंकि वह—तद्देशसम्बन्धानुयोगित्वविशिष्ट वस्तु एतद्देशसम्बन्धानुयोगित्वविशिष्ट है, या नहीं ईदृशविकल्प से ग्रस्त है। यह कुछ ही पूर्व अवयवी निरास में कह चुके हैं। एवं काल आकाशादि पदार्थों के नित्यत्व व्यापकत्व भी प्रत्याख्यात हो जाते हैं। विषयगत अनिर्वाच्यत्व जो कहा गया है वह भी सम्भव नहीं; क्योंकि उसके ज्ञानभिन्न होनेपर ज्ञानविषय होना सम्भव नहीं है तथा ज्ञानाभिन्नत्वपक्ष में मिथ्यात्व सम्भव नहीं है क्योंकि ज्ञानके क्षणिकत्व पक्ष में भी उसकी पारमार्थिक सत्ता ही मानी जाती है। यदि कहें कि परमार्थिकत्व यदि अर्थक्रियाकारित्व रूप है तो मिथ्यात्व का विरोधी न होगा तो यह कथन उचित नहीं हैं क्योंकि भ्रमस्थल में ज्ञानमात्र की उत्पत्ति का समर्थन किया है, अतः ज्ञान ही अर्थक्रियाकारी होता है, तद्भिन्न सांवृत ( आवि-

**वाच्यम्, भ्रमस्थले ज्ञानमात्रोत्पत्तिसमर्थने तस्यैवार्थक्रियाकारितया तद्भिन्नस्य सांवृतस्य क्वाप्यर्थक्रियाकारितयाऽवक्लृप्तत्वादिति ।**

**अथ ज्ञानस्य परमार्थिकत्वे सर्वशून्यतादेशनाविरोध इति चेदत्राह विंशिका-प्रकरणे वसुबन्धुः—'यो बालैर्धर्माणां स्वभावो ग्राह्यग्राहकादिः परिकल्पितस्तेन कल्पितेनात्मना तेषां नैरात्म्यं न त्वनभिलाप्येनात्मने'ति । अयमत्राशयः—ज्ञानभिन्नस्य प्रागुपदर्शितरीत्या विकल्पमात्रजीवितत्वेन ज्ञानभिन्नत्वावच्छिन्ना ग्राह्यता तन्निरूपिता च ग्राहकता विकल्पमात्रप्राणैव, अनभिलाप्यं तु ज्ञानवपुः स्वलक्षणम्, अननुगतमिति यावद्, अनुगमश्च देशतो वा कालतो वा, आद्यो**

अर्थक्रियाक्षमत्वञ्च मिथ्याभूतस्यापि पदार्थस्य रज्जुसर्पादिर्भयकम्पादि-जनकत्वादिति ज्ञानस्य पारमार्थिकत्वेऽपि मिथ्यात्वं स्यादेवेत्याह—न चेति । ज्ञानस्य द्वौ विषयौ ग्राह्योऽध्यवसेयश्च, ज्ञानस्य स्वस्वरूपं गृह्यमाणं ग्राह्यमित्यु-च्यते, स्वविषयत्वलक्षणस्वप्रकाशत्वस्य तैरङ्गीकृतत्वात् । घटादिश्चाध्यवसेय उच्यते, सोऽपि विकल्पवृत्तिसमुत्थ एव । भ्रान्तिस्थलेऽपि बहिर्विषयाभावात् स्वस्व-रूपमेवाध्यवसेयमपि भवति । तथा च पुरोवर्तिन्यधिष्ठाने ज्ञानाकाररूपं रजत-मिदन्त्वेनारोप्यत इति ज्ञानस्यैव भ्रमस्थले उत्पत्तिस्तस्यैव चार्थक्रियाकारित्वं न तु तदतिरिक्तस्य कस्यचिन्मिथ्याभूतस्येति न ज्ञानस्य मिथ्यात्वमिति भावः ।

नन्वेवं तर्हि सर्वं शून्यमिति बौद्धोपदेशः कथमित्याह—अथेति । विंशति-काप्रकरण इति । विज्ञप्तिमात्रतासिद्धेरित्यादिः । बालैरज्ञानिभिः कल्पितग्राह्य-ग्राहकात्मना नैरात्म्यवादो न तु स्वलक्षणात्मनेत्यर्थः । स्वलक्षणमिति । स्वेना-साधारणेन रूपेण लक्ष्यत इति स्वलक्षणम्, सामान्येन साधारणेन रूपेण न लक्ष्यते, साधारणरूपस्य क्वाप्यभावात्, तदुक्तम्—

एतासु पञ्चस्ववभासिनीषु प्रत्यक्षबोधे स्फुटमङ्गुलिषु ।
साधारणं रूपमवेक्षते यः श्रृङ्गं शिरस्यात्मन ईक्षते सः ॥ इति ।

ह्यक ) तो कहीं भी अर्थक्रियाकारीरूप से सिद्ध नहीं है । यदि कहें कि ज्ञान को पार-मार्थिक मानने में सर्वशून्यतोपदेश ( सर्वं शून्यम् ) का विरोध होगा, तो इसका समाधान विंशिकाप्रकरण ( विज्ञप्तिमात्रासिद्धि ) में वसुबन्धु ने किया है कि 'यो बालैर्धर्माणां स्वभावो ग्राह्यग्राहकादिः परिकल्पितस्तेन कल्पितेनात्मना तेषां नैरात्म्यं न त्वनभिलाप्ये-नात्मना' इति । ( १० का० ) [ अज्ञानियों द्वारा धर्मों के स्वभाव की जो कल्पना ग्राह्यग्राहकरूप में की गयी है, उस कल्पित रूपमें उनका नैरात्म्य ( अवास्तविकता ) है न कि अनिर्वचनीय रूप में, जो बौद्धों का विषय है ] ।

यहाँ आशय यह है कि—प्राग् उपदर्शित रीति से ज्ञान भिन्न पदार्थ विकल्पमात्र जीवित ही है अर्थात् उनका विकल्पवृत्यात्मक ज्ञान ही होता है, वस्तुतः पदार्थ नहीं है ।

**विभुषु घटते, द्वितीयस्तु नित्यमात्रेषु, तदुभयमपि यत्र नास्ति तदेव पारमार्थिकम्, अन्यथोक्तरीत्या विरुद्धधर्माध्यासस्य दुर्वारत्वात्। तथाच 'ज्ञानवज्ज्ञेयमपि पारमार्थिकम्' 'ज्ञेयवद्वा ज्ञानमपि सांवृतमिति मतद्वयनिराकरणं विज्ञानवाद-प्राणायितं निर्व्यूढम्। एवञ्च क्षणिकत्वादिकमपि न्यायानीतम् अतएव सर्वं क्षणिकमिति भगवतो बुद्धस्य देशना। एतेनैवाशयेन तत्त्वसंग्रहे वेदान्तिमतमनूद्य**

किञ्च सर्वेषां पदार्थानां क्षणिकत्वेन ज्ञातुरपि क्षणद्वयमवस्थानं नास्ति। तथाचामुकेन ज्ञात्रा साधारणधर्मपुरस्कारेण पटोऽयमित्येवं पटरूपोऽर्थः लक्षित इति वक्तुं न शक्यते। अनुगमश्चेति। तत्र देशतोऽनुगमोऽत्यन्ताभावाप्रतियोगित्वम्। कालतश्च ध्वंसाप्रतियोगित्वम्। अन्यथेति। अनुगतत्वाभ्युपगमे। विरुद्धधर्माध्यासः = तत्क्षणवृत्तित्वविशिष्टस्यैतत्क्षणवृत्तित्वम्। तथा चेति। ज्ञानमात्रस्य पारमार्थिकत्वे सिद्धे। न्यायानीतमिति। यत्सत् तत् क्षणिकं यथा जलधरपटलमिति, ज्ञानं क्षणिकमर्थक्रियाकारित्वाद् व्यतिरेकेण शशविषाणवत्, विमत उपान्त्यज्ञानसत्ताक्षणः स्वस्वानन्तरक्षणभाविज्ञाननाशव्याप्तः, ज्ञानसत्ताक्षणत्वाद् अन्त्यक्षणवदित्यादियुक्तीनां सत्त्वात्।

वेदान्तिमतमिति। पृथिव्याद्यात्मकं जगन्नित्यज्ञानस्यैव विवर्तः। तदेव चात्मा, तदतिरिक्तं सर्वमप्यविद्यापरिकल्पितत्वात् मिथ्येति वेदान्तमतम्। अनुद्य इति।

नित्यज्ञानविवर्तोऽयं क्षितितेजोजलादिकः
आत्मा तदात्मकश्चेति सङ्गिरन्तेऽपरे पुनः।
ग्राह्यलक्षणसंयुक्तं नः किञ्चिदिहविद्यते
विज्ञानपरिणामोऽयं तस्मात्सर्वः समीक्ष्यते॥

( तत्त्वसं०, ३२८-३२९ ) इत्यादिना।

अतः ज्ञानभिन्नत्वावच्छिन्न ग्राह्यता तथा तादृशज्ञानभिन्ननिरूपित ग्राहकता विकल्पमात्र ही है। ज्ञानस्वरूप अनिर्वचनीय है स्वलक्षण अर्थात् अननुगत ( असाधारणरूपेण लक्षित ) है, क्योंकि अनुगम देश या काल से होता है उनमें प्रथम देशतो अनुगम व्यापक पदार्थों में घटता है और द्वितीय कालकृत अनुगम नित्यों में प्राप्त है, किन्तु उभयविध भी जहाँ अनुगम न हो, वही पारमार्थिक है, अन्यथा उक्तरीति से तत्क्षणवृत्तित्वादिविरुद्धधर्माध्यास दुर्वार हो जायेगा। तथा च ज्ञान के समान ज्ञेय भी पारमार्थिक है अथवा ज्ञेयवत् ज्ञान भी सांवृत है ईदृशमतद्वयनिराकरण जो विज्ञानवाद का प्राणभूत है, निर्वाहित हो जाता है। एवञ्च क्षणिकत्वादि भी युक्तिसंगत है। अतएव 'सर्वं क्षणिकम्' यह भगवान् बुद्ध का उपदेश है। इसी अभिप्राय से तत्त्वसंग्रह में वेदान्तमत का अनुवाद कर 'तेषामल्पापराधं तु दर्शनं नियतोक्तितः' इत्यादि ग्रन्थ से विज्ञान को नित्य मानना वेदान्ती का अपराध

विज्ञानस्य नित्यताभिधानं वेदान्तिनामपराध एवेति 'तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः' इत्यनेनोक्तम्, अल्पेत्यनेन ज्ञानस्य वेदान्ते पारमार्थिकतोपगमेनांशे यौक्तिकत्वं सूचितम् । सौगतैकदेशिभिर्वात्सीपुत्रीयैरपि स्कन्धेभ्यो भिन्नाभिन्नत्वा-

अल्पापराधं त्विति । दीर्घनिकाये[1] ब्रह्मजालसूत्रादावपि प्राकृतभाषोपनिबद्धे आत्मनो नित्यतोक्तिर्ब्राह्मणानामज्ञश्रमणानां च चपलतामात्रमिति भिक्षून् प्रति बुद्धाभिहिततया स्पष्टमभ्यधायि । मरणानन्तरमात्मास्तित्वादिकं मयाऽकथितेषु निक्षिप्तम्, निष्प्रयोजनत्वात्तन्निरूपणस्य, नहीदं निर्वेदब्रह्मचर्यादावुपयुज्यते, नापि च मयाऽऽत्मास्तितायां प्रमाणमनुयुक्ता ब्राह्मणश्रमणः किञ्चित्प्रतिपादयन्ति, तस्मात्तदुक्तिस्त्याज्येति च प्रोष्ठपादसूत्रे तथागतनिगदिततयोक्तम्, एवं मध्यमनिकायादावपि स्वयमयमर्थोऽन्वेषणीयः ।

अत्र परिणामशब्दो विवर्तपरः । अत्रापरेऽद्वैतदर्शनावलम्बिनः क्षित्यादिपरिणामरूपनित्यैकज्ञानस्वभावमात्मानं कल्पयन्ति । तदात्मकः = क्षित्यात्मकपरिणामरूपनित्यैव ज्ञानात्मक इत्यर्थः । नहि क्षित्यादयो ज्ञानव्यतिरेकेण ग्राह्यलक्षणापन्नाः सन्ति, येन ते प्रतिभासेरन्, अतो विज्ञानप्रतिभासरूप एवामी क्षित्यादय इति व्यवसीयन्ते । तेषामल्पापराधमिति । "रूपशब्दादिचित्तानां व्यक्तं भेदापलक्षणात्" । इति शेषार्द्धम् । दर्शनं ज्ञानमित्यर्थः । योगाचारदृष्ट्या ज्ञानगतक्षणिकत्वस्यैव यौक्तिकत्वेन तस्य नित्यत्वाभिधानं वेदान्तिनामपराध एव । तत्राल्पेति विशेषणस्य फलमाह—अल्पेत्यनेनेति । अंश इति । पारमार्थिकत्वांशे । अत्रेदमवधेयम् । सौगताश्चतुर्विधाः योगाचारसौत्रान्तिकवैभाषिकमाध्यमिकसंज्ञाभिः प्रसिद्धाः । यद्यप्युपदेष्टा भगवान् बुद्ध एक एव तथापि प्रतिपत्तिभेदाद्विनेयभेदाद्वा तेषां चातुर्विध्यम् । तत्र योगाचारो विज्ञानमात्रास्तित्ववादी । एतन्मते न बाह्यं ग्राह्यमस्ति वस्तु सत्, तस्योत्पन्नस्य क्षणिकत्वेन द्वितीयक्षणे स्थित्यभावात्, अनुत्पन्नस्य चासत्त्वात्, परमाण्ववयविरूपयोश्च निरस्तत्वात्, अपित्वनाद्यविद्यावासनारोपितमलीकमेव, तत्र ज्ञानमेव तथा तथा भासते । सौत्रान्तिकवैभाषिकयोर्मते बाह्यं भूतं भौतिकमान्तरं च सुखदुःखादिकमस्ति सर्वं वस्तु सत्, किन्तु

कहा गया है। अल्पविशेषण के द्वारा—वेदान्त में ज्ञानगत पारमार्थिकत्व के उपगत होने से तदंश में उसे यौक्तिक बताया है। सौगत-एकदेशी वात्सीपुत्र मतानुसारियों

---

१. दीघनिकायो, ( पठमो भाग ) ब्रह्मजालसुत्तं तृतीयभणवार ( विभागः– २२ ) 'तत्र भिक्खवो, ये ते समणब्राह्मणा सस्सतवादा सस्सतं अत्तानं लोकं च पञ्जापेन्ति चतूहि वत्थूहि, सब्बे ते छहि फस्सायतने हि फुस्स फुस्स पटिसम्वेदेन्ति ।'

( बम्बई विश्वविद्यालय संस्करण )

स्यामात्मनोऽनिर्वाच्यतैवोपगतेति न वेदान्तिसाम्यम् । अतएव—

'स्कन्धेभ्यः पुद्गलो नान्यस्तीर्थदृष्टिप्रसङ्गतः ।
नानन्योऽनेकताद्याप्तेः साध्वो तस्मादवाच्यता ॥'

स्कन्धा इत्यादि । रूपविज्ञानवेदनासंज्ञासंस्काराः पञ्चस्कन्धाः प्रसिद्धा एव, रूपस्कन्धश्च सविषयाणीन्द्रियाणीत्याहुः । एवं च स्कन्धान्तर्गतत्वेऽप्यवान्तरधर्मविशेषमादायायतनादिविभागः । तत्र पञ्चेन्द्रियाणि सविषयाणि, समनन्तरप्रत्ययात्मकं मनश्चान्तरविषयसहितमिति द्वादश आयतनशब्देन भाष्यन्ते, एते एव चक्षुर्विज्ञानश्रोत्रविज्ञानादिषट्केन साकं धातुशब्देन, पृथिव्यादिधातवस्तु विषयविधयैव गृहीताः, रूपपरमाण्वादिसंघातात्मकत्वादिति । विभागोऽयमभिधर्मकोषे प्रसिद्धः ।

तत्र सौत्रान्तिकैः ज्ञाने आकारसमर्पकत्वेन सर्वो विषयोऽनुमेय आस्थीयते । वैभाषिकैस्तु यथायोग्यं प्रात्यक्षिक आनुमानिकश्च विषयोऽभ्युपेयतेऽन्यत्सर्वं समानम् । मतद्वयेऽपि ज्ञेयं ज्ञाने स्वाकारं समर्पयतीति त्रयोऽप्यमी साकारवादिनः संगीर्यन्ते । माध्यामिकस्तु तुरीयः तुर्यमेव पन्थानमाश्रित्य प्रवर्तते इति तन्मतमग्रे वक्ष्यते । प्रख्याततमास्त्विम एव किन्तु तदतिरिक्तः सम्मितीयापरनामधेय वात्सीपुत्रीयः कश्चन प्राचीनाचार्यः स्थविरवादोपशाखोय आसीत् । अस्य सम्प्रदायस्य हर्षवर्द्धनकाले प्राधान्यमासीत् । पुद्गलवादोऽस्य मुख्यः सिद्धान्तः । तस्य बाह्याभ्युपगन्तृत्वेन वेदान्तिसाम्यमापन्नं निराचष्टे—सौगतैकदेशिभिरिति । ते हि पुद्गलशब्देनात्मानं व्यपदिशन्ति । तत्रात्मनो लक्षणम्—यो हि शुभाशुभकर्मभेदानां कर्ता स्वकृतकर्मफलस्य चेष्टानिष्टस्य भोक्ता, यश्च पूर्वस्कन्धपरित्यागादपरस्कन्धान्तरोपादानात् संसरति भोक्ता च स आत्मेति । एतच्च सर्वं पुद्गलेऽभीष्टमिति केवलं नाम्निविवादः । स चानिर्वाच्यः । यदाह—

केचित्तु सौगतम्मन्या अप्यात्मानं प्रचक्षते ।
पुद्गलव्यपदेशेन तत्त्वान्यत्वादिवर्जितम् ॥ इति ।

( तत्त्वसं०, ३३६ )

अतएवेति । अनिर्वाच्यत्वस्यानुपगमादेव । निराकृतमिति योजना । तत्रानिर्वाच्यत्वसाधकयुक्तिप्रदर्शनपरं तन्मतमनुवदति—स्कन्धेभ्य इति । पूर्यते गलति चेति पुद्गलो जीवात्मा, स यदि स्कन्धेभ्योऽन्यः स्यात्तर्हि तीर्थदृष्टिप्रसङ्गः

ने विषयों के साथ भिन्नत्वाभिन्नत्वविकल्प के द्वारा आत्मा को भी अनिर्वचनीय ही माना है । अतः उनका वेदान्ती के साथ साम्य नहीं है । अतएव तत्त्वसंग्रह में—

"स्कन्धेभ्यः पुद्गलो नान्यस्तीर्थदृष्टिप्रसङ्गतः ।
नानन्योऽनेकताद्याप्तेः साध्वी तस्मादवाच्यता ॥"

**इत्येवं तन्मतमनूद्य—**

**'ते वाच्याः पुद्गलो नैव विद्यते पारमार्थिकः ।**
**तत्त्वान्यत्वाद्यवाच्यत्वान्नभःकोकनदादिवद्' ॥ इत्यादिना**

**तत्त्वसंग्रहे निराकृतम । त्रिशिकाप्रकरणेऽपि—**

**'आत्मधर्मोपचारो हि विविधो यः प्रवर्तते । विज्ञानपरिणामेऽसौ'....। इति प्रघट्टके आत्मा जीवो जन्तुरित्यादिक आत्मोपचारः स्कन्धा धातव आयतनानि रूपं**

तैर्थिकैरास्तिकाचार्यैः परिकल्पित याऽऽत्मदृष्टिः सा स्यात्, ततश्च शाश्वतात्मप्रसङ्गः । न च शाश्वतस्यात्मनः कर्तृत्वभोक्तृत्वादि युक्तम्, तस्याकाशवत् सर्वदा निर्विशिष्टत्वात् । प्रतिषिद्धश्च भगवता तथागतेन शाश्वतात्मा । नन्वस्तु तर्हि स्कन्धेभ्योऽनन्य एव स इति चेत्तत्राह—नानन्य इति । यदि हि स्कन्धा रूपादय एव पुद्गलः स्यात्तर्हि वहुभ्यः स्कन्धेभ्योऽनन्यत्वात्तत्स्वरूपवदनेकता प्राप्नोति पुद्गलस्य । एकश्चेष्यते, यथोक्तम् 'एकःपुद्गलो लोके' इति । तस्मात्तस्यावाच्यतैव साध्वीत्यर्थः ।

तन्निराकृतिमाह—ते वाच्या इति । ते वात्सीपुत्रीयाः वक्तव्याः, किमिति चेत्तत्राह—पुद्गल इति । तथासति पुद्गलः पारमार्थिको न स्यात्, यत्तत्त्वान्यत्वाभ्यां वाच्यं न भवति न तद् वस्तु यथा गगनकुसुमम् इत्यर्थः । त्रिशिकाप्रकरण इति । विज्ञप्तिमात्रतासिद्धेरित्यादिः । आत्मधर्मोपचार इति । आत्मा धर्माश्चोपचर्यन्ते इत्यात्मधर्मोपचारः, आत्मोपचारः धर्मोपचारश्चेति यावत् । उपचारोऽसद्व्यवहारः । स च विविधः प्रवर्तते, तस्य वैविध्यं प्रकटयति—आत्मेति । धर्मोपचारं दर्शयति—स्कन्धा इति । भूतव्यतिरिक्तान्यमूर्तानि

( जीव रूपादिविषयों से अतिरिक्त नहीं कहा जा सकता, क्योंकि उसे भिन्न मानने पर आस्तिक दर्शनापत्ति हो जायेगी । और रूपादिविषयों से अभिन्न भी नहीं कह सकते, क्योंकि तथा सति जीवगत अनेकत्व आपन्न होगा । अत उसे अनिर्वचनीय मानना ही उचित है ) । इस प्रकार वात्सीपुत्रीय मत का अनुवाद कर— ते वाच्याः पुद्गलो नैव इत्यादि' [ जीवात्मा पारमार्थिक न होगा, क्योंकि वह गगनकमल के सदृश तत्त्व अतत्त्व दोनों से अवाच्य है । इस प्रकार उन्हें ( वात्सीपुत्र ) समझाना चाहिए ]। इत्यादि से उनका निराकरण किया गया । त्रिशिकाप्रकरण में वसुबन्धु ने भी कहा है कि—

आत्मधर्मोपचारो हि विविधो यः प्रवर्तते ।
विज्ञानपरिणामेऽसौ.......................॥

[ आत्मा एवं धर्म का उपचार आरोपित ( व्यवहार ) जो विविध प्रकार का होता है; वह विज्ञान के परिणाम के अन्तर्गत है ] यहाँ—आत्मा जीव जन्तु मनुज

**वेदनादिकश्च विज्ञानपरिणामे एव न मुख्ये आत्मनि धर्मषु च । कुत एतत् ? धर्माणामात्मनश्च विज्ञानपरिणामाद्बहिरभावादिति निरूपितम्, एतेन मुख्यः कश्चिदात्मा धर्मा वाऽपरिणामात्मकं विज्ञानं वा किञ्चित्स्यादिति भ्रमो निराकृतः । परिणामि विज्ञानमपि स्वपूर्ववर्तिविज्ञानपरिणाम एव, न तु नित्यमिति च 'कारणक्षणनिरोधसमकालः कारणक्षणविलक्षणः कार्यस्यात्मलाभः परिणाम'**

तत्त्वानि स्कन्धशब्देनोच्यन्ते । ते हि रूपविज्ञानवेदनासंज्ञासंस्कारभेदेन पञ्चविधाः । तत्र रूप्यन्त एभिर्विषया इति, रूप्यन्त इति च व्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः । आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्धः । विज्ञानस्कन्धस्य रूपस्कन्धेन सह सम्बन्धाज्जायमानः सुखदुःखादिप्रत्ययप्रवाहो वेदनास्कन्धः । गौः घटो देवदत्त इत्यादिशब्दोल्लेखिप्रत्ययप्रवाहः संज्ञास्कन्धः । वेदनास्कन्धनिबन्धना रागद्वेषादयः क्लेशा उपक्लेशाश्च मदमानादयः धर्माधर्मौ च संस्कारस्कन्धः । एतेषु पञ्चसु द्वितीयो विज्ञानस्कन्धश्चित्तम् । इतरे चत्वारः स्कन्धाश्चैत्ताः विज्ञानवादिनस्तु विज्ञानैकस्कन्धवाद एवाभिप्रेतः । धातवोऽष्टादश प्राक् प्रतिपादिताः । आयतानि द्वादशविधानि-पञ्चज्ञानेन्द्रियाणि श्रोतत्वगाक्षिरसनाघ्राणाख्यानि, पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाभिधानि, मनो बुद्धिश्चेति । तदुक्तम्—

ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च ।
मनोबुद्धिरितिप्रोक्तं द्वादशायतनं बुधैः ॥ इति

अयं खलु द्विप्रकारोऽप्युपचारो विज्ञानपरिणामान्तर्गत एव, न तु तद्बहिर्भूतः । यच्च यत्र नास्ति तत् तत्रोपचर्यते । यथा वाहीके गौः । एवं विज्ञानस्वरूपे वहिश्चात्मधर्माभावात् परिकल्पिता एवात्मधर्माः न तु परमार्थतः सन्तीति भावः । निरधिष्ठानस्यारोपस्यासम्भवादवश्यं विज्ञानपरिणामो वस्तुतोऽस्तीत्युपगन्तव्यो यत्रात्मधर्मोपचारः प्रवर्तते । एतेन विज्ञानमपि विज्ञेयवत् संवृतित एव न परमार्थत इति निरस्तम् ।

नन्वेव तर्हि परिणामिविज्ञानं नित्यमपि स्यादिति चेत्तत्राह—परिणामीति । स्वोक्तमाचार्योक्त्या दृढ़यति—कारणक्षणेति । क्षणिकोऽर्थः क्षण इत्युच्यते ।

**मानव यह आत्मोपचार है तथा स्कन्ध = विज्ञानादि पञ्च, आयतन = इन्द्रियादि द्वादशविध, रूप एवं वेदनादि, ये धर्मोपचार है । ये सभी विज्ञान के परिणाम के अन्तर्गत है, मुख्य आत्मा और धर्म में नहीं । यह क्यों ? धर्म और आत्मा का विज्ञान के परिणाम से बाहर अभाव है । ( जो पदार्थ जहाँ नहीं है वहाँ उसके होने का जो आरोप होता है उसे उपचार कहते हैं ) इससे—मुख्य कोई आत्मा या धर्म अथवा अपरिणामात्मा विज्ञान भी कुछ है, ऐसा किसी का भ्रम निरस्त हो गया । परिणामी विज्ञान भी अपने पूर्ववर्ति**

**इत्यनेन स्फारितम्। तत्र कालान्तेन दर्शनान्तरप्रसिद्धपरिणामवैलक्षण्यं दर्शितम्। बौद्धसिद्धान्ते वस्तुस्वरूपस्यैव क्षणात्मकतायास्तत्त्वसंग्रहादौ निर्णीतत्वेन कारणक्षणनिरोधसमकालत्वोक्तेः कारणनिरोधसमकालत्वे एव पर्यवसानात्। एतादृशार्थानभ्युपगमे एतद्दलवैयर्थ्यप्रसङ्गात्। अतएव सांख्ययोगादिसम्मतो नेह**

पूर्वपूर्वविज्ञानं स्वविनाशकाल एव स्वविलक्षणमुत्तरोत्तरं विज्ञानं जनयतीति सुगतसमयः। एतेन परिणामलक्षणमपि प्रतिपादितं भवति। दर्शनान्तरप्रसिद्धेति। परित्यक्तपूर्वरूपस्य रूपान्तरेण प्रथनं परिणाम इति दर्शनान्तरप्रसिद्धम्। तत्र क्षणान्तरे परिणतिर्नतु कारणनिरोधकाल एवेति वैलक्षण्यं सिद्ध्यतीत्याह—वैलक्षण्यं दर्शितमिति। तत्त्वसंग्रहादाविति। तत्र—

उत्पादानन्तरास्थायि स्वरूपं यच्च वस्तुनः।
तदुच्यते क्षणः सोऽस्ति यस्य तत् क्षणिकं मतम्॥ (त. सं. ३८८)

इत्यादिना वस्तुस्वरूपस्य क्षणात्मकत्वं व्यवस्थापितम्। उत्पादानन्तरविनाशस्वभावो वस्तुनः क्षण उच्यते। स यस्यास्ति स क्षणिक इत्यर्थः। एतादृशार्थानभ्युपगमे = कारणनिरोधसमकालत्वार्थकत्वानुपगमे। एतद्दलवैयर्थ्यप्रसङ्गादिति। कालान्तदलस्येत्यर्थः। दर्शनान्तरसाधारणपरिणामस्य कारणक्षणविलक्षणः कार्यस्यात्मलाभः परिणाम इत्येतावतैव सुवचत्वात्। सांख्ययोगादिसम्मत इति। तन्मते हि निरोधो न ध्वंसात्मकः, ध्वंसप्रागभावयोरनङ्गीकारात्, अपि तु स्वकारणे प्रविलयात्मकः। न चैव तन्नष्टं तद्भविष्यतीति ध्वंसप्रागभावावगाहिप्रतीत्यनुपपत्तिरिति वाच्यम्, उक्तप्रतीतिवत् तत्तिरोभूतं तदतीतं तत्प्राविर्भविष्यति तदनागतमित्यादि प्रयोगाणां सम्भवेन तत्र तत्पदग्राह्यघटपटादिपदार्थस्यातीतानागतावस्थावगाहितयैव तादृशप्रतीतिर्निर्वाहात्। अत एव 'निवृत्तिश्च न नाशोऽपित्वतीतावस्था ध्वंसप्रागभावयोरतीतानागतावस्थारूपत्वात् सत्कार्यवादिभिरभावानङ्गीकारादि (सा० प्र० भा०, १.१) त्युक्तं विज्ञानभिक्षुणा। एवञ्चात्र नाशस्य सान्वयत्वम्। घटे नष्टे खर्परादि दृश्यते। तस्मिन्नष्टे चूर्णं

विज्ञान का परिणाम ही है, न कि नित्य, यह बात—'कारणक्षणनिरोधसमकाल……' (कारणक्षण विनाशकालीन एवं कारणक्षण से विलक्षण कार्यक्षण को उत्पत्ति ही परिणाम है) इसके द्वारा व्यक्त की गयी है। वहाँ कालान्तर विशेषण से दर्शनान्तर प्रसिद्ध परिणाम के वैलक्षण्य का प्रदर्शन किया है। बौद्धसिद्धान्त में वस्तुस्वरूप की क्षणरूपता का प्रतिपादन तत्त्वसंग्रहादि में किया गया हैं, अतः कारणक्षणनिरोधकालत्व के कथन का पर्यवसान कारणनिरोधसमकालत्व में ही हो जाता है। एतादृश अर्थ (कारण निरोधसमकालत्व) स्वीकार न करने पर कालान्तदल व्यर्थ हो जायेगा। अतएव सांख्ययोगादि सम्मत निरोध (नाश) यहाँ (बौद्ध दर्शन) अभिप्रेत नहीं है अपितु तार्कि-

निरोधोऽनुरोध्यः, अपितु तार्किकादिसम्मत एव। अन्यथा क्षणपदस्यापि वैयर्थ्यप्रसङ्गाच्च। अग्रे विज्ञानमात्रस्य प्रतीत्यसमुत्पन्नत्वाद्युक्त्या चायमभिप्रायो दृढीकृतः।

'विज्ञानपरिणामोऽयं विकल्पो यद्विकल्प्यते।
तेन तन्नास्ति तेनेदं सर्वं विज्ञप्तिमात्रकम् ॥'

इति कारिकाव्याख्यायाञ्च 'पूर्वकान्निरुद्धात्तज्जातीयविज्ञानात् विज्ञानमुत्पद्यते' इति कण्ठरवेणोक्तम्। आस्तिकदर्शनेषु तु निखिलेष्वपि सौगतनये क्षणिकज्ञानाभ्युपगमाभिधानं सुप्रसिद्धमेव। क्षणिकतया स्रोतोवदविच्छेदेन प्रवर्तमानं चालय-

तार्किकादिसम्मत इति। निरन्वयनाश इति भावः। वैयर्थ्यप्रसङ्गाच्चेति। कारणतिरोभावमात्रस्य कारणनिरोधेत्युक्त्यैव लाभसम्भवादिति भावः।

दृश्यते। पटे दग्धे रक्षा दृश्यते। तार्किकसम्मत एवेति। तन्मते कार्यकारणयोर्भेदाभ्युपगमाद् ध्वंसप्रागभावयोरतिरिक्तयोः स्वीकारात् तप्तायसि पतितस्योदबिन्दोर्विनाशवन्निरोधस्य सर्वत्रनिरन्वयत्वमेव। एवमेव बौद्धा अपि निरन्वयनाशमिच्छन्ति। तदभावेदूषणमुद्घाटयति—अन्यथेति। अग्र इति। त्रिंशिकाप्रकरणे। प्रतीत्यसमुत्पन्नत्वाद्युक्त्येति। सर्वं विज्ञेयं परिकल्पितस्वभावत्वाद् वस्तुतो न विद्यते, विज्ञानं पुनः प्रतीत्यसमुत्पन्नत्वाद् द्रव्यतोऽस्तीत्यभ्युपेयम्। प्रतीत्यसमुत्पन्नत्वं पुनर्विज्ञानस्य परिणामशब्देन ज्ञापितमित्याद्युक्त्येत्यर्थः। तत्र प्रतीत्यसमुत्पादः—प्रतीत्य प्राप्य, समुत्पादः समुत्पत्तिः। कारणस्वभावादेव पूर्वपूर्वविज्ञानात्मकं कारणं प्राप्योत्तरोत्तरविज्ञानस्योत्पत्तिर्भवति, नान्यश्चेतनः कारणत्वेन तत्राश्रयितव्यः। अत एव न तस्य नित्यत्वमपीतिभावः।

विज्ञानपरिणाम इति। यत् किञ्चिदपि स्कन्धादिकं विकल्प्यते व्यवह्रियते स विज्ञानपरिणामो विकल्प एव, कल्पनामात्रमेवेत्येतत्। तेन तद् विकल्प्यमानं नास्त्येव वस्तुतः सर्वं विज्ञानमात्रमेवेत्यर्थः। विज्ञानमिति। उत्तरविज्ञानम्। आलयविज्ञानेति। आलयाख्यं विज्ञानमित्यालयविज्ञानम्। आलयः स्थानमिति

कादि सम्मत ही ग्राह्य है। अन्यथा क्षणपद भी व्यर्थ हो जायेगा। आगे विज्ञानमात्र के प्रतीत्यसमुत्पन्न त्वादि कथन से भी इसी अभिप्राय को दृढ़ किया है।

विज्ञानपरिणामोऽयम्.................।

[ जो कुछ विकल्प किया जाता है वह विज्ञान परिणाम ही है अतः वे ( बाह्य विषयादि ) नहीं हैं, सब कुछ विज्ञप्तिमात्र है ] इस कारिका व्याख्या में तो वह 'पूर्वकान्निरुद्धात्तज्जातीयविज्ञानात् विज्ञानमुत्पद्यते' ( पूर्वविज्ञान के नष्ट होने पर तज्जातीय विज्ञान से अन्य विज्ञान उत्पन्न होता है ) इस प्रकार कण्ठोक्त ही है। और सभी आस्तिक

**विज्ञानमनोविज्ञानप्रवृत्तिविज्ञानं साकारमेव न तु वेदान्तिवत्किमपि विज्ञानं निराकारम् । यदाह वसुबन्धुः—'नहि निरालम्बनं निराकारं वा विज्ञानं युज्यते, नैव तन्निरालम्बनं निराकारं वेष्यते किं तर्ह्यपरिच्छिन्नालम्बनाकार'मिति ।**

विज्ञानं साकारमेवेति । अद्वयवज्रसंग्रहे साकारनिराकारविज्ञानवादियोगाचारद्वयस्योक्तत्वेऽपि 'आकारसहिता बुद्धिर्योगाचारस्य सम्मता' इत्यादौ भूरिप्रसिद्धतया वसुबन्धोरभिधानेनात्र साकारवाद एवानुमोदितः । अयं च चित्राद्वैतवादशब्देनाप्युच्यते, आकारस्य ज्ञाने चित्रस्थानीयत्वात् । सच्चिद्रूपतया चित्रता तु योगाचारद्वयसाधारणी स्यात्, सत्त्वं च पारमार्थिकमभ्युच्यमानं क्षणिकेऽपि ज्ञाने सम्भवतीत्युक्तमेव पूर्वम्, 'अर्थक्रियासमर्थं यत्तदत्र परमार्थसद्' इति धर्मकीर्त्युक्तेः । निराकारवादेऽपि शून्यवादनेदिष्टे सांवृताकारत्यागासम्भवेन तत्त्वत एव निराकारता द्रष्टव्या, 'तत्त्वतो हि निराभासः शुद्धानन्तनभोनिभः' इत्युक्तेः, ज्ञानस्यामूर्ततया वस्तुतश्चानाकारतया नभोनिभत्वाभिधानं प्रकृतमतेऽपि सम्भवत्येव, ज्ञाने आकारस्य सांवृतचित्रताया विवक्षया चित्राकारवादिता त्वस्मिन् मतेऽपि स्यात् । यदि चात्र ज्ञानस्य नित्यतामपि कश्चिदाचक्षीत्, तदा ध्रुवमसौ दर्शनान्तरमेवाश्रितः स्यादिति स्पष्टमिदानीमिह मूले चालोचितनोत्या । नित्यभावाभ्युपगमो वैदिकानां धृष्टतेति च प्रमाणवार्तिके धर्मकीर्तिः कीर्तयामासेत्यलम् ।

पर्यायौ । तच्च सांक्लेशिकधर्मबीजस्थानत्वाद् आलयः । अथवाऽऽलीयन्ते उपनिबध्यन्तेऽस्मिन् सर्वधर्माः कार्यभावेन । यद्वाऽऽलीयते उपनिबध्यते कारणभावेन सर्वधर्मेष्वित्यालयः । विजानातीति विज्ञानम् । मनोविज्ञानेति । आलयविज्ञानमाश्रित्य प्रवर्तमानं तदालम्बनञ्च मननात्मकं समनन्तरप्रत्ययत्वेन प्रसिद्धं विज्ञानं मनोविज्ञानमित्यर्थः । मन इति विशेषणेनालयविज्ञानात्प्रवृत्तिविज्ञानाच्च व्यवच्छिनत्ति । प्रवृत्तिविज्ञानम्—घटाद्युल्लेखिविज्ञानमित्यर्थः ।

वसुबन्धुरिति । विज्ञप्तिमात्रतासिद्धावितिशेषः । निरालम्बनमिति । आकारत्वेनालम्बनत्वेन च भेद एकस्मिन् वस्तुनि योगाचारमते । स्वप्ने जागरायामपि भ्रमे च रजतादौ ज्ञानाकारताऽस्ति सौत्रान्त्रिकमतेऽपि, नत्वालम्बनता,

दर्शनों में तो—सौगतसिद्धान्त में क्षणिकविज्ञानवादाभ्युपगम सुप्रसिद्ध ही है। क्षणिक होने से स्रोतवत् अविच्छिन्न रूप से प्रवर्तमान आलयविज्ञान ( अहमुल्लेखी ) मनोविज्ञान ( मानसज्ञान ) तथा प्रवृत्ति विज्ञान ( घटाद्युल्लेखी ) सब साकार ही हैं; न कि वेदान्तीयों के समान कोई विज्ञान निराकार भी । जो कि वसुबन्धु मे कहा है–'नहि निरालम्बन.....' ( यदि प्रवृति विज्ञान से भिन्न आलयविज्ञान है तो इसका आलम्बन या आकार कहना चाहिए क्योकि आलम्बन या आकार रहित विज्ञान नही हो सकता है, ( इसका उत्तर है कि ) निरालम्बन या निराकार आलयविज्ञान हमें अभीष्ट नहीं है । अपितु अपरिच्छिन्न आलम्बन तथा आकार वाला विज्ञान इष्ट है ) । स्मर्तव्य है कि सन्तन्यमान ( धारा-

**विशुद्धमपि ज्ञानं सन्तन्यमानमुपेक्षात्मकमेव न तु वेदान्तिवदानन्दात्मकम्, अलौकिकानन्दानभ्युपगमाल्लौकिकस्य च रागात्मकक्लेशानुविद्धत्वादिति द्रष्टव्यम्। तस्मात् क्षणिकं ज्ञानमेवानुच्छिन्नसन्तति विजातीयस्वगतभेदशून्यतयाऽद्वैतं परमार्थसदिति शिवम्। इति दर्शनसर्वस्वेऽनिर्वचनीयतावादे विज्ञानवादपरिष्कारप्रकारः।**

इति दर्शनसर्वस्वे विज्ञानवादे राजहंसः।

आलम्बनप्रत्ययत्वस्य ज्ञानात्पूर्वभाविन्येव वक्तुमौचित्यादितीदृशव्यवहार एवालम्बनाकारयोर्भेदोपन्यासहेतुः। सन्तन्यमानेति। एतेन क्षणिकत्वमुक्तम्। उपेक्षात्मकमेवेति। एवकारव्यावर्त्यमुपन्यस्यति—नत्विति। तत्र हेतुमाचष्टे—अलौकिकेति। उपसंहरति—तस्मादिति। क्षणिकविज्ञानानां नानात्वेन सजातीयभेदसत्त्वेऽपि विजातीयस्वगतभेदविरहादद्वैतमेवेति भावः।

इति दर्शनसर्वस्वव्याख्यायां चित्कलाभिधायां विज्ञानवादः।

वाही ) विशुद्ध ज्ञान भी उपेक्षात्मक ही है, न कि वेदान्तियों के सदृश आनन्दस्वरूप। क्योंकि अलौकिक आनन्द तो हम ( बौद्ध ) मानते नहीं, और लौकिक आनन्द रागात्मकक्लेश से अनुविद्ध है।' तस्मात् अविच्छिन्नरूपेण प्रवाहित क्षणिक-विज्ञान ही विजातीय स्वगत भेद शून्य होने से अद्वैत एवं परमार्थसत् है।

इति दर्शनसर्वस्व-भाषानुवादे विज्ञानवादः।

●

## शून्यवादः

अथ परस्मिन्निव स्वस्मिन्नपि विषयविषयिभावस्य निरूपणासम्भवे स्वस्यापि रक्षणं नोचितमिति निष्पक्षपाताः शून्यवादिनः। नचोक्तरीत्या ज्ञान-

## शून्यवाद :

नमामि शून्यतां नित्यं शाश्वतोच्छेदवर्जिताम् ।
नैरात्म्यं यत्र धर्माणां पुद्गलानां समाद्वयाम् ॥

युक्त्या विज्ञानवादं स्थिरीकृत्य कण्टकेनैव कण्टकनिवृत्तिरितिन्यायमनुसरन् तन्निराचिकीर्षुराचार्यः वादान्तरमुपक्रमते—अथेति । परित्यागनिमित्तस्योभयत्र समत्वादाह—स्वस्यापीति । विज्ञानस्यापीत्यर्थः। अपिना ज्ञेयस्य दृष्टान्तता द्योत्यते। निष्पक्षपाता इति । तत्त्वञ्च स्वपरोभयसत्त्वानभ्युपगन्तृत्वम् । सर्वं शून्यमिति तेषां सिद्धान्तात् । अत एव शून्यवादिन इत्युक्तम् । शून्यवादित्वैतादृशनिष्पक्षयातित्वयोरविनाभावः समानविभक्त्या संसूच्यते । सर्वोऽपिपदार्थः ज्ञानप्रकाशेन प्रकाशितः सन्नेव स्वस्यास्तित्वं लभते । तत्र च ज्ञानासम्बद्धं ज्ञेयमप्रकाशितं सदेव स्वात्मलाभेऽप्यक्षममेव । सम्बन्धश्च विषयविषयिभावादिः प्रागुदीरितरीत्या दुर्घट एव । अतो यथा ज्ञानातिरिक्तस्य ज्ञेयस्याभावस्तथैव ज्ञानांशेऽपि ज्ञानसम्बन्धाभावान्न ज्ञानस्यापि रक्षणं (अस्तित्वं) भवितुमर्हति । स्वप्रकाशत्वमप्यस्य स्वविषयत्वात्मकं विषयत्वमन्तराऽशक्यसमर्थनमितिभावः। ननु यद्दृष्टान्तीकृत्य भवता स्वस्य शून्यत्वमापाद्यते, तस्यैव तु तन्नास्ति, तस्य लक्षणान्तरासम्भवेऽपि ज्ञानाभिन्नत्वादिलक्षणेन सत्त्वसम्भवादित्याह—न चेति ! उक्तरीत्येति । को जानाति

## शून्यवादः

ज्ञेयांश के समान ज्ञानांश में भी विषयविषयिभावनिरूपण के अशक्य होने से स्व अर्थात् ज्ञान का रक्षण (पारमार्थिकत्व ) भी उचित नहीं है, यह बात हम पक्षपातशून्य शून्यवादी कहते हैं ।

शंका—पूर्वोक्तरीति से ज्ञान-ज्ञेय का अभेद सिद्ध होने से खण्डन-शारदा-चतुर्थ-परिच्छेदोक्त दिशा से ग्राह्यविषय का लक्षणान्तर सम्भव न होने पर भी ज्ञानाभिन्नत्व या ज्ञानसामग्रीजन्यत्व ही लक्षण मान लिया जाय । यदि कहें कि ज्ञानसामग्रीजन्यत्व लक्षण

**ज्ञेयाभेदसिद्धौ शारदायां चतुर्थपरिच्छेदोक्तदिशा ग्राह्यस्य लक्षणान्तरासम्भवेऽपि ज्ञानाभिन्नत्वं वा ज्ञानसामग्रीजन्यत्वं वा लक्षणमस्तु, सर्वस्य ज्ञानात्मकत्वव्यवस्थितौ देवदत्तो ग्रामं गच्छतीति ज्ञानस्यैव क्रियाकर्मकर्तृतया भानेन तद्विरोधोद्भावनासम्भवादिति वाच्यम्, भेदस्य प्रथमे चतुर्थं चोक्तरीत्या दुर्निरूपत्वे तत्प्रतियोगिकतया तदायत्तसिद्धिकत्वेनाभेदस्यापि दुर्निरूपत्वात् । न च भेदप्रतियोगिकत्वोपलक्षितं तथापि सत्यं स्यात्; भेदप्रतियोगिकतासद्भावदशायां तस्या उपलक्षणत्वासम्भवात्, तदसद्भवदशायां त्वभेदस्यापि स्वरूपत्यागप्रसङ्गात्,**

स्फूर्त्यनात्मकोऽपि कोऽप्यस्तीति, तथा सति नासौ स्फुरेदित्याद्यात्मिका । ननु ज्ञेयमात्रस्य ज्ञानाभिन्नत्वे क्रियाकर्मभावविरोध इति चेत्तत्राह—सर्वस्येति । अथवा, ननु सामग्रा अपि ज्ञानात्मकत्वेनैकस्मिन् कर्मकर्तृभावविरोधान्न ज्ञानसामग्रीजन्यत्वं लक्षणं सम्भवतीति चेत्तत्राह—सर्वस्येति । ज्ञानाभिन्नत्वं हि ज्ञानभेदाभाववत्त्वं, तत्र भेदमात्रस्य दुर्निरूपताया प्रागुक्तत्वेनाभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वाद् भेदज्ञानमन्तरा तत्प्रतियोगिकत्वविशिष्टाभावस्याप्यशक्यनिरूपणत्वमित्याह—भेदस्येति । न च भेदप्रतियोगिकत्वविशिष्टाभावस्य भेदाधीनसिद्धिकत्वेन दुर्निरूपत्वेऽपि तदुपलक्षितस्याभावस्य सत्यत्वं स्यादित्याह—न चेति । नहीत्यर्थः । तत्र हेतुमाह—भेदप्रतियोगिकतेति । स्वरूपत्याग-

ठीक नहीं, क्योंकि सामग्री के भी ज्ञानरूप होने से एक में कर्तृकर्मभाव कैसे होगा, तो यह कथन उचित नहीं; क्योंकि सभी वस्तु के ज्ञानात्मक होने से 'देवदत्तो ग्रामं गच्छति इत्यादि में ज्ञान ही क्रिया, कर्म एवं कर्तृरूप से भासित होता है । अतः क्रियाकर्मभाव तथा कर्मकर्तृभाव विरोध देना सम्भव नहीं है ।

समाधान—खण्डन के प्रथम तथा चतुर्थ परिच्छेदोक्त रीति से भेद के दुर्निरूप होने से एवं अभेद के भेदप्रतियोगिक होने से भेदाधीनसिद्धिक अभेद भी दुर्निरूप ही है । यदि कहा जाय कि भेद के दुर्निरूपण से तद्विशेषणक-अभावरूप अभेद के दुर्निरूप होने पर भी भेदप्रतियोगिकत्व को उपलक्षण मानने पर अभेद सत्य हो सकता है, तो यह कथन युक्त नहीं; क्योंकि भेदप्रतियोगिकता के सद्भाव दशा में भेदप्रतियोगिकता को उपलक्षण नहीं कह सकते, और यदि भेदप्रतियोगिकता का सद्भाव नहीं है तो उस दशा में अभेद स्वात्मलाभ ही नहीं कर सकता । ( तात्पर्य यह है कि उपलक्षणीभूत भेद प्रतियोगिकता के अविद्यमान होने से तदुपलक्षित अभेद भी नहीं रह सकता ) । ( यदि कहें कि तादृशप्रतियोगिकता के न रहने पर भी स्वरूपतः अभेद रहेगा तो यह कहना उचित नहीं, क्योंकि उपलक्षितत्व के विशेषणत्व उपलक्षणत्व उभयपक्षों में भी दोष आता है ( भाव यह है कि यदि तदुपलक्षितत्व को विशेषण माना जाय तो भेदप्रतियोगिकत्वोपलक्षितत्वरूप विशेषण ज्ञान के लिए भेद ज्ञान आवश्यक है और भेदज्ञान

**उपलक्षितत्वस्य विशेषणत्वोपलक्षणत्वाभ्यां दोषाच्च । एतेन ज्ञानभिन्नाभिन्नत्व-मपि पराकार्यम् । द्वितीये तु जन्यतावच्छेदकं निरूपणीयम् । न च ज्ञानत्वं तत्;**

## दर्शनसर्वस्वे शून्यवादे राजहंसः

उपलक्षितत्वस्येति । अस्य विशेषणत्वे उपलक्षितमपि विशिष्टमेवेति कथमुक्तरीत्या सत्यम्, उपलक्षणत्वे त्वनवस्था, उपलक्षितत्वोपलक्षितत्वस्यापि धर्मस्योपलक्षणताया एव वक्तव्यत्वात्, यदि तूपलक्षितत्वं न धर्मः किन्तु स्वरूपमात्रम्, तदा व्यावृत्तस्वरूपाज्ञानेन विषयत्वस्य ज्ञानभिन्नेऽपि स्वीकारप्रसङ्गः, नहि तस्य निस्स्वरूपतेति भावः ।

प्रसङ्गादिति । नहि केवलमभावोऽभेदोऽपितु भेदप्रतियोगिकोऽभावोऽतस्तदभावे तस्य स्वरूपमेव न स्यादिति भावः । ननु तादृशप्रतियोगिताया असद्भावदशाया-मपि स्वरूपतोऽभेदः स्यादिति चेत्तत्राह—उपलक्षितत्वस्येति । एतेनेति । भेदघटितलक्षणस्यासम्भवेनेत्यर्थः । ननु ज्ञानसामग्रीजन्यत्वमेवलक्षणमस्त्विति चेत्तत्राप्याह—द्वितीयेत्विति । ज्ञानसामग्रीजन्यत्वं ज्ञेयलक्षणं मन्वानेन ज्ञानसामग्री तावन्निरूपणीया, तत्र ज्ञानविशेषसामग्री विवक्षिता, ज्ञानसामान्यसामग्री वा, नाद्यः; इन्द्रियादीनां परस्परव्यभिचारात् । न द्वितीयः आत्ममनः सयोगस्यापि निमित्तान्तरसापेक्षत्वेन वक्तुमशक्यत्वात् । सामग्री चाशक्यनिरूपणेति प्राक्प्रति-पादितमेव । ननु पूर्वज्ञानघटितैव सामग्री विवक्षितेति चेत्तत्राह—जन्यतावच्छेदक-मिति । ज्ञानसामग्रीजन्यत्वं हि ज्ञानसामग्रीत्वावच्छिन्नजनकतानिरूपित जन्यतावत्त्वम् । तत्र च न जन्यतावच्छेदकमनुगतं किञ्चित्पश्यामः । घटत्वादीना-मपोहरूपाणामननुगमात् । अथ ज्ञानत्वमनुगतं तदेव तदित्याशङ्क्य-

पूर्वोक्त रीति से असम्भव है, अतः उसके विना तादृशविशेषणज्ञान, और विशेषणज्ञान के विना तद्विशिष्ट अभेद ज्ञान भी असम्भव है । यदि उपलक्षितत्व को भी उपलक्षण ही मानें तो पुनः तदुपलक्षितत्वोपलक्षितत्व धर्म प्राप्त होगा और उसके विषय में भी यही जिज्ञासा उपस्थित होगी कि वह विशेषण है या उपलक्षण, विशेषणपक्ष में पूर्वोक्त दोष आने से उसे भी उपलक्षण ही मानना होगा, तब वहाँ पर भी पूर्ववत् विकल्प तदवस्थ रहेगा, ऐसी स्थिति में अनवस्था प्रसक्त होगी । यदि उपलक्षितत्व धर्म नहीं, किन्तु स्वरूप हो है, तब तो व्यावृत्तस्वरूप का ज्ञान न होने से विषयत्व ज्ञानभिन्न में भी स्वीकृत हो जायेगा, ऐसी स्थिति में ज्ञानभिन्न भी निःस्वरूप न रहेगा ) । इन्हीं दोषों से ज्ञानभिन्नाभिन्नत्व भी ज्ञेयलक्षण सम्भव नहीं, क्योंकि यह भी अभेद घटित होने से उक्त-दूषणगणग्रस्त है । द्वितीय ज्ञानसामग्रीजन्यत्वलक्षण भी युक्तिसंगत नहीं है क्योंकि उसमें जन्यतावच्छेदक-निरुपण करना आवश्यक है जो कि दुःशक्य है । यदि कहें कि ज्ञानत्व ही जन्यतावच्छेद है तो यह ठीक नहीं, क्योंकि ज्ञानभिन्नाभिन्नत्व में आकारपर्यवसान के

**आकारस्य ज्ञानभिन्नाभिन्नतायां पर्यवसानस्योक्तत्वेन ज्ञानत्वस्य तत्रासम्भवात्, अतएव तत्र ज्ञानसामग्रीजन्यत्वमपि कथम्। ननु भेदस्यापि स्वविषयकज्ञानात्मकत्वमुक्तमेव, किञ्च त्यक्त एव भेदाभेदपक्षः; अतएव घटमहं जानामीत्यत्र भेदाभेदस्फुरणमपि नापाद्यमिति चेन्न, साकारं सर्वं ज्ञानमिति मितिः प्रमिति र्वा भ्रान्ति र्वा विकल्पो वा, आद्ये आकारसाहित्यं नालीकं नवाऽऽकारात्मकं नवा ज्ञानात्मकम् तथा सति ज्ञानं ज्ञानमित्याद्यपि तादृशमितिजननाय प्रयुज्येत, अतएव सर्वं प्रमेयमिति ज्ञानं स्वविषयकमित्यर्थस्य सर्वप्रमेयमिति ज्ञानं स्वाभिन्नं स्वसामग्रीजन्यं वेति व्यवहारागोचरतया विषयत्वस्य ज्ञानाभिन्नत्वाद्यात्मकताऽशक्यशङ्कैव। द्वितीये तु ज्ञानस्य निराकारत्वप्रसङ्गः।**

नालीकमिति। प्रमितिविषयत्वादेव। न वाऽऽकारात्मकमित्यादि। तदात्मकं हि वस्तु प्रमित्या तन्निरूपितत्वेन तन्निष्ठत्वेन च न शक्यं विषयीकर्त्तुम्, साहित्यं त्वाकारनिरूपितत्वेन ज्ञाननिष्ठत्वेन च विषयीकृतं प्रमित्येति भावः। ज्ञानात्मकत्वाभावे तु हेत्वन्तरमप्याह तथा सति ज्ञानमित्यादि।

निषेधति—न चेति। हेतुमाचष्टे—आकारस्येति। अतएव = ज्ञानभिन्नाभिन्नत्वादेवाकारस्य।

ननु भेदस्य स्वविषयकज्ञानात्मकत्वे, घटमहं जानामीति प्रतीतेरेवाकारविषयकत्वेन तद्विषये तदभेदव्याप्तेश्च दर्शितत्वेन ज्ञानज्ञेययोरत्यन्ताभेदपक्षस्यैवाङ्गीकार्यत्वे च न भेदांशमादाय तत्र ज्ञानत्वाभाव इत्याशयेनाशङ्कते—नन्विति। विज्ञानस्य साकारत्वमेव न युक्तिसह विकल्पासहत्वादित्याशयेन साकार सर्वं ज्ञानमिति ज्ञानं विकल्पयन् परोक्तं परिहरति—साकारमिति। अत एवेति। आकारसाहित्यस्य ज्ञानात्मकत्वादेव। अशक्यशङ्कैवेति। अन्यथा तादृशार्थे तादृश-

उक्त होने से ज्ञानत्व का मानना असम्भव है। अतएव वहाँ ज्ञानसामग्राजन्यत्व भी कैसे रहेगा।

## ज्ञान में साकारत्व निरास

शङ्का—भेद भी स्वविषयकज्ञानात्मक कहा गया है, और दूसरी बात यह है कि भेदाभेद पक्ष भी परित्यक्त हो चुका है, अतएव 'घटमहं जानामि' यहाँ पर ज्ञानज्ञेय का भेदाभेद-भान भी आपादनीय नहीं हो सकता है।

समाधान—'साकारं सर्वं ज्ञानम्' यह ज्ञान प्रमा है? या भ्रम है. अथवा विकल्प है? प्रथम पक्ष में ज्ञानविशेषणीभूत आकारसाहित्य न अलीक हो सकता है, क्योंकि प्रमा का विषय है अन्यथा प्रमात्व ही समाप्त हो जायेगा। न आकाररूप ही हो सकता, और न ज्ञानरूप ही, क्योंकि तदात्मक वस्तु तन्निरूपितत्वेन या तन्निष्ठत्वेन प्रमा का विषय नहीं हो सकता, यहां तो आकारनिरूपितत्वेन एवं ज्ञाननिष्ठत्वेन साहित्य

**तृतीये तु ज्ञानानां समेषां तादृशविकल्पविषयतया विकल्पात्मकत्वेन न किमपि ज्ञानं प्रमात्मकं स्यात् । अथ विकल्पो व्योमकुसुममित्यादिकः प्रमित्यनात्मकः, अयं तु विकल्पोऽपि प्रमित्यात्मक एवेति कथञ्चिद्ब्रूषे, तदा प्रथमकल्पोक्तदोषः । अथ मा भूत्किञ्चिज्ज्ञानं प्रमा, संवृत्यैव तु व्यवहारः, न चास्यैव ज्ञानस्य प्रमात्वा-**

कथञ्चिद्ब्रूषे इति । आकारसाहित्यमात्रविषयकत्वावच्छेदेन विकल्पत्वं नतु सर्वज्ञानविषयकत्वावच्छेदेनेति हि न विषयविषयिभावनिरूपणं विना वक्तुं शक्यते, नचान्यदवच्छेदकमस्तीति सर्वांशे विकल्पत्वमश्रद्धेयमिति भावेनोक्तं कथञ्चिदिति । नचास्यैवेति । अस्य न किञ्चन ज्ञानं प्रमेत्यस्य ।

व्यवहारःस्यात् । आदिना ज्ञानसामग्रीजन्यत्वं बोध्यम् । भ्रान्तिपक्षं प्रतिक्षिपति- द्वितीये त्विति । निराकारत्वप्रसङ्ग इति । निराकार एव साकारत्वारोपेण भ्रान्तिसम्भवात्, साकारं सर्वं ज्ञानमिति ज्ञानं यदि भ्रान्तिः स्यात् तज्ज्ञानं निराकारं स्यादितिप्रसङ्गः । विकल्पपक्षमपहस्तयति—तृतीय इति । न किमपीति । तद्विषयस्य तदात्मकत्वनियमस्योक्तत्वात् । ननु विकल्पस्यैव कल्पद्वयं प्रमित्यनात्मकः प्रमित्यात्मकश्चेति तत्र द्वितोयस्वीकारे नोक्तदोष इत्याह—अथेति । कथञ्चिदिति । टीकोक्तस्तद्धेतुः । तदेतन्निराचष्टे—तदेति । प्रमामात्रस्याभाव इष्टापत्तौतु सिद्धं नःसमीहितमिति स्वाभिप्रायं स्फोरयितुमुपक्रमते—अथेति । इति मन्यस इतिपरेणान्वयः । अथ प्रमामात्रस्याभावे व्यवहारोऽपि परिलुप्येत, व्यवहारमात्रस्य तदधीनत्वादिति चेत्तत्राह—संवृत्यैवेति । संवृणोतीति संवृति-

प्रमिति का विषय हो रहा है अतः तदात्मक नहीं हो सकता । तथासति तादृशज्ञानोत्पत्ति के लिए ज्ञानं ज्ञानं इत्याकारकशब्दप्रयोग भी होना चाहिए । अतएव 'सर्वं प्रमेयमिति ज्ञानं स्वविषयकम्' एतत् वाक्यजन्य जो स्वविषयकत्वरूप—अर्थ है उसके 'सर्वं प्रमेयमिति ज्ञानं स्वाभिन्नं स्वसामग्रीजन्यं वा' इत्याकारक व्यवहारागोचर होने से विषयत्व के ज्ञानाभिन्नत्वादिरूप होने की आशङ्का निर्मूल ही है । यदि द्वितीय भ्रान्तिपक्ष मानें तो ज्ञान में निराकारत्व प्रसक्त हो जायेगा । और तृतीय विकल्पपक्ष में तो सभी ज्ञान विकल्पात्मकज्ञानगोचर होने से विकल्परूप ही हो जायेंगे, कोई भी ज्ञान प्रमात्मक न रहेगा । यदि कथञ्चित् आप यह कहें कि—'गगनकुसुमम्' इत्याकारक विकल्प प्रमित्यनात्मक है और 'साकारं सर्वं ज्ञानम्' इत्याकारक विकल्प होते हुए भी प्रमित्यात्मक है, तो यह कथन सर्वथा अनुचित है, क्योंकि ऐसा मानने पर प्रथमकल्पोक्त दोष आपतित होगा ।

शङ्का—तृतीय पक्ष स्वीकार करने पर कोई भी ज्ञान प्रमा रूप न हो तो, न हो, व्यवहार की उपपत्ति तो संवृत्ति ( अविद्या ) से ही हो जायेगी । यदि कहें कि 'न किञ्चित् ज्ञानं प्रमा' इत्याकारक ज्ञानप्रमा है, या अप्रमा, उभयथा व्याघात है । ( भाव

**प्रमात्वाभ्यां व्याघातः, यक्षानुरूपो बलिरिति न्यायेन संवृत्यैव संवृतेर्व्यवस्थापने बाधकाभावात्, न हि संवृतिरपि पारमार्थिकीति वक्ष्यते येन तद्व्यवस्थापनाय पर्यनुयुज्येत, न च व्यवस्थापनापक्षाश्रयणमिदानीं मे कुलधर्मोऽपि तु खण्डन-पक्षाश्रयणमेवेति न व्याघातशङ्कापि, द्रष्टव्यं च व्याघातखण्डनमनुमानखण्डने द्वितीयपरिच्छेदे च शारदायामिति मन्यसे, तदाऽस्मदीयशून्योद्यानरिरंसोस्ते** रविद्याऽसत्प्रकाशनसामर्थ्यम्, कल्पनामात्रमितियावत्। तयैव भगवत्या सर्व-व्यवहारोपपत्तेः अत एव 'यदि स्वतःपरत उभयतोऽहेतुतश्च नास्ति भावानामुत्पादः, तत्र कथमविद्याप्रत्ययाः संकारा इत्युक्तं भगवता ? उच्यते; संवृतिरेव, न तत्त्वमि' ( म० शा० १ ति मध्यमकशास्त्रेऽप्यभाणि। व्याघात इति। 'न किञ्चन ज्ञानं प्रमा' इत्यस्य प्रमात्वेऽस्त्येव तादृशं प्रमात्मकं ज्ञानमिति तन्निषेधः कुतः, तस्याप्रमात्वे च निषेधस्यारोपितत्वेन तत्प्रतियोगिनः प्रमात्मकज्ञानस्य सत्त्वं स्यादेवेति-अत्रापि तन्निषेधोविरूद्धएवेति व्याघातः। समाधत्ते—यक्षेति। यादृशो-यक्षः = पूज्यस्तादृशो बलिरूपहार इत्यर्थः। प्रकृते च सांवृतव्यवहारस्य संवृत्यैव निर्वाहौचित्यात्। नन्वेवं व्यवहारनिदानभूता संवृतिरेव सत्या स्यादिति चेत्तत्राह—नहीति। ननु प्रमामात्रस्याभावे सिद्धान्तव्यवस्थितिस्ते न स्यादित्याशङ्क्य-निराचष्टे— न चेति। इदानीम् शून्यवादिना विवादकाले। व्याघातस्यापि निरूच्य योजयितुमशक्यत्वमित्यभिप्रायेणोक्तम्—द्रष्टव्यमिति। शून्यवादी स्वाभिप्रायं प्रकटयति—तदेति। संवृत्या व्यवहारमुपपादयताऽपि ज्ञानमवश्यमास्थेयम्, संवृते-रप्यसत्प्रकाशनसामर्थ्यापरपर्यायाः ज्ञानाश्रिताया एव स्वीकर्तुमुचितत्वात्। अत एव ग्रन्थकृतापि 'शून्यवादिनोऽपि न तत्स्वरूपे विप्रतिपत्तिरपि तु परमार्थिकत्वे एवे' त्युक्तम्। ज्ञानस्य च सर्वथाऽप्रमाणत्वेऽप्रमाण्यशङ्कास्कन्दितत्वे वा निष्कम्प-

यह है कि यदि उस ज्ञान को प्रमा मानें तो प्रमाज्ञान हो ही गया, ऐसी स्थिति में कोई भी ज्ञान प्रमा नहीं होगा' यह कथन विरुद्ध है। और यदि उसे अप्रमा मानें तो, जिस ज्ञान के द्वारा प्रमा ज्ञान के अभाव को मानकर संवृत्ति से ही व्यवहार की उपपत्ति कर रहे हैं उसीके अप्रमा हो जाने से अपने लक्ष्य की सिद्धि नहीं कर पायेगा )। तो यह कहना उचित नहीं; क्योंकि 'यक्षानुरूपो बलिः' ( जैसा देव वैसी बलि ) एतत् न्यायानुसार संवृति द्वारा ही संवृति का व्यवस्थापन करने में कोई बाधक नहीं है। अर्थात् उस ज्ञान को सांवृत ( अप्रमा ) ही मानेंगे। क्योंकि संवृति भी पारमार्थिक नहीं है यह वक्ष्यमाण है। जिससे कि उसके व्यवस्थापनार्थ पर्यनुयोग ( वह कैसे सिद्ध होगी इत्याकारक प्रश्न ) किया जावे। दूसरी बात यह है कि–किसी वस्तु का व्यवस्थपन करना हमारा कुलधर्म नहीं है अपितु परपक्ष खण्डन ही हमें करना है, ऐसी स्थिति में व्याघात की आशङ्का भी नहो की जा सकती। विशेषरूप से व्याघातखण्डन-खण्डनस्थ अनुमानखण्डन तथा खण्डन-शारदा के द्वितीयपरिच्छेद में द्रष्टव्य है।

**स्वागतमादराद्विदध्महे। वस्तुतस्तु सर्वज्ञानाप्रामाण्याभ्युपगमोऽनुचित एव व्यवहारदृशा ज्ञानानां प्रामाण्यस्य यौक्तिकदृशा चाप्रामाण्यस्यौत्सर्गिकत्वं हि नापवादस्थलं विना निर्वहति, शून्यत्वाशून्यत्वाद्योः सांवृतत्वाविशेषेऽपि शून्यत्वादिग्रहे उत्कर्षस्य कथंचिदवश्योपेयत्वादिति हि वक्ष्यते।**

**किंच ज्ञानत्वमपोहात्मकं वाऽन्यादृशं वा उभयथाऽपि प्रतिव्यक्तिविश्रान्तं**

स्वागतमादरादिति। शून्योद्यानरिरंसा हि न बुभुक्षोरपि तु मुमुक्षोरिति तस्यादरः समुचित एव, शून्यस्यापि चोद्यानत्वं रागद्वेषाद्युपप्लवोपशमप्रदतयेति भावः।

प्रवृत्यजनकत्वस्य सर्वानुभवसिद्धत्वात् क्वचित् कथञ्चित् प्रामाण्यमप्यास्थेयमेवेत्यत आह—वस्तुतस्त्विति। अनौचित्ये हेतुमाह—व्यवहारदृशेति।

किञ्च ज्ञानस्य साकारत्वमनुभवविरुद्धमपि, प्रत्यक्षेण निराकारस्यैव तस्यानुभूयमानत्वात्। यथा दर्पणो बिम्बाकारसदृशाकारं प्रतिबिम्बं स्वस्मिन् प्रतिगृह्य तद्युक्तोऽनुभूयते तथा ज्ञानमपि यदि साकारमेव स्यात्तर्हि तद् घटाद्यर्थाकारसदृशाकारं विषयत्वेन स्वस्मिन् प्रतिगृह्य तद्युक्तं प्रत्यक्षेणानुभूयेत, न तु तथाऽनुभूयतेऽतोनिराकारमेवाभ्युपेयम्।

किञ्च ज्ञानस्य साकारत्वे दूरत्वादिव्यवहारोऽपि परिलुप्येत। यतोहि—यथाऽल्पे दर्पणे महापर्वतादिः स्वाकारसदृशेनाल्पेनाकारेण लक्षितो भवति, तथैवान्तरे समीपतरवर्तिनि ज्ञाने महानपि दूरस्थोऽपि पर्वतः स्वाकारसदृशेनान्येनाल्पेन समीपतरवर्तिनाचाकारेण प्रतीयादिति गता दूरत्वादिकथा साकारवादे।

किञ्च ज्ञानं यदि साकारं स्यात्तर्हि तद् यथा घटगतमाकारं गृह्णाति तथा घटगतां जड़तामपि गृह्णीयात्तर्हि घटवज्ज्ञानमपि जडं स्यात्; तथा च ज्ञानस्य स्वरूपहानिरेव स्यादिति वृद्धिमिच्छतो मूलमपि ते नष्टमिति हा? कष्टतरम्।

ज्ञानत्वनिरासमवतारयति—किञ्चेति। अपोहात्मकमिति। ज्ञानाद्यन्य-

समाधान—तब तो आप हमारे शून्योद्यान में रिरंसु ( रमणेच्छु ) हैं, अतः हम आपका सादर स्वागत करते हैं। वस्तुतस्तु सब ज्ञानों का अप्रामाण्य मानना अनुचित है, व्यवहारदृष्टि से ज्ञानों के प्रामाण्य का और यौक्तिक दृष्टि से अप्रामाण्य का औत्सर्गिकत्व भी अपवादस्थल के विना अनिर्वाह्य है, क्योंकि शून्यत्व अशून्यत्व दोनों के सांवृत होने पर भी शून्यत्वादिग्रह में कथञ्चित् किञ्चित् उत्कर्ष तो मानना ही होगा, जो आगे कहेंगे।

### ज्ञानत्व का खण्डन

किञ्च—ज्ञानत्व क्या अपोहरूप है या अन्यादृश, उभयथा भी प्रतिव्यक्तिविश्रान्त है? या अनुगत, प्रथमकल्प में अनुगम न होगा। यदि द्वितीय अनुगतपक्ष मानें

**वाऽनुगतं वा, आद्येऽननुगमः, द्वितोयेत्वपसिद्धान्तः, देशकालानुगमयोर्भवतैव विज्ञानवादशेषे निरस्तत्वात्। किंचानुगतत्वं व्यापकत्वमिह वाच्यम्, तच्च देशानवच्छिन्नत्वं वा तद्वन्निष्ठभेदप्रतियोगितानवच्छेदकत्वं वाऽभावरूपम्,**

यावदुपस्थितव्यक्तिविशेषव्यावृत्यात्मकमित्यर्थः। सौगतगत्याऽपोहस्वरूपं मनाक्-विमृष्यते—अपोह्यते व्यावर्त्यते इत्यपोहः। बुद्ध्यात्मार्थात्मभेदतस्तस्य द्वैविध्यम्। तत्र बुद्ध्यात्मा-बुद्धिप्रतिभासोऽर्थेष्वनुगतैकरूपत्वेनाध्यवसितः। अर्थात्मा च विजातीयव्यावृत्तमर्थस्वलक्षणमिति। तदुक्तम्—

एकप्रत्यवमर्शस्य य उक्ता हेतवः पुरा।
अभयादिसमा अर्थाः प्रकृत्यैवान्यभेदिनः॥
तानुपाश्रित्य यज्ज्ञाने भात्यर्थप्रतिबिम्बकम्।
कल्पकेऽर्थात्मताऽभावेऽप्यर्थाः इत्येवनिश्चितम्॥
तत्रान्योऽपोह इत्येषा संज्ञोक्ता सनिबन्धना।
स्वलक्षेऽपि तद्धेतावन्यविश्लेषभावतः॥ इति

अभयादिसमा इति। यथा हरीतक्यादयो बह्वोऽन्तरेणापि सामान्यमेकं ज्वरादिशमनलक्षणं कार्यं कुर्वन्ति तथैव शाबलेयादयोऽप्यर्थाः सत्यपि भेदे प्रकृत्यैकाकारप्रत्यवमर्शस्य हेतवो भवष्यन्त्यन्तरेणापि वस्तुभूतं सामान्यम्। तानुपाश्रित्य इति। अभयादिसमानार्थानाश्रित्य हेतूकृत्य तदनुभवबलेन समुत्पन्ने सविकल्पके ज्ञाने तादात्म्येन भासमानोऽर्थाभासोऽपोहः, बाह्यार्थात्मताया अभावेऽपीत्यध्यवसितम्। अन्यविश्लेषभावतः इति। अन्यस्मात् = विजातीयाद्, विश्लेषः = व्यावृत्तिः, तस्य भावात्, विजातीयविश्लेषस्य विद्यमानत्वात् स्वलक्षणे—एव मुख्यतोऽपोहव्यपदेश इति भावः। सनिबन्धनेति। निबन्धनचतुष्टयादिकं तत्वसंग्रहादावुट्टङ्कितमिति तत एव विशेषतोऽवगन्तव्यम्। अतद्व्यावृत्तिरूपस्तदर्थस्तु पार्यन्तिक इत्यवधेयम्। अन्यादृशम् = जात्यात्मकं धर्मविशेषात्मकं वा। तार्किकविशेषेण जातिस्वीकारेऽपि श्रौतैस्तदनङ्गीकारात्। अननुगम इति। नन्वस्त्वननुगमः किन्तेनेतिचेन्नानुगतव्यवहाराभावप्रसङ्गात्। किञ्चापोहस्य भेदात्मकतया भेददुर्निरूपतायाश्चासकृदावेदितत्वादन्यादृशस्य च भवतैवानभ्युपगमाद्, अभ्युपगमेचापसिद्धान्तापातान्नोभयथापि वक्तुं शक्यम्। द्वितीय इति। अनुगतत्वस्वीकारे। अपसिद्धान्तमेव स्फोरयति—देशकालेति। ननु मास्तु विज्ञानवादिमतेनेदमपसिद्धान्तभिया, तार्किकमतेन तु स्यादिति चेत्तत्राह—किञ्चेति। अभाव-

तो अपसिद्धान्त हो जायेगा। क्योंकि विज्ञानवाद के अन्त में आपने ही देशकालानुगम का निरास किया है। दूसरी बात यह है कि प्रकृत में अनुगतत्व व्यापकत्वरूप कहना होगा, और वह देशानवच्छिन्नत्वरूप हो, या तद्वन्निष्ठभेदप्रतियोगितानवच्छेदकत्वरूप,

**अभावश्चावयोरलीकः; तथा च व्यापकत्वे व्यापकत्वमस्ति, न वा, आद्ये आत्माश्रयोऽनवस्था वा, न चेष्टापत्तिः, व्यवहारानुगमदर्शनात् । सर्वस्य सर्वव्यापकत्वप्रसङ्गश्च, जातेःसर्वव्यापकत्वात् । सम्बन्धभेदमादाय प्रत्यवस्थानं तु निराकृत-**

अभावश्चावयोरलीक इति । अलीकत्वोक्तेः फलं द्वितीयकल्पनिराकरणे व्यक्तीभविष्यति।

जातेः सर्वव्यापकत्वादिति । तथाच जातेर्धर्मभूता व्यापकतापि तद्द्वारा सर्वं व्याप्नुयादितिभावः । जातिश्चापोहस्याप्युपलक्षणम्, अलीकेऽपि तस्मिन् देशानवच्छिन्नत्वरूपव्यापकतासत्त्वात् । ननु जातिः स्वाश्रयीभूतव्यक्तिकलापं नित्यमनित्यं वा समवायेन व्याप्नोति, स्वाश्रयशून्यदेशे तु कालिकेनैव वर्तत इति कथमुक्तप्रसङ्गोऽत आह सम्बन्धभेदमादायेति । अन्यत्र = साक्षात्त्वजातिखण्डनशारदायाम् । घटसंयुक्तादिदेशमवच्छेदकीकृत्यैव देशान्तरे कालिकेन घटाधिकरणतेति घटसंयोगादिशून्यदेशे उत्पन्ने घटादौ कथं

रूपमिति । उभयथापीतिशेषः । आवयोः = शून्यवादिविज्ञानवादिनोः । आद्य इति । एकस्य स्ववृत्तित्वे आत्माश्रयः, अपरापरस्वीकारे त्वनवस्था ।

जातेः सर्वव्यापकत्वादिति । ननु जातिः स्वीकर्तुं शक्या, लक्षणप्रमाणयोरभावात्, नित्यत्वसमवायादेर्निराकृतत्वात् । किञ्च सामान्य स्वाश्रयाद्भिन्नमभिन्नं वा भिन्नाभिन्नं वा, नान्त्यो विरुद्धत्वाद् भेदाभेदयोः, नहि तदेव ततोभिन्नमभिन्नं वा सम्भवति । भिन्नं चेत्सर्वगतं वा स्वाश्रयसर्वगतं वाऽद्ये सर्ववस्तुसङ्करप्रसङ्गः । अन्तरालेऽनुपलब्धिश्च । द्वितीये समुत्पन्नायां व्यक्तौ ततः प्रागसत्कथं तत्रोपलभ्यते नित्यस्योत्पत्त्यसम्भवात् । न चैकस्मिन्नर्वातिष्ठमानं तद् अन्योत्पन्ने तस्मादागच्छत्सम्बद्धयत इति वक्तुं शक्यम्; अमूर्तत्वात्तस्य, द्रव्यत्वापत्तेश्च । अनागच्छदेव सम्बद्धयत इति चेत् सम्बन्ध एव दुर्घटः । अपि च

उभयथा भी अभावरूप ही होगा, और अभाव हम दोनों ( शून्यवादीविज्ञानवादी ) के मत में अलीकरूप है । तथा च व्यापकत्व में व्यापकत्व है या नहीं, यदि है तो आत्माश्रय होगा, यदि कहें कि आधारभूत व्यापकत्व भिन्न है और आधेयभूत व्यापकत्व भिन्न है । अतः आत्माश्रय दोष नहीं होगा तो, अनवस्था हो जायेगी । क्योंकि द्वितीय-तृतीयादि धाराप्रविष्ट प्रत्येक व्यापक में भी व्यापकत्व अवश्य मन्तव्य होगा । उसकी इष्टापत्ति भी नहीं की जा सकती, क्योंकि व्यवहारानुगम देखा जाता है । तथा सभी पदार्थ सबके व्यापक हो जायेंगे । क्योंकि जाति सर्वव्यापक होती है । ( जाति की धर्मभूताव्यापकता भी तद् द्वारा सबको व्याप्त करती है । यहाँ जाति अपोहकी भी उपलक्षण है, उस अलीक अपोह में भी देशानवच्छिन्नत्वरूपव्यापकता रहती है । यदि कहें कि जाति स्वाश्रयीभूत व्यक्ति में समवायेन रहती है तथा स्वाश्रयशून्यदेश में कालिक सम्बन्धेन, इस प्रकार सम्बन्ध भेद हो जाने से सर्वत्र व्यापकतापत्ति न होगी, तो यह कथन साक्षात्त्व जाति

मन्यत्र । द्वितीये तु देशानवच्छिन्नस्य देशावच्छिन्नत्वं व्याहतम्, अनलीकाभाव-

घटत्वाद्यभिसम्बन्ध इत्यादिकं तत्र तत्रत्यराजहंसे च निरूपितम् । एवं च कालिक-सम्बन्धस्यात्र शरणीकर्तुमशक्यत्वेन कथमपि जातिमात्रस्य व्यापकत्वे सर्वस्य सर्वजाति-मत्तया जातेश्च तत्तन्निरूपितव्यापकतावच्छेदकतया सर्वस्य सर्वव्यापकत्वप्रसङ्गः स्पष्ट एव । व्यापकतायां व्यापकताभ्युपगमस्तु प्रकृतः केवलमीदृशप्रसङ्गस्योपोद्बलक इत्ये-तावतैव तमाश्रित्य प्रसङ्गोऽयमुपन्यस्तः । एवं च सामान्यतः कस्यचित् कंचित्प्रति व्यापकत्वमिष्टमेव, विशिष्यापि धूमादिमन्निष्टभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वानां प्रत्येकं वन्हित्वादिकं प्रत्येव व्यापकत्वमिति कथमयमुक्तः प्रसङ्ग इति न शङ्कनीयम् । जातिवादत्यागपर्यवसन्ने जातिव्यापकतावादत्यागे तु 'व्यवहारानुगमदर्शना' दित्येतत्पर्यन्त-मुक्तमेव दूषणमवगन्तव्यम् । प्रकृते च ज्ञानत्वस्यापि त्यागपर्यवसाने काऽसौ व्यक्तिर्या ज्ञानमितिनिरूप्येतेत्यलीकेष्वेवासौ लीयेत यदि निर्धर्मकस्वरूपमात्रसमर्थना वेदान्तिनां नेह कथञ्चिदर्थिता रक्षिका स्यात् । देशानवच्छिन्नस्येति । अभावस्यालीकस्य देशानवच्छिन्न-त्वध्रौव्यादितिभावः ।

विनष्टे घटे तत्तिष्ठति विनश्यति वाऽद्ये निराधारत्वप्रसङ्गः । द्वितीये नित्यत्व-व्याकोपः । कुत्रचित् गमनेत्ववोचाम । न च व्यक्तितोऽभिन्नमपि तन्नित्यस्य तस्यानित्यात्मकत्वायोगात्, अनित्यत्वे च व्यक्तिमात्रमेव स्यान्न तु जातिः । अतएवोक्तम्—

नायाति न च तत्रासीदस्ति पश्चान्न चांशवत् ।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ॥ इति ।

तथा च न जातिमादाय सर्वव्यापकत्वप्रसङ्गः । ( प्र० वा० १५५ ) अनुवृत्तप्रत्ययः किमालम्बन इति चेदङ्गान्यापोहालम्बन एवेति सन्तोष्टव्यमिति चेत्मैवं भाषिष्ठाः; अपोहस्वीकारेऽपि तद्दूषणस्य तादवस्थ्यात् । अतएव टीका-याम्—'जातिश्चापोहस्याप्युपलक्षणम्' इत्युक्तम् । टीकायाम्—सर्वव्यापकत्व-प्रसङ्गः इति । व्यापकतावच्छेदकधर्मावच्छिन्नत्वादित्यादिः । देशानवच्छिन्नेति । तत्त्वञ्च देशनिष्ठावच्छेदकतानिरूपितावच्छेद्यत्वाभाववत्त्वम् । तस्य देशावच्छिन्न-त्वे विरोधः । न केवलमलीकाभाववादिमत एव व्याहतिरपि त्वनलीकाभाववादि-मतेऽपीत्याह—अनलीकाभाववादिमतेऽपीति । अपिनाऽलीकाभाववादिमतस्य दृष्टान्तता सूच्यते । अनलीकाभाववादिनश्च बौद्धातिरिक्ताः प्रायशःसर्वेऽपि-दर्शनकाराः । तत्र भावभिन्ने सत्त्वेन प्रतीत्यनर्हे वैशेषिकोक्ते सप्तमपदार्थे भाव-

खण्डन-शारदा में निरस्त है । ) द्वितीय कल्प में देशानवच्छिन्न में देशावच्छिन्नत्व मानना व्याहत है । अभाव को अनलीकवादियों के मत में भी देशत्वकालत्वव्यापकता के जाति-मात्र में विद्यमान होने से तद्वर्जितदेशाभाव होने से उक्तव्याघात दुर्वार ही है । इस

वादिमतेऽपि देशत्वकालत्वव्यापकत्वस्य जातिमात्रनिष्ठत्वेन तद्वर्जितदेशाभावे-नोक्तव्याघातो दुर्वार एव । व्यापकताखण्डनशारदा चेहानुसन्धेया । नित्यसमजात्यापत्तिस्तु न, दूषणक्षमत्वात्, अस्माकं व्यवस्थापनीयाभावाच्च, शून्यतायाः

'धर्मस्य तदतद्रूपविकल्पानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत् ॥'

इत्युक्त्या व्यापकत्वे व्यापकत्वाव्यापकत्वविकल्पानुपपत्त्या व्यापकत्वविशिष्टतया धर्मिखण्डने नित्यसमजात्यापत्तिमाशङ्क्याह निष्यसमाजाप्यापत्तिस्तु नेति । दूषणाक्षमस्यैव जात्युत्तरत्वं यथा, तथा द्रष्टव्यमनिर्वाच्यत्वनिरुक्तिशारदायाम् । स्ववक्त्रभिमतव्याघातकस्य जातित्व-पक्षे त्वाह अस्माकमित्यादि ।

भिन्नत्वमभावत्वमिति बहवः । भावभेदाश्रयरूपत्वस्य तल्लक्षणस्याभावघटितत्वेनान्योन्याश्रयादिदोषग्रस्ततयाऽभावत्वमखण्डोपाधिरिति नव्याः । अभावश्च भावाभावसाधारणाश्रय घटाभावस्य पटे पटाभावादौ च सत्त्वात् । स च भावातिरिक्तः कश्चित्पदार्थ इत्याधुनिका वैशेषिका नैयायिकाश्चोररीचक्रुः । प्राभाकरादयस्तु अभावस्याधिकरणस्वरूपत्वमङ्गीचक्रुः । तद्वर्जितदेशाभवेनेति । एतावता जातिनिष्ठव्यापकतारूपानलीकाभावस्यापि देशानवच्छिन्नत्वमुक्तम् । व्यापकत्वमपि दुर्घटमित्याशयेनाह—व्यापकताखण्डनेति । व्यापकत्वं स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकमिति सामान्याभावादिघटितत्वात्, पर्याप्तेर्निरासात्, प्रतियोगित्वादेरपि दुर्निरूपत्वादेतादृशलक्षणानामग्रहेऽपि तद्व्यवहारस्य तज्जन्यग्रहस्यानुभविकत्वेन तेषां तदनौपयिकत्वात् व्यावृत्यौपयिकत्वे तु व्यवहाराद्यौपयिकस्य वक्तव्यत्वादित्यादिशारदाऽनुसन्धेयेति भावः ।

अथ 'नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः' इति न्यायसूत्रानुसारेणानित्यत्वसाध्यधर्मस्वरूपविकल्पेन कुत्रचिन्नित्यत्वापादनं नित्यसमो भवति । यथा—अनित्यःशब्द इति प्रतिज्ञाते सति जातिवादी विकल्पयति—किमिदमनित्यत्वं शब्दस्य नित्यमथानित्यमिति, यदि तावदनित्यं तत्कदाचित्प्रच्यवते, तत्प्रच्युतेर्नित्यः शब्दः । अथ नित्यमनित्यत्वं तर्हि धर्मस्य नित्यत्वात् तस्य च निराधारस्यानुपपत्तेस्तदाश्रयस्य शब्दस्यापि नित्यत्वम् स्यात्, अनित्यत्वे हि शब्दे विनष्टे न तदाधारो धर्मो वर्तते । प्रकृते च व्यापकत्वसाध्यधर्मस्वरूपविकल्पः, व्यापकत्वं व्यापकं न वेति । तथा च नित्यसमजात्यात्मकः प्रतिषेधः स्यादित्याशङ्क्य प्रतिषेधति—नित्येति । प्रतिषेधे हेतुमाचष्टे—दूषणक्षमत्वा-

विषय में व्यापकताखण्डनशारदा अनुसन्धेय है । प्रकृतसमाधान में नित्यसमजात्यापत्ति भी नहीं दी जा सकती, क्योंकि यह (समाधान) दूषणक्षम है । [ अनिर्वाच्यत्वनिरुक्तिशारदोक्तदिशा दूषणाक्षम उत्तर जात्युत्तर कहा जाता है । स्ववक्त्रभिमतव्याघातक उत्तर के जात्युत्तरत्वपक्ष में यह ( समाधान ) जात्युत्तर नहीं कहा जा सकता है, ] क्योंकि हमारे

**सर्वासिद्धचैव सिद्धेः । एवं क्षणिकत्वस्य क्षणिकत्वाक्षणिकत्वाभ्यामपि क्षणिकज्ञानस्य दुर्निरूपत्वमेव, द्वितीये निर्धर्मिकधर्मासम्भवेन स्थायिस्वीकारप्रसङ्गात्, आद्ये चात्माश्रयापत्त्या नानुगमः, तद्रक्षणायैव चापसिद्धान्तमवधीर्य क्षणस्यातिरिक्तपदार्थतां शिरोमणिरप्यनुमेने । एवं ज्ञाने स्वनिरूपितविषयिताविशेषे सत्यतोपगमो न तद्धियः प्रमात्वसिद्धिं विना, सा च न तत्सत्यतासिद्धिं विनेति**

नानुगम इति । आत्माश्रयपरिहाराय क्षणिकत्वनानात्वस्य वाच्यत्वादिति भावः । अननुगमे इष्टापत्तिमाशङ्क्याह तद्रक्षणायैवेति । स्वजन्यविभागप्रागभावावच्छिन्नकर्मादिरूपोपाधेः क्षणव्यवहारहेतुत्वे हि नानुगमरक्षणम्, स्वत्वप्रवेशादिति भावः ।

ज्ञाने स्वविषयकत्वस्य सत्यस्यैव परेणोपगतत्वेन तत्र दोषमाह एवं ज्ञाने स्वनिरूपितेत्यादि । स्वाविषयकत्वं तु परापेक्षायामनवस्थादिना योगाचारेण स्वयमेव निरस्यत

दिति । दूषणासमर्थोत्तरत्वस्यैव जातिलक्षणत्वादितिभावः । अतएव 'अनुमानमात्रोच्छेदकतया जातित्वान्न पक्षेतर उपाधिरित्यपास्तम्, दूषणसमर्थत्वेन जातित्वाभावादि'त्युक्तं मणिकारैः । गदाधरोऽपि चाचकथत् तत्रैव 'दूषणासमर्थमुत्तरं जातिरिति जातिलक्षणादिति' । प्रकृते च दूषणसमर्थत्वान्न तदापत्तिः । ज्ञानस्य क्षणिकत्वादिधर्मैरपि दुर्निरूपत्वमित्याह—एवमिति । दुर्निरूपत्वमेवेति । एतदेव विवृणोति—द्वितीय इति । धर्ममात्रस्य किञ्चिदाश्रयत्वनियमादक्षणिकत्वस्याश्रयेण स्थायिना भाव्यमितिभावः । स्थायिस्वीकारप्रसङ्गादिति । अक्षणिकत्वस्थायिद्वारा सर्वेषां स्थायित्वस्वीकारप्रसङ्गादित्यर्थः । क्षणिकत्वस्य क्षणिकत्वपक्षं प्रतिक्षिपति—आद्य इति । ननु न क्षणिकत्वस्यैकत्वमभ्युपगच्छामो येनात्माश्रयः स्यादपित्वनेकत्वं, तथा च नात्माश्रय इत्याशयेन दूषणान्तरमाह—नानुगम इति । ननु मा भूदनुगमः किंनश्छिन्नमिति तत्राह—तद्रक्षणायैवेति । अनुगमरक्षणायेत्यर्थः । अनुमेन इति । शब्दमणिदीधिताविति शेषः । सोऽपीति ।

द्वारा व्यवस्थापनीयतया स्वाभिमत नहीं है । शून्यता तो सर्वासिद्धिमात्र से ही सिद्ध है । एवं क्षणिकत्व के क्षणिकत्वाक्षणिकत्व विकल्प से क्षणिकज्ञान भी दुर्निरूप है । द्वितीय कल्प ( अक्षणिकत्व ) में धर्म के निर्धर्मिक न होने से स्थायी ( अक्षणिक ) धर्मी भी स्वीकार करना होगा । और प्रथमकल्प में आत्माश्रय दोष आपतित होगा । यदि तत्परिहारार्थ क्षणिकत्व नाना माना जाय तो अनुगम नहीं होगा । इष्टापत्ति भी नहीं की जा सकती, क्योंकि तद्रक्षार्थ ही रघुनाथ शिरोमणि ने अपसिद्धान्त को अवहेलना कर क्षण को सप्तातिरिक्त पदार्थ माना है । एवं ज्ञान भी स्वविषयत्वाविषयत्व विकल्प से दुर्निरूप ही है, क्योंकि ज्ञान में स्वनिरूपितविषयिताविशेष में सत्यतोपगम तद्विषयक ज्ञानगतप्रमात्वसिद्धि के बिना सम्भव नहीं है, और तादृशप्रमात्वसिद्धि, स्वनिरूपितविषयिताविशेषगतसत्यतासिद्धि के बिना असम्भव हैं । ( ज्ञान में स्वविषयत्व मानने पर अन्योन्या-

स्वविषयत्वाविषयत्वाभ्यामपि दुर्निरूपत्वमेव ज्ञानस्येति द्रष्टव्यं "सोऽपि वा धीविशेषः किं स्वीकार्यस्तद्धियं विने" ति प्रघट्टके शारदायाम् । एवं प्रमात्वखण्डनशेषे शारदोदितप्रमात्वस्वतस्त्वपरतस्त्वनिरासप्रणाल्यापि ज्ञानज्ञेयसत्यतावधीरणीया, तस्मात्स्वविषयत्वं ज्ञाने सांवृतमेव वक्तव्यमिति परविषयत्वमपि तथैव, स्ववच्च परोऽपि सांवृत एव नत्वलीक इति न व्यवहारविरोधः । तदुक्तं लङ्कावतारे—

केशोण्डुकं यथा मिथ्या गृह्यते तैमिरैर्जनैः ।
तथा भावविकल्पोऽयं मिथ्या बालैर्विकल्प्यते ॥ इति

इति स्वप्रकाशवादशारदायामनुसन्धेयम् । प्रमात्वखण्डनशेषे इति । तत्र पूर्वपक्षे स्वतस्त्वस्य सिद्धान्ते तु परतस्त्वस्य निरासप्रकाराः सूत्रिताः तात्पर्यं तु द्वयोर्दुर्वचत्वे एव, प्रमात्वस्यैव खण्डने तदीयस्वतस्त्वपरतस्त्वचिन्ता हि व्योम्नि चित्रलेखनमनुहरतीति भावः ।

'एवञ्च सोऽपि सोऽपीति नान्तः सोपानधावने' इत्युत्तरार्द्धम् । धीविशेषः = तत्तद्धीगतोविषयिताविशेषः । स्वीकार्य इति । सत्यत्वेनेत्यादिः । तद्धियं विना = तादृशविशेषविषयकधियः प्रमात्वसिद्धिं विना । किमाक्षेपे । न स्वीकर्तुं शक्य इत्यर्थः । अन्योन्याश्रयापत्तेरितिशेषः । तस्याप्यपरापरस्वीकारे त्वनवस्थामाह—एवञ्चेति । सोपानधावने = उत्तरोत्तरविषयिताविशेषोपगमे । नान्तः = अप्रामाणिकतादृशानन्तविशेषाणामविश्रान्तिः । तान्निरासप्रकारान्तरं सूचयति—एवं प्रमात्वेति । सांवृताभ्यामेव ज्ञानज्ञेयाभ्यां सर्वव्यवहारोपपत्तिरित्युपसंहरति—तस्मादिति ।

केशोण्डुकमिति । लूतातन्तुजालसदृशं नेत्रयोः पुरतो भासमानं जालमुण्डुकशब्देनोच्यते । तैमिरैरिति । तिमिरो नेत्ररोगविशेषः । तथा च यथा तिमिरादिदोषदूषितलोचनैराकाशे कदाचित् केशवद्रेखा कदाचिदुण्डुकवन्मिथ्यैव गृह्यते तथा बालैरविवेकिभिरयं पुरतो भासमानो भावविकल्पः = भावः पदार्थः,

श्रय दोष होगा, और यदि ज्ञान में स्वनिरूपित विषयिता न मानी जाय तो ज्ञानसिद्धि ही नहीं हो पायेगी, क्योंकि ज्ञान में स्वविषयत्व न मानने पर उसकी सिद्धि के लिए परज्ञानविषयता माननी होगा, उसमें अनवस्था दोष आता है ) । यह विषय विशेषरूपेण 'सोऽपि वा धीविशेषः किं स्वीकार्यस्तद्धियं बिना' इत्यादिप्रघट्टक शारदा में द्रष्टव्य है । एवं प्रमात्वखण्डन के अन्त में शारदोक्त प्रमात्वस्वतस्त्वपरतस्त्वनिराकरणरीति से भी ज्ञानज्ञेयसत्यता तिरस्कृत है, इसलिए ज्ञान में स्वविषयत्व भी सांवृत ही वक्तव्य है और वैसे ही परविषयत्व भी । तथा स्व के समान स्वभिन्न भी सांवृत ही है, न कि अलीक, अतः शून्यवाद में व्यवहार का कोई विरोध नहीं है । लङ्कावतार में कहा गया है कि—केशोण्डुकम् इत्यादि—

**अतएव शून्यत्वं कालसम्बन्धित्वनियतं वेदान्त्यभिमतं मिथ्यात्वमेवेति शारदायां तत्र तत्रोपपादितम्। अतएव आत्मतत्त्वविवेके प्रपञ्चस्य विचारा-**

विविधंकल्प्यत इति विकल्पो दृग्दृश्यात्मकं सर्वं, भावश्चासौ विकल्प इति भावविकल्पः, अभावस्यालीकतास्वीकाराद् भावोल्लेखः। अथवा भावोऽविद्या, भावाभावविलक्षणाया अप्यविद्याया अभाववैलक्षण्यमात्रेण भावत्वोपचारात्। तया विकल्प्यते प्रदर्श्यत इति भावविकल्पः। एतेन तन्मतेऽसत्ख्यातिरेवेत्यपि ध्वनितम्। मिथ्या विकल्प्यते, मिथ्यैव व्यवह्रियत इत्यर्थः। क्वचित् केशाण्ड्रक मित्यपि पाठः। तस्य—चिरकालीनाध्ययनादिखिन्नस्योत्थितस्य नीललोहितादि-गुणविशिष्टः केशोण्डूकाख्यः कश्चिन्नयनाग्रे परिस्फुरति। अथवा करसंमृदितलोचन-रश्मिषु येयं केशपिण्डावस्था, स केशोण्ड्रक, इति युक्तिस्नेहप्रपूरण्यामभिहितोऽर्थो बोध्यः। मयूरपिच्छाकारं दृश्यमानं वस्तु केशोण्डुकमित्यपि क्वचित्। सर्वथापि तु मिथ्यात्वं नातिक्रमते। अद्वयवज्रसंग्रहेऽपि—

केशोण्डुकं यथाकाशे तैमिरो मनुते जनः।

प्रकाशेतरशून्यत्वात् विध्यपोहौ न तत्त्वतः॥ इति। अत एवेति। भावानां सांवृतत्वादेव। वेदान्त्यभिमतमिति। तन्मते प्रपञ्चमिथ्यात्वं काल-सम्बन्धित्वघटितमुररीकृतम्। अतएव चन्द्रिकाकृद्भिः—"न चैवं सर्वदेशकाल-वृत्यत्यन्ताभावप्रतियोगित्वं पर्यवसितम्, तथा चालीकत्वापत्तिः प्रपञ्चस्येत्या-शङ्क्य कालसम्बन्धित्वसमानाधिकरणस्य तस्य निवेश्यत्वादित्यभाणि। शार-दायामिति। माध्यमिकमते देशत्वकालत्वव्यापकीभूताभावप्रतियोगित्वमलीकसाधा-रणमपि दृग्दृश्ययोः सांवृतसत्त्वसमानाधिकरणमेवाङ्गीकृतम्। तत्र कालसम्बन्धि-त्वमपि प्रविष्टम्। अन्यथा जन्यजनकभावानुपपत्तेः। तथा च न तन्मते आकाश-कुसुमवदलीकत्वं प्रपञ्चस्य। एषा हि सौगती रीतिः—

प्रतीत्य सम्भवादेव गन्धर्वपुरवत्स्फुटम्।
न स्वभावस्थितं विश्वं नाकाशाम्भोजसन्निभम्॥
(अद्वय व० सं०, ४) इति।

प्रतीत्य सम्भवात् = प्रतीत्यसमुत्पादात्। चर्चिता चात एव चन्द्रिकायां चन्द्रिकाकृद्भिः—'व्यावहारिकस्याबाध्यत्वस्य शून्यत्वभावनानिवर्त्यस्य माध्य-मिकमते स्वीकृतिः, 'शून्यवादे तु ज्ञानज्ञेयप्रपञ्चस्य मिथ्यात्वमिति चाहत्यैव। तत्र

[ जैसे तिमिर रोगी मनुष्य को केश-उण्डुक ( तन्तुजाल ) मिथ्याभूत ही भासित होते हैं, वैसे ही अज्ञानियों को घटपटादि भाव विकल्प मिथ्याभूत ही भासित होते हैं। ]
अतएव कालसम्बन्धित्व से नियत शून्यत्व वेदान्ती के अभिमत मिथ्यात्व रूप ही है, यह शारदा में तत्र तत्र उपपादन कर चुके हैं। अतएव श्रीश्रीहर्षमिश्र ने खण्डनखण्ड-

**सहत्वसाधकप्रमाणादेर्विचारासहत्वं न वेति विकल्प्य द्वितीये तत्रैव विचारा-सहत्वसाधकत्वेनाभिमतानां युक्तीनां व्यभिचारः, आद्ये तु भवदीयविचारस्य भौतविचारकल्पत्वप्रसङ्गः, तथाहि—केन चिद्भौतेन राजद्वारि द्विरदमवलोक्य विकल्पितम्, किमयमन्धकारो मूलकर्मास्ति, आहोस्विज्जलवाहो बलाकावान्**

तत्रेति। 'सांवृतसति स्वीकुर्वता माध्यमिकेन तत्र कालसम्बन्धोऽपी'त्यादिना प्रमाणाद्यभ्युपगमस्य कथाङ्गत्वखण्डनोपान्त्ये 'प्रतीतिविशेषविषयत्वेन काल-सम्बन्धित्वस्यापि साधनादि'त्यादिना शून्यतोत्सर्गोपक्रमादौ च शारदायाम्।

अतएवेति। शून्यत्वस्य वेदान्त्यभिमतमिथ्यात्वात्मकत्वादेव। समर्थि-तेति परेणान्वयः। आत्मतत्त्वविवेक इति। उपहसतामित्यत्रान्वयः। प्रमाणादे-रित्यादिना तर्कोग्राह्यः। द्वितीय इति। प्रमाणादे विचारसहत्वाभ्युपगमे। तत्रैव = विचारासहत्वसाधकप्रमाणादौ। व्यभिचार इति। ज्ञेयो विषयो वा देशत्वकालत्वव्यापकीभूताभावप्रतियोगी विचारासहत्वादित्यत्र स्वरूपासिद्धि-शङ्कोपशमनार्थम्—ज्ञेयो विषयो वा विचारासहः सत्त्वादिनाऽनिर्वाच्यत्वादि-त्यनुमानं प्रमाणं वक्तव्यम्। तत्र तदात्मके विचारासहत्वसाधके प्रमाणादौ तत्त्वं नवेति विकल्प्य द्वितीयकल्पे हेतुमति तत्रैव प्रमाणादौ व्यभिचार इति पंक्ते-राशयः। भौतविचारकल्पत्वेति। सादृश्यञ्च विवक्षितार्थासाधकत्वेन। भूताविष्टो भौतः। भूताविष्टप्रयुक्तस्य विचारस्य स्वरूपं तस्य च विचारासहत्वञ्च दर्शयति—तथाहीति। राजद्वारीति स्थानविशेषोपन्यासस्य फलं तृतीयविकल्पे व्यक्तं भवि-ष्यति। गजस्य कृष्णत्वेन तत्रान्धकारत्वमारोप्याह—किमयमन्धकार इति।

खाद्य के उपक्रम शून्यवाद में ही—भौतविचार के द्वारा अनिर्वचनीयवादी का उपहास करने वाले उदयनाचार्य को अनिर्वचनीयवाद के रहस्य का अनभिज्ञ बतलाने के लिए, अथवा यदि वे अनिर्वचनीयवाद के रहस्य वेत्ता हैं तो उनके द्वैतविषयक अभिनिवेश (हठ) मात्र को व्यक्त करने के लिए, अथवा यदि वे द्वैतविषयक हठ से रहित भी हैं तो द्वैतवाद परिस्कार के अदृष्टवशात् प्राप्त होने पर उनकी स्वकर्तव्यनिर्वाहकता मात्र सूचित करने के लिए सांवृतसत होने पर भी तत्तदाभासलक्षण से अनाक्रान्त होने से प्रमाणों को विवक्षितार्थ साधक बताया है। भौतविचार के द्वारा अनीर्वचनीयवादा के उपहास कर ने का विवरण इस प्रकार है कि आत्मतत्त्वविवेक में–प्रपञ्च के विचारासहत्व-साधक प्रमाणादि में विचारासहत्व है, या नहीं' ऐसा विकल्प कर उदयनाचार्य ने कहा है कि—इसमें द्वितीय कल्प स्वीकार करने पर विचारासहत्व साधक-प्रमाण मे ही विचारा-सहत्वसाधकत्वेनाभिमतयुक्तियों का व्यभिचार है और प्रथम पक्ष में तो आप (बौद्ध) का विचार भौत विचार के सदृश हो जायेगा। भौत नाम है भूताविष्ट व्यक्ति का, अतः जैसे भूताविष्ट व्यक्ति का विचार किसी का साधक नहीं होता, वैसे ही आप का विचार भी किसी का साधक न हो पायेगा। भूताविष्ट व्यक्ति के विचार का स्वरूप तथा उसके

**वर्षति गर्जति च, यद्वा बान्धवोऽयम् 'राजद्वारे श्मशाने च यस्तिष्ठति स बान्धव' इति परमाचार्यवचनात्, अथवा योऽयं भूमौ दृश्यते तस्य च्छायेति, दूषितं च, नाद्यः, तस्य शूर्पयुगलप्रस्फोटनाभावात्, न द्वितीयः; तस्य स्तम्भचतुष्टयाभावात्, न तृतीयः, तस्य लगुडभ्रामणाभावात्, न चतुर्थः, तस्य नरशिरःशतोद्गिरणाभावात्, ततो न किंचिदेतदिति। किमेतावता द्विपस्वरूपं निवर्तत इत्युपहसता-**

तद्दन्तयोः स्वेतत्वसाम्याद्मूलकत्वारोपः। द्वितीयकल्पे गजे जलवाहत्वं समारोप्य तद्दन्तयोरेव बलाकात्वारोपः। बलाका बकपंक्तिः स्यादित्यमरः। तन्मूत्रे वर्षात्वारोपः। तद्वृंहिते ( गर्जने ) च मेघगर्जनात्वारोपः क्रियते। तृतीयविकल्पे–राजद्वारे स्थितत्वाद् गजे बान्धवत्वारोपः। चतुर्थे च कृष्णत्वाविशेषाच्छायावति गजे छायात्वारोपः, तच्छायायाञ्च भूमिष्ठायां छायावत्त्वारोपः। दूषितञ्चेति। भीतेनैवेति शेषः। तस्य = अन्धकारस्य। अत्र कर्णयोः शूर्पत्वारोपः। न द्वितीय इति। तस्य जलवाहस्य। स्तम्भचतुष्टयेति। पादेषु स्तम्भत्वारोपः। न तृतीय इति। तस्य बान्धवस्य। लगुडेति। द्विरदकरे लगुडत्वारोपः। न चतुर्थ इति। तस्य भूमौ दृश्यमानस्य छायात्मकवस्तुनः। नरशिर इति। गजपुरीषपिण्डेषु नरशिरस्त्वारोपः। पायौ चास्यत्वारोपेणोत्सर्जने उद्गिरणत्वभ्रान्तिः। किमेता-

विचारासहत्व को दिखाते हैं—तथा हि—जैसे, किसी भूताविष्ट ने राजा के द्वार पर हाथी को देखकर कल्पना की, कि क्या यह अन्धकार मूली खा रहा है ? या मेघ बगुलों की वर्षा कर रहा है और गरज रहा है ? या यह कोई बान्धव है ? क्योंकि श्रेष्ठ आचार्यों का वचन है कि 'राजद्वारे श्मशाने च यस्तिष्ठति स बान्धव' ( राजा के द्वार पर और श्मशान पर जो रहता है वह बान्धव है )। अथवा जो यह भूमि पर दिखायी देता है, उसी की ऊपर की तरफ खड़ी हुई छाया है ? ( यहाँ भूमि पर पड़ी छाया में बिम्बभाव का भ्रम तथा वास्तविक बिम्ब में छाया का भ्रम कर रहा है। ]

पुनः उसी ने इन कल्पनाओं का खण्डन भी कर दिया, कि प्रथम पक्ष नहीं हो सकता। क्योंकि यह अन्धकार होता तो सूपों का प्रस्फोटन ( कानों का फड़फड़ाना ) न होता। द्वितीय पक्ष भी ठीक नहीं है, क्योंकि मेघमण्डल के चार खम्भे नहीं होते। तृतीय पक्ष भी ठीक नहीं है, क्योंकि यह बान्धव होता तो डण्डा ( शुण्ड ) नहीं घुमाता। चतुर्थपक्ष भी नहीं हो सकता, क्योंकि वह भूमिस्थ वस्तु की छाया होती तो उसमें से मनुष्यों के बहुत शिर नहीं निकलते। इसलिए यह कुछ नहीं है। ( यहाँ भीत के विचारों में प्रथम विकल्प में कृष्ण ( काला ) होने से हाथी में अन्धकारत्व का, उसके दाँतों में मूली का आरोप है। द्वितीयविकल्प में—हाथी में मेघ का दाँतों में बगुलों, मूत्र में वर्षा का, तथा चिहाँड़ में मेघगर्जन का आरोप है। तृतीय

**मुदयनाचार्याणामनिर्वाच्यवादहृदयानभिज्ञतां ज्ञापयितुं तदभिज्ञानामपि वा तेषां द्वैताभिनिवेशमात्रं द्योतयितुं द्वैताभिनिवेशशून्यानामपि वा तेषां द्वैतवादपरिष्क-**वतेति। अनेन भूताविष्टजनविकल्पितविचारस्य विवक्षितासाधकत्वमेवेत्येतद्-ध्वनितम्। अनिर्वाच्येति। ननु भगवत्कृपापात्राणां कृतसाक्षात्काराणामाचार्याणा-मनिर्वाच्यवादहृदयानभिज्ञता न सम्भावयितुमपि शक्या, कथमन्यथा ते—

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्ति-
स्तद्बाधने बलिनि वेदनये जयश्रीः।
नो चेदनिन्द्यमिदमीदृशमेव विश्व
तथ्यं तथागतमतस्य तु कोऽवकाशः॥ ( आ० त० वि० )

इत्यत्र तर्कचुञ्चवः सन्तोऽपि 'बलिनि वेदनये जयश्री'रिति वदेयुः। बलिनि = सर्वेभ्यो द्वैतवादिमतेभ्यो बलवति, वेदनये = वेदान्तदर्शने, जयश्रीः = जयोत्कर्षकाष्ठा, बौद्धमतापेक्षया तार्किकमते जयः, तदपेक्षयापि सांख्यादिमते, आत्मनोऽसङ्गत्वादिस्वीकारात्, तदपेक्षया वेदान्तिमते, द्वैतमिथ्यात्वादिस्वी-कारादतो जयोत्कर्षकाष्ठा। कथङ्कारञ्च तत्रैव 'स्वतःसिद्धश्चेत्, आगतोऽसि-मार्गेण। तथाहि—स्वतःसिद्धतया तदनुभवरूपम्। शून्यत्वादेव च न तस्य कालावच्छेद इति नित्यम्। अत एव च न देशावच्छेद इति व्यापकम्। अत एव तन्निर्धर्मकमिति विचारास्पृष्टम्, तस्य धर्मधर्मिभावमुपादाय प्रवृत्तेः। अत एव विशेषाभाव इत्यद्वैतम्, प्रपञ्चस्यापारमार्थिकत्वाच्च। निष्प्रतियोगिकमिति विधि-रूपम्। अविचारित प्रपञ्चापेक्षया तु शून्यमिति व्यावहारः' इति। 'प्रविश वा अनिर्वचनीयख्यातिकुक्षिम्' इति च प्रतिपादयेयुः। एतामेव तदुक्तिमाकलय्य चन्द्रिकाकारोऽपि—'उदयनाचार्याणां वेदान्तदर्शने एव महती श्रद्धा' इत्याह, इति चेत्तत्राह—तदभिज्ञानामपीति। द्वैताभिनिवेशमात्रमिति। ननु न प्रेक्षावतां विदुषामसत्याग्रहो भवति, मन्तुं वोचितः। अन्यथा तेषां सत्पक्षपातित्वोक्ति व्याहन्येतेत्यरुचेराह—द्वैताभिनिवेशशून्यानामपीति। अथवा तदभिनिवेशो हि श्रीमद्भगवद्भावविशेषप्रयुक्तः। न च भगवद्विषयकभावविशेषः कृतकृत्यतां व्याहन्तुमीष्टे। तस्य माहात्म्यमीदृशं यत् सत्यामपि तस्यां चित्तं स्वायत्तं करोति। अत एव भगवानवादीद् बादरायणोऽपि—

विकल्प में—राजद्वारस्थ होने से हाथी में बान्धवत्व का आरोप है। तथा चतुर्थ विकल्प में—छायावान् हाथी में छाया का आरोप है। इन विकल्पों के खण्डन में भी—हाथी के कानों में सूप का, चारों पैरों में स्तम्भ का, शुण्ड या पूँछ में दण्डे का, पुरीष-पिण्डों में नरशिर का, पायू में मुख का, मलत्याग में वमन (उल्टी) का भ्रम हो रहा है। यहाँ पूर्व और उत्तर दोनों ही कथन भ्रम होने से विवक्षितार्थ का असाधक है]। तो

रणस्यादृष्टवशात्प्राप्तौ स्वकर्तव्यनिर्वाहमात्रपरतां सूचयितुं खण्डनोपक्रमे एव शून्यवादे सांवृतसतोऽपि तत्तदाभासलक्षणानाक्रान्तस्य प्रमाणादेः साधकता समर्थिता ।

ननु शून्यत्वं शून्यं न वा, आद्ये प्रपंचस्याशून्यत्वप्रसङ्गः, आत्माश्रयश्च,

तस्यारविन्दनयनस्य पदारविन्द-
किञ्जल्कमिश्रतुलसीमकरन्दवायुः ।
अन्तर्गतः स्वविवरेणचकार तेषां
संक्षोभमक्षरजुषामपि चित्ततन्वोः ॥ ( भा०, ३.१५.४३ ) इति
आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥
( भा०, १.७.१० ) इति च ।

अतएव मधुसूदनोऽप्याचार्यः—
ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं
ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते ।
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं
कालिन्दीपुलिनोदरे किमपि यन्नीलं महो धावति ॥

इत्यादिना श्रीमद्भगवतगीतायाम्, अद्वैतसिद्धौ ब्रह्मणो ज्ञानत्वोपपत्तिप्रकरणारम्भे 'वंशीविभूषितकरादि'त्यादिनाचाच्युतस्वरूप भगवन्तम्महीयसा भावेनास्मार्षीत् । ब्रह्मानन्दश्च चन्द्रिकायाम्—जीवन्मुक्ताऽप्याचार्यः पूर्वसञ्चितभजनवासनया श्रीकृष्णं स्मरति' इति भणित्वा तद्गौरवमभ्युपागमत् । उदयनाचार्यस्य तादृश-भगवद्भावविशेषस्तु—

अस्माकन्तु निसर्गसुन्दर चिराच्चेतो निमग्नं त्वयी-
त्यद्धाऽऽनन्दनिधौ............... इत्यादिना व्यक्तः ।

यदि तु तादृशचेतसां विदुषामपि देहत्यागानन्तरं गतिः प्रयाणकालीन तादृशवासनातादूरूप्येण निरंकुशया भगवदिच्छया वा भगवल्लीलाविग्रहादि-प्राप्तिरूपा क्षोभाद्यनाधायिकाऽपि कस्यचिन्महनीयमतेः स्वीयभावनाविशेषेण तदनौचितिं चुम्बेच्चेतसि तदाप्याह—द्वैताभिनिवेशशून्यानामपीति । वस्तुतः पारमेश्वरमैश्वर्यं स्वरूपभूतमिति चर्चनीयं परतः । समर्थितेति । शून्यत्वस्यालीकत्वात्मकत्वे तु साधकतानुपपत्तेरिति भावः ।

ययोर्विरुद्धयोरेकं मिथ्या तयोरेकापेक्षयाऽपरमधिकसत्ताकमिति नियम-मादृत्य शङ्कते—नन्विति । अत्र प्रपञ्चात्मके धर्मिणि प्रसक्तयो विरुद्धयोः शून्यत्व-

क्या इस भीत-विचार से हाथी की सत्ता समाप्त हो जाती है ? ( इत्यादि आत्मतत्त्व-विवेक में वर्णित है ) ।

द्वितीये तु सर्वं शून्यमिति सिद्धान्तव्याकोपः, तदनादरेऽपि संविदोऽपि मिथ्यात्वे कथमशून्यसिद्धिः, विषयविषयिभावस्य मिथ्यात्वे संविदशून्ययोरपि तथात्व-स्यौचित्यावर्जित्वादिति चेन्न, शून्यताया अपि शून्यत्वात्, आत्माश्रयस्यानि-शून्यत्वाभावयोः शून्यत्वस्य शून्यत्वे = मिथ्यात्वेऽपरस्यधिकसत्ताकत्वात्प्रपञ्चस्यसत्त्वा-पत्तिरित्याह—आद्ये इति। शून्यत्वस्यैकत्वे दूषणान्तरमपीत्याह—आत्माश्रय इति। सिद्धान्तव्याकोप इति। ननु नापसिद्धान्तः किञ्चिद्दूषणतां भजते 'रिक्तस्य जन्तो र्जातस्येति वदद्भिः सौगतैरेवोद्घोषितत्वादित्यत आह—तदनादरेऽपीति। समाधत्ते—शून्यताया इति। अनिर्वाच्यत्वपोषकत्वादिति। तदुक्तं खण्डन-कृद्भिः—

अनवस्थादयो दोषाः सत्तां निघ्नन्ति वस्तुनः।
अद्वैतिनां ते सुहृदः प्रपञ्चे तत्प्रसञ्जकाः॥ इति

तत्प्रसञ्जकाः = पारमार्थिकसत्ताविघातस्य प्रमापका इत्यर्थः। शून्यतापरि-वर्जनस्य तच्छास्त्रसम्मतत्वं सनिदर्शनमादर्शयति—अत एवेति। शून्यत्वस्य शून्यत्वादेव। यद्यशून्यमिति। यदि शून्यता नाम काचित् स्यात् भाविकी तदा तदाश्रयः कश्चन भावपदार्थोऽपि तादृशः स्यात्। न त्वेवम्। शून्यता हि सर्व-धर्माणां सामान्यलक्षणमित्यभ्युपगमात्, तदुक्तम्—

गुडे मधुरता चाग्नेरुष्णत्वं प्रकृतिर्यथा।
शून्यता सर्वधर्माणां तथा प्रकृतिरिष्यते॥
( अ० व० स०, ८ ) इति।

अशून्यधर्माभावादशून्यतैव नास्ति। यदा च अशून्याः पदार्था न सन्ति, अशून्यता च नास्ति, तदा प्रतिपक्षनिरपेक्षत्वाच्छून्यतापि खपुष्पवन्नास्ति। यदा च शून्यता नास्ति, तदा तदाश्रयाः पदार्था अपि न सन्तीति स्थितम्। यदि किञ्चिदशून्यं स्यात्तदा तस्याभावरूपतया प्रतियोग्यपि स्यादिति स्याच्छून्यम्, यदा तु नास्त्यशून्यं कैव कथा शून्यस्यैवेति निश्च्योतार्थः।

## शून्यता की शून्यरूपता

शङ्का—शून्यत्व भी शून्य है, या नहीं, प्रथम पक्ष में प्रपञ्च अशून्य ( सत्य ) हो जायेगा, अर्थात् प्रपञ्चगतशून्यत्व के शून्य होने से उसका धर्मीप्रपञ्च शून्य न होकर सत्य होने लगेगा। तथा शून्यता में शून्यता मानने से आत्माश्रय दोष भी होगा। द्वितीय कल्प में 'सर्वं शून्यम्' इस सिद्धान्त की हानि हो जायेगी। यदि सिद्धान्तहानि की भी उपेक्षा कर दें, तो ज्ञान के मिथ्या होने से अशून्य की सिद्धि भी कैसे होगी, क्योंकि विषयविषयिभाव के मिथ्या होने से ज्ञान एवं उसका विषय अशून्य दोनों को मिथ्या मानना ही उचित है।

र्वाच्यत्वपोषकत्वात् । अतएव शरीरगतदोषानपसार्यौषधस्यापि यथाऽपसारणं सुखावहम्, अन्यथा ग्लान्यापत्तेः, एवं शून्यताया अपि मतान्तरवारिकाया वारणमावश्यकमेवेति दृष्टान्ताभिधानपुरस्सरं

यद्यशून्यं भवेत्किञ्चित्स्याच्छून्यमिति किंचन ।

न किंचिदस्त्यशून्यं च कुतः शून्यं भविष्यति ॥

इत्यत्र माध्यमिकवृत्तावुक्तम् । न चैवं प्रपंचस्याशून्यत्वप्रसङ्गः, निषेध्यतावच्छेदकस्य विषयत्वस्य प्रपंचशून्यतोभयसाधारण्येन तथाप्रसङ्गासम्भवादिति

अद्वयवज्रसंग्रहेऽपि—

प्रतीत्योत्पादमात्रत्वात् नैव सत्त्वं न शून्यता ।

स्फूर्तिश्च देवताकारा निःस्वभावा स्वभावतः ॥ इति ।

पूर्वशङ्कितं प्रपञ्चसत्त्वमपसारयति—न चेति । अत्रेदमवधेयम् । शून्यत्वं शून्यं न वेत्यत्राद्यपक्षे प्रपञ्चशून्यत्वं यदि शून्यं स्याज्जगदिदमशून्यं स्यादित्यापादनम् । एकस्मिन् धर्मिणि प्रसक्तयोर्विरुद्धधर्मयोरेकमिथ्यात्वेऽपरसत्यत्वनियमात् । न चात्र मूलशैथिल्यम्, तद् धर्मिवृत्तित्वेन ज्ञायमाननिष्ठं तद्धर्मिघटितं मिथ्यात्वं स्वाश्रयविरुद्धत्वसम्बन्धेन तन्धर्मिवृत्तित्वेन ज्ञायमाननिष्ठस्य तद्धर्मिणि सत्यत्वस्य स्वाधिकसत्ताकत्वस्य व्याप्यमिति नियमात् । शून्यत्वञ्च मिथ्यात्वापरपर्यायमित्यवोचामः । तथा च यत्र-यत्र स्वाश्रयविरुद्धत्वसम्बन्धेन शून्यत्वं तत्र अशून्यत्वं = सत्यत्वमिति व्याप्यव्यापकभावसम्भवः । स्वं शून्यत्वं, तदाश्रयः प्रपञ्चशून्यत्वं तद्विरुद्धत्वम् प्रपञ्चाशून्यत्वे । एवञ्च प्रपञ्चस्य सत्यत्वापत्तिरिति प्रष्टुराशयः । समाधाता तत्रापादकासिद्धिं व्याचष्टे—निषेध्यतावच्छेदकस्येति । एकस्मिन्नन्दनन्दनतनौ प्रसक्तयो रामापत्यत्वलक्ष्मणापत्यत्वयोर्विरुद्धयोर्धर्मयोरेकतरनिषेधेऽपि नापरस्य सत्त्वम्, तत्र नन्दजन्यत्वात्यन्ताभावव्याप्यत्वस्य निषेध्यतावच्छेदकस्योभयसाधारण्यात् । तथा च तत्रैकतरधर्मे स्वाश्रयविरुद्धत्वसम्बन्धेन व्याप्यस्यापादकदलस्य सत्त्वेऽपि आपाद्यात्मकव्यापकाभावाद् व्यभिचारान्नोक्तापाद्यापादकभावः । प्रकृते च निषेध्यतावच्छेदकस्य विषयत्वस्य प्रपञ्चतद्गतशून्यतोभयसाधारण्यात्सकृदेवोभयत्र शून्यत्वसिद्धिरितिभावः । तथा-

समाधान—शून्यता भी शून्यरूप ही है । आत्माश्रय दोष तो अनिर्वाच्यत्व का पोषक है । अतएव जैसे शरीरगत दोषोपसारण होने पर ओषधी का भी परित्याग करना ही सुखकर है । अन्यथा तत्कृत ग्लानि बनी रहेगी, इसी प्रकार मतान्तर वारक शून्यता का वारण करना आवश्यक है । एतद्दृष्टान्त कथन पुरःसर माध्यमिक वृत्ति में कहा है—'यद्यशून्य भवेत्' इत्यादि [ यदि कोई अशून्य ( सत्य ) वस्तु हो तो उसका प्रतिपक्षी कुछ शून्य भी हो सकता है किन्तु जब अशून्य कोई वस्तु है ही नहीं तब अशून्यता भी

वेदान्तिवदेव समाधेयत्वात्, प्रक्रियादशायां सर्वत्रैव सांवृतसत्त्वोपगमेन समसत्ताकयोरपि स्वाप्नभावाभावयोरिव सांवृतसत्यत्वशून्यत्वयोरविरोधस्य तद्वदेव मयापि सुवचत्वाच्च। तत्किं शून्यतायाः सांवृतत्वमेव, तथा च मूले कुठाराघातः, उक्तं हि सौगतैः—

प्रसङ्गासम्भवादिति। प्रपञ्चाशून्यत्वप्रसङ्गस्यासम्भवात्। प्रक्रियादशायाम् = व्यवहारदशायाम्। वेदान्तमताभिप्रायेणेदम्। तद्वदेवेति। वेदान्तमते प्रपञ्चात्यन्ताभावस्य व्यावहारिकत्वपक्षे प्रपञ्चतदभावयोः समसत्ताकत्वेन तदभावस्य प्रपञ्चीयतात्विकसत्ताविरोधित्वेऽपि नासौ तदीयव्यवहारिकसत्तां विरुणद्धीति द्वयोः सामानाधिकरण्यम्, तार्किकमतसिद्धसंयोगतदभाववत्। तदुक्तं चन्द्रिकाकृद्भिः—'यथा गोत्वतदभावादिस्थले सामान्यतो दृष्टोऽपि विरोधः संयोगतदभावादिस्थले एकावच्छेदेनैव स्वीक्रियते तार्किकादिभिः, तथा सत्यत्वमिथ्यात्वयोः परस्परविरहादिरूपयोरविरोधोऽस्माभिः स्वीक्रियते; प्रमाणस्य तेषामिवास्माकमपि सत्त्वादिति।' वस्तुतस्तु सर्वत्रैव समानसत्ताकयोर्भावाभावयोरविरोध एव वेदान्तमतेऽङ्गीकृतः। अतएव तत्रैव—'समानसत्ताकयोरपि भावाभावयोः स्वप्नवदविरोध इत्युक्तमेवेति' 'भावाभावयोरेकाधिकरणे समसत्ताकत्वे तु न दोष इति स्वाप्नगजतदभावदृष्टान्तेनोक्तम्। तथा च वेदान्तिवदेवास्माभिरपि प्रपञ्चतच्छून्यत्वयोः सांवृतसत्त्वमुपगम्य समानसत्ताकयोस्तयोरविरोधः स्वीकरिष्यते तत्र को विरोध इत्यभिप्रायः।

शून्यतायाः सांवृतत्वममृष्यमाणः प्रत्यवतिष्ठते—तत्किमिति। इष्टापत्तौ त्वाह—मूले कुठाराघात इति। सिद्धान्तव्याकोप इत्यर्थः। राद्धान्तं स्मारयति—उक्तं हि सौगतैरिति। मध्यमकशास्त्र इति शेषः। द्वे सत्त्व इति। बुद्धानां धर्मोपदेशः सत्त्वद्वयमाश्रित्य प्रवर्तते। तत्र सत्त्वद्वयमाह—लोक इति। संवृतिरज्ञानं समन्तात् सर्वपदार्थतत्त्वावच्छादनात्। क्वचिल्लोकसंवृत्तिसत्यमिति समस्तः

नहीं है और शून्यता भी नहीं है तो उसका आश्रय शून्य कैसे रहेगा]। यह जो कहा था कि शून्यत्व को शून्य मानने पर प्रपञ्च अशून्य हो जायेगा—यह ठीक नहीं है, क्योंकि निषेध्यतावच्छेदक विषयत्व के प्रपञ्च प्रपञ्चगतशून्यत्व उभयसाधारण (एक) होने से उक्त अशून्यत्वापत्ति नहीं दी जा सकती, इस प्रकार वेदान्तियों के समान हम भी समाधान कर देंगे। और वेदान्ती के सदृश यह भी कह सकते हैं कि व्यवहार दशा में सर्वत्र सांवृतसत्ता मानने से समसत्ताक स्वाप्निक भावाभाव पदार्थों के समान सांवृतसत्यत्व तथा शून्यत्व का भी परस्पर में अविरोध ही है।

शङ्का—तो क्या शून्यता भी सांवृत ही है यदि हाँ, तो आपके मूलसिद्धान्त पर कुठाराघात हो गया। क्योंकि बौद्धों ने कहा है—द्वे सत्त्वे इत्यादि, (दो सत्ताओं को

"द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोके संवृतिसत्यञ्च सत्यञ्च परमार्थतः" ॥ इति

**"परमार्थमजरममरमप्रपञ्चं निर्वाणं शून्यतास्वभाव" मिति च, उक्तंच भामत्यां 'शून्यवादिनामपि शून्यताया एव पारमार्थिकत्वा' दिति चेन्नूनं सुकुमारमतिरसि, येन शून्यतायाः शून्यतोक्ति मृषित्वापि सांवृतत्वोक्ति न मृष्यसे, यैर्हि सौगतैर्निर्वाणस्यापि पारमार्थिकत्वाय दत्तो जलाञ्जलिः, तैः शून्यतायाः पारमार्थिकत्वं रक्षणीयमिति साहसम्, अतएव भावत्वे ध्वंसप्रतियोगितादेर-**

पाठः । तत्र लोके संवृतिर्लोकसंवृतिः । लोकेति विशेषणं यथावस्थितिपदार्थानुवादमात्रम् । अथवा तेन तैमिरकज्ञानविषयाणां द्विचन्द्रादीनां परिकल्पिका संवृतिर्व्यवच्छिद्यते । तस्या अलोकसंवृतित्वात् । तया सत्यं सत्यवद्भासमानं सर्वमभिधानाभिधेयज्ञानज्ञेयादिव्यवहारजातं संवृतिसत्यमित्युच्यते । नहि परमार्थत एते व्यवहाराः सम्भवन्ति । सत्यञ्चपरमार्थत इति । परमार्थः शान्तः प्रत्यात्मवेद्य आर्याणां सर्वप्रपञ्चातीत इत्यर्थः । परमार्थमिति । बाधरहितम् । अजरं, जराशरोरवैरूप्यकारणं, तया वर्जितमेकरसमिति यावत् । अमरम् मृत्युर्वाजतमविनाशोति यावत् । अप्रपञ्चं सर्वप्रपञ्चातीतं शून्यतास्वभावं तत्स्वरूपं निर्वाणम् निःश्रेयसमित्यर्थः । तत्र मिश्रसम्मतिं दर्शयति—उक्तञ्च भामत्यामिति । जिज्ञासाधिकरण इति शेषः । समाधाता स्वाभिप्रायमुद्घाटयति—नूनं सुकुमारमतिरसीति । मतेः सुकुमारत्वं परामर्शविशेषशून्यत्वम् । तदेव स्फोरयति—येनेति । सौगतैर्माध्यमिकैः, दत्तो जलाञ्जलिरिति । यथा यस्मै दिवंगताय जलाञ्जलिर्दीयते स न कदाचिदप्युपतिष्ठते, तथैव माध्यमिकैः कदापि निर्वाणस्य पारमार्थिकत्वं नाभ्युपेयत इति भावः । भावत्व इति । निर्वाणस्येत्यादिः । यो यो भावः स ध्वंसप्रतियोगी इति नियमात्, नित्यस्यानभ्युपगमात् । तथा च परमार्थत्वे तत्प्रतियोगित्वं दुर्घटम् ।

स्वीकार कर बुद्धों का धर्मोपदेश हुआ है, लोक में सांवृतसत्यत्व तथा पारमार्थिकसत्यत्व) । और भी—परमार्थमजरम्''' इत्यादि । ( निर्वाण पारमार्थिक है, अजर है, अमर है, निष्प्रपञ्चशून्यतास्वभाव है ) । भामती में भी कहा गया है—शून्यवादिनाम्''''''' इत्यादि । ( शून्यवादियों के मत में भी अन्ततोगत्त्वा शून्यता ही पारमार्थिक है ) ।

समाधान—निश्चित ही तुम सुकुमारमति ( बालबुद्धि ) हो, जिससे कि शून्यता को शून्य बतलाना तो सहन कर लिया, और शून्यता को सांवृत कहना सहन न कर सके । क्योंकि जिन बौद्धों ने निर्वाण ( मोक्ष ) के पारमार्थिकत्व को भी जलाञ्जलि दे दिया, अर्थात् स्वीकार नहीं किया, वे शून्यता के पारमार्थिकत्व की रक्षा करने का साहस कैसे कर सकते हैं । अतएव—'निर्वाण को भावरूप मानने पर वह ध्वंसप्रति-

**भावत्वे च क्लेशाद्यात्मकप्रतियोगिदुर्निरूपताप्रयुक्तायाः स्वरूपतश्च दुर्निरूपताया आपत्तिमभिसन्धाय**

**"न चाभावोऽपि निर्वाणं कुत एवास्य भावना ।**
**भावाभावपरामर्शक्षयो निर्वाणमुच्यते" ॥ इति**

कुतएवास्य भावनेति । भावना = भावीकरणम्, भावात्मकतेतियावत् । भावते-क्लेशाद्यात्मकेति । क्लेशस्याविद्यात्मकत्वेन सदसत्त्वाद्यात्मना दुर्निरूपत्वात्, तन्निवृतिलक्षणस्य निर्वाणस्यापि दुर्निरूपत्वम् ।

किञ्च क्लेशादेराधारोऽपि दुर्निरूपः । नहि स औपनिषदात्मा, तस्य निर्विशेषत्वात्, नापि चित्तम्, जड़त्वेन तस्य क्लेशाद्यनुभवितृत्वानुपपत्तेः नापि नैयायिकसम्मतात्मा, तस्यागमापायिधर्मकतया धर्मधर्मिणोश्च तादात्म्यादनित्यता-ध्रौव्येणानादिभवप्रवाहानुपपादकत्वात् । नापि क्लेशादेर्निराधारतैव युक्ता, अनुभवविरोधात् कश्चिद्धि क्लिश्यत इत्यनुभवात् । निर्वाणस्य स्वरूपतोदुर्निरूपत्वं तदुक्त्यैव दृढ़यति—न चाभावोऽपीति । निर्वाणं नाभावरूपं नापि भावरूपमपितु भावाभावातिगमित्यर्थः । तथाऽन्यत्रापि—

भावस्तावन्न निर्वाणं जरामरणलक्षणम् ।
प्रसज्येतास्ति भावो हि न जरामरणं विना ॥
( म० शा०, २ .४ ) इति ।

यदि भावो न निर्वाणमभावः किं भविष्यति ।
निर्वाणं यत्र भावो न नाभावस्तत्र विद्यते ॥
( म० शा०, २५.७ ) इति च ।

नन्वेवं भावाभावयोः प्रत्येकं मास्तु, निर्वाणं तदुभयरूपत्वं तु तस्य स्यादिति चेन्मैवम्, तथासति निर्वाणस्यापि संस्कृतत्वाद्यापत्तेः ।

तदुक्तम्—

भवेदभावो भावश्च निर्वाणमुभयं कथम् ।
असंस्कृतञ्च निर्वाणं भावाभावौ च संस्कृतौ ॥
( म० शा०, २५.१३ ) इति ।

तच्च नाप्यनुभयात्मकमपि—इति तदाह—

न सन्नासन्न सदसन्नचानुभयतत्त्वकम् ।
विमतं तर्कपीड्यत्वान्मरीचिषु यथोदकम् ॥ इति ।

योगी ( अनित्य ) हो जायेगा, और अभावरूप मानने पर क्लेशादि रूप प्रतियोगी के दुर्निरूप होने से स्वरूप से भी वह दुर्निरूप हो जायेगा ।' इस आपत्ति का अनुसंधान कर माध्यमिक ग्रन्थों में लिखा है कि—'न चाभावोऽपि'……। ( निर्वाण अभावरूप भी

**'निर्वाणमप्यायुष्मन् सुभूते ! मायोपमं स्वप्नोपम' मिति च माध्यमिकग्रन्थेऽभिहितम् । हन्तैवं कथं वचसां विरोधं धुनीमहीति चेदित्थम् यथा—**

**न निरोधो नचोत्पत्तिर्न बद्धो न च साधकः।**
**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥'**

**इति वदतां वेदान्तिनां वस्तुतो बन्धमोक्षव्यवस्थाविरहेऽपि—**

नन्वेवं तर्हि किं लक्षणं निर्वाणमिच्छन्ति त इति चेच्छृणु समवहितेन चेतसा तत्रैवोट्टङ्कितम्—

अप्रहीणमसम्प्राप्तमनुच्छिन्नमशाश्वतम् ।
अनिरुद्धमनुत्पन्नमेतन्निर्वाणमुच्यते ॥ ( म० शा०, २५ ३ ) इति ।

सुभूत इति । सु शोभना भूतिः, ज्ञानवैराग्यादिलक्षणमैश्वर्यं यस्यासौ-सुभूतिः = सच्छिष्यः । मायोपममिति । यथा माया स्वभावेनानुत्पन्ना अविद्यमाना लोकप्रसिद्धिमात्रेण मायाशब्दवाच्या भवति तथैव निर्वाणमपि । स्वप्नोपमम् = स्वप्नसदृशम्, विनेयजनानुग्रहचिकीर्षुणा तथागतेन निर्दिष्टम् । वचसामिति । 'सत्यञ्च परमार्थतः' परमार्थमजरम् मायोपमम्' स्वप्नोपममित्यादिवाक्यजातानाम् । विरोधविधूननप्रकारमावेदयितुमादौ निदर्शन निर्दिशति–यथेति । न निरोध इति । ब्रह्मविन्दूपनिषद्वाक्यमेतत् । माण्डूक्यकारिकादावपि संगृहीतम् । निरोधो नाशः, उत्पत्तिजन्म, प्रपञ्चस्येतिशेषः । बद्धोऽनाद्यज्ञानवान् । साधकस्तन्निवृत्यनुकूलश्रवणादिमान् । बुद्ध इति क्वाचित्कः पाठः । तत्र बुद्धस्तत्त्वदर्शी, साधकः श्रवणादिमान् । मुमुक्षुः, मुक्तः स्यामितीच्छावान् । मुक्ताऽज्ञाननिवृत्तिमान् । परमार्थतेति भावार्थो विवक्षितः । निरोधादिशून्य परमाथ इत्युक्ते तच्छून्यत्वे विकल्पासहत्वं न लभ्येत, ततस्तथाऽऽनुक्त्वा इत्येषा परमार्थतेत्युक्तम् । इति शब्देन तु सर्ववैशिष्ट्यासहं शुद्धं चिद्रूपमुक्तम् । वस्तुत इति । परमाथदशायामित्यर्थः । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' 'केन कं विजानीयाद्' ( बृ० ४.५.१५ ) इति श्रुतेः ।

जब नहीं है तब वह भावरूप तो हो ही कैसे सकता है । अतः भावाभाव के परामर्श का क्षय होना ही निर्वाण कहा जाता है । तथा और भी—'निर्वाणमप्यायुष्मन् सुभूते ! मयोपमं स्वप्नोपमम्' ( हे सुभूते ! आयुष्मन् ! निर्वाण भी माया अर्थात् इन्द्रजाल तथा स्वप्न के समान है । ) यदि कहें कि ऐसी स्थिति में पूर्वोक्त वाक्यों के विरोध का विधूनन कैसे करेंगे तो सुनो इस प्रकार करेंगे कि—जैसे वेदान्तियों ने 'न निरोधो न चोत्पत्ति'……। [ इस आत्मा का न कभी नाश होता है, न यह कभी उत्पन्न होता है । न इसका बन्धन होता है, न यह कभी साधक होता है, न मुमुक्षु बनता है और यह कभी मुक्त ( अविद्या से रहित ) भी नहीं होता; यही परमार्थता ( वास्तविकता ) है । इस

'अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः।
निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः॥'

इत्यादिना मोक्षस्यात्मरूपतया पारमार्थिकत्वोक्तिः, तथा प्रतियोगिनोऽभावेन परमार्थतः शून्यताया अनिर्वचनीयतामभिप्रेत्य सांवृतत्वेनासत्त्वेन वोक्ताया एव तस्याः सिद्धान्तान्तरनिरासनिरूपणदशायां तदपेक्षया कथञ्चिदादरणीयतामनु-

अविद्यास्तमय इति। वार्तिकद्वयमेतत्। तत्र प्रथमेनाविद्यारूपबन्धशून्यत्वस्य मोक्षपदार्थत्वमुक्तम्। द्वितीयेन तु मोक्षपदार्थभूतमोहनिवृत्तिपदार्थस्य तादृशशून्यत्वस्य ज्ञातात्मतारूपत्वोक्त्या आत्मनो मोक्षपदार्थत्वं तादृशशून्यत्ववत्ता च बोध्यते, अभावस्याधिकरणरूपत्वोपगमात्। एवञ्च वार्तिकद्वयेनाविद्यारूपबन्धशून्यात्मनो मोक्षपदार्थत्वं सिद्ध्यति। अविद्यास्तमयस्तदत्यन्ताभावो न तु तद्ध्वंसस्तस्य निवर्तकाभावेन 'विद्वान् नामरूपाद् विमुक्त इति श्रुतिविरोधापत्तेरित्याद्यन्यत्र विस्तरः।

दृष्टान्तमुक्त्वा दार्ष्टान्तिके योजयति—तथेति। प्रतियोगिनः प्रपञ्चस्याभावेन, पारमार्थिकत्वेनेत्यादिः। प्रपञ्चस्य पारमार्थिकत्वे तदभावात्मिका शून्यता अपि कथञ्चित् पारमार्थिकी स्यात्, नत्वेवमतो न पारमार्थिकत्वेन निर्वचनं सम्भवति शून्यताया इति भावः। तन्मतेऽसत्ख्यातिस्वीकारादाह—असत्त्वेन वोक्ताया इति। विग्रहव्यावर्त्तन्यादाविति शेषः। तदपेक्षयेति। सिद्धान्तान्तरनिरासनिरूपणापेक्षया। शून्यता हि भगवता तथागतेन सर्वप्रहाणाय समुपदिष्टा। तदुक्तमार्यरत्नकूटसूत्रे—'काश्यप सर्वदृष्टिकृतानां शून्यता निःसरणम्, यस्य खलु पुनः शून्यतैव दृष्टि, स्तमहमचिकित्स्यमिति वदामि' इति।

एतदेव मध्यमकशास्त्रेऽप्याह—

शून्यता सर्वदृष्टीनां प्रोक्ता निःसरणं जिनैः।
येषां तु शून्यतादृष्टिस्तानसाध्यान् बभाषिरे॥ ( १३.८ ) इति।

बोधिचर्यावतारेऽपि—

शून्यतावासनाधानाद् धीयते भाववासना।
किञ्चिन्नास्तीति चाभ्यासात्सापि पश्चात्प्रहीयते॥ ( ९.३३ ) इति।

शून्यताया मायास्वभावनिःस्वभावताया वासना, तस्याआधानम् आवेधः, अभ्यासेन दृढ़ीकरणमिति यावत्। तस्माद्विरुद्धप्रत्ययात् हीयते निवतते, वह्निसंनिधानाच्छीतस्पर्शवत्। किम्? भाववासना अनवराग्रसंसाराभ्यस्तवस्तुसद्ग्राहाध्यवसानवासना। ननु भावाभिनिवेशो वा शून्यताभिनिवेशो वेति

श्रुति के अनुसार वस्तुतः बन्धमोक्षव्यवस्था का अभाव होने पर भी 'अविद्यास्तमयो-मोक्ष'........। अविद्या का अस्तमय ( अत्यन्ताभाव ) ही मोक्ष है, और वह अविद्या हो

**मत्य शिष्यप्रवृत्तये पारमार्थिकत्वोक्तिः, विनयमत्यनुरोधेन नानाप्रकारैर्देशना-**
नाभिनिवेशं प्रति कश्चिद्विशेषस्तस्यापि कल्पनास्वभावानतिक्रमादेतत् परिहर्तु-माह—किञ्चिन्नास्तीत्यादि। किञ्चिदिति भावो वा शून्यता वा नास्ति न विद्यते। च शब्दः पूर्वापेक्षया समुच्चये। इत्येवं चाभ्यासात् भाववासनाप्रहाणस्य पश्चात् सापि शून्यवासनाऽपि प्रहीयते निवर्तते। अयमभिप्रायः—शून्यतावेधो हि भावाभिनिवेशस्य प्रतिपक्षत्वात् प्रहाणोपायभूतः, अधिगते चोपेये पश्चात् कोलोपमत्वादुपायस्यापि प्रहाणमनुष्ठोयत इति हि सौगती व्याख्या। चतुःस्तवेऽपि-

सर्वसंकल्पहानाय शून्यतामतदेशना।
यस्य तस्यामपि ग्राहस्त्वयासावबसादितः॥ ( २-२१ ) इति।

अयमत्रनिष्कर्षः—सर्वधर्मशून्यता हि भावाभिनिवेशप्रहाणाय उपादीयते। साऽपि शून्यता शून्यताभिमुखीकरणात् पश्चात् प्रहीयते। याऽपि कथञ्चिद्भाववासना जायते, साऽपि समन्तरविचारेण निवर्तते। नहि शून्यताऽभ्युपगतिमन्तरा सर्वभावानां सिद्धान्तान्तरप्रसिद्धानां प्रहाणं भवितुमर्हति। तथा च तदर्थं निःस्व-भावापि शून्यताऽवश्यमभ्युपेया। वस्तुतस्तु शून्यताया अपि हेयत्वात् कथञ्चि-दित्युक्तम्।

पारमार्थिकत्वोक्तिरिति। परमार्थमजरमित्यादिना। विनेयमत्यनु-रोधेनेति। विनेयाः शिष्याः। देशना उपदेशः। अनादिकालप्रचलितेति। अतएवोक्तम्—

देशना लोकनाथानां सत्त्वाशयवशानुगाः।
भिद्यन्ते बहुधालोक उपायैर्बहुभिः पुनः॥
गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणा।
भिन्ना हि देशनाभिन्ना शून्यताद्वयलक्षणा॥ इति।

उपदेशभेदेऽपि न तत्त्वभेदोऽपितु मार्गभेद एव। तत्त्वं तु शून्यत्वात्मकमेकमेव। हीनमध्यमोत्कृष्टधियो हि शिष्या भवन्ति। तत्र ये हीनमतयः शून्यतातत्त्वं ज्ञातुम-समर्थास्ते सर्वास्तित्ववादेन तदाशयानुरोधाच्छून्यतायामवतार्यन्ते। ये तु मध्य-

बन्ध है। ज्ञातत्वोपलक्षित आत्मा ही मोह ( अज्ञान ) निवृत्तिरूप है। ] इत्यादि के द्वारा मोक्ष को आत्मरूप से पारमार्थिक माना है। वैसे हि बौद्धों ने प्रतियोगि का अभाव होने से पारमार्थतः ( वस्तुतः ) शून्यता को अनिर्वचनीय माना है तथा सिद्धान्तान्तर के निरास के निरूपण दशा में सांवृतत्वेन या असत्वेन उक्त शून्यता की अपेक्षा होने से कथञ्चित् उसे उपादेय मानकर शिष्यों के प्रवृत्यर्थ पारमार्थिक भी कहा है। विभिन्न बुद्धिशालि शिष्यों के प्रति नाना पकार उपदेश देना तो अनादि काल से प्रचलित है, अतः कोई दोष नहीं है।

**शैली त्वनादिकालप्रचलिता न गर्हामर्हति। अयं तु विशेषः—यद्वेदान्तिमते कस्यचित्परमार्थतत्त्वस्य स्वीकृतत्वेन तस्य परिशेषावश्यम्भावेन तदात्मकतया मुक्तेः पारमार्थिकत्वोक्तिसम्भव एव। बन्धस्यातात्त्विकतया तु तत्प्रतियोगिकत्वेन**

मास्ते ज्ञानमात्रास्तित्वेन शून्यतायावतार्यन्ते। ये तु खलूत्कृष्टमतयस्तेभ्यः साक्षादेव शून्यतातत्त्वं प्रतिपाद्यते। सत्त्वानां प्राणिनामाशयाधीनास्तदनुसारिणो लोकनाथानां सन्मार्गप्रदर्शकानामुपदेशा उपायानां मार्गाणां बहुत्वाद् भिद्यन्ते। देशना च क्वचिद्गम्भीरा गूढार्था क्वचिदुत्ताना स्पष्टार्था क्वचिदशभेदेनोभयरूपेति भिन्ना भवति। अद्वयलक्षणा शून्यता त्वभिन्नैवेत्यर्थः। तथा च प्रकृतेऽप्युत्तमाधिकारिणां कृते सांवृतत्वोक्तिरितरेभ्यश्च पुनस्तेषां प्रवृत्तये पारमार्थिकत्वोक्तिरित्यग्रेव्यक्ति भविष्यति। ननु तथापि चत्वारि आर्यसत्यानि दुःखसमुदयनिरोधमार्गलक्षणानि अभिधर्मे कथितानि, तत्कथं द्वे एव सत्ये इति चेत् सत्यम्, वैनेयजनानुशयवशादेते द्वे एव चत्वारि कृत्वा कथितानि, अमीषां द्वयोरवान्तर्भावात्। तथाहि—दुःखसमुदयमार्गसत्यानि संवृतिसत्येऽन्तर्भवन्ति, निरोधसत्यन्तु परमार्थसत्य इति न कश्चिद्विरोधः।

नन्वेवं वेदान्तिशून्यवादिनोरविशेषः द्वाभ्यामपि स्वीयसिद्धान्तानुसारेण कस्यचित्तत्वस्य पारमार्थिकत्वस्वीकारादिति चेत्तत्राह—अयं तु विशेष इति। तस्य परमार्थतत्त्वस्य। परिशेषावश्यम्भावेनेति। वेदान्तिभिर्निरधिष्ठानकभ्रमानङ्गीकाराद्, अधिष्ठानस्य सत्यत्वध्रौव्याद्, अन्यथाऽनवस्थादौःस्थ्यात्, बाधस्य च सावधिकत्वनियमात्। तथाह्याह भगवान् भाष्कारः—'आत्मनश्च प्रत्याख्यातुमशक्यत्वाद् य एव निराकर्ता तस्यैवात्मत्वात्' इति। 'सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति। पुरुषो विनाशहेत्वभावादविनाशो, विक्रियाहेत्वभावाच्च कूटस्थनित्यः। अतएव नित्यशुद्धबुद्धमुक्तस्वभावः। तस्मात् 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिः' ( कठा, १.३.११ ) ( ब्र० सू० भा०, १.१.४ ) इति। भामतिपतिनाऽपि—

न खलु सत्यं नाम न किञ्चिदस्तीति वाच्यम्,
तदभावे तदधिष्ठानस्यानृतस्याप्यनुपपत्तेरिति॥ ( ब्र० सू०, १.१.१ )
निरधिष्ठानकविभ्रान्तेरभावादात्मनोऽस्तिता। ( पं०, ६.८७ )
इति च विद्यारण्यस्वामिपादः।

तदात्मकतयेति। परमार्थतत्त्वं तदोऽर्थः। अविद्यानिवृत्तेरधिकरणरूपता-

वेदान्त की अपेक्षा शुन्यवाद की यह विशेषता अवश्य है कि वेदान्ती के मत में कोई पारमार्थिक तत्त्व माना है। जिसका सदा ( मुक्तिकाल में भी ) रहना आवश्यक होने से तद्रूपेण मुक्ति को पारमार्थिक कहना भी सम्भव है। तथा बन्धन के अतात्विक

**रूपेण मुक्तेरप्यतात्त्विकताभिप्रायेण निषेधसम्भवोऽपि। सर्वथापि मुक्तित्वेन रूपेण मुक्तिर्नास्त्येव। शून्यवादिमते तु कस्यचित्तत्वस्यापरिशेषितत्वेन न केनाप्यात्मना कस्यापि तात्त्विकत्वसम्भव इति शून्यताया यौक्तिकत्वरूपोत्कर्षमात्र विवक्षयैव पारमार्थिकत्वोक्तिः। तथा चाविद्यकत्वाविशेषेऽपि यथा वेदान्तिमते प्रातिभासिकत्वव्यावहारिकत्वविभागः, तथाऽत्र सांवृतसत्यत्वाविशेषेऽपि लौकिकालौकिकसांवृतसत्यत्वविभागः। इयांस्तु विशेषः—यद्वेदान्तिमते व्यव-**

तिपाठस्तु स्पष्टः। यौक्तिकत्वरूपोत्कर्षेति। जरामरणयोस्तु शून्यतास्वभावनिर्वाणेऽप्रसङ्गादेवाजरामरत्वोक्तिर्वस्तुस्वरूपोत्कीर्तनमात्रपर्यवसायिनी नानुपपन्नेति भावः।

स्वीकारात्। तस्या एव च मोक्षत्वात्। बन्धस्येति। अविद्यात्मकस्य तस्य मिथ्यात्वं ज्ञाननिवर्त्यत्वात्। तादृशबन्धात्यन्ताभावरूपमोक्षस्य बन्धप्रतियोगिकत्वविशिष्टतयाऽधिकरणातिरिक्तत्वादतात्त्विकत्वमिष्टमेव। अतएव 'निवृत्तिरात्मा-मोहस्येत्यादौ मोहनिवृत्तेरूपलक्षणत्वमङ्गीकृतम्। अभावस्याधिकरणात्मकत्वनये पारमार्थिकत्वं तस्य, तदतिरिक्तत्वपक्षे तु मिथ्येत्येकरूपाभावादाह—सर्वथापीति। अपरिशेषितत्वेनेति। शून्यवादिभिः सदधिष्ठानकभ्रमानङ्गीकारात्। यौक्तिकत्वरूपोत्कर्षमात्रविवक्षयेति। शून्यतायां हि ज्ञेयमात्रस्य सत्त्वादिनाऽनिर्वाच्यत्वात्तल्लिङ्गकदेशत्वकालत्वव्यापकीभूताभावप्रतियोगित्वसाध्यकानुमितेः सत्त्वाद् यौक्तिकत्वम्। तदुत्कर्षश्च त्रिकालाबाध्यत्वस्यासर्वज्ञदुर्ज्ञेयत्वेनात्मनोऽपि सत्त्वादिनाऽनिर्वाच्यत्वस्वीकाराद् बाधादिराहित्यम्। एवकारेण वस्तुतः पारमार्थिकत्वं व्यवच्छिनत्ति। नन्वेवं तर्हि लौकिकालौकिकादिविभागो न स्यात्, तथा च तद्बोधकमध्यमकावतारोक्तिव्याकोप इति चेत्तत्राह—तथा चेति। वस्तुतः पारमार्थिकत्वाभावे। परमार्थतत्त्वातिरिक्तस्थले वेदान्तिसाम्यं द्योतयितुं तन्मतं दृष्टान्तयति—आविद्यकत्वाविशेषेऽपीति। ननु तर्हि वेदान्तवदेव शून्यत्वमपि ते न स्यात्। व्यवहारे व्यवहारसिद्धस्यैवोपादेयत्वात्। शून्यत्वस्य च व्यवहारसिद्धत्वाभावादिति चेत्तत्राह—इयांस्तु विशेष इति। युक्तिमात्रसिद्धतयोत्कर्षं

होने से तत्प्रतियोगिकत्वेन रूपेण मुक्ति को भी अतात्त्विक मानकर उसका निषेध करना भी सम्भव है, सर्वथा मुक्तित्वरूप से मुक्ति नहीं है। किन्तु शून्यवादि के मत में तो कोई भी पारमार्थिक तत्त्व अवशिष्ट नहीं रहता, अतः किसी भी रूप से किसी भी वस्तु को तात्त्विक नहीं कहा जा सकता। अतः शून्यता के यौक्तिकत्वरूप उत्कर्षमात्र की विवक्षा से उसे पारमार्थिक कह दिया गया है। तथा च जैसे वेदान्ती के मत में सभी वस्तुओं के आविद्यक होने पर भी प्रातिभासिकत्व व्यावहारिकत्व का विभाग माना जाता है, वैसे ही शून्यवाद में भी सभी वस्तुओं के सांवृतसत्य होने पर भी लौकिकसांवृतसत्यत्व अलौकिकसांवृतसत्यत्व का विभाग माना जाता है। इतना ही अन्तर है कि—

**हारसिद्धस्य प्रातिभासिकापेक्षयोत्कर्षः, अत्र तु व्यवहारासिद्धस्यापि शून्यत्वस्य युक्तिमात्रसिद्धतयोत्कर्ष इति। एतेन 'संवृतिसत्यव्यपेक्षया लोकस्येदं सत्याभिनिवेशस्य प्रतिपक्षभावेन मृषार्थता भावानां प्रतिपाद्यतेऽस्माभिः, नैव त्वार्याः कृतकार्याः किञ्चिदुपलभन्ते यन्मृषा वाऽमृषा वा स्या' दिति माध्यमिकवृत्युक्तं निर्व्यूढम्। एवञ्च नैरात्म्याभिनिवेशोऽप्यनुत्तमानामेव बौद्धानाम्,**

इति। युक्तिमात्रसिद्धतयैवोत्कर्षो वस्तुतः परमार्थतस्तस्यापि हेयत्वात्। युक्तिस्तूक्तैव प्राक्।

एतेनेति। परमार्थतः शून्यत्वभावनाया अपि त्याज्यत्वस्वीकारेण। ननु उत्पादादीनामभावे सति सर्वधर्माणां मृषात्वप्रतिपादनार्थं प्रतीत्यसमुत्पादानुदर्शनमारब्धमिति भवतोऽनुमतम्, तथा च यन्मृषा, न तदस्तीति न सन्त्यकुशलानि कर्माणि, तदभावान्न सन्ति दुर्गतयः। न सन्ति कुशलानि कर्माणि, तदभावान्न सन्ति सुगतयः। सुगतिदुर्गत्यभावाच्च नास्ति संसार इति सर्वारम्भवैयर्थ्यमेव स्यादित्यत आह—संवृतिसत्यव्यपेक्षयेति। इदं सत्याभिनिवेशस्य इदं पुरोदृश्यमानं जगत् सत्यं परमार्थसत्यमित्यभिनिवेश आग्रहो यस्य, तादृशस्य लोकस्य, प्रतिपक्षभावेन विरुद्धभावेन भावानां पदार्थानां मृषार्थताप्रतिपाद्यतेऽस्माभिः शून्यावादिभिरित्यर्थः। आर्या अर्तुं योग्या, ऋगतौ इत्यस्मात् 'ऋहलोर्ण्यत्' इत्यनेन ण्यत्। मान्या इत्यर्थः। तल्लक्षणन्त्ववोचद् वसिष्ठः—

> कर्तव्यमाचरन्काममकर्तव्यमनाचरन् ।
> तिष्ठते प्रकृताचारे स तु आर्य इति स्मृत ॥ इति।

प्रकृते तु पूज्यत्वाभिप्रायेणार्यशब्दः प्रयुक्तः। यतः कृतकार्याः, कृतं कार्यं कर्तव्यं यैः, कृतकृत्या इत्यर्थः। अतएव ते तथागतेति संज्ञाभाजना भवन्ति। तत्त्वञ्च यथार्थज्ञानवत्त्वम्।

अपि च—येन हि सर्वधर्माणां मृषात्वं परिज्ञातं किं तस्य कर्माणि सन्ति, संसारो वाऽस्ति ? न चाप्यसौ कस्यचिद्धर्मस्यास्तित्वं नास्तित्वं वोपलभते। यथोक्तं भगवता—आर्यरत्नकूटसूत्रे—चित्तं हि काश्यप, परिगवेषमाणं न लभ्यते।

वेदान्ती के मत में प्रातिभासिक की अपेक्षा व्यवहारसिद्ध का उत्कर्ष माना जाता है और यहाँ ( शून्यवाद ) तो शून्यता के व्यवहार सिद्ध न होने पर भी युक्तिमात्र से सिद्ध होने से ही उत्कर्ष मान लिया जाता है। इसी से माध्यमिक वृत्ति में उक्त इस कथन का भी निर्वाह हो गया कि—'संवृति………'। [ प्रपञ्च में लौकिकजन के इदं सत्याभिनिवेश ( प्रपञ्च पारमार्थिक सत्य है इत्याकारक आग्रह ) के विरुद्ध संवृतिसत्यत्व की दृष्टि से हमने इसे मृषा कहा है, किन्तु श्रेष्ठ कृतकृत्य आचार्यों की दृष्टि से तो कुछ नहीं है, जो कि मिथ्या हो या अमिथ्या। ] ऐसी स्थिति में नैरात्म्यवाद ( आत्महान ) का आग्रह

वस्तुतस्तु—

'बुद्धैर्नात्मा न चानात्मा कश्चिदित्यपि देशितः'

इत्येव मुख्यः सिद्धान्तः। अतएव शून्यता मध्यमेत्यप्युच्यते, यदाहुः 'आत्मेति काश्यप ! अयमेकोऽन्तः, नैरात्म्यमित्ययं द्वितीयोऽन्तः। यदेतदनयोरन्तयोर्मध्यं तदरूप्यमनिदर्शनमप्रतिष्ठमनाभासमविज्ञप्तिकमनिकेतमित्युच्यते। काश्यप ! मध्यमा प्रतिपद्धर्माणां भूतप्रत्यवेक्षे'ति। तथाच त्रिकालाबाध्यतत्त्वपर्यन्तमग-

एकोऽन्त इति। अन्तः सिद्धान्तः। मध्यमिति। भावनीयतया द्वयोरभाववशेत्यर्थः। द्वयोर्भावनाया अभाव इति यावत्। 'सत्यात्मनि परसञ्ज्ञा' इति वक्ष्यमाणनयेन संसारान्तः-पातितयाऽऽत्मभावनाया अपि त्याज्यत्वात्। वस्तुगत्यैवात्मनैरात्म्ययोरभावस्तु वक्ष्यमाण-चतुष्कोटिविनिर्मुक्तत्वनयेन द्रष्टुमुचितः। प्रतिपत् = सिद्धान्तः। भूतप्रत्यवेक्षेति। सत्यत्व-

यन्न लभ्यते, तन्नापलभ्यते, यन्नोपलभ्यते तन्नैवातीतं नानागतं न प्रत्युत्पन्नम्, यन्नैवातीतं नानागतं न प्रत्युत्पन्नम्, तस्य नास्ति स्वभावः। यस्य नास्ति स्वभाव-स्तस्य नास्त्युत्पादः। यस्य नास्त्युत्पादस्तस्य नास्ति निरोध" इति। निगूढाभि-प्रायं व्यनक्ति—एवञ्चेति। नन्वेवं तर्ह्युत्तमैः किमालम्बनीयमित्यत आह—वस्तुतस्त्विति।

बुद्धैर्नात्मेति। 'आत्मेत्यपि प्रज्ञपितमनात्मेत्यपि देशितमिति' पूर्वार्द्धम्।

अत्र चायमभिप्रायः—विनेयजनानुजिघृक्षया परमकारूणिकेन भगवता बुद्धेन हीनानां तेषां 'नास्त्ययं लोकः' नास्ति परलोकः, नास्ति सुकृतदुष्कृतानां कर्मणां फलविपाक' इत्यादिकं वचनमालक्ष्य छन्दतोऽशुभकर्मकारिणामकुशलादि कर्म निवर्तयितुं क्वचिदात्मेत्यपि लोके प्रज्ञपितम्, व्यवस्थापितम्।

मध्यानाञ्च तेषां परिहायाशुभकर्म शुभकर्मकारिणामपि निर्वाणाधिगमा-क्षमानां द्वैताभिनिवेशस्य शैथिल्यसम्पत्त्यर्थं "नास्ति आत्मा = अनात्मेत्यपि क्वचिद्देशितम्। ये तूत्कृष्टतमा निर्वाणे सोत्सुकाः विगतात्मस्नेहतया तदधि-कारिणः सन्ति तेषां कृते—

बुद्धैर्नात्मा नचानात्मेत्यादिना नास्ति आत्मा कश्चित्, न चाप्यनात्मा-कश्चिदित्युपदिष्टम्। अतएवेति। आद्यन्तकोटिविनिर्मुक्तत्वादेव। आत्मेतीति।

भी अनुत्तम बौद्धों का ही है। वस्तुतस्तु—'बुद्धैर्नात्मा न चानात्मा कश्चिदित्यपि देशितः'। (न आत्मा ही है और न अनात्मा ही, अर्थात् आत्मा का अभाव भी नहीं है, ऐसा भगवान् बुद्ध ने उपदेश दिया है।) अतः यही मुख्य सिद्धान्त है। अतएव शून्यता मध्यमा भी कही जाती है। जो कि कहा है कि—'आत्मेति'……। [ काश्यप ! 'आत्मा है' यह एक सिद्धान्त है। 'आत्मा नहीं है' यह दूसरा सिद्धान्त है। किन्तु इन दोनों सिद्धान्तों का जो मध्य (दोनों भावनाओं का अभाव) है, वह तो अनिरुप्य,

**त्वैव बौद्धानां चित्तसन्तोष इति शून्यतापि शून्यैवेति सर्वं शून्यमित्येव सिद्धान्त-निष्कर्षः । एवं स्थिते—**

प्रतिक्षेपो वस्तुस्थितिर्वा । अगत्वैवेति । संसारशून्यत्वयोरज्ञातसतोरकिञ्चित्करत्वात्संसार-भावना एव क्लेशजालजटिलाः शून्यत्वभावनयोपशमयितव्याः, उपशान्तासु तु तासु शून्यत्वभावनाऽपि निष्प्रयोजनत्वात्त्याज्यैवेति सकलविकल्पविलय एव 'अरूप्यमनिदर्शन'-मित्यादिनोदीरिते माध्यमिकदर्शनप्रमेयपरिसमाप्तिः, किमाधारोऽसौ विकल्पविलय इत्या-दिका तु वस्तुस्थितिर्वेदान्तदर्शनेनैव कणेहत्य स्वप्रमेयीकार्येति तत्त्वम् ।

## शून्यता त्रिकालाबाध्येति सम्भावना मुधा

सर्वं शून्यमित्येव सिद्धान्तनिष्कर्ष इति । यत्त्वद्वयवज्रसंग्रहे माध्यमिको द्विविधः, जगन्मायोपममित्याचक्षाण एकः,

'गुडे मधुरता चाग्नेरुष्णत्वं प्रकृतिर्यथा ।
शून्यता सर्वधर्माणां तथा प्रकृतिरिष्यते ॥
'सर्वस्मिन्नप्रतिष्ठानं[1] वस्तुतत्त्वं विदुर्बुधाः ॥

इत्यादिकं ब्रुवाणस्त्वपरः सर्वधर्माप्रतिष्ठानवादीत्युक्तम् ।

तत्रेदं वक्तव्यम्—यथा वेदान्तिनां मुख्यसिद्धान्तस्यैक्येऽप्यजातवादी व्यावहारिक-परिपाटीनिरूपणेऽकृतमतिः पृथगिव प्रसिद्धिं यातः, एवं सर्वशून्यतासिद्धान्ते व्यवहारोप-पादनपर्यनुयोगे संवृत्यैव मरीच्युदकादिवद्व्यवहार इत्युत्तरे उचितेऽपि सति चरम-सिद्धान्तोद्धुरीकारे एव कृतादरो द्वितीयत्वेन गणनां प्राप्तो न तु मुख्यसिद्धान्तपार्थक्येन । परमार्थसदिति शल्यापगमे सर्वत्राप्रतिष्ठानमाध्यमिकसिद्धान्त इत्यस्य तत्रोक्तत्वात्, मायोप-माद्वयवादिमतेऽपि च परमार्थसदिति बुद्धेः शल्यतुल्यताया आवश्यकत्वात् । अनेन क्षणिकसम्वेदनस्य पारमार्थिकतोपगमे च तत्त्वतो विज्ञानस्य निराकारतावादियोगाचार-

टीकायां कृतव्याख्यानः सन्दर्भः । उत्तमाधिकारिभ्योऽप्युपदिश्यमानोऽरूप्यमनि-दर्शनमप्रतिष्ठमित्यादिना सर्वधर्मप्रविलयो नानाधार सर्वविश्रान्तिधामत्रि-कालाबाध्यतत्त्वाभ्युपगतिमन्तरा शक्यसमर्थन इति मत्याऽऽह—तथा च त्रिकालाबाध्यतत्त्वपर्यन्तमगत्वैवेति । अगत्वेत्युक्त्या शून्यत्ववादेऽनिर्भरता सूचिता । सिद्धान्तनिष्कर्ष इति । माध्यमिकसिद्धान्तनिष्कर्ष इत्यर्थः । विशदी-

अनिदर्शन; अप्रतिष्ठ, अनाभास, अविज्ञप्तिक, अनिकेतन कहा जाता है । काश्यप ! सभी धर्मों का सत्यत्व प्रतिक्षेप या वस्तुस्थिति ही मध्यमा सिद्धान्त है' । तथा च त्रिकाला-बाध्यत्वपर्यन्त न पहुँचकर ही बौद्धों को चित्त संतोष हो जाता है । उनके मत में शून्यता भी शून्य ही है, अतः 'सर्वं शून्यम्' यही सिद्धान्त निष्कर्ष है । अतएव 'अस्तित्वं ये

१. 'सर्वस्मिन् प्रतिष्ठाने च' इति तु तत्राशुद्धं मुद्रितम् ।

विशेषेण पूर्वमुपदर्शितेनास्यैक्यमेवेति पृथग्गणना नोचिता स्यात्। मायावादस्य 'यावदाभासते यच्च तन्मायैव च भासते' इति वदता निराकारवादिनाऽपि स्वीकारात्।

अथ मायोपमाद्वयवादिमते—

'न सन्नासन्नसदसन्न चाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः'॥

इति किञ्चित्तत्त्वस्वीकारेण भेदः शङ्क्येत, तन्न, घटादौ प्रसक्तसत्त्वादिकोटिचतुष्कनिषेधे तस्यैव चतुष्कोटिविनिर्मुक्तशब्देन ग्राह्यस्य तत्त्वरूपतायाः केनचिद्वक्तुमशक्यत्वात्, न खलु सत्तारूपप्रथमकोटिमस्पृशतः कस्यचित्तत्त्वपदार्थता दृष्टचरी, 'विमतं तर्कपीडयत्वान्मरीचिषु यथोदकम्' इति चोत्तरार्धमन्यत्र प्रसिद्धम्, यत्र घटादेरेव ग्राहकं विमतपदमुपात्तम्। अथैवं चतुष्कोटिविनिर्मुक्तता तत्त्वमित्यर्थोऽस्तु, इयमेव शून्यता निस्स्वभावता निस्तत्त्वतेत्यपि गीयते।

संवृतिः परमार्थश्च सत्यद्वयमिदं मतम्।
बुद्धेरगोचरस्तत्त्वं बुद्धिः संवृतिरुच्यते'॥

इति बोधिचर्यावतारपञ्जिकायां च बुद्ध्यगोचरमेवोक्ता।

'उपायभूतं व्यावहारसत्यमुपेयभूतं परमार्थसत्त्वम्' (बोधिचर्या०) इत्यपि विभाग इत्थमेवोपपाद्य इति चेत्, शून्यताया अधिकरणविशेषमनादृत्य तत्त्वरूपता केनचिद्विदुषा तात्पर्यविषयीकृता स्यादित्यस्य स्वप्नेऽपि श्रद्धातुमयोग्यत्वात्, तथाहि—शून्यता घटादिभ्योऽभिन्ना वा भिन्ना वा, आद्ये घटादेरुक्तरीत्याऽतात्त्विकतया न शून्यतायास्तात्त्विकता सम्भाव्यापि, द्वितीये तु शून्यता स्वभावशब्दव्यपदेश्या न वा, आद्ये न घटादेर्निस्स्वभावता स्यात्, शून्यतात्मकस्वभावसद्भावात्। द्वितीयेऽपि काऽसाविति वक्तव्यम्, सर्वदेशकालवृत्त्यभावप्रतियोगित्वं वा, गृहं शून्यमितिप्रयोगदर्शनेन शून्यशब्दस्याभावानुयोगिपरत्वे धर्मसामान्याभावानुयोगित्वं वा, अभावरूपत्वं वा, मूले परतो निर्वक्ष्यमाणं प्रतीत्य समुत्पन्नत्वं वा, प्रपञ्चसामान्याभावो वा, तत्राद्यकल्पद्वये घटादेः प्रतियोगिनोऽनुयोगिनो वाऽतात्त्विकत्वे न शून्यतायास्तात्त्विकत्वम्, धर्मसामान्याभावे शून्यतारूपधर्माभावस्यापि प्रविष्टतया च कुतस्तस्यास्तात्त्विकत्वम्। शून्यतातिरिक्तधर्मसामान्याभावविवक्षणे चात्माश्रयः, शून्यतायाः स्वघटितत्वात्, सिद्धान्तत्यागप्रसङ्गाच्च, तात्त्विकतयाऽभिमतशून्यताऽधिकरणस्यापि घटादेस्तात्त्विकताया एव वाच्यत्वात्। तृतीयेऽपि घटादावभावरूपता न ततः पृथक्त्वेनापि शक्यते वक्तुमिति घटादेरपि तात्त्विकताप्रसङ्गः, तस्याऽतात्त्विकत्वे च नाभावरूपतायास्तद्धर्मत्वपक्षेऽपि तात्त्विकत्वम्। न च शुक्तिरूप्यस्य वेदान्तिनां प्रातिभासिकत्वेऽपि तदीयरूप्यत्वस्य व्यावहारिकत्ववत् स्यात्; कृतश्चायं टीकाकृद्भिः। तथा च—

सर्वं च युज्यते तस्य शून्यता यस्य युज्यते।
सर्वं न युज्यते तस्य शून्यं यस्य न युज्यते॥

इत्युक्तिरपि संगच्छते।

व्यावहारिकरूप्यस्यापि तादृशरूप्यत्वाधिकरणतायास्तेषां मते स्वीकारात्, घटस्याभावरूपता तु घटे एव न तु पटे इति वैषम्यात्। घटपटादिसर्वसाधारणाभावरूपत्वाभ्युपगमे च सिद्धान्तत्यागापातात्,

'नायाति न च तत्रासीन्न चोत्पन्ना न चांशवत्।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः॥'

इति प्रमाणवार्तिके जातिनिराकर्तृधर्मकीर्तिदर्शितरीतिविरोधात्। वक्ष्यमाणस्य शाश्वतत्वनिषेधस्य धर्मधर्म्युभयसाधारणत्वाच्च। 'न सन्नास'दिति प्राङ्निर्दिष्टसाध्येऽभावत्वादेरपि पक्षान्तर्गतत्वाच्च। चतुर्थोऽपि पारमार्थिकत्वेन कार्यत्वाभावः, कार्यत्वसामान्याभावः, सांवृतोत्पत्तिकत्वं वा स्यात्, तत्राद्यद्वयस्याधारसापेक्षस्य न घटादितात्त्विकत्वमन्तरेण तात्त्विकत्वम्, एवं तृतीयस्यापि, उत्पत्तेः सांवृतत्वे तत्सम्बन्धस्य बहुव्रीह्यर्थस्य तात्त्विकताया आशङ्कनीयत्वाच्च। एवं पञ्चमस्य प्रपञ्चसामान्याभावस्याप्यधिकरणं यदि प्रपञ्चान्तर्गतमेव किञ्चित्, तदा तस्य तात्त्विकतां विना नोक्ताभावस्य तात्त्विकत्वमित्युक्तमेवावर्तते। यदि तु प्रपञ्चबहिर्भूतम्, तदापि तस्य तात्त्विकत्वे शाश्वतवादप्रसङ्गः, बहिष्कृतश्च सः—

'चित्तमात्रं न दृश्योऽस्ति द्विधा चित्तं हि दृश्यते।
ग्राह्यग्राहकभावेन, शाश्वतोच्छेदवर्जितम्॥

इत्याद्युक्त्या लङ्कावतारे इति वक्ष्यते, प्रपञ्चबहिर्भूतमपि वस्तु संविद्वा स्यात्। संवेद्यं वा, प्रकारान्तरस्यासम्भाव्यत्वात्, तत्र संविदेव वासनावशात्संवेद्यतां यातीति संवेद्यं तावन्नातिरिक्तम्, संविदपि शाश्वतोच्छेदवर्जिता = नित्यत्वानित्यत्वाभ्यामनिर्वचनीयेति हि तदर्थः। एवं माध्यमिककारिकास्वपि—

'अनेकार्थमनानार्थम्—
इत्यनेनैकत्वान्यत्वाभ्यामनिर्वाच्यत्वमुक्त्वा
अनुच्छेदमशाश्वतम्।
एतत्तल्लोकनाथानां बुद्धानां शासनामृतम्' ( १८ प्रक० )

इत्यवाचि। निर्वाणमप्यायुष्मन् सुभूते! मायोपममिति तथागतोक्तिमनूद्य च' स चेत् कुलपुत्र निर्वाणदप्यधिकतरोऽन्यो धर्मोऽभविष्यत्, तमप्यहं मायोपमं स्वप्नोपममिति वदामि' ( १६ प्रक० ) इति च तत्र वृत्तावुद्धृतम्। तस्माच्छून्यताऽनिर्वचनीयैवेति तस्यास्तात्विकता माध्यमिकसिद्धान्तसिद्धेति मुधा सम्भावना केषाञ्चित्।

एवं कस्यापि शाश्वतत्वोपगमेऽपसिद्धान्तप्रसङ्गे द्रढिमानमानीते—

'ततस्तु सम्बभूवा सौ यद्गिरामप्यगोचरः।
यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदां च यत्॥
विज्ञानमात्रं विज्ञानविदां यदमलात्मकम्।

पुरुषः साङ्ख्यदृष्टीनामीश्वरो योगवादिनाम् ॥
शिवः शैवागमस्थानां कालः कालैकवादिनाम् ।'
( अन्नपूर्णोपनि०, योगवासि० )

इति केषाञ्चिदनुनीतसमन्वया मतिः स्वाभिप्रेतस्थित्यनुरोधिन्येवावगन्तुमुचिता । एतच्च स्वातन्त्र्यवादराजहंसे व्यक्तीभविष्यति, पराभ्युपगमसमीक्षणे हि क्व खलु शून्यवादः, क्व च शैवादिसिद्धान्त इति ।

## शून्यतानये तत्त्वपदार्थः

अथैवं शून्यत्वस्यातात्त्विकत्वस्थितौ तस्य क्वचित् तत्त्वरूपतोक्तेः का गतिरिति चेत्, 'प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तायिनः' इतीदृशनिर्वाणौपयिकसकलविकल्पविलयस्यप्रतिबन्धकीभूतानां तत्तद्भावनानां निरासे उपयुज्यमानतयोपादेयता भाव्यमानायाः शून्यताया इत्येतावता सांवृतसत्यत्वेऽपि सार्वलौकिकसंवृत्यगोचरत्वमित्येतावता च तत्त्वरूपतोक्तिरित्यस्य तेषां निबन्धपरिशीलनैः प्रतीयमानत्वादिति दर्शितमेवानुपदं मूले राजहंसे च । सिद्धान्तस्तु सर्वं शून्यमित्येव निरपवादः, सर्वशब्देन शून्यताया अपि क्रोडीकृतत्वात् ।

एवं स्थितेऽद्वयवज्रसङ्ग्रहे सर्वस्यैव वस्तुनोऽप्रतिष्ठानं स्फुटं वदतोऽपि मतोपदर्शने—

'सर्वारोपविनिर्मुक्ते स्वतस्तत्त्वे चकासति ।
शून्यताद्यभिधानैस्तु तत्रारोपनिराक्रिया ॥'

इति यदुपन्यस्तम्, तत्तात्त्विकाधिष्ठानमिव प्रदर्शयत्प्रतीयमानं विरुद्धमतिकृद्दोषदुष्टतया कथञ्चिदेव नेतुमुचितम्, तथाहि—विनिर्मुक्ते इत्यत्र नपुंसके भावे क्तः, विनिर्मोके इत्यर्थः । तत्त्वे इति । सिद्धान्तान्तरनिरासेन निर्वाणौपयिकतयोपादेये इत्यर्थो न तु त्रिकालाबाध्ये भावभूताधिष्ठाने इति । चकासतीति 'निमित्तात्कर्मयोगे' इति सप्तमी, चर्मणि द्वीपिनं हन्तीतिवत् । तत्रेति तूक्तविनिर्मोकस्यैव बुद्धिस्थतां दर्शयति । स्वत इति तु प्रयासविशेषं विनैवेत्याह । तथा च सर्वं शून्यमिति भावनाद्रढिम्नाऽनायासं समाधौ सर्वविकल्पशून्यतासंवेदनाय सिद्धान्तान्तरनिरासाऽभ्यास इति भावः ।

अथवा विनिर्मुक्ते इत्यस्य रहिते इत्येवार्थः । स्वतश्चकासतीति तु प्रतीत्य समुत्पन्नं सम्वेदनमनिर्वचनीयमनिर्वचनीयस्वप्रकाशताकमभिप्रैति, विकल्पोपप्लुतसंवेदनमपेक्ष्योपादेयतया तु समाधौ विकल्पानुपप्लुतं तत्त्वमित्युक्तम्, सप्तमी तु पूर्ववदेव । सम्वेदनस्याप्रतिष्ठितत्वं चैतन्मते उक्तग्रन्थे कण्ठरवेणाप्युक्तमिति स्वतश्चकासतीत्यनेन चिद्रूपपारमार्थिकतत्त्वस्वीकारलाभो न सम्भावनीयः ।

यदि चैवं परमिदं पद्यं नेष्यते, तदा नूनमिदं शून्यतानयनिकषापरीक्षितं न माध्यमिकानुयायिनः स्यात् । स्याद्वा परमार्थसदितिबुद्धेर्हेयत्वाभिधानमप्रमाणीकुर्वतो

'अस्तित्वं ये तु पश्यन्ति नास्तित्वं चाल्पबुद्धयः।
भावानां, ते न पश्यन्ति द्रष्टव्योपशमं शिवम् ॥'

इतिमाध्यमिकग्रन्थे शिवशब्दो दुःखाभावपर एवावगन्तव्यः, अतएवोत्तमसमाधौ दुःखाभाव एव न तु सुखमित्युक्तमभिधर्मकोषे। उपशमशब्दस्तूपेक्षासंविदतिरिक्तसंविदभावाभिप्रायेणेति न पौनरुक्त्यम्। शिवमित्यस्य शिवस्य लक्षण-

माध्यमिकैकदेशिनः कस्यचित्, दर्शनान्तरे कञ्चिद्गुणं निरीक्ष्य स्वदर्शनेऽपि तदाधानस्य केनचिदनुष्ठानसम्भवात्, यदि हि तात्त्विकाधिष्ठानस्य माध्यमिकमुख्यसिद्धान्तता स्यात्, तदाऽवश्यमास्तिकनास्तिकदर्शनेषु तस्य प्रसिद्धिः स्यात्, न हीयमपि काचिदुपासनासृतिर्येन गोपनीया स्यात्, किन्तु दार्शनिकी स्थितिः नापि कस्यचिन्मुख्यसिद्धान्तमस्पृष्टवैवापातप्रसिद्धमेव सिद्धान्तं प्रमाणैरवधीर्य दौर्जन्यजन्यापयशसा मलीमसमात्मानं चिकीर्षेत्सर्वोऽपि विद्वान्। एकदेशिन एवेदमस्त्विति च गुडजिह्विकयैवोक्तम्। उक्ताभिप्रायकत्वं वाऽमाध्यमिकीयत्वमेव वेदृशस्य वचसस्तु रोचतेऽस्मभ्यम्। अधिकं च परतस्तत्र तत्र व्यक्तिभविष्यतीति नमो निरतिशयसर्वज्ञाय।

पश्यन्तीति। परमार्थिकत्वेनेत्यादिः। भावनामितिपूर्वान्वयि। द्रष्टव्योपशमम् = दृश्यानामुपशममित्युचितोऽर्थः। संविदतिरिक्तेति। उपेक्षासंविद उत्तमसमाधावभ्युपगमादितिभावः।

अस्तित्वमिति। अत्राद्यन्तकोटिद्वयमस्तित्वनास्तित्वात्मकं पदार्थानाम्, तद्विनिर्मुक्तत्वञ्च शून्यत्वम्, तत्ते न पश्यन्ति ये आद्यन्तकोटिद्वयद्रष्टारः। कुतः? यतोऽल्पबुद्धयो मन्दमतयः। हेतुगर्भविशेषणमिदम्। कीदृशं तत्तत्वं तत्राह—द्रष्टव्योपशमं शिवमिति। ननु नात्र शून्यत्वस्य प्रतिपादनमपितु ब्रह्मण एव, शिवशब्दप्रयोगात्। स च ब्रह्मणि प्रयुज्यमाना दृष्टः, तथा च श्रुतिः—'शान्तं शिवमद्वैतम्" (मा० उ०, ७) इति। इति चेत्तत्राह—शिवशब्दो दुःखाभावपर एवेति। निर्वाणदशायां दुःखाभाव एव न तु सुखमपीत्यत्र प्रमाणमाचष्टे—अत एवेति। शिवशब्दस्य दुःखाभावबोधकत्वादेव।

ननु द्रष्टव्योपशमशब्देन दृश्यमात्रोपशमस्योक्तत्वेन तदन्तर्गततया दुःखाभावोऽप्युक्त एवेति किमिति पुनस्तद्बोधनाय शिवशब्दप्रयोगः। तथा च सति पौनरुक्त्यमपि स्यादित्याशयेनोच्यते—उपशमशब्दस्त्विति। अतिरिक्तसंविद्रागद्वेषादिसंविदित्यर्थः। ननु अतिरिक्तसंविदन्तर्गततया दुःखसंविदोऽभावे

तु.......' [ जो मन्दमति भावों ( पदार्थों ) के अस्तित्व तथा नास्तित्व को देखते हैं। वे दृश्यों के उपशमरूप अर्थात् निष्प्रपञ्च शिव को नहीं देखते। ] इस माध्यमिक ग्रन्थ में शिवशब्द दुःखाभावपरक ही मन्तव्य है। इसीलिए 'उत्तम समाधि में दुःखाभाव ही होता है न कि सुख' ऐसा अभिधर्मकोष में कहा गया है। उपशमशब्द तो उपेक्षासंविद् से अतिरिक्त रागद्वेषादिसंविद् के अभावाभिप्रायेण कहा गया है, अतः पुनरुक्ति

**मित्यर्थकत्वे तु न पौनरुक्त्यशङ्कापि, ज्ञानज्ञेयनिवृत्तिस्वभावं सर्वकल्पनाजालरहितं द्रष्टव्योपशमं शिवलक्षणमिति तद्वृत्तावुक्तत्वात्। भामत्यां शून्यतायाः पारमार्थिकत्वोक्तिन्तु शून्यतायाः शून्यत्वेऽपि निषेधस्य परिशेषो ध्रौव्येणापततीति कस्यचित्परमार्थतत्त्वस्य शून्यवादिनोऽप्यभ्युपगम आवश्यक इति कृत्वाचिन्तया।**

ज्ञानज्ञेयनिवृत्तिस्वभावमिति। अत्र ज्ञानपदं निर्वाणदशामभिप्रेत्य प्रयुक्तम्। परमार्थिकत्वोक्तिस्त्विति। इतोऽनन्तरं जिज्ञासासूत्रभामत्यामेव सर्वोपाख्यारहिततयाऽपदार्थत्वोक्त्या शून्यस्यालीकत्वध्वननमपि कथञ्चिदेव नेतव्यम्, दृश्यस्य स्वीयसत्त्वानभ्युपगमेऽधिष्ठानस्यापि च पारमार्थिकस्यानभ्युपगमेऽलीकतैव समर्थिता स्यादिति तदभिप्रायोहनसम्भवात्। अन्यथा तु शून्यतायाः सत्यत्वे तदाश्रयस्यापि सत्यत्वावश्यम्भावेन शून्यताया अपि च शून्यत्वेन सामान्यत एव शून्यस्यालीकत्वध्वननमसङ्गतमेव स्यात्। बौद्धेनापि च केनचिद् यदि दृश्यस्यालीकतोक्ता स्यात्, तर्हि समाध्यवस्थां नाटयता परम्, न त्वपगतसमाधिमदघूर्णितेन विस्फारितलोचनेनेति मन्तव्यम्। वैराग्याविर्भावार्थं तु दृश्येऽलीकत्वस्य भावनां समर्थयितुं तस्याभिधानं केन नानुमन्येत, न त्वेतावता वस्तुगतिरसौ स्यात्। यदि तु निखिलप्रपञ्चाभाव एव शून्यताशब्देनोच्यते, सोऽपि च शून्य एव, प्रपञ्चान्तःपातित्वात्, अभावस्यालीकता चाऽऽकलितैव सौगतैरिति वर्ण्यते, तदा सुतरां शून्यतायाः सत्यतोक्तिराञ्जस्येन योजनां नार्हति, परन्त्वभावस्याधारभिन्नत्वेनालीकत्वस्य कथञ्चिन्मर्षणीयत्वेऽप्याधाररूपतया तथात्वं भृशं शिथिलायत इति शून्यताया आधारे एवैवं सत्यता पर्यवस्यति। श्रीगौतमेन

दुःखाभावोऽपि सिद्ध एवेति पुनरुक्तिस्तदवस्थेत्यस्वरसादाह—शिवमित्यस्येति। तच्च तदुक्त्या दृढयति—तद्वृत्ताविति। मध्यमकशास्त्रवृत्तावित्यर्थः।

शून्यवादिनामपि शून्यताया एव पारमार्थिकत्वादिति भामतीभावमुपवर्ण्य विरोधं परिहरति—भामत्यामिति। कृत्वाचिन्तयेति। तत्पर्यन्तं चिन्तनेन मननेन यन्निश्च्योतितम्, तत्स्वीकृत्येत्यर्थः। अभ्युपगमवादेनेति यावत्।

ननु शून्यताया अपि निरुक्तविकल्पोक्त्या निरासे नित्यसमजात्यापत्तिरिति चेत्तन्निराचष्टे—इदन्त्ववधेयमिति। तल्लक्षणादिकं प्रपञ्चितं प्राक्।

नहीं है। और यदि 'शिवम्' इसका 'शिव का लक्षण' अर्थ मान लिया जाय तो पौनरुक्त्य की शङ्का करना भी सम्भव नहीं है। क्योंकि ज्ञानज्ञेयनिवृत्तिस्वभाववाला समस्त कल्पनाजाल से शून्य दृश्यों के उपशम ( अभाव ) रूप' यही शिव का लक्षण है, ऐसा माध्यमकशास्त्र की वृत्ति में कहा गया है। भामती में शून्यता के लिए पारमार्थिकत्व कथन तो—शून्यता के शून्यरूप होने पर भी निषेध ( अभाव ) का परिशेष ( आधार ) अवश्यम्भावी होने से शून्यवादी को भी किसी पारमार्थिक वस्तु को मानना आवश्यक है। इस अभिप्राय से अभ्युपगमवाददृष्टया कहा गया है।

इदन्त्ववधेयम्—शून्यता शून्या न वेति विकल्प्य निरासो नित्यसमजातिलक्षणाक्रान्त इति तार्किकादिभिर्नेत्थं प्रत्यवस्थेयम्, अस्माकं तु किञ्चिदव्यवस्थापयतां श्रीगौतमेन गुरुणोद्‌गीर्णायां वितण्डायामुत्तमाधिकारितया तादृशरीत्या तत्र तत्र खण्डनेऽपि न दोषः, यदा तु कथाविशेषे तार्किकादिरपि वैतण्डिकतामालम्बते तदा तस्याप्यनिर्वाच्यवादिकार्यकारित्वेन तदनुचरत्वमेवापद्यत इति । तदित्थं—

'आकारसहिता बुद्धिर्योगाचारस्य सम्मता ।
केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः ॥'

गुरुणोद्‌गीर्णायामिति । अनया वचोव्यक्त्येदं व्यज्यते—यद्यप्यत्यादरेण वितण्डाकथोपदेशकतया न्यायसूत्रप्रणेता नास्मद्‌दृष्ट्या वीतराग इति वीतरागेषु प्रथमस्य तथागतस्य शिष्याणां नासौ माननीयो नः, तथापि पररीत्या परोपदेशनैपुणीपूतचेतसामस्माकमभीष्टसिद्धये एव किञ्चिदुपदिदेशेत्येतावता गौतमेति तथागतनामाङ्किततया च किञ्चिदिव माननीयतां न न यातीति । गोतमशब्दवच्च गौतमशब्दोऽपि न्यायसूत्रकर्तरि प्रयुज्यत इति । भवतां गुरुणेति वार्थः ।

किञ्चिदव्यवस्थापयतामिति । तिस्रः खलुकथाविधाः, वादजल्पवितण्डाभेदात् । तत्र तत्त्वबुभुत्सुना सह क्रियमाणा कथा प्रथमः । विजिगीषुणा सह क्रियमाणा द्वितीयः । स्वपक्षस्थापनहीना च वितण्डा । शून्यवादिनाऽपि न किञ्चिद् व्यवस्थापनीयम्, शून्यत्वस्य सर्वासिद्धयैव सिद्धेरित्युक्तत्वात् । यद्‌गीतं सौगतैः—

यदि काचन प्रतिज्ञा तत्र स्याद् एष मे भवेद्दोषः ।
नास्ति च मम प्रतिज्ञा तस्मान्नैवास्ति मे दोषः ॥ इति ।
यदि किञ्चिदुपलभेयं प्रवर्तयेयं निवर्तयेयम्बा ।
प्रत्यक्षादिभिरर्थैस्तदभावान्मेऽनुपालम्भः ॥
( विग्रह० व्या०, २९-३० ) इति च ।

न दोष इति । नित्यसमजात्यात्मका दोषो नास्तीत्यर्थः । न केवलमस्माकमेवोत्तमाधिकारिणां नित्यसमजात्यादिरीत्या तत्र तत्र परैः खण्डनदूषणं भूषणायतेऽपितु यत्र तार्किकादिरपि वैतण्डिकतामालम्बते कथाविशेषे तत्रापीयमेव वर्तनीति निश्च्योतयति—यदेति । आकरसहितेति । आकारो हि विषयिताविज्ञातव्य यह है कि—शून्यता शून्य है या नहीं, इस प्रकार विकल्प कर किया गया निरास नित्यसमजातिलक्षणाक्रान्त है । इस तरह तार्किकों को प्रत्यवस्थान ( विरोध ) नहीं करना चाहिए, क्योंकि हम तो किसी भी वस्तु की स्थापना न करने के कारण श्रीगौतम गुरु के द्वारा उपदिष्ट वितण्डा कथा के उत्तमाधिकारी हैं । अतः उक्त प्रकार से तत्तद्‌वस्तु का खण्डन करने पर भी कोई दोष नहीं है । जब किसी कथाविशेष में तार्किक भी वैतण्डिकता को स्वीकार कर लेता है तो उस समय वह भी अनिर्वचनीयवादी

इत्यपि निरूपितप्रायाभिप्रायं मन्तव्यम्। तथाहि—आकारसहिता = पारमार्थिकाकारसहिता केवलां = सांवृताकारसद्भावेऽपि परमार्थत आकाररहिताम्, विषयविषयिभावस्यैकत्रापि विचारासहत्वस्योक्तत्वात्। स्वस्थां = वस्तुगत्या स्वविषयत्वाभावेऽपि सांवृतस्वविषयत्ववतीम्, एतेनैवाभिप्रायेणास्माभिः शारदायां स्वप्रकाशवादे शून्यवादिमतेऽपि ज्ञानस्य स्वप्रकाशत्वमवादि। परमार्थतस्तदभावाभिप्रायेण तु क्रियाकर्मविरोधादिना तन्मते क्वचिद्ग्रन्थे तन्निरा-

सांवृतस्वविषयत्ववतीमिति। इत्थमेव—

'अर्थो ज्ञानसमन्वितो मतिमता वैभाषिकेणोच्यते,
प्रत्यक्षो नहि बाह्यवस्तुविसरः सौत्रान्तिकैराश्रितः।
योगाचारमतानुगैरभिहिता साकारबुद्धिः परा,
मन्यन्ते बत मध्यमाः कृतधियः स्वस्थां परां संविदम्॥'

इत्युक्तिरपि योजनीया। वस्तुतस्तु सूक्ष्मसिद्धान्तनिष्कर्षणवेलायां नेदृशश्लोका आश्रयणीयतां यान्ति, आपातत एव परसिद्धान्तज्ञानवतापि व्युत्पत्तिमात्रेणेदृशश्लोकरचनोपपत्तेरिति ध्यातव्यम्।

शेषमात्रम् तादात्म्येन ज्ञानधर्मो न तु विभिन्नविषयत्वरूपम्, सथा सति बहिर्विषयस्वीकारापत्त्या ज्ञानस्य निराकारवादापत्तेः। स च पारमार्थिको योगाचारमते। सांवृत इति च माध्यमिकमतम्। परमार्थत आकारराहित्ये हेतुमाचष्टे—विषयविषयिभावस्येति। टीकायाम्—बाह्यवस्तुविसर इति। विसरः = समूहः। एतेनैवाभिप्रायेणेति। सांवृतस्वविषयत्वाभिप्रायेणेत्यर्थः। ज्ञानस्य स्वप्रकाशत्वमिति। तन्मते शून्यतासाधकस्य विज्ञानस्य पराधीनसिद्धित्वोपगमे शेषासिद्ध्या सर्वासिद्ध्यापत्त्या स्वतः सिद्धत्वमेवावश्यमुपेयम्। उपेयते च तथा। अतएव चन्द्रिकायां दृश्यत्वहेतूपपत्तावप्युक्तम्—'मन्मते ज्ञानमात्रस्य स्वविषयत्वेने'ति। मन्मते शून्यवादिमत इत्यर्थः। तदभावाभिप्रायेणेति। स्वविषयत्वं तदोऽर्थः। तन्मते माध्यमिकमते। ज्ञाने स्वविषयत्वेऽपि सत्यत्वेन तत्सिद्धिस्तस्य स्वांशे

के कार्य का सम्पादक होने से उसका अनुचर ही बन जाता है। तथा च इस प्रकार—आकारसहिता………। ( योगाचार आकारसहित ज्ञान को मानता है, तथा माध्यमिक तो केवल ज्ञान को ही मानता है ) इसका अभिप्राय भी निरुपितप्रायः हो गया। तथाहि—आकारसहित अर्थात् पारमार्थिक आकार के सहित, केवल अर्थात् सांवृत आकार के रहते हुए भी परमार्थत आकार से रहित, क्योंकि एकत्र विषयविषयिभाव का विचारासहत्व कहा जा चुका है। स्वस्थ अर्थात् वस्तुतः स्वविषयत्व के न होने पर भी सांवृत विषयत्व वाली, इस सांवृतस्वविषयत्वाभिप्रायेण ही हमने शारदा में स्वप्रकाशवाद में शून्यवादि के मत में भी ज्ञान को स्वयंप्रकाश कहा है। तथा परमार्थतः स्वविषयत्वा-

**सोऽपि नासङ्गतः। बाह्यार्थानङ्गीकारमात्राभिप्रायेण तु क्वचित् ज्ञानपारमार्थिकत्ववादियोगाचारस्यापि शून्यवादित्वोल्लेख इति विवेक्तव्यम्। उक्तश्लोके ईदृशसंविदभिधामपि शून्यवादिमते संसारदशायामेव न तु मोक्षदशायाम्, प्रदीपनिर्वाणवदात्महानरूपमोक्षस्य तन्मते तदीयनिबन्धेषु सुप्रतीतत्वात्। उक्तञ्च लङ्कावतारे भगवता—**

**"यथा न भावो नाभावो गगनं कथ्यते मया।**
**आलयं हि तथा काये भावाभावविवर्जितम्॥**

प्रदीपनिर्वाणवदिति। 'प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तायिनः।' इति हि वदन्ति।

प्रमात्वसिद्धिमपेक्षमाणा स्वाश्रयं सावसरयत्येवेत्याद्यन्यत्र विस्तरः। क्वचिदिति। औत्पत्तिकसूत्रे शाबरभाष्यादौ 'शून्यस्तु, कथमित्यादिग्रन्थेन स्फुटं तथा प्रतीयमानत्वात्। उक्तश्लोक इति। ईदृशसंवित् स्वस्थसंविद्। टीकायां तायिनः = पूज्यस्य। 'प्रद्योतस्येव निर्वाणं विमोक्षस्तस्य चेतस' इत्यपि थेरगाथादौ। निवार्णस्यात्महानरूपस्य भावाभावविलक्षणत्वमपि समुट्टङ्कितम्माध्यमकशास्त्रादौ।

यथेति। गगनं न भावः,

नालक्षणे लक्षणस्य प्रवृतिर्न सलक्षणे।
सलक्षणालक्षणाभ्यां नाप्यन्यत्र प्रवर्तते॥

इति सौगतोक्त्या तस्य सलक्षणालक्षणाभ्यां दुर्निरूपत्वात्। नाप्यभावः, भावाभावात्। भावस्यैव अभावो भवति।

अविद्यमाने भावे च कस्याभावो भविष्यति। इति।
भावस्य चेदप्रसिद्धिरभावो नैव सिद्धयति।
भावस्य ह्यन्यथाभावमभावं ब्रुवते जनाः॥ (म०शा०,१५.५) इति च।

लङ्कावतारेऽपि—

आकाशं शशशृङ्गं च वन्ध्यायाः पुत्रएव च।
असन्तश्चाभिलप्यन्ते तथा भावेषु कल्पना॥ इति। (२-१३६, १०-४५३)

भावाभिप्रायेण क्रियाकर्मभावविरोधादि के द्वारा बौद्धमत में किसी-किसी ग्रन्थ में स्वविषयत्वरूपस्वप्रकाशत्व का खण्डन करना भी असङ्गत नहीं है। शाबरभाष्यादि में तो बाह्यार्थ के अनङ्गीकार मात्र के अभिप्राय से ज्ञानपारमार्थिकत्ववादीयोगाचार को भी शून्यवादी कहा गया है। पूर्वोक्त श्लोकोक्त संविद् का कथन भो शून्यवादी के मत में संसारदशा में ही है, न कि मोक्षदशा में, क्योंकि शून्यवादि के मत में प्रदीपनिर्वाणवत् आत्महानरूप मोक्ष है, यह उन्हीं के निबन्धो में सुप्रसिद्ध है। भगवान् बुद्ध ने लङ्कावतार

लोकायतमिदं सर्वं यत्तीर्थ्यैर्देश्यते मृषा।
कार्यकारणसद्दृष्ट्या स्वसिद्धान्तो न विद्यते॥
अहमेकः स्वसिद्धान्तं कार्यकारणवर्जितम्।
दिशामि शिष्यवर्गस्य लोकायतविवर्जितम्॥
चित्तमात्रं न दृश्योऽस्ति द्विधा चित्तं हि दृश्यते।
ग्राह्यग्राहकभावेन शाश्वतोच्छेदवर्जितम्।
यावत्प्रवर्तते चित्तं तावल्लोकायतं भवेत्॥"

आलयं=आलयविज्ञानम्। कार्यकारणवर्जितमित्यनेन निर्वक्ष्यमाणोऽजातवादा-

सद्दृष्ट्येति। पारमार्थिकत्वाभ्युपगमेनेत्यर्थः। तैर्थिकानामितिशेषः। न विद्यते= नोपपद्यते। अथवा कार्यकारणयोः पारमार्थिकत्वाभ्युपगममाश्रित्यास्माकं सिद्धान्तो नास्ति, किन्तु परेषां तैर्थिकानामेव, अतएव तेषां लोकयतप्रायतेतिपूरणसंवलितार्थः। न नित्य-

लोकायतमिति। तीर्थ्यैरन्यैराचार्यैर्यदुपदिश्यमानं तत्सर्वं लोकायतं लोके आयतं प्रसृतं, यतो लोके बहवोऽनुगन्तारो यस्य तत्, लोकरञ्जकमात्रमिति यावत्। अतएव मृषाभूतम्। तच्च न माध्यमिकसिद्धान्तः। अस्माभिस्तूपदिश्यमानं चित्तत्वं ग्राह्यग्राहकभावेन द्विधा विभाव्यमानमपि कार्यकारणादिसर्वविशेषवर्जितं न तु तदतिरिक्तं दृश्यमपि किञ्चिदिति पिण्डार्थः।

स्यादेतत्—आलीयतेऽस्मिन्निति व्युत्पत्त्याऽऽधारवाचको हि प्रसिद्ध आलयशब्दः, 'तत्रामरालयमरालमरालकेशी' 'हिमालयोनाम नगाधिराजः' 'पिबत भागवतं रसमालयमि'त्यादिना नैषधादौ तत्र प्रयुक्तत्वात्, तथा चालयशब्देन कीदृशं स्थानं विवक्षितमित्याशङ्कामपाकर्तुं व्याचष्टे—आलयं = आलयविज्ञानमिति। विजानातीति विज्ञानम्। तस्य च सर्वसांक्लेशिकधर्मबीजस्थानत्वादालयता। यद्वाऽऽलीयन्ते कार्यकारणाद्यात्मकाः सर्वे धर्मा यस्मिन्। लयपर्यन्तं स्थायि वा, तादृशं विज्ञानमित्यर्थः। कार्यकारणवर्जितमित्यस्य स्वारस्यं

में कहा है—यथा न भावो नाभावो……। (जैसे हम आकाश को न भावरूप मानते हैं और न अभावरूप ही, वैसे ही शरीरस्थ आलयविज्ञान न भावरूप है और न अभावरूप। अन्य तीर्थंकरों के द्वारा कार्यकारणसद्दृष्टि से मिथ्या ही उपदेश दिया जाता है, वह सब लोकायत है, अस्मदीय सिद्धान्त नहीं। मैं एक ही अपने सिद्धान्त का शिष्यवर्ग को उपदेश देता हूँ, जो कि कार्यकारणभाव तथा लोकायत से विवर्जित है एवं शाश्वत और उच्छेद से रहित अर्थात् अनिर्वाच्यचित्तमात्र ही है न कि कुछ दृश्य भी। चित्त ही ग्राह्यग्राहकभाव से द्विधादृष्टिगोचर होता है। अतः चित्तप्रवृत्ति अर्थात् चित्तसत्ता जब तक है, तबतक सब लोकायत ही है)। आलय अर्थात् आलयविज्ञान। कार्यकारणवर्जितशब्द से वक्ष्यमाण अजातवाद अपरपर्याय प्रतीत्यसमुत्पाद सूचित किया गया है।

परपर्यायः प्रतीत्यसमुत्पाद आसूत्रितः। चित्तमात्रमिति। वस्तुतो न परविषयकं नापि स्वविषयकमिति मात्रपदस्वरसः। एतेन निरुक्तकैवल्यस्वस्थतयोरासूत्रणम्। तदाह न दृश्य इत्यादिना। द्विधेत्यस्य व्याख्यानं ग्राह्यग्राहकभावेनेति। दृश्यते इति। यत एव केवलं दृश्यते, न तु विचारेणाप्येवं व्यवस्थापयितुं शक्यते, अत एव शाश्वतोच्छेदवर्जितम्। न नित्यं नाप्यनित्यमित्यनिर्वाच्यम्, अतएव क्षणिकत्वाक्षणिकत्वाभ्यामनिर्वाच्यत्वं प्रागावेदितम्। एवञ्च मोक्षदशायां संविदनवस्थानं दृश्यत्वलिङ्गेनैव ज्ञानेऽपि शून्यत्वस्य साधनं च सूचितम्। न चात्मनो वेदान्त्यभिमतस्यादृश्यत्वेन तत्र मिथ्यात्वासिद्धिरिति वाच्यम्, अदृश्यस्य तस्याप्रामाणिकताया निष्प्रयोजनतायाश्च वक्ष्यमाणत्वात्।

प्रकटयति—कार्येति। चित्तमात्रमित्यत्र मात्रपदस्य सार्थक्यमुपपादयति—वस्तुत इति। ननु यदि चित्तं द्विधा प्रकाश्यते तर्ह्यस्त्येव तत्, यद्यत्प्रकाश्यते तत्तत् सदिति स्थितेरिति सर्वशून्यत्ववादभङ्गप्रसङ्ग इति चेत्तत्राह—यत एव केवलमिति। केवलशब्दव्यावर्त्यमाह—नत्विति। एतदुक्तं भवति, न प्रकाशमानत्वमात्रं सत्त्वं, येन चित्तस्य प्रकाशमानतया सद्भावो भवेत्, तथा सति मरुमरीचिकादेरपि सत्त्वापत्तेः, अपि तु अबाधितत्वेन तत्। न तु चित्तमपि तथेतिभावः। तस्यानिर्वचनीयत्वं द्योतयति—अतएवेति। एवञ्च नापसिद्धान्तोऽपीत्याह—एवञ्चेति। ननु दृश्यत्वं हि दृग्विषयत्वं तच्चात्मनि नास्ति, वेदान्त्यभिमतस्य तस्य दृग्रूपत्वेन स्वप्रकाशत्वेऽपि जड़त्वापत्तिभिया संविद्विषयत्वास्वीकारादिति कथं तत्र मिथ्यात्वसिद्धिरित्याशङ्कते—न चात्मन इति। सर्वस्यापि ज्ञानविषयत्वेन तदविषयस्यैवाप्रसिद्धेरित्याशयेन परिहरति—अदृश्यस्येति। विषयत्वमात्रस्यैव मिथ्यात्वप्रयोजकत्वमाह—विषयत्वमात्रमिति। शून्यत्व-

चित्तमात्रम्' यहाँ मात्रपद का स्वारस्य यह है कि वह ज्ञान वस्तुतः न तो परविषयक है और न स्वविषयक ही। इससे निरुक्त कैवल्यावस्था तथा स्वस्थता की भी सूचना दे दी गयी, अतएव न दृश्य इत्यादि कहा गया है। 'ग्राह्यग्राहकभावेन' यह 'द्विधा' की व्याख्या की गयी है। 'दृश्यते' का तात्पर्य है कि वह केवल दृष्टिपथ में ही आता है न कि विचार से भी तादृशाव्यवस्थित हो पाता है। अतएव वह शाश्वतोच्छेदवर्जित है अर्थात् न नित्य है और न अनित्य ही, किन्तु अनिर्वाच्य है। इसीलिए क्षणिकत्वाक्षणिकत्व विकल्प कर दोनों से अनिर्वाच्य कहा गया है। एवञ्च मोक्षदशा में ज्ञान का अनवस्थान तथा दृश्यत्वलिङ्ग से ही ज्ञान में भी शून्यत्व का साधन भी सूचित कर दिया गया है। यदि कहें कि वेदान्ती-अभिमत आत्मा के अदृश्य होने से वहाँ ( आत्मा में ) मिथ्यात्व सिद्ध न होगा, तो यह कथन उचित नहीं, क्योंकि आत्मा के अदृश्यत्व की अप्रामाणिकता तथा निष्प्रयोजनता वक्ष्यमाण है अर्थात् आत्मा को अदृश्य मानना अप्रामाणिक तथा निष्प्रयोजन

विषयत्वमात्रं च लिङ्गम् दृङ् निवेशे प्रयोजनाभावात्। एवञ्च सत्त्वेन प्रतीत्यर्हं न परमार्थसत् विषयत्वात्, बाधयोग्यत्वाच्च, नाप्यसत्, कालसम्बन्धात्, तुच्छस्य पक्षतावच्छेदकानालिङ्गितत्वान्न प्रथमे सिद्धसाधनम्, बाधयोग्यत्वस्य च नासिद्धिः, असत्त्वाभावसाध्येऽपि च न बाधासिद्धी, विषयो न सदसन् विरोधात्, निषेधश्चासत्ख्यात्युपनीतस्येति द्रष्टव्यम्, विषयस्तात्त्विकत्वेन सद-

मिति। शाश्वतपदं भावप्रधानमिति भावः। बाधयोग्यत्वाच्चेति। विषयत्वप्रतियोगित्व-कार्यत्वादिकं सम्बन्धमात्रमत्र योग्यतावच्छेदकमवश्यापेक्षप्रतीतिकमिति तस्यैव हेतुत्वं यद्यप्यौचित्याऽऽनीतम्, तथापि व्याप्यत्वे सति पक्षधर्मत्वं हि हेतुत्वं न बाधयोग्यतायामपि न सम्भवति। विषयत्वादिकं तु हेत्वन्तरं परं स्यादिति भावः। विरोधादिति। सत्त्वासत्त्व-

साधनमुपक्रमते—एवञ्चेति। ननु शशश्रृङ्गाद्यलीकस्यापि विज्ञानवादोक्तरीत्या सत्त्वेन प्रतीत्यर्हत्वेऽपि परमार्थसत्त्वाभावात्तत्र सिद्धसाधनमिति चेत्तत्राह—तुच्छ-स्येति। तुच्छस्य शशश्रृङ्गादेः सत्त्वेन प्रतीत्यर्हत्वाभावादित्यर्थः। न सिद्ध-साधनमिति। अत्रेदमवधेयम्। सत्त्वेन प्रतीत्यर्हत्वं हि सत्प्रतियोगिकतादात्म्यम्। तथा च तेन रूपेण परिणताविद्याया एव तन्निष्ठसत्तादात्म्यरूपेण परिणाम इति नियमानुसारेणालीकरूपेण विद्याया अपरिणममानत्वादलीके सत्प्रतियोगिक-तादात्म्यस्याप्यभावः। अतएव सदलीकमिति प्रतीतिर्नैव जायत इति वेदान्तिनः सङ्गिरन्ते।

यद्वा सत्त्वेन प्रतीत्यर्हत्वं सत्त्वेनापरोक्षप्रतीतिविषयत्वम्, अलीकस्य चातथात्वान्न सिद्धसाधनमित्यपि क्वचिदुट्टङ्कितम्।

शशश्रृङ्गादिस्थलेऽनन्वयनिश्चयाभावदशायां व्यधिकरणप्रकारकप्रत्यय-जनकत्वोपगमेऽपि सदसतोरूपरागासम्भवान्नालीकस्य प्रकृतपक्षतावच्छेदकाक्रान्त-त्वमिति न तार्किकनयेऽपि सिद्धसाधनम्।

विज्ञानवादिनये तु विकल्पवृतिविषयभूतस्यापि तुच्छस्य स्वविषयकज्ञाना-त्मकतया परमार्थसत्त्वान्न सिद्धसाधनम्।

नासिद्धिरिति। स्वरूपासिद्धिः, सा हि पक्षे हेत्वभावरूपा, प्रकृते च

है। विषयत्वमात्र ही लिङ्ग ( हेतु ) हो सकता है। उसमें दृक् का निवेश करना निष्प्रयोजन है। एवञ्च—सत्त्वेनप्रतीत्यर्हं न परमार्थसत् विषयत्वात् बाधयोग्यत्वाच्च नाप्यसत् कालसम्बन्धात् (सद्रूप से प्रतीयमान वस्तु परमार्थसत् नहीं है, विषय होने से, तथा बाध के योग्य होने से, तथा असत् भी नहीं है कालसम्बन्ध होने से)। यहाँ प्रथमा-नुमान में तुच्छ के पक्षतावच्छेदकानाक्रान्त होने से सिद्धसाधनदोष नहीं है, तथा बाध-योग्यत्व हेतु की स्वरूपासिद्धि भी नहीं हैं। असत्त्वाभावसाध्यपक्ष में भी न बाध ही है

**सद्भेदयोरभाववान् सदसद्भेदाभ्यां निरूपणानर्हत्वादिति शून्यत्वसिद्धिः। पूर्वेष्वपि साध्येषु परमार्थसत्त्वादिनाऽनिर्वाच्यत्वस्य यथासम्भवं हेतुता द्रष्टव्या। एतेन च कोटिचतुष्टयविनिर्मुक्तत्वमपि दर्शितम्, यथा च ज्ञेयांशे फलतो वेदान्तिनामप्यत्र सम्प्रतिपत्तिस्तथाऽनिर्वाच्यत्वनिरुक्तौ शारदायां दर्शितम्। अत्र च स्वरूपासिद्धिशङ्कानिरासाय शारदासमेतं खण्डनमेवाखिलमवलोकनीयम्। वस्तुतस्तु परमतनिरासमुखेनैव शून्यतासाधनौचित्यं न तु तत्र लिङ्गो-**

प्रकारेण प्रमाणेनाबोधितत्वादित्यर्थः। तेनासामानाधिकरण्यरूपविरोधस्य सत्त्वासत्त्वयोरेव वर्तमानत्वेऽपि न क्षतिः। सत्त्वासत्त्वयोर्विषयत्वावच्छेदेनावृत्तित्वे साध्ये तु सामानाधिकरण्याभावस्यापि हेतुता सम्भवत्येव। न च विषयस्य सदसदुभयात्मकता नैतावता निषिद्धा स्यात्। विषयत्वावच्छिन्नाधिकरणतानिरूपितनिरूपकतावच्छेदकोभयत्वानाश्रयत्वस्य साध्यत्वे तात्पर्यात्। यदि चात्र हेतुसिद्धिरेव साध्यसिद्धिः; तदा परस्परविरहरूपत्वरूपविरोधस्य हेतुताऽस्तु। परस्परत्वस्याननुगमेन त्वत्रानुमानद्वयेनैवाभीष्टसिद्धिः; सत्त्वमसत्त्वाधिकरणवृत्ति, असत्त्वाभावरूपत्वात्, असत्त्वं सत्त्वाधिकरणावृत्ति सत्त्वाभावरूपत्वादिति। अत्र सामान्यव्याप्तौ संयोगतदभावादौ व्यभिचारवारणाय तु व्याप्यवृत्तित्वमपि

बाधयोग्यत्वस्य पक्षे सत्त्वान्न सेति भावः। ननु निषेधस्य प्राप्तिपूर्वकत्वनियमात् पारमार्थिकस्य कस्यचिदभावे कथं तन्निषेध इति चेत्तत्राह—निषेधश्चेति। तथा च तदभावेऽपि असत्ख्यातेरेव तदुपस्थितिसम्भवादुपस्थितेरेव च तत्रापेक्षितत्वादिति भावः। एतेनेति। विषयधर्मिकानुमानेन शून्यत्वसाधनेनेत्यर्थः। फलतः = त्यगांशे। अत्रेति। पूर्वोक्तसाध्यसाधने। तथा = तत्प्रकारः। अत्रेदं बोध्यम्—ज्ञानातिरिक्तस्य ज्ञेयस्य सत्त्वावच्छिन्नप्रतियोगिताकासत्त्वावच्छिन्नप्रतियोगिताकसदसदुभयत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वादनिर्वाच्यत्वम्। तत्त्वञ्च तैर्निरुक्तकोटित्रयविनिर्मुक्तत्वमुररीकृतम्, चतुर्थकोटेरेवानिर्वाच्यत्वोपगमात्। सौगतैस्तु तस्यापि तात्त्विकत्वेन निर्वचनासम्भवात्तस्यापि परित्यागात् चतुष्कोटिविनिर्मुक्तत्वं तत्त्वमङ्गीकृतम्। ननु बाधयोग्यत्वमेवासिद्धमिति चेत्तत्राह—अत्र चेति। बाधयोग्यत्वेऽनिर्वाच्यत्वे च।

ननु शून्यतायाः सर्वासिद्ध्यैव सिद्धेरित्युक्तत्वात् किमिति तत्र हेतूपन्यास इति चेत्तत्राह—वस्तुतस्त्विति। अमन्दप्रयोजनक इति। महत्प्रयोजनक इत्यर्थः।

और न असिद्धि ही। इसी प्रकार—विषयो न सदसत् विरोधात् (विषयसद्असत् नहीं है, विरोध होने से) और निषेध तो असत्ख्याति से उपनीत का भी होता है। विषयस्तात्त्विकत्वेन सदसद्भेदयोरभाववान् सदसद्भेदाभ्यां निरूपणानर्हत्वात्' (विषय तात्त्विकत्वेन सत्प्रतियोगिक असत्प्रतियोगिक भेद के अभाव वाला है, सदसद्भेदों से निरूपणानर्ह होने से,) इत्यादि अनुमानों से शून्यत्व की सिद्धि होती है। पूर्वोक्त साध्यों में भी परमार्थसत्त्वादिनाऽनिर्वाच्यत्व यथासम्भव हेतु हो सकता है।

**पन्यासोऽप्यमन्दप्रयोजनक इत्युक्तप्रायम्। तावल्लोकायतं भवेदिति। अस्मद्दृष्ट्या तार्किकादयोऽपि लोकायतप्राया एव, स्थूलदर्शित्वसाम्यात्, लोके विस्तृतत्वाच्च, सूक्ष्मदर्शिनां हि विरलतैव स्यात्, प्रमाणविचारे निपुणा अपि तार्किका न प्रमेयविचारणाचणा इति निश्चप्रचमिदं विपश्चिदपश्चिमानाम्, नव्यन्यायतत्त्वं तु गौरवलाघवकार्यकारणभावप्रतिबध्यप्रतिबन्धकभावप्रकार-**

'प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः' इत्युक्तदिशा प्रत्यक्षेऽप्यर्थे हेतूपन्यासमभिलषतां तार्किकंमन्यानामृते तस्मात्तुष्टेरभावात्तदुपन्यासोऽपि किञ्चित्प्रयोजनकः। तावल्लोकायतं भवेदितीति। तद्धि न तावच्चार्वाकादीनामेवापि तु तार्किकादीनामपि, तस्यापि लोकायतप्रायत्वादित्याह—अस्मद्दृष्ट्येति। स्थूलदर्शित्वं तेषां स्फोरयति—प्रमाणविचार इति। प्रमेयविचारणाचणा इति। 'तेन वित्तश्चुञ्चुप्चणपौ' इति प्रसिद्धार्थे चणप्। प्रमेयविचारणा तेषां प्रमाणपोषकत्वेन प्रमाणद्वारेणैव, न तु स्वातन्त्र्येण, अतएव 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्युक्तम्। अतएवाकाशादीनामनुमानेनैव सिद्धिराहिता। अतएव 'प्रत्यक्षपरिकलितमपीति भणितिः। अतएव च 'पदवाक्यप्रमाणज्ञेनाचार्येणे'ति भाष्यकृतामुक्तिः प्रमाणपदेन न्यायशास्त्रमेवाभ्यधात्। 'व्याकरणमीमांसान्यायनिधित्वात्पदवाक्यप्रमाणज्ञत्वमिति भाष्यव्याख्यातारः। अपश्चिमानाम् विचारचतुराणाम्। गौरवलाघवेति। 'इदमस्माल्लघु' इदमस्माद्गुरु'रिति प्रतीतिसाक्षिकस्वरूपसम्बन्धविशेषौ लाघवगौरवे। स्वविषयकग्रहत्वव्यापकव्यापकते'त्यादिकं तु गौरवनिर्वचनमवच्छेदकत्वनिरुक्तिक्रोडपत्रेषु प्रसिद्धमितितत एवानुसन्धेयम्। गौरवञ्च त्रिविधमुपस्थितिकृतं शरीरकृतं सम्बन्धकृतञ्चेति।

इस विषय धर्मिक अनुमान से शून्यत्व के सिद्ध होने से शून्यत्व में चतुष्कोटि ( सत्त्व, असत्त्व, सत्त्वासत्त्व, अनुभय, ) विनिर्मुक्तत्व भी प्रदर्शित हो गया। फलतः ज्ञेयांश के अनिर्वाच्यत्व में वेदान्ती भी सहमत है, यह अनिर्वाच्यत्वनिरुक्तिखण्डनशारदा में प्रतिपादित है। पूर्वोक्त अनुमान में बाधयोग्यत्व तथा अनिर्वाच्यत्व में स्वरूपासिद्धिशङ्का निरास के लिए शारदा सहित समस्त खण्डन अवलोकनीय है। वस्तुतस्तु परमत निरास से ही शून्यता सिद्ध करना उचित है। तदर्थ लिङ्गोपन्यास अमन्दप्रयोजनक ( विशेष आवश्यक ) नहीं है, यह उक्तप्रायः है। तावल्लोकायतं भवेत् का तात्पर्य है कि हमारी ( शून्यवादो ) दृष्टि से तार्किकादि भी प्रायः लोकायत ही है क्यों कि लोकायत ( चार्वाक ) के साथ उनका स्थूल-दर्शित्व साम्य है, तथा उनके समान तार्किक भा लोक में विस्तृत है। सूक्ष्मदर्शी तो विरले हो होते हैं। विवेककुशलविद्वानों का यह सुविदित है कि तार्किक जन प्रमाण विचार में निपुण होने पर भी प्रमेय विचार में तादृश प्रसिद्ध नहीं हैं। नव्यन्याय तो गौरव लाघव, कार्यकारणभाव, प्रतिबध्यप्रतिबन्धक-

**मुद्रासंसर्गमुद्रानिवेशेष्वेव समाप्तम्। विशिष्य चाखण्डोपधिनिधिरेव कथमपि**

एवं लाघवमपि। एतच्च गौरवं साधनप्रतिकूलं प्रतिबन्धकञ्च प्रतियोगितावच्छेदकत्वादौ यथा तथा व्यक्तमवच्छेदकत्वनिरुक्तयादौ 'सम्भवति च लघौ धर्मे गुरौ तदभावादित्यादिना। अनुभवानुरोधेन तु क्वचिन्नव्यमतेन गौरवस्याप्रतिबन्धकत्वमप्युपगतं 'गौरवप्रतिसन्धानदशायामपीत्यादिना तत्रैव। एवं लाघवन्तु साधनानुकूलम्। कार्यकारणभावेति। यत्किञ्चिन्निष्ठकार्यतानिरूपितकारणत्वयत्किञ्चिन्निष्ठकारणतानिरूपितकार्यत्वैतदन्यतरात्मकोधर्मः, कार्यञ्च कारणञ्च तयोर्भाव इति व्युत्पत्तेः। स चानुमितिपरामर्शादीनां प्रसिद्ध एव तत्र तत्र। प्रतिबध्यप्रतिबन्धकभावेति। यत्किञ्चिन्निष्ठप्रतिबध्यतानिरुपितप्रतिबन्धकत्वयत्किञ्चिन्निष्ठप्रतिबन्धकतानिरुपितप्रतिबध्यत्वैतदन्यतरात्मकोधर्मः। स च पक्षतादौ–पर्वतत्वावच्छिन्नविशेष्यतानिरुपितसंयोगसम्बन्धावच्छिन्न वह्नित्वावच्छिन्न प्रकारताशाल्यनुमितित्वावच्छिन्नं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरुपितसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारताशालिनिर्णयः प्रतिबन्धक इत्यादिरूपेण समुट्टङ्कितः। यद्विषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्त्वं हेत्वाभासत्वमित्याद्यपि सामान्यनिरूक्त्यादौ। प्रकारमुद्रासंसर्गमुद्रेति। कस्यचित्प्रकारमुद्रया कस्यचित् संसर्गमुद्रयेत्यर्थः। यथा व्याप्तिविशिष्टं यत्पक्षधर्मताज्ञानमित्यत्र व्याप्तिविशिष्टमित्यस्य व्याप्तिप्रकारकमित्यर्थो दीधितिकृता कृतोऽनुमितिग्रन्थे। व्युत्पत्तिवादे च—'अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना च पदेनोपस्थापितस्यैव संसर्गमर्यादया भासते' इत्यादि। अखण्डोपाधिरिति। यथा तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽन्योन्याभाव इत्यादिभेदलक्षणस्यात्माश्रयाद्यनेकदूषणगणग्रस्तत्वेन निर्वचनासम्भवे, भेदत्वमखण्डोपाधिरित्यङ्गीकृतं तैः। तत्त्वञ्च निरवच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारताश्रयत्वम्। अस्य निधित्वञ्च पदार्थरक्षणे आधारभूतत्वम्। यद्यपि—

महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ।
मुकुन्दकुन्द नीलाश्च खर्वश्च निधयो नव॥

इत्युक्त्या निधेर्नवविधत्वमुदितम्, तथापि 'निधिः श्रुतीनां धनसम्पदामिव' ( माघः ) तदित्थमेतस्य निधेः कलानाम्' ( नैष० ) 'सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः' ( वि० स० ) प्रलयेऽस्मिन् सर्वं निधीयत इति निधिः' ( भा० ) इत्यादिप्रयोगेभ्य आधारभूतस्यापि निधित्वम्। यद्वा चिरनिर्खातभूमिस्थसुवर्णवच्चिरस्थिरत्वात् सम्पत्तिः। निर्वचने प्रवृत्तस्य तत्राशक्ततया स्वीयपदार्थरक्षणवासनयाऽभ्युपेयत्वात् कथमपीत्युक्तम्। तमपि हस्तयितुं नासौ शशाक इत्याह—

भाव, प्रकारमुद्रा, संसर्गमुद्रा आदि के निवेश करने में ही समाप्तप्राय है। कथमपि एक अखण्डोपाधिरूप निधि का विशेषरूपेण अर्जन नव्यों ने अवश्य किया है, किन्तु विधाताने

नव्यैर्जितः, परन्तु वेधसाऽप्यनिर्वचनीयतासेविसात्कृतः कर्मविपाके आजन्मदरिद्रतया परिक्लृप्तेषु तार्किकेषु तत्स्वामित्वमनुचितमितिमत्या । अथवा प्रमाणानामपि स्वभावतोऽनिर्वाच्यतैवेति तत्पोषणायैवैतेऽवतीर्णा इति नोपालम्भो युक्तः प्रमोदाधायिनि जने, एतावता प्रयत्नेन निर्वचनेऽपि तदुक्तरीतिभिरेव दोषाणां जागरूकत्वात् । अद्य यावच्च न कोऽपि निर्वक्तुं शशकेत्यग्रेऽपि कः शक्ष्यति, वस्तुस्वभावोल्लङ्घनस्याशक्यत्वात् । एतेनानिर्वचनीयवादिनमुद्दिश्य हेतुघटकीकार्यम् । अनिर्वचनीयतासेविसात्कृत इति । अखण्डोपाधितावादस्यानिर्वचनीयतावादपर्यवसायित्वमिति हृदयम् ।

परन्त्विति । नन्वखण्डोपाधित्वस्यानिर्वचनीयत्वपर्यवसायित्वे भवत्कार्यकारित्वमेव तेषामिति नाक्षेपार्हत्वमित्याह—अथवेति । प्रमोदाधायिनीति । तत्त्वञ्च तेषामनिर्वाच्यत्वपोषकत्वेन । अनिर्वाच्यत्वपोषकत्वं पुष्णाति—एतावतेति । तदुक्तरीतिभिरिति । लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति, तयोश्च चक्रकाद्यनेकविधदूषणगणग्रस्तत्वमित्युक्तमधस्तात् । वस्तुस्वभावोल्लङ्घनस्याशक्यत्वादिति । अनिर्वाच्यत्वं हि न वक्तृदोषवशाद्वस्तुनोऽपि तु वस्तुस्वाभाव्यादेव । तदुक्तं भगवतालङ्कावतारे—

बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निःस्वभावाश्च देशिताः ॥ इति ।
इदं वस्तुबलायातं यद्वदन्ति विपश्चितः ।
यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा ॥ इति च ।

अतएव—'मेयस्वभावानुगामिनीयमनिर्वचनीयते'त्युक्तं खण्डनकृद्भिः ।

एतेनेति । अनिर्वचनीयताया वस्तुस्वाभाव्येन । सोऽयं तत्त्वोपप्लववादी विचारसागरं लङ्घयित्वा सत्त्वेनासत्त्वेन वा प्रपञ्चस्य तत्त्वनिरुपणं कृतवतां

कर्मफल में आजन्म दरिद्रतया परिक्लृप्त तार्किकों में उसके स्वामित्व को अनुचित मान कर उस निधि को भी अनिर्वचनीयता में अन्तर्भूत कर दिया । ( तात्पर्य यह है कि अखण्डोपाधित्व का अनिर्वचनीयता में ही पर्यवसान होता है । अतः तत्साधन का श्रेय अनिर्वचनीयवादी को ही प्राप्त होता है, न कि तार्किक को । ) अथवा "प्रमाण भी स्वभावतः अनिर्वाच्य हो है" इस बात को पुष्ट करने के लिए ही तार्किक अवतीर्ण हुये हैं अतः प्रमोदाधायी ( प्रमोद जनक ) इन सज्जनों को उपालम्भ देना उचित नहीं हैं । एतादृश प्रयत्न के द्वारा निर्वचन करने पर भी तदुक्तरीति से ही दोष जगारूक (विद्यमान) है । आजतक जब निर्वचन में कोई भी समर्थ न हो सका, तो आगे भी कौन समर्थ हो सकेगा । क्योंकि वस्तु के स्वभाव का अतिक्रमण नहीं किया जा सकता । ( वस्तुतः स्वभावतः ही वस्तु अनिर्वचनीय है । ) इससे यह भो स्पष्ट है कि अनिर्वचनीयवादी को

तदीयनिर्वचनाशक्त्यभिप्रायेण 'सोऽयं पवनतनयवार्तामुपश्रुत्य तत्स्पर्धया बालवानरः कियदपि दूरमुत्प्लुत्य महार्णव एव पतितः प्राह, अपार एवायमकूपारो मिथ्या रामायण'मिति तार्किकैः स्वोपहास एव कृत इति द्रष्टव्यम्, भवान् निर्वचनानि भङ्क्तुमप्रभुरित्यन्योऽपि न प्रभविष्यतीत्यस्य वक्तुमनौचित्यादित्यलमतिप्रपञ्चेन ।

कालसम्बन्धित्वे सति सर्वदेशकालवृत्त्यभावप्रतियोगित्वादिवच्छून्यत्वस्य लक्षणान्तरमपि द्रष्टव्यम् । यदाहुर्माध्यमिककारिकासु—

यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे ।
सा प्रज्ञप्तिरुपादाय प्रतिपत्सैव मध्यमा ॥ इति ॥

प्रतियोगित्वादिवदिति । आदिनाऽऽदेयं चतुष्कोटिविनिर्मुक्तत्वम् । प्रतीत्येति । कारणानि प्राप्येत्यर्थः ।

विदुषां वचांसि श्रुत्वा स्वयमपि तत्त्वनिरुपणाय विचारे प्रवृत्तस्तत्करण एवाशक्तो विचारासहमेव विश्वतत्त्वोपप्लवकाष्ठेति वदन् समुद्रलङ्घनादिविषयहनुमत्पराक्रमवचनं श्रुत्वा स्वयमपि तत्कर्तुमुपक्रम्यासमर्थत्वात् महार्णव एव पतित्वा 'अपार एवायं सागरः, हनुमतस्तल्लङ्घनेन पारप्राप्त्यादिकथया रामायणं मिथ्येति वदता बालवानरेण तुल्य इत्याह—सोऽयमिति । स्वोपहास एवेति । तार्किकस्यापि निरुक्तदिशाऽनिर्वचनीयत्ववादित्वाविशेषात् ।

कालसम्बन्धित्वे सतीति । अलीकत्वव्यावृत्त्यर्थमिदम् । कालसम्बन्धित्वञ्च कालपरिच्छिन्नत्वम्, तच्च तुच्छेनास्ति, तस्य ध्वंसाप्रतियोगित्वात् । शून्यत्वस्य लक्षणान्तरमुपक्रमते—यदाहुरिति । यः प्रतीत्यसमुत्पाद इति । प्रतिपूर्वकगत्यर्थेणः क्त्वास्थानिकल्यबन्तस्य रूपम् प्रतीत्येति, समुत्पूर्वस्य घञन्तस्य गत्यर्थक-

लक्ष्य करके उन ( अनिर्वचनीयवादी ) के निर्वचन करने में असमर्थता के अभिप्राय से तार्किकों ने यह कहकर कि "एक वानर शिशु हनुमान के समुद्रलङ्घन की चर्चा सुन कर स्पर्धा से स्वयं भी कुछ दूर छलांग मार कर समुद्र में ही गिर गया, और कहा—यह समुद्र अपार ( लङ्घन के अयोग्य ) ही है, समुद्रलङ्घन प्रतिपादक रामायण मिथ्या है ।" स्वकीय उपहास ही किया है, अर्थात् उनका यह कथन स्वकीय उपहास मात्र ही है । क्योंकि आप ( तार्किक ) निर्वचननिराकरण में असमर्थ हैं, एतावता अन्य विद्वान् भी इस में समर्थ न होङ्गें" यह कथन सर्वथा अनुचित है ।

कालसम्बन्धित्वे सति सर्व देश कालवृत्यभावप्रतियोगित्वादि के समान शून्यत्व के लक्षणान्तर भी सम्भव है, जैसा कि माध्यमिक कारिका में कहा है—यः प्रतीत्य समुत्पादः·········· ।

पदेश्च समुत्पाद इति। कारणं प्राप्य समुत्पन्न इत्यर्थः। एवञ्चाङ्कुरविज्ञानादीनां हेतुप्रत्ययानपेक्ष्यैव प्रादुर्भावोऽतः स स्वभावेनानुत्पादः। यश्च स्वभावेनानुत्पादो भावानां सैव शून्यता। यथोक्तम्—

'यः प्रत्ययैर्जायति सह्यजातो
न तस्य उत्पादु सभावोऽस्ति।
यः प्रत्ययाधीनु स शून्य उक्तो
यः शून्यतां जानति सोऽप्रमत्तः॥ (अनवप्त० सू०) इति।

'स्वभावानुत्पत्तिं सन्धाय महामते सर्वधर्माः शून्या इति मया देशिता' इति च। सैवशून्यता कारणान्यादाय प्रज्ञप्तिरिति व्यवस्थाप्यते। यथा चक्रादीन्युपादायरथाङ्गानि रथ इति प्रज्ञाप्यते। प्रज्ञप्तिः स्वभाभेनानुत्पन्नत्वप्रतीतिः। सैव मध्यमासिद्धान्तः।

यद्यपि प्रतीत्यसमुत्पादशब्दघटकप्रतीत्येत्यत्र प्रत्येतेः प्राप्त्यर्थकत्वे सौगतनये सत्कार्यवादानभ्युपगमात् कार्यसत्तां विना प्राप्तिकर्तृत्वासम्भवेन समानकर्तृत्वाभावात् क्त्वाप्रत्ययो न सम्भवति। अतएव—

प्रत्येति पूर्वमुत्पादाद् यद्यसत्त्वान्न युज्यते।
सह चेत् क्त्वा न सिद्धोऽत्र पूर्वकालविधानतः॥ इत्युक्तम्।

कथञ्चित् प्राप्त्युपत्त्योः समानकालत्वेऽपूर्वकालिकत्वात्प्राप्तेः स एव दोषः। 'मुखं व्यादाय स्वपिति'इतिवत् समानकालसत्त्वेऽपि क्त्वाप्रत्ययो भविष्यतीत्यपि न, 'व्यादाय स्वपित्युपसंख्यानमपूर्वकालत्वादि'ति वार्तिकम् 'अवरकालः स्वप्नः'इत्यङ्गीकृत्य प्रत्याख्यातवता भाष्यकृता स्वप्नस्यावरकालिकत्वस्वीकारात्, कैयटेन च 'यद्यपि स्वप्नक्षणस्य व्यादानात् पूर्वकालता तथापि व्यादानानन्तरभाविस्वप्नक्रियाक्षणापेक्षं व्यादानस्य पूर्वकालत्वमस्तीति व्याख्यातत्वात्।

तथापि गृहस्थः सदृशीं भार्यामुपेयादितिवद् भाविनि पदार्थे वर्तमानत्वमारोप्य बौद्धं वा परिकल्प्य समानकर्तृत्वं बोध्यम्, क्रमोऽपि बौद्ध एव बोद्धव्यः। बोद्धार्थरीतिश्चेयं मञ्जूषादौ व्यक्तैव। शाब्दिकैरपि—'प्रकृतिप्रत्ययविभागस्तदर्थविभागश्च सर्वः कल्पित एवे'त्याद्यभाणि।

प्रतिपूर्वकादिण्धातोः क्विपि तुकि कृदन्तात्तस्मात् 'तत्र साधुरि'त्यनेन यति, इत्यादिप्रक्रियया निष्पन्नस्त्वभिधर्मकोषादावुक्तोऽपि प्रकृतानुपयोगान्नादृतः।

नन्वेवं तर्हि प्रतीत्यसमुत्पाद इत्यस्य कारणं प्राप्य उत्पाद इत्यर्थकत्वे कारणतासिद्धान्तएवापतितः। तथा च शून्यतासिद्धान्तो व्याकुप्येत इति चेत् कारणताकर्तनसिद्धान्त एवएष इति ब्रूमः। कार्यकरणादिसर्वस्यापि संवृतिरूपत्वात्। अतएवाह—'न चायमङ्कुरो न स्वयंकृतो नोभयकृतोनेश्वरनिर्मितो न

**प्रतीत्य समुत्पादः = स्वभावेनानुत्पादः, कारणसापेक्षत्वात्, उपादाय कारणानि प्रज्ञप्तिः = कारणापेक्षतयोत्पन्नत्वप्रतीतिः। मध्यमा प्रतिपदिति। यस्य हि स्वभावेनानुत्पत्तिस्तस्यास्तित्वाभावः, स्वभावेन चानुत्पन्नस्य विगमाभावान्नास्तित्वाभावः, अतो भावाभावान्तद्वयरहितत्वात्सर्वस्वभावानुत्पत्तिलक्षणा शून्यता मध्यमा प्रतिपत् = मध्यमामार्ग इति तद्व्याख्यातारः।**

**अत्र कालसम्बन्धित्वे सत्युत्पन्नस्वभावत्वाभावो लक्षणम्, अन्यथाऽलीकेऽतिव्याप्तेः, नित्येऽपि न सा, तस्यालीकताया उक्तत्वाद्वक्ष्यमाणत्वाच्च। ननु विशेष्यदलेन किं विवक्षितम्, न तावज्जन्यतावच्छेदकधर्मराहित्यम्, घटत्वा-**

प्रकृतिसम्भूतो नैककारणाधीनो नाप्यहेतुसमुत्पन्नः' इति। 'अस्मिन् सति इदं भवति, अस्योत्पादादिदमुत्पद्यते, यदुत अविद्याप्रत्ययाः संस्कारा'इति च। श्लोकार्थं विवृणोति—प्रतीत्यसमुत्पाद इति। ननु कीदृशं तल्लक्षणमेतेनाभिहितमित्यत आह—अत्रेति। निरुक्तपद्ये प्रज्ञप्तिपदं कारणापेक्षतयोत्पन्नत्वप्रतीतिपरम्। तत्रोत्पन्नत्वमुत्पत्तिमत्त्वम्, उत्पत्तिश्चाद्यक्षणसम्बन्ध इति तेन कालसम्बन्धित्वं व्यक्तीकृतम्। प्रतीत्यसमुत्पाद इति तु विशेष्यदलोपस्थापकम्। अन्यथेति। सत्यन्तस्यानुपादाने। नित्येऽपीति। साऽतिव्याप्तिः। मन्मते सर्वस्यापि शून्यत्वाङ्गीकारेण नित्यस्यालीकत्वाभ्युपगमात्। विशेष्यदलं परिष्कर्तुं शङ्कते—नन्विति। तत्र सम्भावितान् पक्षानाशङ्क्य निराचष्टे—नतावदिति। तादृशधर्मस्य जन्यतावच्छेदकधर्मस्य। अन्यादृशस्य जात्यात्मकस्य घटादौ सत्त्वात्

( जो प्रतीत्यसमुत्पाद है। उसे ही शून्यता कहते हैं वह शून्यता ही प्रज्ञप्ति एवं मध्यमासिद्धान्त है ) उसके व्याख्याता लोग यहाँ इस प्रकार व्याख्या करते हैं कि—प्रतीत्यसमुत्पाद अर्थात् जो कारण सापेक्ष होने से स्वभाव से उत्पन्न नहीं होता, उपादाय = कारण को लेकर, प्रज्ञप्ति अर्थात् कारणापेक्षतया उत्पन्नत्वप्रतीति, मध्यमा = शून्यता प्रतिपद् = सिद्धान्त है। भाव यह है कि जिसकी स्वभाव से उत्पत्ति नहीं होती, उसके अस्तित्व का अभाव है; स्वभाव से अनुत्पन्न का विनाश न होने से उसके नास्तित्व का भी अभाव है अतः भाव तथा अभाव इन दोनों अन्तों से रहित होने से सर्वस्वभावानुपपत्ति लक्षण शून्यता मध्यमाप्रतिपद् अर्थात् मध्यम मार्ग है।

यहाँ कालसम्बन्धित्वे सति उत्पन्नस्वभावत्वाभाव अर्थात् जो कालसम्बन्धी होते हुये अनुत्पन्नस्वभाव हो वह शून्य है इस प्रकार लक्षण उपस्थित होता है। इस लक्षण में कालसम्बन्धित्वे सति इस विशेषण के द्वारा अलीक में अतिव्याप्ति का वारण किया गया है। अतएव नित्य में भी अतिव्याप्ति नहीं है, क्योंकि नित्य पदार्थ अलीक है यह प्राक् प्रतिपादित है तथा वक्ष्यमाण भी। शंका—प्रकृतलक्षण में विशेष्यदल से क्या निवक्षित है। जन्यतावच्छेदकधर्मराहित्य कहना सम्भव नहीं; क्योंकि घटत्वादिरूप

**देस्तादृशधर्मस्यापोहात्मकस्यान्यादृशस्य वा घटादौ सद्भावात्। नापि निरपेक्षोत्पत्तिकत्वाभावः, प्रतियोग्यप्रसिद्धेः, सिद्धसाधनाच्च, अत एव न सापेक्षोत्पत्तिकत्वम्, नवोत्पत्तितादात्म्यानापन्नत्वम्, उत्पत्तेरपि कार्यत्वेन लक्ष्यतया तत्राव्याप्तेश्च, नापि यावत्सत्त्वमुत्पत्तिमत्त्वस्याभावः, मन्मते क्षणिकानभ्युपगमेन प्रतियोग्यप्रसिद्धेः, स्थिरत्वमादायार्थान्तराच्च, सिद्धसाधनाच्च, नाप्युत्पत्तिधर्मकत्वाभावः, उत्पादस्य भवताऽपि स्वीकारात्, अन्यथा प्रतीत्यसमुत्पादशब्दप्रयोगासङ्गतेरिति; मैवम्, पारमार्थिकत्वावच्छिन्नप्रतियोगिताककार्यत्वाभावस्य विवक्षितत्वात्, कार्यविशेषं प्रति कारणतयैव प्रायो नित्यस्य साधनेन**

तद्राहित्यस्य तत्राभावादव्याप्त्यापत्तेः। द्वितीयं निरस्यति—नापि निरपेक्षोत्पत्तिकत्वाभाव इति। तत्र हेतुः—प्रतियोग्यप्रसिद्धेरिति। न हि कस्याप्युत्पद्यमानस्य वस्तुन उत्पत्तिः कारणमन्तरा सम्भवति। सिद्धसाधनाच्चेति। ननु सिद्धसाधनस्य पक्षताविघटकतयाऽनुमानदूषणत्वात् प्रकृतेऽनुमानाभावात्कथं तदुद्भावनमिति चेन्मैवम्, सर्वं शून्यं सत्त्वादिनाऽनिर्वाच्यत्वादिति शून्यत्वसाधकानुमानदृष्ट्या तदभिधानात्। लक्षणस्येतरभेदानुमापकत्वेन तूक्तैवासिद्धिः प्रतियोग्यप्रसिद्धेरिति। तथा चाप्रसिद्धप्रतियोगिकाभावानङ्गीकाराद् हेतोरेवासिद्धेः कुतस्तस्य तदनुमापकत्वमितिभावः। एवमग्रेऽपि। अतएवेति। सिद्धसाधनादेव। नवोत्पत्तीति। उत्पत्तेरप्याद्यक्षणसम्बन्धात्मिकाया, जन्यतया कार्यत्वेन निरुक्तलक्षणलक्ष्यत्वात्। अर्थान्तराच्चेति। तत्त्वज्ञानभिप्रेतार्थसिद्धित्वम्। भवतापि शून्यवादिनापि। परिहरति—मैवमिति। विवक्षितत्वादिति। विशेष्यदलेनेत्यादिः। सर्वस्य प्रतीत्यसमुत्पन्नस्य पदार्थस्य निःस्वभावता पारमार्थिकं रूपम्,

जन्यतावच्छेदकधर्म अपोहात्मक हो या जातिरूप उभयथापि घट में विद्यमान हैं। निरपेक्षोत्पत्तिकत्वाभाव भी नहीं कह सकते, उसमें निरपेक्षोत्पत्तिकत्वरूप प्रतियोगी अप्रसिद्ध है और उसके अप्रसिद्ध होने से तदभाव के स्वतः सिद्ध होने से सिद्धसाधन दोष भी है। अतएव सापेक्षोत्पत्तिकत्व अथवा उत्पत्तितादात्म्यानापन्नत्व भी नहीं कह सकते, क्योंकि सिद्धसाधन है एवं उत्पत्ति भी कार्यतया लक्ष्य होने से उसमें अव्याप्ति भी है। यावत् सत्त्व उत्पत्तिमत्त्वाभाव भी सङ्गत नहीं, मेरे मत ( तार्किकादिमत ) में क्षणिक के न होने से यावत्सत्त्व रूप प्रतियोगी अप्रसिद्ध है। एवं इस लक्षण के द्वारा स्थिरत्वसिद्धि मानकर अर्थान्तरतापत्ति तथा सिद्धसाधन दोष भी है। उत्पत्तिधर्मकत्वाभाव कहना भी उचित नहीं, क्योंकि उत्पत्ति तो आप ( शून्यवादी ) भी मानते हैं; अन्यथा प्रतीत्यसमुत्पाद शब्द प्रयोग ही असङ्गत हो जायेगा।

समाधान—पारमार्थिकत्वावच्छिन्न प्रतियोगिताककार्यत्वाभाव लक्षण यहाँ विवक्षित है। कार्यविशेष के प्रति कारणरूप से ही प्रायः नित्य पदार्थ सिद्ध होता है,

**कार्यासिद्धौ न तत्सिद्धिसम्भवः, पारमार्थिकत्वञ्च मन्मतेऽप्रसिद्धमप्यसत्ख्यात्युप-**

न तत्सिद्धिसम्भव इति। तथा च न तत्रातिव्याप्तिरितिभावः। प्राय इत्यनेन साक्षितयाः सूचितसिद्धिकस्य नित्यचिन्मात्रस्य त्वग्रे निरसनीयतेति भावः।

यथा प्रतिभासं सांवृतस्य तदनुपपन्नत्वात्। तथाहि—न तावत् यथा परिदृश्यमान-रूपेण पारमार्थिकस्वभावो भावः, तस्योत्तरकालमनवस्थानात्। स्वभावस्य च सर्वदा अनागन्तुकतयाऽविचलितरूपत्वात्। यो हि यस्य स्वभावः, स कथं कदाचिदपि निवर्तेत? अन्यथा तस्य स्वभावताहानिप्रसङ्गान्निःस्वभावतैव स्यात्। नापि स उत्पद्यमानः पारमार्थिकस्वभावरूपेण कुतश्चिदागच्छति, निरुद्ध्यमानो वा क्वचित् विलयं गच्छति, अपितु हेतुप्रत्ययसामग्रीं प्रतीत्य मायावदुत्पद्यते, तद्वैकल्यतो निरुद्ध्यते च। हेतुप्रत्ययसामग्रीं प्रतीत्य जातस्य परायत्तलाभस्य प्रतिबिम्बस्येव कुतः पारमार्थिकस्वभावता। न च कस्यचित्पदार्थस्य परमार्थतो हेतुप्रत्ययसामग्रीतः समुत्पत्तिः सम्भवति, तस्या अपि अपरसामग्रीजनितात्मतया परायत्तलाभाया निःस्वभावत्वात्। एवमन्यस्याः पूर्वपूर्वायाः स्वस्वकारणसामग्री-जन्यतया निःस्वभावता द्रष्टव्या। अतएवोक्तम्—

मायया निर्मितं यच्च हेतुभिर्यच्च निर्मितम्।
आयाति तत्कुतः कुत्र याति चेति निरूप्यताम्॥
यदन्यसंनिधानेन दृष्टं न तदभावतः।
प्रतिबिम्बसमे तस्मिन् कृत्रिमे सत्यता कथम्॥ इति।

( बो० च० व०, ९.१४४-४५

तार्किकवन्मयापि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्याभ्युप-गन्तुं शक्यत्वात्। एवञ्चाविद्यकोत्पत्तिमत्त्वेऽपि न क्षतिः।

ननु नित्येष्वपि निरुक्तलक्षणसद्भावात्तत्रातिव्याप्तिरिति चेन्न, मन्मते नित्य-स्यैवासिद्धेरित्याह—कार्यविशेषमिति। घटत्वादिजातीनां परैः स्वरूपतः प्रत्यक्षेण सिद्धिस्वीकारेऽपि नित्यत्वे सत्यनेकसमवेतत्वरूपेण सिद्धिर्न युक्तिविशेषं विनेति भावः। ननु भवन्मते पारमार्थिकत्वस्याप्यप्रसिद्धत्वात्कथं तद्घटितं लक्षण-मुररीकृतमिति चेत्तत्राह—पारमार्थिकत्वञ्चेति।

ननु न पारमार्थिकत्वावच्छिन्नप्रतियोगिताककार्यत्वाभावः स्वीकर्तुं शक्यः, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावे प्रमाणाभावात्। अतएव 'प्रतियोग्य-वृत्तिश्च धर्मो न प्रतियोगितावच्छेदक' इति चिन्तामणिः। अतएव दीधिति-कारैः—'अभावप्रत्ययो हि घटत्वादिविशिष्टस्य घटादेः प्रतियोगित्वमवगाहमानो

अतः कार्य के सिद्ध न होने पर कारण की सिद्धि भी सम्भव नहीं। मेरे ( शून्यवादी ) मत में पारमार्थिकत्व के अप्रसिद्ध होने पर भी असत्ख्याति से उपनीत ( उपस्थित ) का

**नीतं भासिष्यत इत्यदोषः। कार्यत्वसामान्याभाव एव वा विवक्षणीयः, स्वाप्नभावाभावादिन्यायेनोक्तेन कार्यत्वेन सांवृतेन स्वीकृतेनापि विरोधाभावात्। प्रतीत्येति ल्यबन्तेन तु कारणसापेक्षतोक्तिः सांवृतत्वव्यक्तीकरणाय, उत्पत्तौ ज्ञप्तौ वा सापेक्षमात्रस्य सांवृतत्वात्। एवञ्च सांवृतोत्पत्तिकत्वमपि लक्षणान्तरं सम्भवति।**

विशेषणस्यापि घटत्वादेस्तदवच्छेदकत्वमवगाहते, न स्वातन्त्र्येण, घटो नास्तीत्येव प्रतीतेः। तदिहाभावप्रत्ययो यदि व्यधिकरणधर्मेणावच्छिन्नं प्रतियोगिनं नावगाहते, नावगाहत एव तदा तस्यापि प्रतियोगितावच्छेदकत्वमि'ति प्रत्यपादि। गदाधरभट्टाचार्यैश्चापि तत्रैव—'वैशिष्ट्यभाने एवावच्छेदकताया भानादवच्छेदकताया वैशिष्ट्यनियततया तद्बाधे तस्या अपि बाधादित्याभाषि। यद्यप्यग्रे 'यदि पुनरानुभाविको लोकानां स्वरसवाही घटत्वेन पटोनास्तीत्यादिप्रत्ययः, तदा तादृशाभाववारणं गीर्वाणगुरुणामप्यशक्यमि'तिग्रन्थेन तादृशाभावस्य मन्तव्यता सूचिता, तथापि नैकान्तिकः सिद्धान्तस्तदभ्युपगमस्तत्रैव 'यदि' तदा'शब्दाभ्यां तादृशानुभवस्य विवादास्पदत्वसूचनात्। अतएव 'यदि पुनरि'त्यादिशिरोमणिपङ्क्तिव्याख्यायां 'यदि तदेत्यनेन तादृशप्रतीतेरानुभविकत्वे विवादं प्रदर्श्य तादृशाभावस्यापारमार्थिकत्वं सूचितमिति गदाधरभट्टाचार्यैरुक्तमिति चेदत आह—कार्यत्वसामान्याभाव एवेति। न च तत्सत्त्वे कथं तदभावसिद्धिरितिवाच्यम्। तस्य स्वप्नवत्सांवृतत्वेन स्वप्नदृष्टान्तपाथसैव प्रक्षालनीयत्वादित्याह—स्वप्नेति। ननु कार्यत्वसामान्याभाव एव विवक्ष्यते यदि तर्हि प्रतीत्येतिल्यबन्तोक्तिर्व्याहन्येतेत्यत आह—प्रतीत्येतीति। वस्तुस्वभावो दृश्यमानो कारणसापेक्षो वस्तुतस्तु निःस्वभाव एवेति संवृतिविलास एव दृष्टिदर्शनदृश्यभूरिति। वस्तुतः शून्यतेव। अत एव विग्रहव्यावर्तन्याम्—

यश्च प्रतीत्यभावो भावानां शून्यतेति सा ह्युक्ता।
प्रतीत्य यश्च भावो भवति हि तस्याः स्वभावत्वम् ॥२२॥ इति

भान होता है अतः कोई दोष नहीं है। अथवा कार्यत्वसामान्याभाव हो विवक्षित है, पूर्वोक्त स्वाप्न भावाभावादि न्यायानुसार कार्य को सांवृत सत् मानने में भी विरोध नहीं है। प्रतीत्यसमुत्पाद में "प्रतीत्य" इस ल्यबन्त से कारणसापेक्षता का कथन साँवृतत्व को व्यक्त करने के लिए किया गया है, क्योंकि उत्पत्ति एवं ज्ञप्ति ( ज्ञान ) में सापेक्ष होना मात्र ही सांवृतत्व है। अत एव सांवृतोत्पत्तिकत्व भी लक्षणान्तर हो सकता है।

**अथ कथमेतदवधार्यमिति चेदत्र गीतं सौगतैः—**

**'अन्यत्प्रतीत्य यदि नाम परोऽभविष्य-**
**ज्जायेन तर्हि बहुलः शिखिनोऽन्धकारः।**
**सर्वस्य जन्म च भवेत्खलु सर्वतश्च**
**तुल्यं परत्वमखिले जनकेऽपि यस्मात् ॥' इति ॥**

**अयम्भावः—घटः स्वस्माद्वोत्पद्यते परस्माद्वा, आद्ये स्वस्य पूर्वं सत्त्वासत्त्वाभ्यां व्याघातः। द्वितीये तु परत्वस्य तन्त्वादिसाधारण्येन ततोऽपि घटोत्प-**

दृष्टिसृष्टिवादिनां नायं दुरूहः पन्थाः। अतएवान्यत्रापि—"प्रतित्य यद् यद् भवति न हि तावत् तदेव तत्" [ म०शा० १८।१० ] इति।

लक्षणान्तरमारभते—एवञ्चेति। एतदिति। उत्पत्तेः सांवृतत्वमित्यर्थः। अन्यत्प्रतीत्येति। स्वस्माद् भिन्नं कारणमुपेत्य यदि कार्यमुत्पद्येत, तर्हि परत्वाविशेषादग्नितोऽन्धकारः, सर्वस्माच्च सर्वमपि कार्यमुत्पद्येतेत्यर्थः। श्लोकार्थं विवृणोति—अयंभाव इति। व्याघात इति। उत्पत्तेरनुपपत्तिः। पूर्वं सत्त्वे स्वस्य प्रागेवोत्पन्नत्वात्, असत्वे चाविद्यमानत्वेन कारणाभावादेव। घटोत्पत्त्यापत्तिरिति। इदमत्राकूतम्—तात्विकी यद्युत्पत्तिः कार्यस्य स्यात्तर्हि सा स्वतो वा, परतो वा, स्वपरोभयतो वा, हेतुमन्तरैव वा? आद्ये स्वं स्वोत्पत्तिनिमित्तं निष्पन्नं वा स्यादनिष्पन्नं वा, नाद्यः तस्य स्वस्य निष्पन्नत्वे तदर्थव्यापारवैयर्थ्यापत्तेः। क्व पुनरस्य व्यापारोऽस्त्विवति तदनुपपत्तेश्च, उत्पाद्यस्य पुनरस्यानिष्पन्नस्यान्यस्य स्वभावस्याभावात्। एकस्य चास्य निरंशत्वात्। न च पश्चादुत्पाद्यमानस्यापरस्य तत्स्वभावता युक्ता, तन्निष्पत्तावनिष्पन्नस्य तत्स्वभावत्वाभावादिति न स्वात्मनो निष्पन्नात्कस्यचिदुत्पत्तिरस्ति। न चापि स्वत

यदि कहें कि आपने यह कैसे निश्चय कर लिया कि सभी सांवृतोत्पत्तिक है, तो सुनिये. यह सौगतों ने ही कहा है—

अन्यत्प्रतीत्ययदिनाम ............................इत्यादि।

यदि अपने से भिन्न कारण से वस्तु की उत्पत्ति मानी जाय तो अग्नि से भी अन्धकार की उत्पत्ति होनी चाहिए। तथा सभी पदार्थों से सभी पदार्थों की उत्पत्ति भी होनी चाहिए, क्योंकि सभी कारणों में परत्व समान है। [ भाव यह है कि घट स्वयं से उत्पन्न होता है या अन्य से, प्रथमपक्ष में स्व की पूर्व सत्ता असत्ता से व्याघात है अर्थात् स्व की उत्पत्ति के पूर्व स्व की सत्ता मानना विरुद्ध है और असत्ता मानना भी सम्भव नहीं, क्योंकि पूर्वसत्ता के विना कारण नहीं बन सकता, अतः स्वके प्रति कारण भी मानना, तथा स्वकी पूर्वसत्ता भी न मानना, परस्पर विरुद्ध है, ] अतः उभयथा व्याघात है। और यदि द्वितीयकल्प मानें तो परत्व के तन्त्वादिसाधारण होने से तन्त्वादि

**स्यापत्तिः। न च यत उत्पत्तिरनुभूयते तत एवोत्पद्यते; यत्तत्पदार्थस्यैव पृच्छ्यमानत्वात्। तत्किमन्धोऽसि ? हन्त यद्यहमन्धस्तदा भवतोऽन्धतमत्वमेवापद्यते,**

उत्पत्तिपक्षे प्राङ्निष्पन्नं स्वरूपमितरेतराश्रयदोषप्रसङ्गात् कस्यचित् सम्भवति। नापि द्वितीयः, स्वस्यानिष्पन्नस्वभावस्य गगनकुसुमकल्पस्याशेषसामर्थ्यशून्यस्य स्वनिष्पत्तौ हेतुत्वासम्भवाद्, अन्यथा शशविषाणस्यापि स्वस्वभावजनकत्वप्रसङ्गात्।

नापि परत उत्पत्तिपक्षः, आदित्यादपि तमसः, सर्वस्मादपि सर्वस्योत्पत्तिप्रसङ्गात्, जनकाजनकाभिमतयोर्विवक्षितकार्यापेक्षया परत्वाविशेषात्।

अत एव नापि तृतीयः, प्रत्येकपक्षोक्तसमुदितदोषप्रसङ्गात्। कार्यानुत्पत्तौ चोभयरूपस्य हेतोः परमार्थतोऽभावात्। उत्पत्तौ वा न किञ्चिज्जनयितव्यमस्तीति कुत्रोभयात्मकहेतोर्व्यापारः स्यात्।

नापि चतुर्थः। अहेतुकत्वे हि भावानां देशकालनियमाभावप्रसङ्गात्, नित्यं सत्त्वासत्त्वप्रसङ्गात्, उपेयार्थिनां प्रतिनियतोपायानुष्ठानाभावप्रसङ्गात्। प्रधानेश्वरादीनां कारणत्वे मानाभावाच्च। अतएव मध्यमकशास्त्रे—

न स्वतो नापिपरतो न द्वाभ्यां नाप्यहेतुतः।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन॥

( म. शा. १.३ ) इत्युक्तम्

नन्वास्तां युक्तिसंग्रहाग्रहः, अनुभवेऽपि दीयतां दृष्टिः। अनुभूयते हि घटादिकं समवाय्यसमवायिदण्डादिघटितसामग्रीत उत्पद्यमानमिति न्यायविदो वदन्ति। कापिला अपि यत्र कार्यस्य तादात्म्येन स्थितिस्तस्मादेव तथेति, तत्सामान्यात् सर्वत्रैव यस्मात् कारणविशेषाद् यस्योत्पत्तिर्दृश्यते तत्तस्य कारणमिति निश्चीयतामिति शङ्कामपनुदति—न चेति। यत्तत्पदार्थस्यैवेति। यत्तत्पदं हि बुद्धिस्थत्वावच्छिन्ने शक्तम्। बुद्धिस्थश्च प्रकृतमेव, तच्च नियामकविशेषनियन्त्रितोपस्थितिकम्, न चात्र प्रकृतमनतिप्रसक्तं किञ्चिदस्ति, यत्तच्छब्देन परामृश्येत। समवायसत्कार्यवादयोर्निरासात्, कारणत्वस्यानुपदं निरसिष्यमाणत्वादिति भावः।

व्यवहारपथा गच्छन्नपि लोचनवैकल्यमाकलयसीत्याह–तत्किमन्धोऽसीति। अन्तर्दृष्टिवैधुर्यस्येति। दृष्टिर्दर्शनम्, दृश्यतेऽनयेति वा भावे करणे वा क्तिनि

से घटोत्पत्ति होनी चाहिए। यदि कहा जाय कि—जिससे जिसकी उत्पत्ति अनुभव सिद्ध है उससे ही उसकी उत्पत्ति होती है अन्य से नहीं, तो यह कथन समुचित नहीं, क्योंकि उसी यत्तत् पदार्थ के विषय में ही पूछा जा रहा है कि वह कौन है। तो क्या तुम ( शून्यवादी ) अन्धे हो, ? खेद है कि यदि मैं ( शन्यवादी ) अन्धा हूँ तो आप (तार्किक

**बाह्यदृष्टिवैधुर्यापेक्षयाऽन्तर्दृष्टिवैधुर्यस्याधिकदोषत्वात्। तथाहि—यस्य यत्कारणं ततस्तदुत्पद्यत इति भवतोऽभिप्रायः; यदा च कार्यकारणभाव एवाक्षिप्यते तदा स कथं सिद्धवदुद्देश्यकोटौ निवेशयितुं शक्यते। न च यद्यन्निरूपितकारणतया लोकसिद्धमित्युद्देश्याशयः; तस्य सांवृतसाधारण्यात्। प्रमितत्वान्तर्भावे च कारणत्वस्यैव निरूपणीयत्वात्, अन्यथा कथं तदीयं प्रमात्वमवधारणीम्। तत्र नैयत्यादिघटितलक्षणानां चतुर्थे दुर्निरूपताया उक्तत्वेन नव्यतार्किकैरपि च**

निष्पन्नस्य दृष्टिशब्दस्योभयत्र प्रयोगः। दृष्टिर्ज्ञानेऽक्ष्णि "दर्शने" इत्यमरः। आन्तरदृष्टिवैधुर्ये बाह्यदृष्टेरकिञ्चित्करत्वात्, बाह्यदृष्टिविरहिणोऽप्यान्तरदृष्टिसम्पन्नस्य बहुलं व्यवहारदर्शनात्, आन्तरदृष्टिभावाभावानुविधानात् व्यवहारभावाभावयोः। यस्य यत्कारणमिति। यं कार्यकारणभावमाश्रित्योत्पत्तिः साध्यते, स च पारमार्थिको वा प्रमिततया लोकसिद्धो वा लोकसिद्धमात्रं वाऽभ्युपेयते ? तत्राद्यं निराकरोति—यदा चेति। आक्षिप्यते पारमार्थिकत्वेन निराक्रियते। तृतीयकल्पमेव सूचीकटाहन्यायेनोत्थाप्य समाधत्ते—न च यद्यन्निरूपितकारणतयेति। कार्यकारणभावस्य सांवृतत्वेन तदाश्रित्य सिद्धाया उत्पत्तेरपि तथात्वात्। द्वितीयं दूषयति—प्रमितत्वान्तर्भावे चेति। कारणत्वस्य याथार्थ्य एव तदीयज्ञानस्य प्रमात्वसम्भवादित्याह—अन्यथेति। कारणत्वनिरुपणमन्तरेत्यर्थः।

ननु निरूक्तमेव कारणत्वं तत्र तत्रानन्यथासिद्धनियतपूर्ववर्तित्वमिति लक्षणादिनेति चेत्तत्राह—तत्र च नैयत्यादीति। दुर्निरूपताया उक्तत्वेनेति। तत्र हि—कार्याव्यवहितेत्याद्यर्थकनियतपूर्वभावित्वं तदित्यत्र नियतत्वं व्यापकत्वं यदि तदाऽन्यथासिद्धे गगनादावपि गतत्वात्तस्य सर्वकार्यहेतुत्वप्रसङ्गात्। अवयव-

आदि ) अन्यतम माने जायेंगे; क्योंकि बाह्यदृष्टिराहित्य की अपेक्षा अन्तर्दृष्टिराहित्य अधिक दोष माना जाता है। कैसे ? तो सुनिये, जिसका जो कारण है उससे उसकी उत्पत्ति होती है यह आप ( तार्किक ) का अभिप्राय है। किन्तु जब हम कार्यकारणभाव पर ही आक्षेप कर रहे हैं तब उसे सिद्ध मानकर उद्देश्य कोटि में प्रविष्ट कैसे कर सकते हैं। यदि कहें कि जो यन्निरूपितकारणतया लोकसिद्ध होता है वह उद्देश्य बन सकता है, तो वह सांवृत साधारण है [ अर्थात् संवृति से भी तादृश कारणतया व्यवहार हो सकता है। तदर्थ पारमार्थिकसत्ता आवश्यक नहीं है ]। यदि उस लोकप्रसिद्धि में प्रमितित्व का अन्तर्भाव कर अर्थात् उसे प्रमित मानकर उद्देश्य बनावें तो कारणता का निरुपण करना होगा। अन्यथा तज्ज्ञान में प्रमात्व का अवधारण कैसे होगा। किन्तु कारणता का निरुपण सम्भव नहीं, क्योंकि नैयत्यादि घटितकारणलक्षण को खण्डनखण्डखाद्य चतुर्थ

**तस्याः स्वीकृतत्वेन स्वरूपसम्बन्धविशेषरूपतायाश्चाननुगमापादकत्वेन स्वं न स्वीयमित्यनुभवबाधितत्वेन चासम्भवेन पदार्थान्तरत्ववाचोयुक्तेश्च लक्षणा-**

रूपादेरवयवितद्रसादिषु तत्त्वप्रसङ्गाच्च। पञ्चविधान्यथासिद्धिशून्यत्वनिवेशेन तद्व्यावृत्तिरिति चेत्तस्याः कारणमादायैवान्वयव्यतिरेकशालित्वादिघटितयाऽऽत्माश्रयापत्तेः। तत्र पृथगन्वयव्यतिरेकशालित्वादिरूपकारणत्वप्रवेशेऽपि घटादेर्द्रव्यत्वादिरूपेण कारणत्वप्रसङ्गात्। क्वचिल्लघोरपि अपरत्र गुरुत्वेन लघुत्वगुरुत्वयोरप्यननुगमात्तयोरपि दुर्निरुपत्वात्, तद्घटितान्यथासिद्धिविरहवत्त्वनिवेशोऽप्यनादरणीयः। यदि चान्ततो गत्वा यद्यत्धर्मावच्छिन्ने यद्धर्मावच्छिन्नस्य कारणत्वव्यवहाराभावस्तत्तद्धर्मावच्छिन्नभेदकूटस्य तद्धर्मावच्छिन्नकारणत्वगर्भे प्रवेश आद्रियते तदाऽसर्वज्ञाज्ञेयत्वप्रसङ्गः। नियतत्वस्यापि निवेशेऽनियतान्यथासिद्धानां तेनैव वारणेऽपि समानमिदम्। नियतत्वस्याप्यननुगमात्, व्यापकत्वरूपस्य व्याप्यत्वरूपस्य वा पर्याप्त्यादिघटितत्वेन स्मृत्यन्यत्वखण्डनदिशा दुर्निरूपत्वाच्च। न परं परपथैव पराकृततया दुर्निरूपता तेषामपि तु न्यायनयानुमोदिताऽपीत्याह—नव्यतार्किकैरपीति। तस्याः = तादृशलक्षणानां दुर्निरूपतायाः। अत एव तादृशं तन्नव्यानामपि शिरोमण्यादीनामरुचिकरम्। अत एव मथुरानाथशिष्यो रघुदेवन्यायालङ्कारः कारणत्वस्यातिरिक्तपदार्थत्वस्वीकुर्वतो दीधितिकारस्य तद्व्याख्याने तादृशकारणत्वलक्षणपरासनमकार्षीत्। अत एव च "स्वर्गकामो यजेतेत्यादि दीधिति ग्रन्थव्याख्यानावसरे गदाधरभट्टाचार्यः "स्वरूपसम्बन्धविशेष एव कारणत्वं न त्वनन्यथासिद्ध नियतपूर्ववर्तित्वम्, अन्यथासिद्धयभावकूटस्य दुर्ज्ञेयत्वादिति कण्ठरवेणैवाभाषि परामर्शगादाधर्याम्!

नन्वस्तु तर्हि स्वरूपसम्बन्धविशेष एव तत्। एवञ्च निरुक्तभट्टोक्तिरप्यनुगता भवतीत्यत आह—स्वरूपसम्बन्धविशेषेति। एतदुक्तं भवति। नापि स्वरूपसम्बन्धविशेषः कारणत्वं तस्य भूरिशो निरस्तत्वात्, स्वरूपमात्रप्रतीतावपि कारणत्वाकारणत्वसंदेहदर्शनात्, व्यञ्जकग्रहापेक्षणे दत्तोत्तरत्वात्, अननुगतत्वेन प्रवृत्त्याद्यनौपयिकत्वप्रसङ्गाच्च। स्वं न स्वीयमित्यनुभवविरोधादपि न स्वभावसम्बन्धः सम्बन्धिनश्चाधारत्वात् सम्बन्धस्याधेयत्वात् तस्यैव तदाधारत्वानुपपत्तेः, नहि सुशिक्षितोऽपि नटवटुः स्वस्कन्धमारुह्य नृत्यतीति बहुल प्रसिद्धेः।

परिच्छेद में दुर्निरूप बताया है, जिसे नव्यनैयायिकों ने भी स्वीकार किया है। स्वरूपसम्बन्धविशेषरूप कारणता मानने पर अननुगम दोष होता है तथा स्वं न स्वीयम् इस अनुभव से बाधित भी है। कारणता को पदार्थान्तर कहना भी सम्भव नहीं, क्योंकि

भिधानविकलायाः कार्याक्षमत्वेन प्रतीतिविशेषसाक्षिकतया निरूपणस्य च प्रतीतौ विशेषस्यैव बुभुत्स्यमानतयाऽन्योन्याश्रयप्रसञ्जकत्वेन विशेषसत्त्व-समर्थनमन्तरेण प्रतीतेः प्रमात्वेनानिर्णीतायाः कूटसाक्षित्वेन चानिर्वचनीयता-

एतेन रूपभेदमादाय समाधानमपि स्थगितं बोध्यम्, सम्बन्धत्वमादायैव रूपभेदस्य वक्तव्यत्वात् तस्य चात्र सम्बन्धत्वसिद्धिं विनाऽसिद्धेः।

नन्वस्तु कारणत्वं पदार्थान्तरम्, एतदेव च शिरोमणेरपि भणितिः। तच्च कार्यतावच्छेदकभेदात्कारणतावच्छेदकभेदाच्च भिद्यते, कारणत्वत्वेना-खण्डोपाधिनाऽनुगतञ्च कारणपदशक्यतावच्छेदकमिति चेत्तत्राह—पदार्थान्तर-त्वेति। अतिरिक्तमपि भवद् यदि न स्वलक्षणलक्ष्यं तदा कथं तत्र तत्रानति-प्रसञ्जककारणत्वव्यवहारः। तल्लक्षणस्य च नियतपूर्ववर्तित्वादेः कथने कथितदोषा-पत्तेः। ऋते च तस्मात्तद्विपर्ययसंशयादेरनुच्छेद्यत्वापत्तेः। पदार्थान्तरत्वे च तस्य सप्तपदार्थीनियमसाधकयुक्तिविरोधापत्तेश्च।

किञ्च दण्डो 'घटकारणमित्यादि' शाब्दबोधे कारणत्वस्य स्वरूपतो भानेन कारणत्वत्वेनानुगमाभिधानस्याकिञ्चित्करत्वेन प्रतिव्यक्तिसमयग्रहानुपपत्तिः, प्रवृत्त्यनुपयोगश्च, स्वरूपसतोऽनुगमकस्य समयग्रहाद्यनुपयोगात्, अन्यथा तद्-भ्रमाद्यनुपपत्तेः, अखण्डोपाधित्वेनान्योन्याश्रयपराघातश्चेति द्रष्टव्यम्।

ननु मा भूत्तल्लक्षणम्, बोभूयते हि प्रतीतिः, कारणं कारणं, दण्डो घटकारणमित्यादिः सार्वजनीनाऽनपलपनीया च। ततश्च तयैव तन्निरूपयिष्यत इति चेत्तत्राह—प्रतीतिविशेषसाक्षिकतयेति। सत्यं प्रतीतिर्जयिते, तथापि सामान्यतस्तस्या अतिप्रसञ्जकत्वात्, विशेषबुभुत्सायाञ्च प्रतीतिगतविशेषस्य विषयविशेषस्य च परस्परापेक्षणादन्योन्याश्रयप्रसञ्जकत्वम्। नापि तस्याः प्रमात्वं विशेषसमर्थनमन्तरेति तस्याः कूटसाक्षित्वेऽनिर्वचनीयता चरणचुम्ब-नार्थं तत्सद्मन्येव प्रवेशः।

लक्षणाभिधान के बिना कार्याक्षम होने से उसे मानना व्यर्थ है। "कारणमिदम्" इत्यादि प्रतीतिविशेषसाक्षिकतया यदि कारणता का निरूपण करें तो उक्त प्रतीतिगत विशेष की जिज्ञासा ( प्रतीतिगत विशेष क्या है ) होने से अन्योन्याश्रय दोष आपतित है। [ क्योंकि विषय ( कारण ) गतविशेषताज्ञान प्रतीतिगत विशेषताज्ञान के अधीन है तथा प्रतीति-गतविशेषता ज्ञान विषय ( कारण ) गतविशेषताज्ञान के अधीन है। ] दूसरी बात यह है कि जब तक विशेष की सत्ता का समर्थन न किया जाय, तब तक प्रतीति में प्रमात्व के अनिर्णीत होने से वह प्रतीति कूटसाक्षिणी ( मिथ्याविषयिणी ) ही होगी, ऐसी स्थिति में तात्त्विक कारणता का निश्चय नहीं हो सकता, अतः अनिर्वचनीयताचरण चुम्बन के अतिरिक्त अर्थात् उसे अनिर्वचनीय माने विना अन्य कोई गति नहीं है।

**चरणचुम्बनातिरिक्तगतेरभावात्। अधिकं तु चतुर्थे सम्बन्धखण्डने कारणताखण्डने च शारदायां दर्शनीयम्। चेतनमनपेक्ष्यैव प्रतिक्षणं तत्तत्कुर्वद्रूपत्वविशिष्टकारणकूटाधीनोत्पत्तिस्वभावत्वं प्रतीत्यसमुत्पाद इति तु 'इदं प्रत्ययफल' मिति बुद्धोक्तेरुत्थितं सौत्रान्तिकप्रस्थानीयं न तु शून्यताप्रस्थानीयमित्युक्तमविसंवादित्वखण्डनशारदायाम्।**

**अथैवं सर्वशून्यत्वे आत्महानमेव मोक्षः स्यात्, पुरुषार्थत्वाभावत्तु तन्न सङ्गच्छत इति चेन्न, दुःखं तावत्सर्वोऽपि जिहासति येन केनचिदुपायेन, अत-**

ननु प्रतीत्यसमुत्पादस्य स्वभावेनानुत्पादार्थकत्वे "चेतनमनपेक्ष्यैव प्रतिक्षणं तत्तत्कुर्वद्रुपत्वविशिष्टकारणकूटाधीनोत्पत्तिस्वभावत्वं प्रतीत्यसमुत्पाद इत्युक्तिविरोध इति चेत्त्राह—चेतनमनपेक्ष्यैवेति। सौत्रान्तिकप्रस्थानीयमिदं लक्षणमिति तस्य प्रस्थानान्तरत्वान्नोक्तविरोधः। इदं प्रत्ययफलम्" इति प्रत्ययोपनिबन्धस्य संग्राहकं बुद्धोक्तं सूत्रम्। तत्र सूत्रस्थेदंपदेन कार्यजातस्य परामर्शः। प्रत्ययः कारणसमवायः। तथाचेदं कार्यजातं कारणसमवायमात्रफलकम्, न स्वोत्पत्तौ चेतनं कंचिदपेक्षत इत्यर्थः।

किन्तर्हि सर्वं शून्यमेव ? ओमिति चेत्, महदिदमनिष्टमापतितम्, आत्मनोऽपि शून्यत्वप्रसङ्गः सर्वान्तःपातित्वात्। नेदमनिष्टमपित्विष्टमेव, तस्य शून्यतयैव हानसम्भवात्। आत्महानमेव चास्मन्मते मोक्षपदार्थ इति चेदङ्ग ? वद कथमेवं तस्य पुरुषार्थत्वम् ? तस्य सुखाद्यात्मत्वाभावादित्याशयेनाशङ्कते—अथैवमिति। व्याक्रियैव पराक्रियेति न्यायेन सर्वेषां प्रतिकूलत्वप्रकारकप्रतीतिविषयत्वात्मकस्य दुःखस्य हातुमिष्टत्वं सर्वलोकप्रसिद्धमित्याशयेन परिहरति—दुःखमिति। सत्यं, नात्महानस्य सुखरुपता, तथापि तु न सुखमात्रमेव पुरुषार्थः, दुःखनिवृत्तेरपि तथात्वदर्शनात्, पुरुषेणार्थ्यमानस्यैव पुरुषार्थत्वात्। तस्य चात्मनाश एव दृढोपाय इत्याह—अतएवेति। दुःखस्य हातुमिष्टत्वादेव।

इस विषय में अधिक जिज्ञासा होने पर चतुर्थपरिच्छेद सम्बन्धखण्डन तथा कारणताखण्डन शारदा द्रष्टव्य है। "चेतन निरपेक्ष प्रतिक्षण तत्तत्कुर्वद्रूपत्वविशिष्टकारण कूटाधीनोत्पत्तिस्वभावत्व ( तत्तत् कार्य करने में निरन्तर क्रियाशील कारणसमुदाय के अधीन उत्पत्तिस्वभाव होना ) प्रतीत्यसमुत्पाद है" यह कथन तो "इदं प्रत्ययफलम्" इस बुद्धोक्ति से लब्ध सौत्रान्तिक प्रस्थान का है, न कि शून्यताप्रस्थान का, यह अविसंवादित्वखण्डन शारदा में व्यक्त किया है।

शङ्का—सर्वशून्यत्व पक्ष में आत्महान ही मोक्ष मानना होगा, किन्तु आत्महान के पुरूषार्थ न होने से उसे मोक्ष मानना सम्भव नहीं है।

एवाप्रतिसमाधेयव्याधिभिर्देहात्माभिमानिभिर्जलादिप्रवेशेन प्राणत्यागोऽर्थ्यते, परन्तु जन्मान्तरेऽपि क्लेशोपनिपातावश्यम्भावेन प्राणत्यागो नात्यन्तिक उपायोऽपि त्वात्मनाश एव, यदाह—

सत्यात्मनि परसञ्ज्ञा स्वपरविभागात्परिग्रहद्वेषौ ।
अनयोः सम्प्रतिबद्धाः सर्वे दोषाः प्रजायन्ते ॥ इति ॥

अप्रतिसमाधेयेति । तद्भणितं भामतिपतिना "ब्राह्मणो यजेत" इत्यादीनि शास्त्राण्यात्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते" इति भाष्यव्यख्यानावसरेऽवस्थाध्यासमुदाहरता—"अप्रतिसमाधेयव्याधीनां जलादि-प्रवेशेन प्राणत्यागः" इति ।

नन्वस्तु तर्हि प्राणत्यागस्यैव तदुपायत्वं किमित्यात्महानमुपेयत इति चेत्तत्राह—परन्तु जन्मान्तर इति ।

नन्वात्मसद्भावेऽपि तद्भावनयाऽहंकारपरिक्षयाद् भविष्यति दुःखनिवृत्तिः, दुःखस्याहङ्कारहेतुकत्वात् । तत् किमात्मा यत्नेन निषिध्यत इति चेत्तत्राह—सत्यात्मनीति । आत्मनि सति स्वस्मिन् स्वत्वबुद्धिः परत्र च परसंज्ञा = परत्व-बुद्धिरुत्पद्यते । तादृशाच्च स्वत्वपरत्वाद्यात्मकविभागात् परिग्रहद्वेषौ = राग-द्वेषावुपजायेते । एताभ्याञ्च सम्बद्धाः क्लेशाद्याः सर्वेऽपि दोषाः समुपजायन्त इत्यर्थः ।

एतदुक्तं भवति । सत्यम्, अहंकारपरिक्षयात् तद्धेतुकदुःखोपशम इष्यते, स एव त्वनुपपन्नः सति चात्मदर्शनै कथमसौ निवर्तेत ? कारणेऽविकलसामर्थ्ये कार्यस्य निवृत्ययोगात् । ततो दुःखमपि न निवर्तते । तथाहि—आत्मानं पश्यतः संस्कृतेषु स्कन्धधात्वायतनेषु अहमिति दृढतरमुत्पद्यते स्नेहः । ततस्तद्दुःख-प्रतीकारेच्छया सुखाभिलाषो दोषान् प्रच्छाद्य तदर्थितया गुणाध्यारोपात् तत्साधनेषु प्रवर्तते । स्वोपकारिणि वयमिति बुद्धिरूपजायते । अहं ममेति च दर्शनात् परिपन्थिनि विद्वेषः । ततः समस्तदुःखनिदानं सर्व एव क्लेशोपक्लेशाः

समाधान—जिस किसी उपाय से दुःख सभी लोगों को हातुमिष्ट है । अतएव अप्रतिसमाधेयव्याधि—ओषधी आदि सभो उपायों से अचिकित्स्यरोगी देहात्माभिमानी प्राणी जलादि प्रवेश के द्वारा प्राणत्याग की भी कामना करता है । किन्तु वह प्राण-त्याग भी दुःखहान का आत्यन्तिक उपाय नहीं है, क्योंकि तादृशप्राणत्याग से जन्मान्तर में क्लेशोपनिपात ( क्लेश होना ) अवश्यं भावी है । अतः आत्मनाश ही दुःखहान का तादृश उपाय हैं । जो कि कहा है—सत्यात्मनि परसंज्ञा..........।

( आत्मा के रहने पर ही परसंज्ञा = अर्थात् परत्वबुद्धि होती है और स्वपर विभाग के द्वारा परिग्रह द्वेष होते हैं । तथा इन परिग्रह द्वेष के होने पर इनसे सम्बन्द्ध

दोषाणां क्लेशमूलत्वं तु सुविदितमेव। एवञ्च दुःखोपद्रुतात्मसद्भावापेक्षयाऽऽत्मनाश एव श्रेयानिति कथं न पुरुषार्थः। तार्किकैरपि सुखविरहेऽपि दुःखहानेः पुरुषार्थत्वं समर्थ्यत एव, परन्तु प्रागभावासहवृत्तेर्युगपदशेषविशेषगुणनिवृत्तेर्धर्मिनिवृत्तिनान्तरीयकत्वदर्शनेन तेषामप्यात्महानमापद्यत इति लब्धप्रसराः प्रवर्तन्ते, इत्यात्मदर्शनप्रवर्तितो दुःखहेतुरहंकारः। तस्मादात्मनि सति अहंकारस्य निवर्तयितुमशक्यत्वाद् वरं नैरात्म्यवाद एव। अतएवाहङ्कारविशिष्टस्यात्मनो दुःखोपप्लुतत्वमपीत्यभिप्रेत्याह—एवञ्च दुःखोपद्रुतात्मसद्भावापेक्षयेति। पुरुषार्थत्वं समर्थ्यत एवेति। अत एव किरणावल्यामुदयनाचार्यः—"तस्मादनिष्टनिवृत्तिरात्यन्तिकी निःश्रेयसमि" ति दुःखाभावस्य मोक्षत्वं प्रदर्श्य "नन्वपुरुषार्थोऽयं सुखस्यापि हानेरिति चेन्न बहुतरदुःखानुविद्धतया सुखस्यापि प्रेक्षावद्धेयत्वात्, मधुविषसम्पृक्तान्नभोजनजन्यसुखवदित्युपपादयामास। तत्र तुल्यायव्ययत्वाद् दुःखाभावोऽपि न पुरुषार्थः इति शङ्काग्रन्थार्थः। बभाषे च बल्लभाचार्यो न्यायलीलावत्याम्—"न चास्य समायव्ययफलत्वेनापुरुषार्थत्वं, दुःखस्य प्राचुर्यात्सुखस्याल्पत्वादि"ति। अत्रापि दुःखसाधनशरीरादिनाशे सुखस्यापि हानादिति पूर्वपक्षार्थो विज्ञेयः। अवोचच्चात्र जयन्तभट्टोऽपि—"अतिदुर्वहश्चायं संसारदुःखभार इति तदुपशमाय व्यवस्यन्तः सन्तो न निष्प्रयोजनप्रयत्ना भवन्ति" इति। नान्तरीयकत्वदर्शनेति। न अन्तरं नान्तरम् = अविनाभावः, तत्र भवं नान्तरीयं, तदेव नान्तरीयकं, तस्य भावो नान्तरीयकता व्याप्तिः। सा च कालिकी ग्राह्या—यदा यदा प्रागभावासहवृत्तियुगपदशेषविशेषगुणनिवृत्तिस्तदा तद्धर्मिनिवृत्तिरित्यात्मिका, न तु दैशिकी, तयोः सामानाधिकरण्यासम्भवात्।

ननु—इच्छादय आत्मनो लिङ्गम्, तथाहि—इच्छादयः क्वचिदाश्रिता गुणत्वात् रूपादिवदित्यनुमानमेव नित्यतयैवात्मसाधकम्। इच्छा हीत्थमुपजायते यज्जातीयमर्थमित्थमुपयुञ्जानः पुरुषः पुरा सुखमनुभूतवान्, पुनः कालान्तरे तज्जातीयमुपलभ्य सुखसाधनतामनुस्मृत्य तमादातुमिच्छति,

सभी दोष उत्पन्न होते हैं।) रागादि दोषों की क्लेशमूलता तो सुविदित ही है। एवञ्च दुःखसंतप्त आत्मा के सद्भाव की अपेक्षा आत्मा का नाश मानना ही श्रेयस्कर है, तब वह पुरुषार्थ क्यों नहीं हो सकता। तार्किकों ने भी सुख के अभाव में भी दुःखहानि को ही पुरुषार्थत्व का समर्थन किया है। परन्तु प्रागभाव असमानकालीन युगपत् अशेषविशेषगुणनिवृति के धर्मीनिवृत्ति नान्तरीयक ( व्याप्य ) होने से उन ( तार्किक ) के यहाँ भी मोक्षदशा में आत्महान ही प्राप्त होता है। अतः उनका शून्यवादी के साथ साम्य है, ऐसा अद्वैतवादी कहते हैं। और यदि उन ( तार्किक ) के यहाँ आत्महान न भी मानें,

साम्यमेवेत्यद्वैतवादिनो वदन्ति, तदनापत्तावपि वाऽस्फुरद्रूपस्तदाऽऽत्मा सन्नप्य-सत्सम एवेति नात्मसद्भावो मुक्तेः पुरुषार्थतायामुपयुज्यते। एवं च सत्येव

नित्यतयैवात्मरूपधर्मिग्राहकप्रमाणविरोधेन प्रागभावासहवृत्तेरित्यादिव्याप्ति सङ्कोचाभ्युपगमेनाह तदनापत्तावपीति। प्रागभावासहवृत्तेरिति तु पाकस्थले व्यभिचार वारणायोच्यते। नान्तरीयकत्वं तु तत्र कालिकव्याप्तिः।

सेयमनेन क्रमेण समुपजायमानेच्छापूर्वापरानुसन्धानसमर्थमाश्रयमनुमापयति।

अतएवोक्तम्—

तेनेच्छासुखकृतिदुःखवेदनाना-
माधारो न खलु मनो न चेन्द्रियाणि।
देहोऽपि व्रजति न तत्समाश्रयत्वं
तेनान्यं पुरुषमतः प्रकल्पयामः॥ इति।
प्रत्यक्षादिप्रमाणैर्यो व्यवहारः स चात्मना।
विना नित्येन नेत्येवं ततस्तस्य प्रकल्पनम्॥ इति च।

किञ्चात्मनोऽनित्यत्वे कृतहानाकृताभ्यागमादिदोषाः प्रादुःस्युरिति नात्म-हानप्रसक्तिरित्यभिप्रायेणाह—तदनापत्तावपीति। आत्महानं तदोऽर्थः। कार्य-कारणभावस्य नियामकत्वादनादिप्रबन्धप्रवृत्तो हि ज्ञानानां हेतुफलभावप्रवाहः, एष एव च सन्तान इत्युच्यते, तत्कृतश्चायमनुसन्धानादिकार्यनियमः, सन्ताना-नादित्वादविच्छेदाच्च परलोकोऽपि विलष्टकल्पनः। नित्यस्त्वात्माऽभ्युपगम्य-मानो यदि सुखादिजन्मना विकृतमनुभवति, तदयं नित्य एव धर्मादिवदुक्तः स्यात्, निर्विकारत्वे तु सताऽसता वा सुखदुःखादिना कर्मफलेन कस्तस्य विशेष इति कर्म वैफल्यमेव। उक्तं हि—

वर्षातपाभ्यां किं व्योम्नः चर्मण्यास्तिततयोफलम्।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः॥ इति।

तस्मादुत्सृज्यतामेष मूर्धाभिषिक्तः प्रथमो मोह आत्मग्रहो नाम, तन्नि-वृत्या चात्मीयग्रहोऽपि विरंस्यति, अहमेव न किं ममेति, तदिदमहंकारमम-कारग्रन्थिप्रहाणेन नैरात्म्यदर्शनमेव निर्वाणद्वारमालम्ब्यताम्। कथञ्चित् कल्प्यमानोऽपि मुक्तावस्फुरद्रूपत्वादसत्सम एव, न स्वतः प्रथते नापि परत-स्तर्हि को ब्रूते सोऽस्तीतीत्याह—असत्सम एवेति। नात्मसद्भाव इति। नन्वात्मसद्भावस्य मुक्तेः पुरुषार्थतायामनुपयोगश्चेत्तर्हि 'नहि बद्धनाशो मोक्षपदवाच्यः किन्तु सत एव तस्य बन्धविश्लेष' इत्यस्य कः समाधिः ?

तो मोक्षदशा में अप्रकाशमान आत्मा सत् होने पर भी असत् के समान ही है, अतः आत्मसद्भाव मुक्ति की पुरुषार्थता में उपयुक्त नहीं है। एवञ्च "धर्मी (आत्मा) के

**धर्मिणि बन्धविश्लेषो मोक्षपदवाच्य इत्यप्यगत्या त्याज्यम्, अप्रयोजकञ्च।**

**अथ भवत्वेवम्, तथापि संविदः क्षणिकत्वेन स्वभावत एव नाशसम्भवेन मोक्षार्थं प्रयत्नवैयर्थ्यमेव, न च सन्तानस्य विनाशाय प्रयत्यते, तस्यातिरिक्तत्वाभावाद्, अन्यथा सन्तानिनाशेन तन्नाशोऽपि कुत इति तन्नित्यत्वमपि स्यात्, नित्यत्वं च स्ववृत्त्यवृत्तिभ्यां भवद्भिरपलप्यते, आद्ये आत्माश्रयात्, द्वितीये च ध्वंसप्रतियोगित्वाभावरूपनित्यत्वे कालानवच्छिन्ने कालावच्छिन्नत्वरूपानित्यत्वप्रसक्तौ व्याघातादिति चेत्, सत्यम्, सन्तानस्य सन्तानिभिन्नाभिन्नत्वाभ्यां**

तत्राह—एवञ्चेति। पुरुषार्थतानुपयोगोऽगतिः। अप्रयोजकञ्चेति। न परं त्याज्यतैव तस्यापि त्वप्रयोजकत्वमपि प्रोक्तरीत्या स्वप्रतिपाद्यविषयासाधकत्वादात्मनाशस्यैव मोक्षत्वादिति भावः।

ननु क्षणिकविज्ञानस्यैवात्मतया क्षणिकत्वादेव तन्नाशस्य स्वतः सिद्धिसम्भवे तदर्थं प्रयत्नवैयर्थ्यमित्याशङ्कते—अथेति। स्वभावतः=कारणमनपेक्ष्यैव। ननु सुगतसमये विज्ञानात्मनो नानात्वादेकस्य स्वभावतो नाशसम्भवेऽपि तत्प्रवाहस्याविच्छेदात् तद्विच्छित्तये प्रयत्नसाफल्यमित्याशयेनाह—न चेति। तस्यातिरिक्तत्वाभावात् सन्तानीतः सन्तानस्यातिरिक्तत्वाभावादित्यर्थः। अन्यथा सन्तानस्य सन्तान्यतिरिक्तत्वे। नन्वस्तु तन्नित्यत्वमिति चेत्तत्राह—नित्यत्वञ्चेति। भवद्भिः शून्यवादिभिः। स्वस्य स्ववृत्तित्वे आत्माश्रयात्। अवृत्तित्वपक्षं दूषयति—द्वितीय इति। कालानवच्छिन्नत्वात्मकस्य नित्यत्वस्य कालावच्छिन्नत्वं हि मम मुखे जिह्वा नास्तीतिवद् विरुद्धमिति भावः। परिहरति सत्यमिति। सत्यमित्यनेन सन्तानस्य सन्तान्यतिरिक्तत्वाभावोऽङ्गीकृतः। किन्तु तस्य

रहते हुये ही बन्धविच्छेद मोक्ष कहा जाता है" यह कथन भी अगत्या परित्याज्य तथा अप्रयोजक ( आत्मा का असाधक ) है।

शङ्का—अस्तु आत्मनाश ही दुःखहान का उपाय मान लिया जाय, तथापि ज्ञान ( आत्मा ) के क्षणिक होने से स्वभावत ही उसका नाश हो जायेगा, अतः मोक्षार्थ प्रयत्न करना व्यर्थ है। यदि कहें कि विज्ञानसन्तान ( धारा ) के विनाशार्थ प्रयत्न किया जाता है, तो यह कथन युक्तिसंगत नहीं, क्योंकि विज्ञानसंतान संतानीविज्ञान से अतिरिक्त मानें तो सन्तानी ( प्रत्येक विज्ञान ) के नाश से भी संतान का नाश क्यों होगा। ऐसी स्थिति में वह ( सन्तान ) नित्य भी हो जायेगा। किन्तु आप स्ववृत्तित्वावृत्तित्व के द्वारा नित्यत्व का निराकरण करते हैं। अर्थात् यदि नित्यत्व में नित्यत्व रहता है तो आत्माश्रय हो जायेगा। और यदि नित्यव में नित्यत्व नहीं रहता है तो—कालानवच्छिन्न ध्वंसप्रतियोगित्वाभावरूप नित्यत्व में कालावच्छिन्नत्वरूप अनित्यत्व के प्राप्त होने से व्याघात दोष हो जायेगा।

दुर्वचतया सांवृतस्यैव विनाशो मोक्ष इति स्वीकारात्, उक्तविकल्पपराहतिस्तु सांवृतत्वं पुष्णातीति न दोषः। बन्धस्य दुर्निरूपत्वादेव तु बन्धमोक्षव्यवस्था नास्थीयत इत्यवादिष्म।

यत्तु निस्साक्षिकबाधसिद्धचसम्भवेन नित्यस्य साक्षिणोऽभ्युपगम आवश्यकः, अन्यथा तस्यापि बाध्यत्वे तद्बाधसिद्धये साक्ष्यन्तरस्वीकारेऽनवस्थाप्रसक्तिरिति वेदान्तिनोच्यते, तत्रेत्थं समाधेयम्, आनिर्वाणं ज्ञानधारा तावदभ्युपेयत एव, निर्वाणकाले तु यद्यपि नास्ति ज्ञानमिति नान्तिमज्ञाननाश-

तदनतिरिक्तत्वमपि नास्ति, तथाहि—सन्तानस्य न सन्तानिपार्थक्यम्, अनभ्युपगमात्, अनुपलम्भबाधाच्च, ज्ञानानि न सन्तान इति प्रत्ययापाताच्च। नाप्यभेद एकस्मिन्नपि ज्ञाने सन्तानप्रत्ययापाताच्च। न च भेदाभेदो विरोधादिति सुष्ठूक्तम्—दुर्वचतयेति। ननु तर्हि किमायातमित्यत आह—सांवृतस्यैवेति। सन्तानस्येति शेषः। ननु तर्हि निरुक्तपराहतेः किं फलमिति चेत्त्राह—उक्तविकल्पेति। नास्थीयत इति। परमार्थत इत्यादिः।

ननु सांवृतत्वस्य बाधितत्वव्याप्तत्वाद् बाधस्यावश्यमङ्गीकार्यत्वेऽपि तस्य सावधित्वनियमात्तदर्थं कश्चनावधिरप्यवश्यं स्वीकार्य एव, स च नित्यः साक्ष्येव स्यादन्यथाऽनवस्थापत्तेः अत एव—

"अधिष्ठानावशेषो हि नाशः कल्पितवस्तुन" इत्युक्तमित्याह—यत्त्विति।

समाधानमारभते—तत्रेत्थमिति। ज्ञानसत्त्वस्यैव विवादास्पदत्वाज्ज्ञानमेवाश्रित्याह—ज्ञानेति। तस्यापि तन्मते क्षणिकत्वोपगमाज्ज्ञानधारेत्युक्तम्। ननु

समाधान—आपका कथन सत्य है क्योंकि सन्तानिभिन्नाभिन्नत्वविकल्प के द्वारा सन्तान के दुर्वच होने से सांवृत सन्तान के विनाश को ही मोक्ष मानते हैं। उक्तभिन्नाभिन्नत्वविकल्प से सन्तान की पराहति ( निरास ) तो उसके सांवृतत्व को ही पुष्ट करती है, अतः दोष नहीं है। बन्ध के दुर्निरूप होने से ही बन्धमोक्षव्यवस्था हमें अस्वीकृत है यह कह चुके हैं।

"साक्षी के बिना बाध सिद्ध नहीं हो सकता, अतः नित्य साक्षी मानना आवश्यक है। अन्यथा उस ( साक्षी ) के भी बाध्य होने पर उसके बाधसिद्धि के लिए साक्ष्यन्तर मानने से अनवस्था दोष होगा" यह जो वेदान्ती का कथन है, वह इस प्रकार समाधेय है कि—निर्वाण पर्यन्त ज्ञान धारा हम लोग मानते हैं। यद्यपि निर्वाणकाल में ज्ञानं नास्ति इस प्रकार अन्तिम ज्ञाननाश का प्रत्यक्ष नहीं होता, तथापि हम (शून्यवादी) योगज धर्म के प्रभाव के अनभ्युपगन्ता ( अस्वीकर्ता ) नहीं हैं जिससे कि भावी विज्ञानविनाश का प्रत्यक्ष न हो सके। और चार्वाक के समान प्रत्यक्षमात्रप्रमाणमन्ता भी नहीं हैं, अपितु संवृति दशा में अनुमान प्रमाण भी मानते हैं। अतः अनुमान तो इस समय भी

**प्रत्यक्षसम्भवः, तथापि न वयं योगजधर्मप्रभावानभ्युपगन्तारो येन भाविप्रत्यक्षं न भवेत् । न वा चार्वाका इव प्रत्यक्षमात्रोपजीविनोऽपि तु संवृतिदशायामनुमानोपजीविनोऽपि, अनुमानञ्चेदानीमपि सन्ततित्वलिङ्गकमुच्छेदसाध्यकं शून्यत्वसाध्यकं वा विचारासहत्वादिलिङ्गकं सम्भवत्येव, अनुमितेश्च स्वविषयकत्वं सांवृतमनुमन्यत एवेति न तद्भानायापि साक्ष्यपेक्षा, मुक्तिकाले च बाधभानं किं किञ्चित्फलं प्रसूते येन तदा तदर्थं साक्ष्यपेक्ष्येतेति भवानेव प्रब्रूताम् । एतेन**

विज्ञानात्मोच्छेदस्य निर्वाणपदार्थत्वात्तदुच्छेदकाले विज्ञानस्याप्यभावात् प्रकाशमन्तरा तन्नाशोऽपि न प्रकाशेत इत्याशङ्कते—निर्वाणकाले तु यद्यपीति । परिहरति—तथापीति । वयं शून्यवादिनः । तादृशनिर्वाणकाले ज्ञानात्मकप्रकाशस्याभावेऽपि साम्प्रतिकयोगसामर्थ्यजन्यज्ञानेन ज्ञातुं शक्यत्वात्तत्रत्यतदभावस्य । 'ततो मनोजवित्वं विकरणभावः प्रधानजयश्च' 'सत्त्वपुरुषान्यथाख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वञ्च' ( योग द० ३।४८-४९ ) इत्यादिना प्रतिपादितं सर्वकालीनवस्तुज्ञातृत्वसामर्थ्यं योगजन्यमित्यन्यत्रोक्तस्य मयाप्यङ्गीकृतत्वात् । अत एव कीर्तितं धर्मकीर्तिना—'भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानञ्चेति' ( न्या० वि० १ ) इति । 'करतलामलकवद् भाव्यमानस्यार्थस्य यद् दर्शनं तद् योगिनः प्रत्यक्षम्' इति तत्रैव तद्व्याख्याता च । अनुमानेन वा वार्तमानिकेन—ज्ञानसन्तति 'मोक्षकालीनोच्छेदवती, शून्या वा सन्ततित्वाद् विचारासहत्वाद्वेत्याद्यात्मकेन तद्भानं भविष्यतीत्याह—अनुमानञ्चेति । नन्वस्यानुमानस्य भानं न स्वेनैव कर्मकर्तृविरोधात्, नाप्यन्येनानित्येन केनचित्तस्य तस्य ज्ञानस्य भानार्थं ज्ञानान्तरापेक्षणादनवस्थापत्तेरिति तद्भानार्थं नित्यः साक्षी अभ्युपेय इति चेत्तत्राह—अनुमितेश्चेति । उत्तरे विरोधस्तु सांवृतत्वं पुष्णाति । किञ्चात्मोच्छेदः स्वरूपत एव मोक्षो न तु ज्ञातः सन्, तज्ज्ञानस्य निष्प्रयोजनत्वादिति न तदर्थं नित्यज्ञानापेक्षेत्याह—मुक्तिकाल इति । वेदान्तमतनिरासप्रयासेनैव क्षणिकविज्ञानवादिमतमपि निरस्तमित्याह—एतेनेति । निरूक्तानुमानेनेत्यर्थः ।

किया जा सकता है । वह इस प्रकार होगा—"विवादास्पदा विज्ञानसन्तती उच्छेदवती सन्ततीत्वात्, ( विज्ञानधारा विनाशशील है धारा होने से ) अथवा "विवादास्पदाविज्ञानसन्तती शून्या विचारासहत्वात्" ( विवादास्पदविज्ञानधारा शून्य है विचारासह होने से ) । अनुमिति में सांवृतस्वविषयकत्व भी मानते हैं, अतः तद्भान के लिए भी साक्षी की अपेक्षा नहीं है । दूसरी बात यह है कि मुक्तिकाल में बाधभान का प्रयोजन ही क्या है, जिससे कि तत् काल में बाधभानार्थ साथी की अपेक्षा हो, यह आप ही बतावें । एवं उक्तानुमान से "विशुद्धज्ञानसन्तानोदय ही मोक्ष है" यह पक्ष भो निरस्तप्राय है ।

विशुद्धज्ञानसन्तानोदयो मोक्ष इत्यप्यपास्तप्रायम् ।

यदपि निरधिष्ठानकभ्रमो न दृष्टचर इति सदधिष्ठानमवश्यमङ्गीकार्यमिति वेदान्तिन आहुस्तत्रापीत्थं नः प्रतिभाति, अधिष्ठानं हि स्थूलदृशां तावद्रजतादेः शुक्त्यादिकम्, वेदान्तवासनावासितमतीनां तु परमार्थसच्चैतन्यम्, तत्राद्यं सांवृतं न ममापि दण्डवारितम्, अधिकसत्ताकत्वं तु रजतापेक्षया तस्य

एतेनेति । उक्तानुमानेनेत्यर्थः । अपास्तप्रायमिति । 'बुद्धितत्त्वे स्थिता बौद्धा गुणेष्वेवार्हताः स्थिताः । स्थिता वेदविदः पुंसि अव्यक्ते पाञ्चरात्रकाः' ॥ इत्यागमिकवचने बौद्धपदं न शून्यवादिपरम्, किन्तु योगाचारपरमिति शून्यवादिना मोक्षे ज्ञानसन्तानो निराकार्य एव, उक्तं चैतत्पूर्वमपीति भावः ।

आरोप्यस्य सदधिष्ठानव्याप्तत्वेन दृश्यादेः कल्पितत्वात् सदधिष्ठानकत्वं स्यादिति वेदान्त पक्षमुत्थापति—यदपि निरधिष्ठानकभ्रम इति । प्रतिभातीति । प्रतिभा हि नवनवोन्मेषशालिनी बुद्धिः स्फूर्त्याख्यो बुद्धिविशेषो वा । प्रतिभातीत्यनेन—अत्रस्थितेन मया कयाचित्स्फूर्त्याऽधिष्ठानतत्त्वं पराकार्यम्, तस्या उपयोगः सैद्धान्तिकेऽध्वनि वक्तव्य इति स्फोरितम् । स्थूलदृशामाधाराधिष्ठानयोरेकार्थकत्वमभिमन्यमानाम् । प्रमाणप्रयोजनयोरभावाज्जडस्यजड़त्वादेवचावरणाप्रसक्त्या न तस्याधिष्ठानत्वं सम्भवतीत्यत आह—वेदान्तवासनावासितमतीनामिति । तथा च वेदान्तनये नाधाराधिष्ठानयोरैक्यमपितु भेदः । अत एव—

अधिष्ठानमाधारमात्रं यदि स्यात्
प्रसज्येत सत्यं तदा चोद्यमेतत् ।
न चैतत् सकार्यस्य मोहस्य वस्तु-
न्यधिष्ठानगीर्गोचरे लोकसिद्धा ( सं० शा० १।३२ )

इत्यादिनाऽऽधाराधिष्ठानयोः पार्थक्यमकारि । क्वचिदाचार्याणां शुक्तेरधिष्ठानत्वव्यवहारस्तु अवच्छेदकतासम्बन्धेनेति सुष्ठूक्तम्—वेदान्तवासनावासित मतीनां तु परमार्थसच्चैतन्यमिति । तत्राद्यमिति । सामान्यतो ज्ञातत्वे सति विशेषरूपेणाज्ञातत्वमेवाधिष्ठानत्वम् । तच्च न्यायनये यथा शुक्त्यादीनामपि तथा मन्मते तदेव सांवृतमिति भावः । ननु शुक्तिरजतयोः सांवृतत्वाविशेषे समसत्ताकत्वात् शुक्त्यादेरधिष्ठानत्वं न स्यादधिष्ठानस्यारोप्यापेक्षयाऽधिकसत्ताकत्वनियमात् ।

वेदान्ती ने जो यह कहा है कि निरधिष्ठानक भ्रम दृष्टिपथ में नहीं आता, अतः सदधिष्ठान अवश्य मानना चाहिए; तो यहाँ भी हमें यह समाधान प्रतिभात होता है कि—स्थूलदर्शी शुक्त्यादि को ही रजतादि का अधिष्ठान मानते हैं तथा वेदान्तवासना वासितजन परमार्थसच्चैतन्य को रजतादिका अधिष्ठान मानते हैं। वहाँ प्रथम कल्प तो

दृष्टिसृष्टिवादे भवतां निष्कृष्टमतेऽपि नास्ति येन शुक्तेरप्यधिष्ठानं तदपेक्षयाऽधिकसत्ताकं सिद्धयत् त्रिकालाबाध्यत्वे पर्यवस्येत्। किञ्च सांवृतत्वेऽपि व्यवहारानुरोधाच्छुक्तेर्यदि रजतापेक्षयाऽधिकसत्ताकत्वं स्वीक्रियेत, तावतापि शून्यत्वाअधिकसत्ताकत्वं स्वीक्रियेतेति। एतेनेदमपि सूचितम्--यद्विशेषादर्शनेन भ्रमस्तस्याधिष्ठानत्वमितिरीत्यापि न त्रिकालाबाध्यतत्वपर्यन्तं धावनीयम्, शुक्तेर्विशेषादर्शनेन तावद्रजतभ्रमः, शुक्तेरपि सांवृतत्वेन तु तद्भ्रमः शून्यत्वरूपस्य तद्विशेषस्यादर्शनेन, शून्यत्वस्यापि सांवृतत्वेन तु तद्भ्रमोऽप्युपपाद्यः, स च शून्यत्वस्य स्वरूपत एव शून्यत्वेन स्वस्यैव स्वविशेषत्वेन विशेषधर्मविधया तददर्शनेनैवोपपद्यते। विशिष्य शून्यत्वस्वरूपानालोचनया हि तस्मिन्नपि तात्त्विकतां कश्चिदभिमन्यते। शून्यत्वस्य तु घटादौ संवृतिरूपावगमो युक्तिसमर्पितः, तत्र च तदभावोऽप्यस्त्येवेति नासांवृतत्वम्। एतच्च बाध्यत्वात्सांवृतत्वोक्त्या परतो व्यञ्जितम्। एवं चात्र—घटादौ शून्यतावगमः संवृतिरूपः कस्य ज्ञानेन निवर्तत इति वक्तव्यम्, औषधवत्तन्निवृत्तेरप्यावश्यकतायाः प्रागुक्तत्वात्। घटत्वादिज्ञानेन निवर्तत इति तु न युक्तम्, तत्सत्त्वेऽपि युक्त्या शून्यतावगमात्, नापि शून्यत्वज्ञानेनैव, विरोधात्, तथा च किञ्चिदन्यत्तत्त्वं वाच्यमिति—न वाच्यम्, घटादाववगम्यमानशून्यतायां तात्त्विकत्वावगम एवेहि निवार्यः, स च तत्स्वरूपालोचनया निवर्तत एव।

अतएवाधिष्ठानज्ञानात्तन्निवृत्तिरिति चेत्तत्राह—अधिकसत्ताकत्वं त्विति। दृष्टिसृष्टिपक्षे सत्ताद्वयपक्ष एव कक्षीकृतः। तेन चिदतिरिक्तस्य सर्वस्य प्रातिभासिकत्वमेव। त्रिकालाबाध्यत्वे पर्यवस्येदिति। अधिष्ठानस्याधिकसत्ताकत्वस्वीकारे सिद्धान्ते शुक्त्यादेरपि बाधितत्वात् तदधिष्ठानानुसरणस्य ध्रौव्येणान्ततोगत्वा त्रिकालाबाध्यतत्त्वमेव सिद्धेदितिभावः।

ननूभयोस्तुल्यसत्ताकत्वे कालान्तरे शुक्त्यादेरपि व्यवहारो न स्यात्, रजतादिवत्। तथा च सांवृतत्वेऽपि बाधविलम्बाविलम्बाभ्यां विशेषोऽभ्युपेयः। अतएव—

दीर्घस्वप्नमिमं विद्धि दीर्घं वा चित्तविभ्रमम्।
दीर्घं वा मनोराज्यं विद्धयेनं रघुनन्दन॥

इत्युक्तम् बासिष्ठे। किञ्च सृष्टिदृष्टिपक्षोऽपि वा स्वीक्रियत इति चेत्तत्राह—किञ्च सांवृतत्वेऽपीति। तावतापीति। विशेषस्यापि शून्यत्वेन तदभ्युप-

मेरे ( शून्यवादी ) मत में सांवृत स्वीकृत है। रजतापेक्षया शुक्त्यादि का अधिकसत्ताकत्व तो दृष्टिसृष्टिवाद निष्कृष्टमत में आप ( वेदान्ती ) को भी अभिमत नहीं है, जिससे कि शुक्ति का भो अधिष्ठान शुक्ति की अपेक्षा अधिकसत्ताक सिद्ध होता हुआ त्रिकालावाध्यत्व में पर्यवसित हो।

किञ्च शुक्त्यादि के सांवृत होने पर भी व्यवहारानुरोध से उसे रजतापेक्षया यदि अधिकसत्ताक मान भी लिया जाय, तो भी तावन्मात्र से शून्यताका निराकरण

भङ्गात्, अन्यथा भवतोऽप्यनिष्टप्रसङ्गात्, शून्यत्वमिथ्यात्वयोरैक्यात्, तदापि

अभावस्य साधारत्वनियमबलादपि न पराभिमताधिष्ठानसिद्धिः, तत्तद्देशकालयोरेवानुभूयमानयोराधारत्वात्, तत्तद्देशादेरप्यभावस्याधारो व्यवहारसिद्धो देशविशेषादिरेव, न खलु सर्वस्य ध्वंसः शून्यताघटको येन तद्दशायामाधारपर्यनुयोगः स्यात्, अन्ततश्च पूर्ववर्णितस्य भावाभावविलक्षणगगनस्यैव महाप्रलयादौ परिशेषावश्यम्भावात्, नापि च तादृशगगनेन ब्रह्मवादिना सिद्धसाधनमपि युक्तमुद्भावयितुमिति ।

परन्तु तादृशगगनस्यापि शून्यतयाऽभावावश्यम्भावेन तदधिकरणं किञ्चित्स्यात् । तदेव चास्तु ब्रह्म, वक्ष्यमाणरीत्या च तत्स्फुरणाद्यात्मकमिति शक्यते वक्तुम् । अथ तादृशगगनस्यास्ति किञ्चिदधिकरणं व्यवहारसिद्धं यदि, तदा तदेवाभावस्यापि भविष्यति, नास्ति चेत्, तदा भावस्येवाभावस्यापि निराधारतया किमपराद्धम्, एवं च महाप्रलयादिकमस्तु मा वा, अद्यापि तु सर्वस्य शून्यताऽस्त्येवेति निराधारैव सा नृत्यत्विति मौनमस्तु ब्रह्मवादिनामिति चेत्, अभावस्य निराधारताया सर्वथैवाननुभवपराहतत्वात् । एवमभावस्याप्यभावस्तस्याप्यभाव इति यदि, तदा ते मौर्ख्यचित्रमिदम्, यदि नैवम्, तदा तस्य पारमार्थिकत्वं स्वरूपेण वा तदाधारात्मना वा प्रसज्यत एव, आधारस्यौचित्यप्राप्तत्वे तु तेनैव रूपेण पारमार्थिकत्वं वक्तुमुचितम् । एवं ज्ञानधारोच्छेदस्यापि स्वीकृतत्वेन तदाधारविचारोद्धुरीकारेण पराकार्यःपरः । अभावस्यालीकत्वं त्वाधारभिन्नत्वेन परमुपेयताम्, न त्वाधारात्मनापीति प्रोक्तं पुरेति नमो वेदान्तिपादपांसुभ्यो विजयश्रीसपर्यापात्रेभ्यः । यदि त्वभावस्याधारात्मकता नानुमन्यते, घटाद्यभावस्य कालविशेषावच्छिन्नभूतलाद्यात्मकत्वे ज्ञानविशेषरूपत्वे वा कालज्ञानयोर्विशेषव्यवहारनिदानस्याभावातिरिक्तस्य दुर्निरूपत्वात्, शृङ्गग्राहिकया तयोरुपादानस्य व्यक्त्यानन्त्येनानुपपत्तेः कैवल्ये व्यावर्तकयोः कालज्ञानयोरभावाच्च । आधाराधेयभावस्य चैक्येऽप्युपगमः कस्मैचिदेव रोचेत, तदा निष्कृष्टं समाधानं दर्शनसर्वस्वशेषे द्रष्टव्यम् । शून्यतामते च सर्वनिर्वाणमहाप्रलययोरुपगमे तदा संवृतिसामग्र्यभावेन नाभावानां सांवृतत्वसम्भवः, नहीदानीन्तनसंवृत्या तदानीन्तनानां सांवृतत्वम्, भ्रान्तेरेतावानपि च महिमा दुःसहो यदसौ स्वसमयेऽपि स्वविषयमुपकल्पयेत्, किम्पुनः समयान्तरे । अभावानां पारमार्थिकत्वे तु कञ्चिद्भावं विना तेषां बुद्ध्यारोहणे परमपङ्गुतैवेत्यलम् ।

गमेऽपि न शून्यत्वहानिरितिभावः । अनिष्टप्रसङ्गादिति । मिथ्यात्वमपि न सिद्धेत् । अत्र हेतुः—शून्यत्वमिथ्यात्वयोरैक्यादिति । यदि व्यवहारमाश्रित्य शुक्तेरधिकसत्ताकत्वं मन्यते, मन्यतान्तावन्न तावताऽप्यधिष्ठानत्वसिद्धिः । अधिकसत्ताकत्वस्य तत्रानुपयोगात् । व्यावहारिकसत्ताया व्यवहार एवोपयोगात् । तत्रोपयोगे तु द्वितीयः कल्प एवायात इत्याह—तदापीति । परमार्थसच्चैतन्यमेवाधिष्ठानमिति द्वितीय-

सम्भव नहीं है । अन्यथा आप ( वेदान्ती ) के मत में भी अनिष्ट प्रसक्त होगा, क्योंकि

**दृष्टत्वादेव शुक्तेरधिकसत्ताकत्वं न तु तस्याधिष्ठानतायामप्युपयोगः, उपयोगे वा द्वितीयकल्पे एवान्तर्भावः। द्वितीयस्य तु किमर्थमपेक्षेति चर्च्यताम्। तदभावे सत्तानुवेधो न स्यादिति चेत्स्यादेवं यद्यस्माभिर्याचितमण्डनन्यायेन रजतादौ शुक्त्यादौ च सत्ताऽनुमन्येत, यदा तु तेषां सांवृतमेव सत्त्वं स्वकीयं स्वीकुर्मस्तदा काऽपेक्षाऽधिष्ठानस्य भगवतः। हन्त यदि स्वकीयं सत्त्वं तदा कथं सांवृतम्, तद्वति तत्प्रकारकज्ञानस्य संवृतिरूपत्वाभावात्, यदि तु सांवृतं तदा कथं**

कल्पमुत्थापयति—द्वितीयस्येति। सत्तानुवेधः = सत्तासम्बन्धः। भ्रमकाले रजतादेरपि सत्त्वेन भासमानत्वात्। इदं रूप्यमित्यत्र इदमितिवत् सन् घट इत्यत्रापि सदित्यधिष्ठानभूतं ब्रह्मैव भासत इति वेदविदो वदन्ति। मन्मते तु शुक्त्यादेरेवस्वकीयं सत्त्वं स्वीक्रियते, नातोऽधिष्ठानमपेक्षत इत्याह—स्यादेवमिति। याचितमण्डनन्यायेनेति। विवाहाद्युत्सवेष्वन्यस्माद् वस्त्रालङ्कारादिकं याचित्वा स्वकार्यं सम्पाद्यते लोको यथा, तथा प्रकृतेऽधिष्ठानीयसत्तामादाय सत्यत्वव्यवहारनिर्वाह आरोप्ये। अधिष्ठानस्य भगवत इति। अत्र भगवच्छब्देन सर्वथाऽपरिहार्यत्वं तस्य सूच्यतेऽन्यथा तु तद्भणितिरपि निराधारा स्यात्। ग्रन्थकृतैवात्र स्वहृदयं टीकायां व्यक्तीकृतम्। परतोऽपि 'यत्तु सुरगुरूणा" इत्यादिना वक्ष्यति। चर्चनीयश्चास्माभिरपि परतः। हन्त यदीति। स्वकीयम्, अनारोपितम् अबाध्यं वास्तविकमिति यावत्। कथं सांवृतम् आरोपितं बाध्यमवास्तविकमिति यावत्। अथवा स्वकीयं प्रमाज्ञानविषयः, सांवृतं तद्विरुद्धं तदाह—तद्वतितत्प्रकारकज्ञानस्य

शून्यता-मिथ्यात्व दोनों एक ही है। ( भाव यह है कि शून्यत्व आविद्यक सत्ता का विघटक नहीं हैं, यदि शून्यत्व को आविद्यक सत्ता का विघटक मानें तो मिथ्यात्व भी आविद्यक सत्ता का विघटक होना चाहिए। क्योंकि मिथ्यात्वशून्यत्व दोनों का स्वरूप एक ही है। ) तो भी यदि बाधकाल में दृष्टिगोचर होने मात्र से ही शुक्ति को अधिक सत्ताक मानें तो उस ( अधिकसत्ताकत्व ) का अधिष्ठानता में कोई उपयोग नहीं है और यदि उपयोग है तो द्वितीय ( परमार्थसच्चैतन्य ) कल्प में ही अन्तर्भाव हो जायेगा।

एवं द्वितीय कल्प में भी विचार करें, कि परमार्थ सच्चैतन्यरूप अधिष्ठान किस लिये माना जाय। यदि कहें कि सदधिष्ठान के बिना घटादि पदार्थों में सन्घट इसप्रकार सत्तानुवेध ( सत्तासम्बन्ध ) न हो पायेगा, अतः सदधिष्ठान मानना चाहिए, तो यह कथन तब उचित होता, यदि हम रजत एवं शुक्ति आदि में याचितमण्डनन्यायेन सत्ता मानते, किन्तु जब हम रजतादि की स्वकीय सांवृत सत्ता ही मानते हैं तब भगवान के अधिष्ठान की आवश्यकता ही क्या है। यदि आप ( वेदान्ती ) कहें कि यदि रजतादि की स्वकीय सत्ता है तो वह सांवृत कैसे है, क्योंकि तद्वति तत्प्रकारक ज्ञान तो संवृति

**स्वकीयमितिचेदुत्स्वापमिवैतत्, तथाहि—भवतां मिथ्यात्वं यदि प्रपञ्चस्य स्वकीयम्, तदा कथं प्रपञ्चे तन्मिथ्या, यदि तु मिथ्या तदा कथं स्वकीयमिति साम्यात्, तस्मात्स्वकीयमपि सत्त्वं बाध्यत्वात्सांवृतमिति नासुन्दरम्, अतएव भवतां मते शुक्तौ रजतस्योत्पत्तावपि बाध्यत्वेनैव तस्य मिथ्यात्वम्, अन्यथा रजतवति रजतप्रकारकत्वेन तज्ज्ञानस्य भ्रमत्वमपि दुर्लभं भवेदिति रजतस्य मिथ्यात्वं दूरोत्सारितं स्यात्, तस्माद्बाध्यविषयकत्वेन भ्रमत्वं भवतोऽनुमतमेवेति नेयमपूर्वा सृतिः।**

संवृतिरूपत्वाभावात्। तयोरेकीकरणे प्रकारो नास्तीत्यर्थः। मदुपरि आक्षिपन् भवान् विचारशून्यत्वेन स्वसिद्धान्तमपि नाकलयति इत्याह—उत्स्वापमिवैतदिति। स्वापस्योर्ध्वमुत्स्वापं स्वापकालिनमित्यर्थः। सादृश्यञ्च पूर्वापरविचारशून्यत्वेन। स्वापादूर्ध्वमित्यनेन तु स्वापोत्तरभावि। तथा च स्वापकालीनप्रलाप इव, स्वापोत्तरकालभाविस्वापविषयकप्रलाप इव वा निरुक्तप्रत्यवस्थानमकिञ्चित्कर-मित्यर्थः। तस्याकिञ्चित्करत्वमेव प्रतिबन्द्या स्फुटयति—तथाहीति। यदि प्रपञ्चनिष्ठं मिथ्यात्वं स्वकीयम् = अनारोपितं कथंकारं तदीयमिथ्यात्वं मिथ्येति भण्यते, मिथ्यात्वस्य मिथ्यात्वे आरोपितत्वध्रौव्यात् स्वकीयत्वव्याहतिः। यदि च स्वकीये मिथ्यात्वे बाध्यत्वान्मिथ्यात्वं हन्त स्वकीयेऽपि बाध्यत्वात् सांवृतत्व-मिति कथं न मानसार्वजि। नहि सांवृतत्वं सत्त्वमात्रविरोधि, अपितु त्रिकाला-बाध्यत्वात्मकस्य तस्य तच्च मन्मते नास्त्येव, व्यवहारोपयोगिनस्तत्काला-बाध्यत्वस्य च तस्य सांवृतत्वाविशेषान्न तद्विरोधीति भावः। अतएव स्वकीय-सत्त्वस्य सांवृतत्वे बाध्यत्वमेव हेतुरुक्तः। अत एव प्रकरणमुपसंहरता "नेय-मपूर्वा सृतिरि"त्युक्तम्। प्रसिद्धतमा इति तदर्थः। अतएव च शुक्तावुत्पन्नरजते बाध्यत्वादेव मिथ्यात्वमनुमन्यतेऽन्यथा स्वकीयसत्त्वाद्भ्रमत्वमपि न स्याद् दूरे तस्य मिथ्यात्वमिति बाध्यत्वमिथ्यात्वयोः सामनैयत्यमेवेति नायमनुभूतिपथाति-क्रान्तः पन्था इति प्रघट्टकार्थः।

( भ्रम ) रूप होता नहीं, और यदि वह ( सत्ता ) सांवृत है तो स्वकीय कैसे हुई। तो आपका यह कथन उत्स्वाप ( स्वापकालीन प्रलाप ) मात्र ही है। कैसे ? तो सुने—आप ( वेदान्ती ) के मत में प्रपञ्चमिथ्यात्व यदि प्रपञ्च का स्वकीय है तो वह प्रपञ्चगत मिथ्यात्व मिथ्या कैसे हुआ। और यदि वह मिथ्या है तो प्रपञ्च का स्वकीय कैसे हुआ। इस प्रकार आपत्ति के साम्य होने से आपको यही समाधान करना होगा कि—"सत्ता स्वकीय होने पर भी बाधित होने से सांवृत है"। अतएव आप ( वेदान्ती ) के मत में शुक्ति में रजत की उत्पत्ति होने पर भी बाधित होने से ही उसे मिथ्या मानते हैं, अन्यथा रजतवति रजतप्रकारक होने से तज्ज्ञान में भ्रमत्व भी दुर्लभ हो जायेगा, फिर रजत के

अथास्तामेतदपि, तथाप्यबाध्यस्य कस्यचिदभावे बाध्यत्वव्यवहारोऽपि कथम् ? प्रमितेरभावे च संवृतिरपि किमपेक्ष्येति चेत्प्रत्युक्तमेतत्, अशून्यस्याभावेन शून्यत्वमपि न वस्तुतः किञ्चित्, एवं संवृतिरपि। बाध्यत्वं च निरुक्तं शून्यत्वमेव, नत्वधिष्ठानतत्त्वज्ञानबोध्याभावप्रतियोगित्वम्। व्यवहारस्त्वसत्ख्या-

नन्वेवमपि बाध्यत्वं बाधविषयत्वं, बाधश्च पारमार्थिकत्वेनाभावबुद्धिः। तथा च बाध्यत्वमधिष्ठानतत्त्वज्ञानबोध्याभावप्रतियोगित्वरूपं पर्यवसितम्, तच्चाबाध्याधिष्ठानमन्तरा न शक्यसमर्थनम्। अबाध्यस्य सर्वथाऽभावे बाध्यत्वस्याप्यप्रामाणिकत्वाद्, बाध्यस्याबाध्यावधिकत्वादन्यथा तदपि न किञ्चित्स्यात् निरूपकाभावादित्याशंकते—अथेति। न ह्यशून्यावधिकं शून्यत्वमाचक्ष्महे, येन तस्य वास्तविकता स्यात्। तथा च सर्वमेव सांवृतमिति सिद्धान्ताच्छून्यत्वस्यापि तथात्वम्, संवृतावप्येषैव कथा। बाध्यत्वमपि नाधिष्ठानतत्त्वज्ञानबोध्याभावप्रतियोगित्वरूपं तादृशाधिष्ठानानङ्गीकारात्, किन्तु शून्यत्वापरपर्यायमितिसमाधानग्रन्थाशयः।

ननु तथापि बाध्यत्वव्यवहारो न स्यात्, व्यवहारं प्रति व्यवहर्तव्यविषयकज्ञानस्य हेतुत्वात्, तन्निरूपकस्य चाबाध्यस्य कस्यचिद् भवताऽस्वीकारात्, बाध्यस्य च तादृशज्ञानस्य स्वीकारेऽपि तस्यापि बाध्यत्वेनाबाध्यतत्त्वमन्तरा बाध्यत्वपरम्परास्वीकारेऽनवस्थापत्तेरित्युक्तमावर्तत इत्याशङ्क्य निराचष्टे—व्यवहारस्त्वसत्ख्यात्यापोति।

ननु कासावसत्ख्यातिः, असद्भाने प्रमाणाभावादिति चेन्मैवम्, शुक्त्याद्यतिरिक्तो देशो रजतत्वात्यन्ताभाववान् देशत्वात् शुक्तिवदित्यनुमानस्य तत्र मानत्वात्। न च शुक्तिव्यतिरिक्तघटादौ रजतत्वाभावस्वीकारात् सिद्धसाधनं, पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात्। पक्षतावच्छेदकसामानाधिकरण्ये एव सिद्धसाधनस्य प्रसरात्। शुक्त्यतिरिक्तरजते साध्यासत्त्वाद्बाधस्तु नोद्भाव्यस्तत्र रजतत्वप्रतीतेः प्रमात्व एवास्माकं विप्रतिपत्तेः। अथ रजतत्वेनैव

मिथ्यात्व की तो बात ही क्या। तस्मात् बाध्यविषयकत्वेन ही भ्रमत्व मानना आपको भी अभिमत है। तो यही मार्ग हमारे ( शून्यवादी ) लिए भी प्रशस्त है।

शङ्का—अस्तु यह मान लिया जाय, तथापि किसी अबाध्य के बिना बाध्यत्व व्यवहार भी कैसे होगा। प्रमिति ( प्रमा ) के अभाव में संवृति ( भ्रम ) भी किसकी अपेक्षा से कही जायेगी।

समाधान—इसका उत्तर तो दे चुके हैं कि—अशून्यके अभाव होने से वस्तुत. शून्यत्व भी कुछ नहीं है। एवं संवृति भी वस्तुतः कुछ नहीं यानी शून्यत्वरूप ही है, और बाध्यत्व भी निरूक्तशून्यत्वरूप ही है, न कि अधिष्ठानतत्त्वज्ञान से बोध्य अभाव प्रति-

त्यापि सम्भवति। तथाह्यसत्ख्यातिर्द्वेधा, मिथ्यार्थविवक्षयाऽसच्छब्दप्रयोगेऽयं घट इत्यादावाद्या, अलीकविवक्षया तत्प्रयोगे तु भवदभ्युपगतविकल्पवृत्तिस्थानीया द्वितीया, प्रकृते त्वबाध्यांशे द्वितीया बाध्यांशे प्रथमेति विवेकः। ननु मिथ्याभूतस्यापि कालसम्बन्धित्वोपगमेन व्यवहार्यत्वसम्भवेन स्यादाद्या, द्वितीया तु कथङ्कारम्; अलीकस्याव्यवहार्यत्वेन तत्र सङ्गतिग्रहासम्भवाच्छब्दविषयत्वानुपपत्तेः, यदाह 'समयसीमविक्रमत्वाच्छब्दस्ये'ति, समयसीमोल्लङ्घने

यदाहेति। आत्मतत्त्वविवेके उदयनाचार्यः।

पक्षतास्तु, न चानुमितेराहार्यत्वापत्तिरत एवाकिञ्चित्करत्वापत्तिर्घटवत्तां स्वीकृत्य तत्रैव घटाभावमवगाहमानाया प्रतीतेरिवेति वाच्यम्, रजतत्वेन पराभिमतमितिरीत्या प्रयोगेऽदोषादिति चेत् इष्टापत्तेः।

ननु रजतसामग्र्यप्रसूतत्वमुपाधिः, शुक्त्यादौ सत्त्वेन साध्यव्यापकत्वं रजतेऽसत्त्वेन च साधनाव्यापकत्वमिति चेन्न पक्षमात्र व्यावर्तकत्वात्। व्यतिरेकसाधने रजतसामग्रीनिष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वाच्च। एकत्रासत एवापरोक्षभानस्य क्लृप्तत्वेऽपरत्रापि तदेवापरोक्षमवभासिष्यते इति व्यर्थोऽयं प्रपञ्चाभ्युपगम इति शून्यतैव भगवती विजयते।

एवमसदेव रजतमभादित्याद्यनुभवोऽप्यसत्ख्यातौ मानम्। तां विभजन् तत्स्वरूपं निर्वक्ति—तथाहीति। अबाध्यांशे द्वितीया इति। अबाध्यस्यालीकत्वस्वीकारात्। बाध्यस्य च शून्यत्वात्। तच्च मिथ्यात्वमेवेत्युक्तम् प्राक्।

ननु संकेतितोह्यर्थः शब्दप्रतिपाद्यो भवति। न तु निरस्तसमस्तस्वभावेऽलीके संकेतः सम्भवति, अव्यवहार्यत्वात्, तत्कथं तद्विवक्षयाऽसच्छब्दप्रयोगमादायासत्ख्यातेर्द्वितीयविधत्वमित्याशङ्कते—नन्विति। तत्रोदयनाचार्यसम्मतिमाह—समयसीमेति। समयः सङ्केतः सैव सीमा मर्यादा तदायत्तो विक्रमः प्रवृतिर्यस्येत्यर्थः।

योगित्वरूप। व्यवहार उपपत्ति तो असत्ख्याति से भी होती है। असत्ख्याति दो प्रकार की होती है एक तो जहाँ मिथ्याभूत अर्थ की विवक्षा से असत् शब्द का प्रयोग किया जाता है, जैसे "अयंघट इत्यादि"। दूसरी जहाँ अलीक वस्तु की विवक्षा से असत् शब्द का प्रयोग किया जाता है, जैसे आप ( वेदान्ती ) को भी अभिमत विकल्पवृत्तिस्थानीय "शशश्रृङ्गम्" इत्यादि ज्ञान। प्रकृत में तो अबाध्यांश में द्वितीय एवं बाध्यांश में प्रथम प्रकार की असत्ख्याति है।

शङ्का—मिथ्या वस्तु भी काल सम्बन्धी मानी जाती है, अतः उसका व्यवहार होने से प्रथम प्रकार की असत् ख्याति तो हो सकती है, किन्तु द्वितीय प्रकार की असत् ख्याति कैसे होगी, क्योंकि अलीक पदार्थ के ( काल सम्बन्धी न होने से ) अव्यवहार्य होने से उस ( अलीक ) में शब्दशक्तिग्रह ही सम्भव नहीं है, ऐसी स्थिति में वह (अलीक)

**तु शशविषाणादिशब्दात्कूर्मरोमादिविकल्पस्याप्युदयप्रसङ्गात्, शब्दस्वाभाव्या-त्त्वतिप्रसङ्गवारणे व्युत्पन्नवदव्युत्पन्नस्यापि तथाविधविकल्पोदयापातादिति चेन्न, यथा भवन्नये पदेषु शक्तिग्रह एव विशिष्टवाक्यार्थबोधमाधत्ते, न तु वाक्यस्यापि विशिष्टार्थे पृथक् शक्तिग्रहः, तथा प्रत्येकं शशादिशब्दानामेव शक्तिग्रहोऽखण्डा-**

ननु शब्दस्वभाव एव त्वदुक्तातिप्रसङ्गं भङ्क्ष्यति। स्वभाव एवैष तत्तच्छब्दस्य, शब्दव्यवह्रियमाणमात्रबोधत्वमिति चेत्तत्राह-शब्दस्वाभाव्यात्त्विति। न हि तत्स्वभावः स्वार्थप्रतिपादने व्युत्पन्नमपेक्षते न त्वव्युत्पन्नम्। भवन्नये वेद-वादिनये। तत्र हि व्यवहारे भट्टनय इति न्यायेनाभिहितान्वयवादस्योपगतत्वेन ज्ञातशक्तिकैः पदैरेव पदार्था अभिधीयन्ते तद्द्वारा च वाक्यार्थोऽपि जन्यते, न तु तदर्थं वाक्ये शक्तिग्रहमपेक्षते। अतएव चर्चितं चन्द्रिकाकृत्प्रभृतिभिः—

"अभिहितेन पदार्थेन करणेन पदार्थसंसर्गशाब्दधीर्जायते, तथा च व्यवहारः" (अ. च.) इति। "पदानां हि पदार्थमात्रबोधे पर्यवसानात्सपदशक्त्यैव लभ्यते" ( सां. शा. ) इति। "ततः पदेभ्यः पदार्थाः पदार्थेभ्यः संसर्गः" ( विव. ) इति। "विभक्त्यन्तपदाभ्यां स्वार्थानुभवौ जन्येते, तादृशानुभवविषयत्वमेव पदार्थं-स्याभिहितत्वम्। तदुत्तरन्तु तादृशानुभवाभ्यामेव विभक्त्यन्तपदार्थयोः संसर्गा-नुभवः न तु पदेन, तथा च पदाभिहितयोरर्थयोरन्वयधीः, न तु विभक्त्यन्तपदार्थयो र्मध्ये एकपदार्थान्वितस्यापरपदार्थस्य पदजन्यानुभव" ( सि० वि० न्या० र० ) इति च।

शब्द का विषय नहीं हो सकता। जैसाकि आत्मतत्त्वविवेक में उदयनाचार्य ने कहा है—"समयसीमविक्रमत्वाच्छब्दस्य" [ संकेतग्रह की सीमा में ही शब्द का पराक्रम ( शाब्दबोधजनकता ) होता है ] अर्थात् शक्तिग्रह के बिना शब्द शाब्दबोध का जनक नहीं होता। यदि वह ( शब्द ) संकेतग्रह की सीमा का उलङ्घन करता है, अर्थात् शक्तिग्रह के बिना भी यदि शब्द शाब्दबोध का जनक हो जाये तो शशविषाणादिशब्द से कूर्मरोमादि विषयकविकल्पज्ञान की उत्पत्ति होनी चाहिए। यदि कहा जाय कि शश-विषाण शब्द का ऐसा ही स्वभाव है कि वह शशविषाणविषयक विकल्प को ही उत्पन्न करता है न कि कूर्मरोमादि विषयकविकल्प, तो यह कथन उचित नहीं; क्योंकि ऐसा मानने पर व्युत्पन्न ( शक्तिज्ञानसम्पन्न ) के समान अव्युत्पन्न ( शक्तिज्ञानशून्य ) पुरुष को भी शशविषाणविषयक विकल्पज्ञान होना चाहिए, ( यतः शब्दस्वभाव दोनों के लिए समान है )।

समाधान—जैसे आप ( वेदान्ती ) के सिद्धान्त में पदनिष्ठ शक्तिज्ञान ही विशिष्ट वाक्यार्थ बोध का जनक माना जाता है, न कि पृथक् विशिष्टार्थ में वाक्यशक्ति ग्रह। उसी प्रकार प्रत्येक शशादिशब्दों का शक्तिग्रह ही अखण्ड अलीकविषयक शाब्द-

**लीकबोधमाधत्ताम्, अन्यथा 'शशविषणात्कूर्मरोम भिन्नम्' 'गवि शशविषाणं नास्ती' त्यादिप्रतीतेरनुभवसिद्धाया भवताऽपलपनीयत्वप्रसंगात्, अलीके न व्यवहार्यत्वमिति वदतापि भवताऽलीके व्यवहार्यत्वनिषेधस्याशक्यत्वेनान्यथाऽलीके व्यवहार्यत्वोपगमप्रसङ्गेनानलीके एव तन्निषेधे स्वसिद्धान्ताक्षेपकत्वप्रसङ्गाच्च, तथा च यथा यथाऽलीके व्यवहार्यत्वनिषेधस्तथैव तथैव तस्य व्यवहार्यत्वप्रसङ्ग इति चित्रम् । व्यवहार्यत्वव्यापकं सत्त्वमित्यभिधानेनापि फलतोऽलीके व्यव-**

तथैव मन्मते शशशृङ्गमित्यादिस्थलेषु शशादिशब्दानां पार्थक्येन शक्तिग्रह एवाखण्डालीकवाक्यार्थबोधमाधत्स्यते इतिभावः । वैपरीत्ये बाधकमुपन्यस्यति—अन्यथेति । अखण्डालीकबोधाधानाभावे । अलीकस्याव्यवहार्यत्वमप्यपहस्तयति—अलीके न व्यवहार्यत्वमिति वदतापीति । वदतापीत्यत्र हेत्वर्थेऽपिः । तथा च निषेधाशक्यतायां तादृशाभिलाप एव हेतुः । अन्यथा तादृशाभिलापेनैव तद्व्यवहार्यत्वनिषेधाभ्युपगमे निषेध्यत्वेन व्यवहारसत्त्वाद् व्यवहार्यत्वप्रसङ्गः । अनलीके च तादृशाभिलापासत्त्वात्तत्र व्यवहार्यत्वनिषेधप्रसङ्गः ।

ननु नालीके व्यवहारविषयतां प्रतिषेधामोऽपित्वलीके न व्यवहार्यत्वमित्यस्य व्यवहार्यत्वव्यापकं सत्त्वमिति तात्पर्यसत्त्वात्सत्त्वव्यवहार्यत्वयोर्व्याप्यव्यापकभावो मदभिप्रेतः । तथा च सत्त्वव्यावृत्त्याऽलीकेऽव्यवहार्यत्वं पर्यवस्यति यथा भेदनिषेधेनाभिन्नत्वमिति चेत्तत्राह—व्यवहार्यत्वव्यापकमिति । फलतः

बोध का जनक होता है । अन्यथा आपके मत में "शशविषाणात् कूर्मरोम भिन्नम्," "गवि शशविषाणं नास्ति" ( शशविषाण से कूर्मरोम भिन्न है, गौमें शशविषाण नहीं है ) अनुभवसिद्ध इन प्रतीतियों का अपलाप हो जायेगा । और "अलीके न व्यवहार्यत्वम्" ( अलीक व्यवहारयोग्य नहीं है ) इस प्रकार कहने वाले आप भी अलीक में व्यवहार्यत्व का निषेध नहीं कर सकेगें, अन्यथा अलीक में व्यवहार्यत्व के उपगम का प्रसङ्ग हो जायेगा । फलतः अनलीक में ही व्यवहार्यत्व का निषेधकर आपने अपने सिद्धान्तपर ही आक्षेप किया । तथाच आश्चर्य तो यह है कि जैसे जैसे आप अलीक में व्यवहार्यत्व का निषेध करेंगे, वैसे ही वैसे अलीक में व्यवहार्यत्वप्रसङ्ग हो जायेगा । ( तात्पर्य यह है कि अलीक में व्यवहार्यत्वनिषेध अलीक स्वीकार किये बिना नहीं हो सकता, अतः निषेधव्यवहार से भी अलीक में व्यवहार्यत्व आ ही गया ) । "व्यवहार्यत्व का व्यापक-सत्त्व है" इस कथन से भी फलतः अलीक में व्यवहार्यत्व की निषेधबुद्धि अवश्य माननी होगी । [ भाव यह है कि व्यवहार्यत्व एवं सत्त्व दोनों की—यत्र यत्र व्यवहार्यत्वं तत्र तत्र सत्त्वं इस प्रकार व्याप्ति माननी होगी । वहाँ "व्यापकाभावात् व्याप्याभावः" इस नियम के अनुसार अलीक में व्यापक = सत्त्व के न रहने से व्याप्य = व्यवहार्यत्व का भी अभाव ( निषेध ) आ जाता है ] "शशविषाणात् कूर्मरोमभिन्नम्, गविशशविषाणं

**हार्यत्वनिषेधबुद्धेरवश्योपेयत्वात्। ईदृशस्थलेष्वनुभवापलापं कुसृष्टिकल्पनाञ्चापेक्ष्याखण्डालीकभानोपगमेऽनुभवानुरोधिव्यवहारसौकर्यस्यैव विनिगमकत्वात्। एवञ्चालोकेतिशब्दस्यापि शक्तिग्रहोपपादनमावयोः समानमेव। बौद्धार्थे च शक्तिग्रहोऽन्यत्र सुप्रतीत एवेति नेह वितन्यते। प्रमाणेनासदंशानुल्लेखेऽसत्ख्याति-**

पर्यवसितार्थमादाय। प्रत्येकं शशादिशब्दानां शक्तिग्रहेणाखण्डालीकबोधाधाने विनिगमकमाह—ईदृशस्थलेष्विति। तदभावे शशविषाणात्कूर्मरोमभिन्नमित्यादिपूर्वोक्तानुभवः परिलुप्येत। कुसृष्टिकल्पना = व्यवहार्यत्वव्यापकं सत्त्वमित्यादिकल्पना। बौद्धार्थ इति। बौद्धसत्तायुक्तेऽर्थ इत्यर्थः। अन्यत्रेति। मञ्जूरीकृतमेतन्मञ्जूषायाम्—"शक्यार्थोऽपि बुद्धिसत्तासमाविष्ट एव न तु बाध्यसत्ताऽऽविष्टः। घट इत्यत एव सत्ताऽवगमने "घटोऽस्ति" इति प्रयोगे गतार्थत्वात् "अस्ति" इति प्रयोगानापत्तेः, सत्तया विरोधात् "घटो नास्ति" इत्यनापत्तेश्च। मम तु बुद्धिसतो बाह्यसत्तातदभावबोधनाय "अस्ति" "नास्ति" इति प्रयोगः। किञ्च 'शशशृङ्गं नास्ति" "अङ्कुरो जायते" इत्यतो बोधानापत्तिः। मम तु बुद्धिसन्नङ्कुरो बाह्यरूपेण जायत इत्यर्थः। सा सत्तापि शब्दवाच्येति तद्भावः। किञ्चेच्छादीनामन्तःकरणनिष्ठतया तत्र विषयसामानाधिकरण्येनैव कारणत्वौचित्येन बौद्धपदार्थसत्ताऽवश्यकी।" इति।

"भ्रमेऽधिष्ठानत्वमपि बौद्धस्यैव न बाह्यस्येति सर्वं समञ्जसमिति च।"

जन्मादिसूत्रे ( वे० सू० १।१।२ ) वाचस्पतिरप्याह—'चेतनो हि नामरूपे बुद्धावालिख्य घट इति नाम्ना कम्बुग्रीवादिना रूपेण च बाह्यं घटं निष्पादयति। निर्वर्त्यस्यापि घटस्यान्तःसंकल्पात्मनासिद्धस्य कर्मकारकत्वम् "घटं करोति" इत्यादाविति"।

नन्वसत्ख्यातेः प्रमाणविषयत्वे सदर्थविषयकत्वात् प्रमात्वस्य, प्रमाणस्यासद्विषयकत्वे प्रमात्वमेव व्याहन्येत। न प्रमाणस्यासद्विषयकत्वं, प्रमाविषयत्वादसतः सत्त्वं प्रमाणस्याप्रमाणता वा स्यात्। तत्कथमसत्ख्यातिरित्याह—प्रमाणेनासदंश इति। रजतभानानुपपत्त्या तादृशसंसर्गभानं प्रमाणेन यथा त्वन्मते

नास्ति" ईदृशस्थलों में अनुभव का अपलाप तथा कुसृष्टिकल्पना को अपेक्षा अखण्ड अलीक पदार्थ भान मानना ही उचित है क्योंकि इसमें अनुभावनुरोधीव्यवहार का सौकर्य ही विनिगमक है। एवञ्च अलीक शब्द का शक्तिग्रहोपपादन भी हम दोनों का समान ही है। और "बौद्धार्थ में शक्तिग्रह होता है" यह तो अन्यत्र = मञ्जूषा आदि में सुप्रसिद्ध ही है, अतः यहाँ इसकी चर्चा नहीं करते। यदि कहें कि—प्रमाण के द्वारा असदंश का उल्लेख न मानने पर असत्ख्याति नहीं बनेगी, तथा उल्लेख मानने से प्रमाणों का अप्रामाण्य अथवा असत् का भी सत्त्व सिद्ध हो जायेगा। [ यहाँ तात्पर्य यह है कि असत् के ज्ञान का ही नाम असत् ख्याति है, यदि प्रमाण के द्वारा असत् की ख्याति ( ज्ञान ) ही नहीं मानेंगे तो असद्विषयक ज्ञान में असत्ख्यातित्व कैसे सिद्ध होगा। तथा असत् का भान मानने पर प्रमाण का अप्रामाण्य हो जायेगा क्योंकि सदर्थविषयक ज्ञानजनक ही प्रमाण कहा जाता है ] किन्तु यह कथन ठीक नहीं है क्योंकि इदं रजतम् आदि

त्वासिद्धेस्तदुल्लेखे तु प्रमाणस्याप्रमाणताया असतो वा सत्त्वस्यापत्तेरिति तु न सत्, संसर्गांशेऽसत्ख्यातेः प्राचीनतार्किकैरपि स्वीकृतत्वेन तद्विषयकप्रमाणेऽप्युक्तपर्यनुयोगसाम्यात्, ज्ञानपारतन्त्र्येणासद्भानं प्रमाणेऽपीति समाधानं तु समानम्, संसर्गस्य सत्त्वेऽपि व्यधिकरणप्रकारकत्वेनैव भ्रमत्वमिति नव्यमतं तु बहुशः क्षुण्णं शारदायाम्। वस्तुतस्तु मन्मतेऽसत्ख्यातेरपि सांवृतत्वेन तत्र प्रमाणानुयागोऽनाकलितपरसिद्धान्तस्यैवेति भवत्स्वेव तादृशपर्यनुयोगनिराकरणभर इति।

लघुचन्द्रिकोक्तमनुवदति केचित्त्विति। इति दर्शनसर्वस्वे शून्यवादे राजहंसः।

स्वीमियते तथैव ममापि इति समः समाधिरित्याह—ज्ञानपारतन्त्र्येणेति।

ननु पुरोवर्तिरजतयोः संसर्गोऽपि नासन्, असतो भानासम्भवात्। न हि केवलमसद्भासितुं न क्षमते, सदुपरक्तन्तु भासत इति शक्यसमर्थनम्, असच्चापरोक्षानुभवविषयश्चेति व्याहतम्, नो खल्वसन् संसर्गः सत्तादात्म्यङ्गत इति वदितुं क्षमसे, सदसतोस्तादात्म्यानुपपत्तेः; उपरागानुपपत्तेश्च। असंश्च क्वचित्सम्बद्धश्चेति व्याहतम्।

यदि बौद्धैः सन्धि विधायासतोऽप्यपरोक्षानुभवं समर्थयसे तर्हि सर्वांश एवासत्ख्यातिमभ्युपगत्याऽपि स समर्थनीय इति व्यर्थोऽयं तव स्याद् बौद्धविवादः। अयुक्तमिति मत्वा चेदवहेलितन्नव्यनैयायिकैः, यत्र च गृहे एव विवादस्तत्रापरैः किमु वाच्यमिति किं मृतस्य मारणेनेति। तदुक्तं तर्कचणैः—"सन्मात्रविषय एव भ्रमः, रजतपुरोवर्तिनोः सत्त्वात्, न च संसर्गोऽसन् तदुभयातिरिक्तस्य प्रमाणानारोहात् संसर्गारोपस्थलेऽपि एवमेव। भ्रमत्वञ्च तद्भाववति तत्प्रकारकत्वादि" इति। एतेन पुरोवर्तिनं रजततया प्रत्येमीत्यनुभवोऽपि सत्संसर्गाविषयकत्वेनैवोपपादनीय इति नव्यमतन्तु शारदायां निरस्तमित्युक्तम्—बहुशः क्षुण्णं शारदायामिति। सूचितश्चैतच्चित्कलायामपि ( पृ० ३० ) प्राक्। वस्तुतस्तु निरुक्तदिशा निर्वक्तुमशक्यत्वं सांवृतत्वं पुष्णात्यसत्ख्यातेरित्याह—वस्तुतस्तु इति।

स्थलों में संसर्गांश में असत्ख्याति तो प्राचीन तार्किकों ने भी मानी है। अतः तार्किकमत में भी तद्विषयक प्रमाण में उक्तपर्यनुयोग ( अप्रमाण्यापत्ति ) समान ही है। यदि कहें कि ज्ञानपारतन्त्र्येण ( ज्ञान के माध्यम से ) प्रमाण में भी असद् का भान हो सकता है, तो यह समाधान हम ( शून्यवादी ) भी कर सकते हैं। "संसर्ग के सत् होने पर भी व्यधिकरणप्रकारकत्वेन ही भ्रमत्व हो सकता है" यह नव्यमत तो शारदा में बहुशः निराकृत हो चुका है। वस्तुतस्तु मेरे ( शून्यवादी ) मत में असत्ख्याति भी सांवृत ही है अतः तद्विषयक प्रमाणों पर आक्षेप शून्यवादसिद्धान्तानभिज्ञ ही कर सकता है। तथा च तादृशपर्यनुयोग के निराकरण का भार आप ( तार्किक ) के ही ऊपर निहित है।

**केचित्तु—निरुपाख्यादिपदानामलीकेऽनुभावकत्वाख्यशक्तिविरहेऽप्यननुभवरूपमलीकविषयकं विकल्पं प्रति योगेन लक्षणया सङ्केतविशेषेण वाऽलीकोपस्थितिद्वारा जनकत्वमावश्यकम्, तादृशविकल्पस्य साक्षिसिद्धत्वात्, साक्षी च भ्रमप्रमाबहिर्भूत इति नासत्ख्यातित्वासिद्धिर्न वा प्रमाणस्याप्रमाणत्व-**

अलीकस्य विकल्पवृत्तिविषयत्वमभ्युपगच्छतां चन्द्रिकाकाराणाम्मतमाह—केचित्त्विति। अयमाशयः—न निरूपाख्यादिपदेनालीकविषयकोऽनुभवो जन्यतेऽनुभवस्य सदर्थविषयकत्वनियमादलीकस्यानुभवविषयत्वे सत्त्वापत्तेः। अत एव न स्मृतिरपि, तस्या अनुभूतविषयकत्वनियमात्तदभावेऽभावादित्याह—अनुभावकत्वाख्यशक्तिविरहेऽपीति। अनुभावकत्वम् = शाब्दानुभवजनकत्वम्। न च विकल्पोऽप्यनुभवात्मकः शङ्कनीयस्तस्य वस्तुशून्यत्वेन शब्दमाहात्म्यादेवोत्पत्तेः। तदुक्तम् "शब्दज्ञानानुपातिः वस्तुशून्यो विकल्प" इति। वस्तुशून्यः = सदविषयकः। इत्याह—अननुभवरूपमिति। योगेनेति। शास्त्रकल्पितावयवार्थनिरूपिता शक्तिर्योगः। उपाख्याया अभाव इति निरूपाख्यमित्यव्ययीभावसमासवृत्त्येत्यर्थः। उपाख्या चास्तीति धीविषयत्वमित्यन्यत्।

नन्वेवं योगशक्त्या उपाख्याभावस्योपस्थितिः स्यान्नत्वलीकस्येत्यत आह—लक्षणयेति। उपाख्याभाववाचकस्य निरूपाख्यपदस्य तदाश्रयेऽलीके लक्षणयेत्यर्थः। ननु सति संकेतसम्भवे किमिति जघन्याया वृत्तेराश्रयणमिति चेत्तत्राह संकेतविशेषेण वेति। अनेन पदेनालीकं बोध्यमित्यनुपदं वक्ष्यमाणेन।

"समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्"

इति हरेरुक्त्या राजपुरुषवन्निरूपाख्यपदस्याप्येकविशिष्टार्थोपस्थापकत्वात्।

विकल्पवृत्तौ प्रमाणमाह—तादृशविकल्पस्य साक्षिसिद्धत्वादिति। ननु साक्षिणः प्रमात्वे तद्विषयीभूतस्य विकल्पस्यापि सत्त्वापत्त्याऽसत्ख्यातिर्न सिद्धेत्। भ्रमत्वे च तस्य प्रमाणस्य स्वात्मकस्याप्रमाणत्वप्रसङ्गः। तथा च न विकल्पसिद्धिरित्याशङ्क्याह—साक्षी चेति। साक्षी हि नित्यतया गुणजन्यत्वाभावान्न प्रमारूपः। दोषजन्यत्वाभावाच्च न भ्रमः, परमतसिद्धनिर्विकल्पकज्ञानवत्।

लघुचन्द्रिकाकार कहते हैं कि निरुपाख्यादि पदों में अलीकविषयक अनुभव की उत्पादिका शक्ति न होने पर भी उनमें अननुभवरूप अलीकविषयकविकल्पात्मकज्ञान के प्रति योग ( व्युत्पत्ति ) से या लक्षणा से अथवा संकेतविशेष ( शक्तिविशेष ) से अलीकोपस्थिति द्वारा जनकता अवश्य मन्तव्य है। तथा च तादृश-

प्रसङ्गः, न च निर्धर्मकत्वादलीके निरुपाख्यादिपदानां योगादिवृत्त्यसम्भव इति वाच्यम्, तस्येतरधर्मशून्यत्वेऽप्यभावस्य विकल्पविषयत्वादेश्च धर्मस्य तत्र स्वीकारेण 'उपाख्याया अभावो निरुपाख्य' मित्यादियोगेन वाचकशब्दरूपोपाख्याविरहादेरलीके साक्षिणा प्रसिद्धचोक्तविरहाश्रयालीकोपस्थितिसम्भवेन लक्षणासम्भवात्, 'अनेन पदेनालीकं बोध्य' मिति संकेतसम्भवाच्चेति— वदन्ति। अस्या रीतेरादर्तव्यत्वे शून्यवादे परमतसिद्धसाक्ष्यनभ्युपगमेऽप्यनुभववैषम्यायोगेन भ्रमप्रमाबहिर्भूतक्षणिकज्ञानपरिकल्पनयैव निर्वहणीयम्, युगपज्ज्ञानाज्ञानसम्भवस्य विज्ञानवादे उदीरितत्वादिति। तस्माच्छून्यतैवाद्वया विजयत इति शिवम्।

इति दर्शनसर्वस्वेऽनिर्वचनीयतावादे शून्यवादपरिष्कारप्रकारः।

•

ननु पदवृत्तेः किञ्चिद्धर्मविशिष्टविषयकत्वनियमादलीकस्य सर्वधर्मशून्यतया न पदवृत्तिविषयत्वमित्याशयेन शङ्कते—न चेति। निरुक्तशङ्कां निराचष्टे—तस्येतरधर्मशून्यत्वेऽपीति। तस्यालीकस्य। अभावस्योपाख्याभावात्मकस्य धर्मस्य। तत्रालीके। परमतसिद्धेति। वेदान्तिमतसिद्धस्येत्यर्थः। अनुभववैषम्यायोगेनेति। उभाभ्यामपि निरुक्तानुभवस्यावश्यमभ्युपगमनीयत्वात्। साक्षिपदाभिषिक्तेन क्षणिकविज्ञानेनानुभवस्योपपादनीयत्वादाह—भ्रमप्रमेति। प्रकरणार्थमुपसंहरति—तस्मादिति। विजयत इति। यौक्तिकोत्कर्षवशाद् द्वैतदर्शनान्तरापेक्षया शून्यतैवोत्कर्षतां गतेति शिवम्।

नमो बुद्धाय सिद्धाय नमो धर्माय तापिने।
नमः संघाय महते त्रिभ्योऽपि सततं नमः॥
शून्यतालिङ्गितं सर्वमुत्सर्गेण निरूपितम्।
ब्रह्मतत्त्वेऽपवादाय तर्कैः कर्कशतां गतैः॥

इति दर्शनसर्वस्वव्याख्यायां चित्कलाभिधायां शून्यवादः।

विकल्प के साक्षीसिद्ध होने से एवं साक्षी के भ्रमप्रमाबहिर्भूत होने से न असत्ख्यातित्व असिद्ध है और न प्रमाण के अप्रामाण्य का प्रसङ्ग (प्राप्ति) ही है। यदि कहें कि—अलीक के निर्धर्मक होने से उसमें निरुपाख्यादिपदों की योगादिवृत्ति (व्युत्पत्तिलक्षणासंकेतविशेषवृत्ति) सम्भव नहीं है, तो यह कथन उचित नहीं; क्योंकि अलीक के इतर धर्मशून्य होने पर भी उस (अलीक) में अभावरूपधर्म तथा विकल्पविषयत्वादि धर्म माने जाते हैं, अतः "उपाख्याया अभावो निरुपाख्यम्" (उपाख्या का

## स्वातन्त्र्यवादः

**अथोक्तवादद्वये ज्ञानज्ञेयाभेदातिरिक्तांशं निराकर्तुं नित्यं स्फुरणतत्त्वं च**

## स्वातन्त्र्यवादे चित्कला

कुमारि क्लीं नमस्ते

गृणते तत्त्वमात्मीयमात्मीकृतजगत्त्रयम् ।
उपायोपेयभूताय शिवाय गुरवे नमः ॥

विना येन न किञ्चित्स्यात्समस्ता अपि दृष्टयः ।
अनस्तमितसंबोधस्वरूपं तं स्तुमः शिवम् ॥

शून्यतालिङ्गितं सर्वमिति मतमालोचयितुमुत्सर्गेण शून्यवादं प्रदर्श्य

अभाव निरूपाख्य है ) इस प्रकार अलीक में निरूपाख्यपद की व्युत्पत्ति हो सकती है। वाचक शब्दरूप उपाख्या का अभाव आदि अलीक में साक्षी के द्वारा प्रसिद्ध होने से तादृश उपाख्याविरहाश्रयतया अलीक की उपस्थिति होती हैं अतः उसमें लक्षणा भी की जा सकती है और "अनेन पदेन अलीकं बोध्यम्" इस प्रकार उसमें संकेतग्रह भी सम्भव है।

चन्द्रिकोक्त इस रीति का समादर करने पर शून्यवाद में परमत ( वेदान्त ) सिद्ध साक्षी के न मानने पर भी अनुभववैषम्य न होने से भ्रम प्रमा बहिर्भूत क्षणिकज्ञान की कल्पना से ही सब कार्य निर्वाह्य है। [ तात्पर्य यह है कि जैसे वेदान्ती भ्रमप्रमा-बहिर्भूत साक्षी मानकर सर्वत्रानुभव की उपपत्ति करता है, वैसे ही शून्यवादी भी साक्षी को न मानकर तत्स्थानापन्न क्षणिक विज्ञान की कल्पना कर उसीसे सर्वत्र अनुभव की उपपत्ति कर लेगा ] युगपत् नाना ज्ञान की उत्पत्ति सम्भव है" यह विज्ञान वाद में कह चुके हैं। तस्मात् अद्वितीय एक शून्यता का ही विजय है अर्थात् वही वास्तविक तत्त्व है।

इति दर्शनसर्वस्व-भाषानुवादे शून्यवादः ।

## स्वातन्त्र्यवाद

पूर्वोक्त विज्ञानवाद एवं शून्यवाद में प्रतिपादित ज्ञानज्ञेयाभेद से अतिरिक्त अंश के

वेदान्तिसाधारण्येन व्यवस्थापयितुं काश्मीरिकशैवाद्वैतिमतमनुसृत्य स्वातन्त्र्यवादः प्रस्तूयते।

विज्ञानवादोक्तरीत्या ज्ञानस्य स्वातिरिक्ताविषयकत्वव्यवस्थितौ यदि तस्य क्षणिकत्वं तदा घटमहमज्ञासिषमित्यादिरनुभवो नानुरुध्येत, न ह्ययं भ्रमो

## दर्शनसर्वस्वे स्वातन्त्र्यवादे राजहंसः

घटमहमज्ञासिषमिति। अहमर्थविषयकत्वावच्छेदेन भूतताविषयकत्वावच्छेदेन चास्यानुभवत्वम्, घटज्ञानविषयकत्वावच्छेदेन त्वग्रे स्मृतित्वमुक्तम्।

चितौ शून्यतामपवदितुं स्वातन्त्र्यवादमुपक्रमते—अथेति। ज्ञानज्ञेयाभेद इति। प्रकाशमानं न पृथक् प्रकाशादित्याद्युक्त्या प्रकाश्यस्य प्रकाशात्मकत्वम् ज्ञानसत्तातिरिक्तसत्ताशून्यत्वमिति तु वक्ष्यति। तदतिरिक्तांशः = चितः क्षणिकत्वशून्यत्वादिकम्। वेदान्तिसाधारण्येनेति। ब्रह्मवादस्वातन्त्र्यवादोभयसम्मतम्। व्यवस्थापयितुमिति। अप्रामाण्यज्ञानानास्कन्दितप्रमाविषयीभवनं व्यवस्था। स्वातन्त्र्यवाद इति। चितिः स्वतन्त्रा विश्वसिद्धिहेतुरिति प्रत्यभिज्ञासूत्रसूचितं स्वप्रकाशे स्वात्मकविश्वप्रकाशे च परानपेक्षत्वरूपस्वातन्त्र्यमनुपदमेव वक्ष्यमाणम्। विशेषतस्त्वग्रे वक्तव्यम्। तदुद्यते—उच्यतेऽस्मिन् प्रकरणे इति बाहुलकादधिकरणे घञ्। अथवा वदनं वादः वदेर्घञ्। स्वातन्त्र्यस्य वाद वैखरीभूमौ परामर्शविशेषस्तत्प्रतिपादकवाक्यसंदर्भो वा। स्वातन्त्र्यादेव स्वात्मनः प्रत्यभिज्ञानात्प्रत्यभिज्ञावादोऽपि, अस्मिन्नरादित्रयाणां समावेशात् त्रिकवादोऽपीति समेषामेतेषामनर्थान्तरतेति बोध्यम्। प्रस्तूयत इति। स्वातन्त्र्यवादोक्तानामपि केषाञ्चित् पदार्थानां विवर्तवादे निरसिष्यमाणत्वात्प्रस्तूयत इत्युक्तम्।

विज्ञानक्षणिकत्वस्यानुभवविरुद्धतामापादयितुं युक्तिमादर्शयति—घटमहमज्ञासिषमिति। अयमभिसन्धिः—घटमहमज्ञासिषमित्यनुभवस्य घटज्ञानविषयकत्वन्तावदनुभवसिद्धम्। घटज्ञानञ्चात्र घटस्मृतिरेव वा घटानुभवो वा, तस्य पूर्वं जातस्य क्षणिकत्वान्नाशोऽप्यनुमन्तव्यः। द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वात् क्षणिकत्वस्य। न चेदानीमेव प्रोक्तज्ञानद्वयस्योत्पत्तिरास्थीयत इति भणितुं शक्यम्, योगपद्यस्याननुभवात्। विनष्टे च पूर्वस्मिन् ज्ञाने नास्य विषयत्वसम्भवः,

निरासार्थ तथा वेदान्तसाधारण नित्यस्फुरणतत्त्व के निरूपणार्थ शून्यवादनिरूपणानन्तर काश्मीरशैवाद्वैतमतानुसार स्वातन्त्र्यवाद का प्रस्ताव करते हैं।

विज्ञानवादोक्तरीति से ज्ञान में स्वातिरिक्ताविषयकत्व सिद्ध होने पर यदि उसे क्षणिक माने तो घटमहमज्ञासिषम् इत्यादि अनुभव नहीं बनेगा, क्योंकि यह अनुभव घटज्ञान को विषय करता हुआ उसे स्थायि सिद्ध करता है। बाधक के न होने से

**बाधकाभावात्, न च पूर्वकालीनस्य ज्ञानस्यैतत्कालीनभिन्नत्वे तद्विषयत्वसम्भवः। यत्तु—स्थाय्यात्मोपगमेऽपि पूर्वोपदर्शितरीत्या स्वभावविशेषालम्बनध्रौव्येण स्वकारणसामर्थ्यविशेषकल्पनयैव तादृशाकार उपपादनीय इति; तत्सत्यम्, स्वभावविशेषस्य सर्वसाधारणस्य स्वातन्त्र्यनाम्नाऽस्माभिरपि समर्थयिष्यमाणत्वात्, परन्त्वसौ स्वभावविशेषः क्षणिकस्य ज्ञानस्य वा स्थायिनो वेति विमर्शे**

एतन्मतेऽभेदे हि विषयविषयिभावस्य सत्त्वात्। न च भिन्नकालीनयोरभेदः सम्भवति क्षणिकत्वपक्षे, क्षणिकत्वादेव। तथा च ज्ञानस्य स्थायित्वपक्ष एव तादृशानुभवस्य सामञ्जस्यं नान्यथेति ज्ञानस्य क्षणिकत्वमपास्य स्थायिता स्वीकार्या।

इत्यादिरत्रादिना 'घटज्ञानवानहमासमित्यस्य संग्रहः। नानुरुध्येतेति। अनुरोधोक्त्या सर्वसम्मतत्वं द्योत्यते। बाधकाभावादिति। ज्ञानप्रयुक्तावस्थिति-सामान्यविरहो हि बाधपदार्थः। न चास्यानुभवस्य विरहप्रयोजकं किञ्चिज्ज्ञानमुपलभामहे, येनैतस्य भ्रमत्वं स्यात्। न चेति। न हीत्यर्थः। तद्विषयत्वसम्भव इति। तद्विषयत्वस्य तदभेदव्याप्यत्वात्। भेदस्तु कालभेदप्रयोज्यः स्पष्टः। अन्तत आकारवैचित्र्यप्रयोजकतया स्वभावविशेषस्य शरणीकरणीयत्वेन तेनैव तादृशानुभवस्योपपत्तिमाशङ्क्य निराचष्टे—यत्त्विति। पूर्वोपदर्शितरीत्या ( ६२ पृष्ठोक्तरीत्या )। सत्यमिति। इषन्निराकार्यत्वे। भवदुक्तौ बहु मयाऽङ्गीकार्यम्। यन्नाङ्गीक्रियते तत्रोच्यत इत्यभिप्रायः। स्वभावविशेषो हि स्वस्वरूपात्मा, स्वातन्त्र्यापरपर्यायः। हन्त तर्हि क्षणिकविज्ञानस्यैव स इति जितं मयेति तत्राह—परन्त्वसाविति। अयं भावः, न वयं स्वभावविशेषोपासनं विधद्मः, विश्वजीवातोस्तस्य स्वातन्त्र्यरूपस्य विशेषतः पुरतः प्रतिपादयिष्यमाणत्वात्, किन्तु नासौ क्षणिकवित्तेस्तथात्वे तस्यानन्त्यापत्तेः। अपि त्वेक एव स भगवत्याश्चित्स्वरूपवित्तेरेकत्वादभ्युपगन्तव्यः। द्वितीय एव कल्पो युक्त इति। तत्र हेतुः—

इसे भ्रम भी नहीं कह सकते। और यदि पूर्वकालीन ज्ञान एतत्कालीन ज्ञान से भिन्न माना जाय तो वह ( पूर्वज्ञान ) उस ज्ञान का विषय न हो सकेगा। [ अतः उसे क्षणिक न मान कर नित्य ( स्थायि ) मानना ही उचित है ]।

जो यह कथन है कि स्थायी आत्मा मानने पर भी पूर्वोक्तप्रकार से उसके स्वभावविशेष का मानना आवश्यक है। अतः स्वकारण में सामर्थ्यविशेष की कल्पना से ही घटमहमज्ञासिषम् एतादृश अनुभव की उपपत्ति ज्ञान के क्षणिकत्वपक्ष में की जा सकती है, तो यह कथन सत्य है, क्योंकि सर्वसाधारण स्वभावविशेष का समर्थन स्वातन्त्र्यनाम से हम ( स्वातन्त्र्यवादी ) भी करेङ्गे, किन्तु वह स्वभावविशेष क्षणिकविज्ञान का है या स्थायीविज्ञान का, ईदृश विचार करने पर—द्वितीय कल्प ही युक्तियुक्त होता है,

द्वितीय एव कल्पो युक्तः, तत्र स्वभावविशेषस्याप्येकस्यैव कल्पनीयत्वेन लाघवात्, अन्यथा क्षणिकज्ञानस्यानुत्पत्तिदशायां तादृशस्वभावविशेषाणामनन्तानां कल्पनम्, पूर्वपूर्वज्ञानेषु च तदीयानन्तसम्बन्धकल्पनम्, तादृशस्वभावानां पूर्वपूर्वज्ञानेषु सत्त्वेऽपि घटमहमज्ञासिषमित्यादिरनुभवः कुतो नाजनिष्टेति पर्यनुयोगवारणाय तदुत्पादविरोधिस्वभावानामनन्तानां कल्पनम्, परस्परविरुद्धस्वभावानाञ्च सामानाधिकरण्यकल्पनम्, सामानाधिकरण्ये च सति विरोध एव नेति पुनरप्युक्तपर्यनुयोगवारणायानन्तस्वभावान्तरकल्पनम्, पुनश्चैवम्,

तदीयानन्तसम्बन्धेति। असाधारणधर्मस्वरूपः स्वभावविशेषो यदि, तदेदम्। तस्य ज्ञानात्मकत्वे त्वेतावतेत्यादिना वक्ष्यति।

तत्र स्वभावविशेषस्येति। क्षणिकविज्ञानस्य तादृशस्वभावविशेषकल्पने बाधकमादर्शयति—अन्यथेति। एकस्य स्वभावविशेषस्याकल्पने। ते चानन्तस्वभावविशेषा न सम्बन्धमन्तरा स्वाश्रये ज्ञाने स्थातुमर्हन्तीति तदर्थमनन्तसम्बन्धकल्पनमप्यावश्यकमित्याह—पूर्वपूर्वज्ञानेषु चेति। पूर्वसंविदः स्वोत्तरानुभवजनकत्वस्वभावत्वे कुतो न घटमहमज्ञासिषमित्यनुभवो जनित इत्यत आह—पूर्वपूर्वज्ञानेषु सत्त्वेऽपीति। परस्परविरुद्धस्वभावानाञ्चेति। एकस्मिन्नेव पूर्वज्ञाने उत्तरज्ञानोत्पादकत्वस्वभावानां तदुत्पादप्रतिबन्धकस्वभावानाञ्चेत्यर्थः। विरोध एव नेतीति। सहानवस्थानलक्षण एव भावाभावयोर्विरोधः। प्रकृते च तदुत्पादकत्वतदनुत्पादकत्वविरुद्धस्वभावयोर्ज्ञानात्मकैकाधिकरणकत्वस्वीकारात् सहावस्थानमेव, तथा च विरोध एव तयोर्न स्यादितिभावः। पुनरप्युक्तपर्यनुयोगवारणायेति। तादृशानन्त स्वभावानां पूर्वपूर्वज्ञानेषु सत्त्वेऽपि घटमहमज्ञासिष-

क्योंकि उस पक्ष में एक ही स्वभावविशेष कल्पनीय होने से लाघव है। अन्यथा ज्ञानक्षणिकत्व पक्ष में—क्षणिकज्ञान की अनुत्पत्ति दशा में अनन्त तादृशस्वभावविशेषों की कल्पना करनी होगी। ( पूर्वज्ञानका ऐसा स्वभाव है कि वह उत्तरज्ञान को उत्पन्न करता ही है तब उत्तरज्ञान क्यों नहीं उत्पन्न हुआ, इसके लिए उस ज्ञान में ऐसे स्वभाव की भी कल्पना करनी होगी कि वह उत्तरज्ञान को उत्पन्न नहीं किया )। और फिर पूर्वपूव ज्ञानों में तादृशस्वभाव विशेषों के अनन्त सम्बन्धों की कल्पना करनी होगी। 'पूर्वपूर्व ज्ञानों में उत्तरज्ञानोत्पादकत्वादि स्वभावों के रहने पर भी उसने 'घटमहमज्ञासिषम्' इस अनुभव को उत्पन्न क्यों नहीं किया' ईदृश आक्षेपनिरासार्थ उसी पूर्वज्ञान में तादृश अनुभवोत्पत्ति के विरोधी अनन्त स्वभावों की कल्पना करनी होगी। ततः उसी ज्ञान में तदुत्पादकत्वतदनुत्पादकत्व परस्परविरुद्धस्वभावों के सामानाधिकरण्य की कल्पना करनी होगी। ततः 'सामानाधिकरण्य होने पर विरोध ही न रहेगा' ईदृश शंकासमाधान के लिए पुनः अनन्त स्वभावान्तर—अर्थात् ज्ञान का ऐसा स्वभाव है कि उसमें परस्पर

**उक्तज्ञानोत्पादविरोधिस्वभावविशेषधारोच्छेदिस्वभावविशेषस्य चोक्तज्ञानजनकज्ञाने कल्पनम्, पुनश्च तस्यामेव धारायां कालान्तरे उत्पस्यमानोक्तज्ञानजातीयज्ञाननिर्वाहाय तदुत्पादानुकूलतद्विरोधिस्वभावधाराकल्पनं चेत्यादि ब्रूहि मध्यस्थतामास्थाय कस्य प्रमाणस्य गोचरो येन नित्यामेकामनुभूतिमिति ज्ञानं कुतो न जनित इति पर्यनुयोगः ।**

उत्पत्स्यमानेति द्वितीयज्ञानान्वयि । तदुत्पादानुकूलतद्विरोधीत्यत्र द्वन्द्वः ।

अनन्तस्वभावान्तरकल्पनमिति । ज्ञानस्यैष स्वभावो यत्तत्र विरुद्धयोरपि स्वभावयोः सामानाधिकरण्यमपि भवत्येव । धर्मधर्मिणोरभेदात्, अवस्थितिरत्रतादात्म्येन । पुनश्चैवमिति । 'तदुत्पादविरोधि' इत्यादिना पुनरप्युक्तपर्यनुयोगवारणायानन्तस्वभावान्तरकल्पनम् । एवं = पूर्वोक्तरीत्येत्यर्थः । ईदृशः स्वभाव एव कथमिति जिज्ञासायाम्—तस्यापर्यनुयोज्यत्वकल्पनमपि स्यादित्याशयेनाप्याह—पुनश्चैवमिति । तस्यापर्यनुयोज्यत्वमपि न युक्तिसहमित्यनुपदमेव वक्ष्यति—अनित्यानामित्यादिना । किञ्च—सत्यपि विरुद्धयोरपि सामानाधिकरण्ये यदि विरोधोऽप्यस्त्येव तर्हि सार्वदिक उत्पादो वा स्यादनुत्पाद एव वा स्यादित्याक्षेपवारणाय तन्निराकारकमनन्तस्वभावान्तरं तदीयानन्तसम्बन्धानामपि कल्पनमित्यप्युक्तमेव—पुनश्चैवमित्यनेनैव ।

किञ्च घटमहमज्ञासिषमिति ज्ञानोत्पादविरोधिस्वभावविशेषसन्तानस्य स्वीकारे तादृशस्वभावविशेषसन्ततिसत्त्वे उक्तज्ञानजननमेव न स्यात्, प्रतिबन्धकस्य विद्यमानत्वात्, सुषुप्त्यादिभंगप्रसङ्गश्चेति तदर्थं तादृशधारोच्छेदिस्वभावविशेषकल्पनमपि कार्यमित्याह—उक्तज्ञानोत्पादविरोधीति । ननु तर्हि तदेव ज्ञानं सर्वदैव स्यान्न तु तत्सजातीयं ज्ञानान्तरम्, न चेष्टापत्तिः, व्यवहारानुरोधेनोक्तज्ञानसजातीयज्ञानोत्पादस्यावश्यमङ्गीकरणीयत्वादित्यत आह—पुनश्च तस्यामेवेति ।

विरुद्ध स्वभावों का सामानाधिकरण्य होने पर भी उनका परस्पर विरोध भी बना ही रहता है' कल्पना करनी होगी । पुनरपि यदि सामानाधिकरण्य रहते हुए भी विरोध रहता है तो सार्वदिक उत्पा ही या अनुत्पाद ही होना चाहिए, इसका निराकारक स्वभावान्तर भी अनन्त और उनका सम्बन्ध भी अनन्त स्वीकार करना होगा । 'घटमहमज्ञासिषम्' ईदृशज्ञानोत्पादविरोधी स्वभावविशेष की धारा क्यों नहीं चलती ? यदि मान लें कि चलती है तो कदापि तादृशज्ञान उत्पन्न नहीं होना चाहिए' एतादृश आक्षेप समाधानार्थ उक्तज्ञानोत्पादविरोधीस्वभावविशेषधारा का उच्छेदी स्वभावविशेष की कल्पना भी घटमहम् इत्यादि ज्ञानजनक पूर्वज्ञान में करनी होगी । तथा पुनः उसी धारा में कालान्तर में उत्पस्यमान उक्तज्ञान-सदृशज्ञान के निर्वाह के लिए तदुत्पत्ति के अनुकूल तथा तादृशधारोच्छोदी स्वभावधारा की कल्पना भी करनी होगी । अतः

**नातिष्ठसे। नित्ये ह्येकस्मिन् स्वभावे सर्वदैकाकारभानप्रसङ्गभङ्गायापर्यनुयोज्यत्वमपि कल्प्येत, अनित्यानां तु जीवनमपि यदा परोपजीवकम्, तदा कथमपर्यनुयोज्यत्वम्। एतावता च तत्तत्स्वभावविशेषस्य तत्तज्ज्ञानात्मकत्वेऽपि बाधकमुक्तप्रायम्, पूर्वज्ञानेनेदानीमेवेदृशं ज्ञानं कुतो जनितमित्यत्र स्वभावविशेषेणोत्तरस्य पूर्वज्ञानत्वे एव पर्यवसानेनानुत्तरत्वाच्च। तदित्थम्—**

**"एवमन्योन्यभिन्नानामपरस्परवेदिनाम्।**
**ज्ञानानामनुसन्धानजन्मा नश्येज्जनस्थितिः॥**

एतावतेति। उक्तपर्यनुयोगसद्भावेनेत्यर्थः।

स्यादेतत्—स्वीकारेऽप्येकस्मिन् नित्यविज्ञाने तत्स्वभावस्यापि नित्यत्वेन सर्वदा एकाकारैव प्रतीतिः स्यात्, यादृशं ज्ञानं यद्विषयकं वैकदा जातं नित्यत्वेन तस्य परिवर्तनासम्भवादिति तत्राह—नित्येह्येकस्मिन्निति। अपर्यनुयोज्यत्वम् = आक्षेपाद्यविषयत्वम्। नन्वनित्येष्वपि क्षणिकविज्ञानेषु तथैव परिकल्प्यतामित्याशङ्कां निराचष्टे—अनित्यानान्त्विति। परोपजीवकम् = पराधीनम्। उक्तप्रायमिति। प्रायोपादानाद्बाहुल्येनोक्तमित्यर्थः। यत्किञ्चिदवशिष्यते तदाह—पूर्वज्ञानेनेति। पूर्वज्ञानत्वे एव पर्यवसानेनेति। स्वभावविशेषस्य तत्तज्ज्ञानात्मकत्वात्। एवमन्योन्येति। अन्तः कृतानन्तविश्वरूप एकश्चिद्वपुर्ज्ञानस्मृत्यपोहनशक्तिमान् महेश्वरो न चेत् स्यादेवमन्योन्यभिन्नानामपरस्परवेदिनां ज्ञानानामनुसंधानजन्माजनस्थितिर्नश्येदिति योजना।

तुम ( क्षणिक विज्ञानवादी ) ही मध्यस्त होकर निर्णय करो कि—पूर्वोक्त सम्पूर्ण स्वभावविशेष किस प्रमाण का विषय है जिस से कि नित्य एक अनुभूति नहीं मानते। [ अर्थात् वे कल्पनाएँ निष्प्रामाणिक है अतः नित्य एक विज्ञान अवश्य ही स्वीकार करना चाहिए। ] 'नित्य एक स्वभाव होने पर सर्वदा एकाकार भान होना चाहिए' ईदृश आपत्ति वारणार्थ उस विज्ञानस्वभाव में अनाक्षेप्यत्व की कल्पना भी करेङ्गें। यदि कहें कि यह कल्पना क्षणिकविज्ञान में ही करें तो यह सम्भव नहीं, क्योंकि उन अनित्य ( क्षणिक ) ज्ञानों का तो जीवन भी पराधीन है तब उनमें अनाक्षेप्यत्व कैसे हो सकता है। अनित्य ज्ञानों में ईदृश आक्षेप्यत्व के होने से तत्तत्स्वभावविशेष को असाधारण धर्म न मानकर तत्तज्ज्ञानात्मक मानने पर भी बाधक विद्यमान ही है। पूर्व ज्ञान के द्वारा इदानीमेव ( इस समय ही ) 'घटमहम्' ईदृश ज्ञान उत्पन्न क्यों हुआ ? इस प्रश्न का स्वभावविशेष के द्वारा किया गया समाधान अकिञ्चित्कर है, क्योंकि उसका पूर्वज्ञानात्मकता में ही पर्यवसान हो जाता है। अर्थात् उस स्वभावविशेष के पूर्वज्ञानात्मक होने से उक्त प्रश्न तदवस्थ है। तथा च इस प्रकार से उत्पलदेव का यह कथन सिद्ध हो गया कि—एवमन्योन्यभिन्नानामित्यादि। [ यदि अन्तः कृतानन्तविश्वरूप = अपने

न चेदन्तःकृतानन्तविश्वरूपो महेश्वरः ।
स्यादेकश्चिद्वपुर्ज्ञानस्मृत्यपोहनशक्तिमान् ।"

अन्तःकृतं स्वस्वरूपान्तःक्रोडीकृतमनन्तविश्वरूपं वेद्यजातं येन । सर्वोऽपि भावराशिः सैन्धवघनवत्तत्रैव ब्रुडितः । स चैको न तु नाना, तथात्वे स्मरणानुपपत्तेः । तथा हि—संवित्प्रकाशमानाऽपलपितुमशक्या, जगदान्ध्यप्रसंगात् । परं सा यदि स्वात्ममात्रविश्रान्ता, विषयविषयिभावस्य तथात्वे च तस्य स्वरूपसम्बन्धरूपत्वादन्यतरस्वरूपान्तर्गतत्वं वाच्यम्, अर्थस्वरूपान्तर्भावे जड़त्वप्रसङ्गात्, संविद्रूपान्तर्गतत्वमेव वाच्यम्, एवं तस्या उत्तरोत्तरमभिनवत्वेऽनुसंन्धातुरभावात् स्मृतिर्नोपपद्येत, तेनासावेक एव वक्तव्यः । एकत्वादेव च सर्वोऽपि वेद्यराशिस्तेन क्रोड़ीकृतः । चिद्वपुः, चिदेव वपुः स्वरूपं यस्य, चिन्मात्रस्वरूपः । ननु क्रोडीकृतसर्वभावश्चित्वपुः परमेश्वरस्तर्हि तदभिन्नतया सर्वे भावाः सर्वदैवैकरूपेण वावभासेरन्, तथा च कादाचित्कत्वं विश्ववैचित्र्यञ्च न स्यादिति चेन्मैवं, तथा सन्नपि सःस्वातन्त्र्यवशाद् महाप्रकाशाभिन्नमपि भिन्नाकारमात्मनि परिगृह्य कंचिदेव भावं कदाचित् प्रकाशस्वरूपात्पृथक् करोति । अवभासयति च केनचिदेव रूपेण । ज्ञानस्मृत्यपोहनशक्तिमानिति । ज्ञानञ्च स्मृतिश्चापोहनञ्चेति तान्येव शक्तयः, द्वन्दान्ते इति शक्तेः प्रत्येकं सम्बन्धः । निरुक्तं पारमेश्वरं स्वातन्त्र्यमेव ज्ञातृज्ञेयभावभासकतया ज्ञानशक्तिरित्युच्यते । तदेव च पूर्वानुभासितवस्तुनः पूर्वावभासितत्वेन वर्तमानकाले प्रख्यापयत्स्मृतिशक्तिः, वस्तुतोऽभेदेऽपि भेदोत्थापकञ्च तदेवापोहनशक्तिरिति । महेश्वरोऽप्रतिहतैश्वर्यसम्पन्नः । न चेदीदृशोऽनुसन्धाताचिद्रूपः स्यादेवं = तर्हि अन्योऽन्यभिन्नानामसम्बद्धानां क्षणिकानामपरस्परवेदिनां परस्परवार्तानभिज्ञानां ज्ञानानाम् । अन्योन्यवेदनेऽन्योन्यविषयसंवेदमपि स्यात्, तथात्वे इन्द्रियनियमभंगापत्तेः । इन्द्रियबलाज्ज्ञानस्य कार्यस्य नियमः, चक्षुर्जनितं ज्ञानं रूपस्यैव प्रकाश इत्यादि । अनुसंन्धानजन्मा जनस्थितिरिति । अनुसंन्धानेन पूर्वापरपरामर्शेण जन्म उत्पत्तिर्यस्यास्तादृशी, जनव्यवहारः । अहं पश्यामित्यादौ द्रष्टा प्रथमं स्वात्मानमेव परामृशति । अहमिति परामर्शश्च फलतः पूर्वापरकालविशेषितस्वात्मरूपद्वयमेलनरूप एव, तदेवानुसंन्धानम् । तथा चाहं परामर्शरूपं यत् पूर्वापरानुसंधानं तेन जायमानो व्यवहारो नश्येदित्यर्थः ।

अन्तः लीनकर लिया है अनन्त विश्व प्रपञ्च को जिसने, ऐसा एक चैतन्यस्वरूप ज्ञानस्मृति तथा अपोहन शक्ति सम्पन्न महेश्वर परमात्मा न होता तो, परस्पर अनभिज्ञ एवं परस्पर भिन्न घटपटादिज्ञानों के अनुसन्धान के द्वारा सम्पन्न होनेवाला जनव्यवहार ( जगद्व्यवहार ) ही लुप्त हो जाता, अतः नित्य चैतन्य अवश्य स्वीकर्तव्य है ] । यहाँ

इति यदुक्तमुत्पलदेवैस्तदुपपादितम्। अयं घट इत्यादिर्ज्ञानशक्तिः, घटमहमज्ञासिषमित्यादिः स्मृतिशक्तिः; व्यावृत्तेर्वस्तुतोऽभावेन तदवगाहिनी विकल्पात्मिकाऽपोहनशक्तिरिति द्रष्टव्यम्।

अथ नित्यत्वे प्रागुक्तस्य बाधकस्य का गतिरिति चेत्, दुर्गतिरेव, तादृशचिदसिद्धौ बाधकस्यैवोक्तरीत्याऽसिद्धेः, तत्सिद्धौ तु बाधकं तस्याः किं करिष्यति, प्रत्युत तदधीनसिद्धिकतया तदनुकूलतयैव वर्त्स्यति। न च बाधक-

प्रागुक्तस्येति। विज्ञानवादे 'द्वितीये तु पूर्वक्षणवृत्तित्ववैशिष्ट्यस्य' इत्यादि-नेत्यादिः। बाधकस्यैवोक्तरीत्याऽसिद्धेरिति। पूर्वापरपरामर्शानुपपत्तिरुक्ता रीतिः।

सर्वानुजिघृक्षुराचार्यः ऋजुतया सर्वहृदयङ्गमीभूतफलितार्थमाह—अयं घट इत्यादिर्ज्ञानशक्तिरित्यादिना।

चितो नित्यत्वे 'द्वितीये तु पूर्वक्षणवृत्तित्ववैशिष्ट्यस्येत्यादिकं विज्ञानवादोक्तं बाधकं निरस्यति—अथेत्यादिना। गतिः = स्वरूपावस्थितिः। दुर्गतिः = स्वरूपावस्थितिरेव दुष्टा, बाधकस्य स्वरूपप्राप्तिरेव न सम्भवति दूरे बाधकतेति भावः। अथवा, का गतिः = किं समाधानम्, दुर्गतिरेव = अनुपपन्नत्वमेवासमाधेयत्वात्। अनुपपन्नत्वमेवोपपादयति—तादृशचिदसिद्धाविति। स्थाय्यात्मनोऽभावे पूर्वापरपरामर्शानुपपत्त्यात्मकोक्तरीत्या बाधकस्यैव पूर्वक्षणवृत्तित्वविशिष्टं ज्ञानमेतत् क्षणवृत्तित्वविशिष्टमिति ज्ञानस्यानुपपत्तौ तदीयप्रमात्वापत्त्यात्मकस्यासिद्धेः।

तत्सिद्धाविति। तदा नित्यचितः परामर्शः। किं करिष्यतीति। भुक्तवन्तं मा भुङ्क्था किं तेन कृतं स्यादिति न्यायात्। नो खलु बाधकत्वेनाभिमतं बाधकत्वमेव स्वकीयं परिजहाति, अपित्वनुकूलवर्तित्वमप्याचरति नित्यवित्तेरित्याह—प्रत्युत इति। तदनुप्राणितो बाधकश्चित्यतिरिक्तमन्यं वा स्वात्मानमेव वा न्यक्करिष्यतीतिभावः।

'अयं घट' इत्यादि ज्ञान ज्ञानशक्ति शब्द से, घटमहमज्ञासिषम्' इत्यादि स्मृति शब्द से, तथा वस्तुतः भेदाभाव होने पर भी भेदावगाहिनी विकल्पात्मिका वृत्ति अपोहन शक्ति शब्द से ग्राह्य है।

शङ्का—यदि ज्ञान को नित्य मानेङ्गे तो—'द्वितीये तु पूर्वक्षणवृत्तित्ववैशिष्ट्-यस्य' इत्यादि विज्ञानवादोक्त बाधक की क्या गति होगी?

समाधान—दुर्गति ही है। अर्थात् वह बाधक अनुपपन्न है, क्योंकि नित्यचित् के असिद्ध होने पर उक्तरीति से बाधक भी असिद्ध ही है और यदि नित्य चित् सिद्ध है तो वह बाधक उस नित्य चित् की क्या हानि करेगा, क्योंकि वह तो सिद्ध हो ही चुका। प्रत्युत वह बाधक भी नित्यचिदधीन सिद्धिक होने से नित्यविज्ञानानुकूल होकर

**ज्ञानं सामग्र्यभावादेव पूर्वमनुत्पन्नमिति समाधानसम्भव इति वाच्यम्। सामग्र्या अपि ज्ञानात्मकया पूर्वमापाद्यत्वात्। एवं शून्यवादेऽपि शक्यं पर्यनुयोक्तुम्, तेन शून्यताया असाधनीयत्वेऽपि परमतनिरासमुखेनार्थिकसिद्धेरवश्योपेयत्वेन तत्र पर्यनुयोगस्य दुर्वारत्वात्। तेन सांवृतसामग्रीसद्भावोऽनुमन्तव्य**

**पर्यनुयोगस्येति। आर्थिकसिद्धिरेव पूर्वं कुतो नाभूदित्यस्य।**

ननु न चित्सिद्ध्यधीनसिद्धिकं बाधकं, येन तदसिद्ध्याऽसिद्धं स्यात्, अपि तु स्वसामग्रीप्रयोज्यमेव, तदभावादेव च पूर्वमनुत्पन्नं बाधकज्ञानमित्याशयेनाशङ्क्य परिहरति—न चेति। ज्ञानात्मकया = पूर्वज्ञानात्मकतया, तन्मते पूर्वज्ञानस्यैव सर्वत्र सामग्रीत्वात्। कार्यकारणभावो हि पौर्वापर्यपरामर्शजीवातुरिति नित्यचिदन्तरा न सम्भवतीत्यवोचाम। सामग्र्याः कारणस्तोमात्मिकाया भवन्नये क्षणिकज्ञानात्मिकायाः कुतो नोत्पत्तिरित्युक्तमावर्तते, नियामकाभावात्। स्वभावविशेषमालम्ब्य समाधिस्तु समाहितः। तस्मात् यदि नित्यचिदन्तरा तत् स्यात् तस्य पूर्वं सामग्र्यपि स्यात्।

विज्ञानवादस्य पर्यनुयोज्यत्वं प्रदर्श्य शून्यवादे तदतिदिशति—एवं शून्यवादेऽपीति। पर्यनुयोक्तुमिति। तादृशचिदसिद्धौ शून्यतैवासिद्धेः, तत्सिद्धौ तु शून्यता तस्याः किं करिष्यतीति पर्यनुयोगः। ननु शून्यत्वं न चिदधीनसिद्धिकं, शून्यतायाः सर्वासिद्ध्यैव सिद्धेरित्युक्तत्वादिति शङ्कामाकलय्याह—तेनेति। शून्यवादिनेत्यर्थः। आर्थिकसिद्धिः = सर्वस्य निरासेन पारिशेष्यात् शून्यतायाः सिद्धिः। पर्यनुयोगस्य दुर्वारत्वादिति। शून्यताया, अचिद्रूपत्वेन स्वतोऽसिद्धत्वादार्थिकसिद्धेरप्यसम्भवेन तदर्थमपि चिदपेक्षत एवेति तदवस्थ उक्ताक्षेप, इति भावः। ननु मन्मते सर्वत्र सांवृतसामग्री स्वीक्रियते, तया शून्यतासिद्धिः संपद्यते, तथा च तस्याः सामग्रीप्रयोज्यत्वान्न तादृशपर्यनुयोगावकाश इत्याह—तेन सांवृतसामग्रीसद्भाव इति। तदेतन्निराचष्टे—एतदेव कुत इति। सांवृतसामग्रीसत्त्वमपि कुतः, नित्याधिष्ठानमन्तरा तस्य स्वीकर्तुमशक्यत्वात्।

हीं रहेगा। यदि कहा जाय कि सामग्री के अभाव होने से बाधकज्ञान पहले नहीं हुआ, न कि नित्यचित् की असिद्धि से, तो यह समाधान उचित नहीं, क्योंकि सामग्री के भी ज्ञानात्मक होने से—ज्ञानात्मक सामग्री पूर्व में थी तब पूर्व में बाधकज्ञान क्यों नहीं हुआ' यह आपादनीय है।

इसी प्रकार शून्यवाद में भी पर्यनुयोग (आक्षेप) किया जा सकता है। यद्यपि शून्यवादी के द्वारा शून्यता साधनीय नहीं है तथापि परमतनिरासमुखेन आर्थिक सिद्धि तो शून्यता की उसे भी अवश्य माननी पड़ती है। अतः वहाँ—'वह आर्थिक सिद्धि पहिले ही क्यों नहीं हुई' इस प्रकार पर्यनुयोग दुर्वार ही है। यदि कहें कि शून्यवादी

**इति चेदेतदेव कुतः ? व्यवहारानुरोधादिति चेन्नन्वस्माभिरपि पूर्वज्ञानानुसन्धानाधीनव्यवहारानुरोधादेव नित्यं स्फुरणमास्थितमिति किन्न पश्यसि। न च तथाप्यविनिगम्यत्वम्; लाघवस्य विनिगमकत्वात्, न च क्षणिकैरपि निर्वाह-**

ननु प्रोक्तरीत्या निरधिष्ठानकभ्रमस्य स्वीकारात् तादृशचिदन्तरापि व्यवहारानुरोधात् तथाऽभ्युपगम इति चेत्तत्राह—अस्माभिरपीति। व्यवहारानुरोधः = व्यवहारान्यथानुपपत्तिः। विनिगमनाभावमाशङ्क्य परिहरति—न च तथापीति। व्यवहारानुरोधात् सांवृतसामग्रीसत्त्वं ततश्चार्थिकशून्यतासिद्धिरित्येतदपेक्षया व्यवहारानुरोधात् सर्वव्यवहारव्यवहार्यजीवातुनित्यैकस्फुरणतत्त्वकल्पन एव लाघवम्। ननु न व्यवहारो नित्यस्फुरणसाधकः नित्यस्फुरणमन्तरापि क्षणिकविज्ञानेनैव तन्निर्वाहादित्यन्यथोपपत्तिमाशङ्क्य निराचष्टे—न च क्षणिकैरपीति। न हीत्यर्थः, न खल्वावयोश्चिन्मात्रे विवादः, तस्योभाभ्यामपि स्वीकृतत्वादपितु तस्य नित्यत्वानित्यत्वयोः। तत्र क्षणिकत्वस्य दुर्निरूपत्वं निरूपितं प्राक्। उक्तरीतिश्चात्र व्यक्तैव टीकायाम्।

किञ्च बौद्धाभिमतं क्षणिकत्वं तावदनुपपन्नमेव। तत्र क्षणशब्दो न्यूनकालोपलक्षकः। नैयायिकाश्च जीवनिष्ठानां ज्ञानादिगुणानां शब्दस्य च क्षणिकत्वमिच्छन्ति। तत्र क्षणिकत्वं तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्, उत्पत्तिस्थितिलयार्थं नान्तरीयकतया वस्तुनः क्षणत्रयसम्बन्धावश्यम्भावात्, बौद्धाभिमतं क्षणिकत्वन्त्वेकक्षणमात्रसम्बन्धित्वम्। तच्च नानुभवपथेऽवतरति। नापि तत्र वस्तुन उत्पत्तिस्थितिप्रलया अनुभूयमाना भवितुमर्हन्ति। क्षणपदार्थस्तु यदपेक्षया न्यूनः कालांशो नास्ति तादृशो न्यूनतायाश्च परमावधिभूतः कालांशः। निमेषपर्यन्तं न्यूनः कालांशोऽनुभूयते। तदपेक्षयाऽप्ययं न्यूनः क्षणो न कदाप्यनुभूयते। यत एकस्मिन्निमेषेऽपि क्षणचतुष्टयं भवति। तादृशक्षणश्चानुभवानधिरूढ एव। यत्तु सत्त्वादिहेतुकं क्षणिकत्वानुमानमुक्तम्, तन्न, सत्त्वस्य सन्दिग्धविपक्षव्यतिरेकादहेतुत्वात्। विपक्षे स्थायिन्यपि सत्तायाः सम्भवाद्, व्यभिचारात्, सौगताभिमतस्य क्षणिकत्वस्य क्वचिदप्यदृष्टचरत्वेन दष्टान्तासिद्धावस्यानुमानस्यानुत्थानाच्च। प्रतिज्ञायाश्च प्रत्यभिज्ञाप्रत्यक्षविरोधात्। न च सादृश्यात्तदुत्पत्तिः, सामान्याद्यसम्भवात्, अनुवृत्तं हि सामान्यं सम्भवति, न च सर्वक्षणि-

सांवृत सामग्री का सद्भाव मानता है, अतः आर्थिक सिद्धि पहिले नहीं हुई; तो उससे पूछा जाय कि सांवृत सामग्री भी क्यों मानते हैं ? यदि व्यवहार के अनुरोध से, तो क्या तुम नहीं जानते कि हम ( आगमज्ञ स्वातन्त्र्यवादी ) भी पूर्वज्ञानानुसन्धानाधीन व्यवहार के अनुरोध से ही नित्यज्ञान स्वीकार करते हैं। तथापि नित्य स्फुरण ही माना जाय, इसमें कोई विनिगमक नहीं है, यह भी नहीं कह सकते, क्योंकि लाघव

सम्भवः, क्षणिकत्वस्यैवोक्तरीत्या निर्वहणासम्भवे क्षणिकैर्निर्वाहसम्भवोक्तेरुन्मत्त-प्रलापत्वात्। नित्यत्वस्यापि निर्वहणासम्भवे नित्येनापि निर्वाहसम्भवाभिधान-मुन्मत्तकृत्यमेवेति चेत्, निर्धर्मकतायामेव तात्पर्यात्। तत्किमस्थिरवृत्तिज्ञानानु-

क्षणिकत्वस्यैवोक्तरीत्येति। क्षणिकत्वस्य क्षणिकत्वे आत्माश्रयः, अक्षणिकत्वे तु निर्धर्मिकधर्मावस्थानासम्भवेन स्थायिस्वीकारप्रसङ्ग इत्युक्तम्।

कवादिनामनुवृत्तं किञ्चित्सम्भवति, सम्भवे वा न सर्वक्षणिकत्वम्। तस्मान्न सर्वभावानां क्षणिकत्वं नतरान्तु ज्ञानस्य। अतएव भगवत्पादैरपि स्थायित्वपक्षं कक्षीकृत्योक्तम्—'न हि कालत्रयसम्बन्धिन्येकस्मिन्नन्वयिसति कूटस्थे वा सर्वार्थदर्शिनि देशकालनिमित्तापेक्षवासनाधीनस्मृतिप्रतिसंधानादिव्यवहारः सम्भवति' इति ( ब्र० सू० भा० २.२.३१ )

स्वातन्त्र्यवादिनोऽपि—'संविन्निष्ठा हि विषयव्यवस्थितयः' इति यदुच्यते तत् न भिन्नरूपप्रमात्मकसंविन्मात्रविश्रान्त्या सिद्धयति' ( ई० प्र० वि० १.७.२ ) इति। भिन्नरूपम्–प्रतिक्षणं भिन्नरूपम्, तथा प्रमात्मकं यत् संविन्मात्रम्—बौद्धैरात्मत्वेन मतं क्षणिकविज्ञानम् तत्र विश्रान्त्या = विश्रमणेनेत्यर्थः।

ननु नायं संकुचितः पन्था, येन क्षणिकत्वं क्षुण्णं, नित्यत्वनिरसायापि स एवेति साम्यमावयोर्ममकृत्यस्येव तवकृत्यास्यप्यौन्मत्तिकत्वाविशेषादित्याह—नित्यत्वस्यापीति। निर्धर्मकतायामेव तात्पर्यादिति। नित्यत्वधर्मनिरासस्येत्यादिः। ननु घटादिज्ञानानां क्षणिकतयाऽनुभूयमानां का गतिरित्याह—तत्किमिति। प्रक्रियामात्रत्वादिति। प्रक्रिया हि प्रकारः, साधनं कस्यचित्, कस्यचित्तत्त्वस्य साधनायैवोपगम्यते, उपगते च तत्त्वे साऽपि हेयतां भजते औषधवदिति तदुपगमेऽपि न क्षतिः।

अथ स्थिरवृत्तिज्ञानानां प्रक्रियामात्रत्वेऽपि जड़तया स्वतः सिद्धयसम्भवेन तन्निर्वाह कत्वमपि नित्यनिर्धर्मकस्फुरणतत्त्व एव कल्पनीयम्, तथा च व्याघात

ही उसमें विनिगमक है। क्षणिक विज्ञान के द्वारा ही व्यवहार का निर्वाह हो जायेगा' यह नहीं कह सकते, क्योंकि जब विज्ञानों के क्षणिकत्व का ही निर्वाह पूर्वोक्तरीति ( पृ० ११३ ) से असम्भव है, तब क्षणिक विज्ञान के द्वारा व्यवहार के निर्वाह का कथन उन्मत्त प्रलाप मात्र है।

शङ्का—विज्ञान के नित्यत्व का भी निर्वाह पूर्वरीति (पृ० १६३) से असम्भव है अतः नित्य विज्ञान के द्वारा व्यवहार के निर्वाह का कथन भी उन्मत्त प्रलाप मात्र ही है।

समाधान—विज्ञान के निधर्मकता में ही पूर्वोक्ति का तात्पर्य है। तो क्या अस्थिर वृत्तिज्ञान का सर्वथा अनुपगम ( अस्वीकार ) ही है ? ऐसी बात नहीं है, किन्तु

**पगम एव ? तदुपगमस्य प्रक्रियामात्रत्वात्। निर्वाहकत्वमपि धर्मः प्रक्रियापतित एव, कथं च निर्धर्मकेऽसाविति चेद्वस्तुतो निर्वाहकत्वस्याप्यनिर्वाह्यत्वात्।**

**एवञ्च क्षणिकं वा कतिपयकालावस्थायिनं वा कालत्रयावच्छिन्नं वा भवदुक्तं बाधकं बाधताम्, को वारयति, कालानवच्छिन्नं तु कथं बाधताम्। हन्तैवमलीकत्वं प्रसक्तमिति चेदद्धा यदि कालानवच्छिन्नमलीकं तदा कालोऽप्यात्माश्रयभिया कालानवच्छिन्नो मन्तव्य इति सोऽप्यलीक इत्यलीकानवच्छिन्नमलीकमलीकावच्छिन्नं तु परमार्थसदित्यर्थकं वाक्यं ब्रुवाणः श्लाघनीयप्रज्ञो भवान्। तस्मात्सूर्यादिसञ्चारात्मककालस्तावच्चिदात्मकमहाकालेनानु-**

इति चेत्तत्राह—निर्वाहकत्वमपीति। वस्तुतोऽनिर्वाह्यत्वात् = पारमार्थिकतया ऽनुपपाद्यमानत्वात्।

भवदुक्तबाधके यन्निरूपिता बाधकताऽभिप्रेयते तदप्यालोचयत्वायुष्मन्? तद्धि किं क्षणिकं वा कतिपयकालावस्थायि वा, कालत्रयावच्छिन्नं वा, कालानवच्छिन्नं वा? तत्राद्यपक्षत्रये ममापीष्टापत्तिरित्याह—एवञ्चेति। चतुर्थेत्वाह—कालानवच्छिन्नन्त्विवति। किमाक्षेपे प्रकारवचनेथाल्। तथा च नास्तितादृशः कोऽपि प्रकारो येन कालानवच्छिन्ने तत्त्वे बाध्यता स्यादिति भावः। यत्कालानवच्छिन्नं तदलीकमिति नियमेनालीकत्वमादायार्थान्तरमाशङ्कते—हन्तैवमिति। उक्तनियमस्य कालान्तर्भावेण व्यभिचारमुद्घाटयति—यदि कालानवच्छिन्नमिति। आत्माश्रयभियेति। अवच्छेदककालस्यानन्यत्वे आत्माश्रयः, अन्यत्वेत्वनवस्था। कालस्यालीकत्वन्त्वनुभवपराहतमिति तत् वक्तारमुपहसति—वाक्यं ब्रुवाण इति। ननु भवन्मतेऽपि कालः कालानवच्छिन्न एव मन्तव्यः, तस्य कालावच्छिन्नत्वे आत्माश्रयापातादिति चेत्तत्रोपसंहार-

उसका मानना केवल प्रक्रिया मात्र है अर्थात् मुख्यप्रतिपाद्य नहीं; मुख्य प्रतिपाद्य निर्धर्मकचित् ही है। 'निर्वाहकत्व धर्म भी प्रक्रियापतित होने से निधर्मक में यह कैसे रहेगा' ऐसा यदि कहें तो वस्तुतः हमारे द्वारा निर्वाहकत्व भी निर्वाह्य नहीं है।

एवञ्च भवदुक्त बाधक क्षणिक या कतिपयकालावस्थायी अथवा कालत्रयावच्छिन्न वस्तु का बाध भले ही करे, उसका निषेध भी कौन करता है। किन्तु कालानवच्छिन्न चित्तत्त्व का बाध कैसे करेगा।

शंका—चित्तत्व को कालानवच्छिन्न होने पर उसमें अलीकत्व प्राप्त होगा।

समाधान—सत्य है, यदि कालानवच्छिन्न होने से अलीक मानेङ्गे तदा आत्माश्रय के भय से काल के भी कालानवच्छिन्न होने से, उसे भी अलीक मानना होगा, तथा च अलीकानवच्छिन्न अलीक एवं अलीकावच्छिन्न परमार्थसत् है इत्यर्थक वाक्यप्रयोक्ता आप श्लाघनीयप्रज्ञ कहे जायेंगे। तस्मात् सूर्य-सञ्चार ही काल है, वह

प्राणितत्वेनावच्छिन्नः, तादृशमहाकालस्तु न केनापि कालेनावच्छिन्न इति धर्मिग्राहकमानबाधेन नोक्तकल्पनोन्मेषोऽपि। तदिदमभिप्रेत्योक्तं खण्डने "कालानवच्छेदमादाय च नित्यतोपचार" इति।

किञ्च भवदीयवाक्यघटकीभूतकालपदार्थश्चिद्वाऽचिद्वा, न द्वितीयोऽपसिद्धान्तात्। नाद्यः, तथासति चिदनवच्छिन्नत्वस्य चिदतादात्म्ये पर्यवसन्नत्वेन

अपसिद्धान्तादिति। योगाचारं प्रतीदम्।

चिदतादात्म्ये पर्यवसन्नत्वेनेति। स्वतन्त्र्यवादिनाऽभेदे एव विषयविषयिभावाभ्युपगमेन चिदवच्छिन्नत्वं चिद्विषयत्वं चिदभेदपर्यवसायि। चित्तादात्म्यविरुद्धावच्छेद्यता त्वत्र मतेऽप्रसिद्धैव, चिद्विषयत्वस्य सर्वत्र सत्त्वादिति भावः।

व्याजेन स्वाभिप्रायमुद्घाटयति—तस्मादिति। धर्मिग्राहकमानबाधेनेति। पूर्वापरपरामर्शानुपपत्तिरूपनित्यचित्साधकप्रमाणबाधेनेत्यर्थः। तत्र खण्डनोक्तिं दर्शयति—तदिदमिति। नित्यत्वादिधर्माणामभावरूपत्वेनाधिकरणात्मकतया चितौ तद्वत्त्वासम्भवात् तद्वतो बाध्यत्वेऽपि न क्षतिः। निर्धर्मकत्वादेव च न तस्यानित्यत्वप्रसङ्गोऽपीत्यभिप्रायेणेत्यर्थः। कालानवच्छेदमादायेति। कालानवच्छेदनिबन्धः। उपचारः = गौणव्यवहारः। नित्यत्वस्य तत्स्वरूपत्वे तन्निष्ठतया नित्यत्वाभिधानस्य मुख्यत्वासम्भवादिति भावः।

कालानवच्छिन्नमलीकमित्यत्र कालस्य सूर्यसंचरात्मकत्वमादाय परिहार उक्तः। वस्तुतस्तु नासौ तादृशक्रियात्मकोऽपितु चिदात्मक इति निर्णिनीषया तं विकल्पयति किञ्चेति। न द्वितीय इति। क्षणिकविज्ञानवादिमते चिदतिरिक्तस्य कालस्यानभ्युपगमात्। तथा सतीति। कालस्य चिद्रूपत्वस्वीकारे सति।

चिदात्मक महाकाल से अनुप्राणित होने से तदवच्छिन्न है। चिदात्मक महाकाल किसी भी काल से अवच्छिन्न नहीं है। अतः चित्तत्वात्मक महाकालरूप धर्मी साधक पूर्वोक्त युक्त्युपबृंहित आगमादिप्रमाण के चित्तत्त्वरूप महाकाल का कालानवच्छिन्नत्वेन प्रतिपादन करने से तादृशधर्मीग्राहक प्रमाण से बाधित होने से भवदुक्त कल्पनाओं का उन्मेष नहीं हो सकता। इसी अभिप्राय से खण्डन में श्रीश्रीहर्ष ने कहा है—'कालानवच्छेदमादाय च नित्यतोपचार' इति। ( कालानवच्छिन्न होने से चित्तत्व को नित्य कह दिया जाता है )। न कि नित्यत्वादिधर्माक्रान्त होने से।

किञ्च कालानवच्छिन्नमलीकम्' भवदीय इस वाक्य में काल पदार्थ क्या चिद्रूप है या अचिद्रूप? द्वितीय पक्ष उचित नहीं है। योगाचारमत में किसी भी वस्तु के चिदतिरिक्त न होने से चिदतिरिक्त कालपदार्थ मानने में अपसिद्धान्त हो जायेगा। प्रथम कल्प भी नहीं कह सकते, क्योंकि इस पक्षके मानने पर चिदनवच्छिन्नत्व का पर्यवसान चित् के अतादात्म्य में होगा, और उसे ( चिदतादात्म्य )

**तस्य च चिति मयाऽप्यनभ्युपगतत्वेन कथमलीकत्वशङ्कापि । तदेतेन—**

**"इह कालो नामेदम्भावविशिष्टस्य विशेषणतामवलम्बमानस्तं विशिष्टीकुर्वन् तत्सङ्कोचादनित्यं सम्पादयति, आत्मनश्च चित्स्वभावत्वादिदमिति प्रथनाभावेन विशेष्यत्वं नास्ति, विशेषणविशेष्यभावो हि योजकायत्तः, न च**

**योजकायत्तइति । योजको विशेष्यविशेषणप्रतिसन्धाता ।**

तस्य = चिदतादात्म्यस्य । चिति मयेति । मन्मतेऽत्यन्ताभेद एव तादात्म्यस्य विषयविषयिभावस्य च स्वीकारात् । तदेतेनेति । प्रोक्तरीत्याऽनवच्छिन्नस्यालीकत्वशङ्कानिराकरणाद्, व्यवहारेऽवच्छिन्नस्य ग्रहणंनेत्यर्थः । इह कालो नामेति । कालाख्यः पदार्थः, इदंभावः = इदन्ता, इदम्भावविशिष्टस्य = इदन्तावच्छिन्नस्य घटादेः, विशेषणताम् अवलम्बमानः । अयं घटोऽस्तीत्यादौ वर्तमानकालावच्छिन्नसत्तावान् घट इति बोधात्, तत्र तदवच्छेदकः कालः । स च तमिदन्तावच्छिन्नं घटादिकं विशिष्टीकुर्वन् = अविशिष्टं विशिष्टं सम्पादयन्, स्वेनेत्यादिः । तस्मिन्नवच्छेदकीभूते काले यः संकोचः—अवच्छेदस्तस्मात्, अनित्यं सम्पादयति । अयं घटोऽस्तीति प्रयोगे इदन्त्वावच्छिन्नस्य घटस्य स्फुटं वर्तमानकालेन संकोचः, तदेवानित्यत्वं, कालकृतसंकोचस्यैवानित्यत्वात् । ननु भवत्वेवं, प्रकृते किमायातमित्यत आह—आत्मनश्चेति । चित्स्वभावत्वात् = चिद्रूपत्वात् । तथात्वञ्चास्य 'अत्रायं पुरुषः स्वयंज्योतिः' ( बृ० २.३.९ ) श्रुत्या 'आत्मा चिद्रूपश्चित्कर्मतामन्तरेणापरोक्षत्वात्संवेदनवदित्याद्यनुमानेन च प्रसिद्धमेव । इदमिति प्रथनाभावेन = अहमित्यनुभवविषयत्वमात्रात् सिद्धेन इदमिति ज्ञानविषयत्वाभावेन, विशेष्यत्वं = कालाख्यविशेषणविशिष्टत्वं नास्ति । तत्र हेतुः—विशेषणविशेष्यभावो हीति । योजकायत्तः = संबन्धकर्तुरायत्तः, न तु स्वाभाविकः । ननु तर्हि भवतु सोऽपि कश्चिदित्यत आह—न चेति । योजकान्तरम् = स्वप्रकाशादात्मनोऽन्यो योजकः ।

तो चित् में हम ( स्वातन्त्र्यवादी ) भी नहीं मानते, अतः उसमें अलीकत्व की शङ्का भी कैसे होगी ।

'यहाँ ( आगम सिद्धान्त ) काल उसे कहते हैं, जो इदन्ताविशिष्ट घटादि की विशेषणता का अवलम्बन करते हुये उसे स्वविशिष्ट बनाकर अपने संकोच से अनित्य सिद्ध करता है । [ तात्पर्य यह है कि 'अयं घटोऽस्ति' यहाँ 'इदमस्तु संनिकृष्टम्' नियम के अनुसार इदं शब्द के सन्निकृष्टार्थक होने से वर्तमानकाल विशिष्ट का प्रत्यायक है, अतः उक्त स्थलो में इदंभावविशिष्ट घट का वर्तमानकाल से संकोच स्फुट है ] । आत्मा के चित्स्वरूप होने से उसका 'इदम्' इत्याकारक ज्ञान नहीं होता, अतः वह विशेष्य भी नहीं होता, क्योंकि विशेष्य विशेषण भाव तो किसी योजक ( विशेष्य

**स्वप्रकाशे योजकान्तरमस्ति" इत्यभिनवगुप्तप दोक्तमप्युपपादनीयम् । अयमात्मेतिव्यवहारस्तु न विश्वोत्तीर्णावगाहने क्षमोऽपि तु नर शक्त्यात्मताविशिष्टावगाहन इति परतो व्यक्तीभविष्यति । इदन्त्वमेव हि जड़त्वम्, क्रियात्मककालोऽपि च तादृशः, न च निर्धर्मकस्य चैतन्यस्य जडविशिष्टत्वसम्भवः, विरोधात्, तदधीनसिद्धिकस्य च तत्परिच्छेदकत्वानुपपत्तेरिति ।**

**किञ्चालीक स्फुरति न वा, नचेत् कथमलीकत्वप्रसङ्गः, स्फुरति चेत्, तत्स्फुरणात्मकमेव गत्यन्तराभावादिति कथमलीकत्वप्रसङ्गः, नहि स्फुरणभिन्नं सस्वरूपं किञ्चिदलीकम्, बुद्धिरेव हि तत्र तादृशी । तदाह शिवदृष्टिटीकाकृत्**

परिच्छेदकत्वेति । ध्वंसप्रतियोगिताप्रयोजकत्वेत्यर्थः । बुद्धिरेव हीति । प्रक्रियादशायां तु बुद्धिरिह वृत्तिविशेषावच्छिन्नाचिदवगन्तव्या ।

स्यादेतत्,, आत्मनश्चित्स्वभावतया इदन्त्वेनाप्रथमानत्वे विषयत्वेनात्मानमवगाहमानः 'अयमात्मे'ति व्यवहारो न स्यादित्यत आह'—अयमात्मेति । विरोधादिति । निर्धर्मकत्वेत्यादिः । तदधीनेति । चैतन्यं तत्पदार्थः । परिच्छेदकत्वानुपपत्तिः = संकोचकत्वानुपपत्तिः ।

कालानवच्छिन्नमलीकमित्यङ्गीकृत्य कालानवच्छिन्ने चित्तत्वे प्रसक्ताऽलीकत्वापत्तिः परिहृता । वस्तुतस्त्वलीकस्य कालानवच्छिन्नत्वमेव नास्तोति कुतश्चित्तत्वेऽलीकत्वापत्तिरित्याशयेन विकल्पयति—किञ्चालीकं स्फुरति न वेति । न चेत्कथमलीकत्वप्रसङ्ग इति । स्फुरणाविषयत्वेऽलीकस्यैवाभावात् । नह्यस्फुरदपि किञ्चिदस्ति । न चैवमलीकमिति व्यवहारः कथमित्यत आह—बुद्धिरेव हि तत्र तादृशोति । एवकारेण बुद्ध्यतिरिक्तमलीकं व्यवच्छिनत्ति ।

विशेषण का प्रतिसन्धाता ] के अधीन है और स्वयंप्रकाश आत्मा में कोई योजकान्तर है नहीं' यह अभिनव गुप्त का कथन भी पूर्वोक्त कथन से उपपादित हो जाता है । यदि कहें कि अयमात्मा इत्यादि इदन्त्वेन भी आत्मा का व्यवहार होता है तो इसका समाधान है कि—अयमात्मा' यह व्यवहार तो विश्वोत्तीर्ण आत्मतत्त्व को विषय करने में समर्थ नहीं है, अपितु नरात्मता तथा शक्त्यात्मता विशिष्ट आत्मा का ही अवगाहन करता है यह बात आगे व्यक्त होगी । इदन्त्व ही जड़ता है, सूर्यादि संचाररूप क्रियात्मक काल भी जड़ ही है । निर्धर्मकत्व का विरोध होने से निर्धर्मक चैतन्य जड़ विशिष्ट हो नहीं सकता । और जड़ के चैतन्याधीनसिद्धिक होने से वह चैतन्य का परिच्छेदक भी नहीं हो सकता ।

किञ्च अलीक का स्फुरण होता है या नहीं, यदि नहीं, तो अलीकत्व की आपत्ति भी कैसे होगी (क्यों कि अलीकत्वापत्ति के लिए भी अलीकत्व ज्ञान आवश्यक है) । और यदि स्फुरण होता है तो वह (अलीक) स्फुरणात्मक ही है क्योंकि गत्यन्तर

**'अवस्त्वपि प्रकाशमानं चिद्रूपमेव' इति। अलीकस्य स्फुरणात्मकत्वेऽपि खपुष्प-कूर्मरोमादिशब्देभ्य एकाकारधीस्तु न, मायाशक्तिवशाद्भिन्नतया प्रथितशब्द-स्यापि विषयीकरणात्, इदं च व्युत्पन्नाव्युत्पन्नसाधारणम्, व्युत्पत्तिश्च शून्य-वादोक्तरीत्या। एतेन कालानवच्छिन्नस्यापि परमार्थत्वे खपुष्पादेरपि तथात्व-**

तादृशी = अलीकाकारा, सापि विकल्पात्मिका। स्वोक्तमाचार्योक्त्या दृढ़यति—तदाहेति। अवस्त्विति। शशशृङ्गादीत्यादिः। अत्रापिना वस्तुनश्चिद्रूपताया दृष्टान्तता द्योत्यते।

ननु सर्वस्यालीकस्य चिद्रूपत्वे खपुष्पकूर्मरोमादिशब्देभ्य विभिन्नाकाराप्रतीतिः शशविषाणात्कूर्मरोम भिन्नमित्यादिप्रतीतिश्च न स्यादित्याशङ्कां समाधत्ते—अलीकस्येति। मायाशक्तिः = अभिन्ने तत्त्वे भेदोद्भासिका शक्तिः। तादृशसामर्थ्याद् भिन्नतया प्रतीतस्य शब्दस्यापि तादृशशब्दजन्यशाब्दबोधे भानादित्यर्थः। उपलक्षणमेतत्, घटादीनामपि स्फुरणविषयत्वेन स्फुरणात्मकतया तत्रापि विभिन्न घटपटादि शब्देभ्यो विभिन्नाकारा प्रतीतिः सुदुर्लभा।

शब्दस्तावच्छाब्दबोधे भासत इति तु सुप्रथितमेव।

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इत्यभियुक्तोक्तेः।

शब्दानुगमः = शब्दभानम्। अनुविद्धमिव = तादात्म्येन सम्बद्धमिव। शब्दार्थयोस्तादात्म्यात् तद्द्वारा ज्ञानेऽपि शब्दतादात्म्यमारोपितम्। अतएवेवशब्दः प्रयुक्तः। अतएव च 'उदेति सविता ताम्रस्ताम्र एवास्तमेति चे' त्यत्र रक्त एवास्तमेतीति रचनामनुचितां मन्यमानैः शब्दस्यापि स्वजन्यशाब्द-बोधविषयत्वमुपगतम्। इदञ्चेति। शाब्दवृत्तौ शब्दस्यापि भानम्। व्युत्पन्नः शक्तिग्रहवान्, तद्विपरीतश्चाव्युत्पन्नः। शून्यवादोक्तरीत्येति। यथा भवन्नये

नहीं है। [ आगमसिद्धान्त में प्रकाशविषय प्रकाशात्मा ही होता है]। अतः पुनरपि अलीकत्वापत्ति कैसे होगी। क्योंकि स्फुरणातिरिक्त अलीक का कोई स्वरूप ही न रहा। अलीकज्ञानस्थल में बुद्धि ही अलीकाकारा होती है। जैसा कि शिव दृष्टि के टीकाकार ने कहा है कि "अवस्त्वपि प्रकाशमानं चिद्रूपमेव" (अलीक भी प्रकाशमान होकर चिद्रूप ही होता है। अलीक के स्फुरणात्मक होने पर भी खपुष्प कूर्मरोमादि शब्दों से एकाकारा (चिदाकारा) प्रतीति नहीं होती, क्योंकि मायाशक्तिवशात् भिन्नतया प्रसिद्ध खपुष्प कूर्मरोम आदि शब्दों का भी शाब्दबोध में भान होता है। शब्द का शाब्दबोध में भान होना व्युत्पन्न अव्युत्पन्न सर्व साधारण है। यहाँ व्युत्पत्ति शून्यवादोक्तरीति से जानना चाहिए।

प्रसङ्गः इति नाशङ्कनीयम्; प्रतीतेः कालावच्छिन्नत्वे च प्रतीतिरूपतया खपुष्पादेरपि तथात्वमौचित्यप्राप्तमित्यन्यत्। प्रक्रियादशायामन्तःकरणतत्त्वस्वीकारेण क्षणिकविपर्ययादिज्ञानाभ्युपगमात्, यदाहुरभिनवगुप्तपादाः "नवनवाभासाः प्रतिक्षणमुदयव्ययभाजः" इति।

"सौक्ष्म्यस्य चावधिर्ज्ञानं यावत्तिष्ठति स क्षणः।
अन्यथा न स निर्वक्तुं निपुणैरपि पार्यते॥"

यावत्तिष्ठतीति। न च विभुविशेषगुणस्योत्तरवर्तिविशेषगुणनाश्यत्वनियमाज्ज्ञानस्य क्षणद्वयावस्थायित्वध्रौव्यम्, एवं प्रत्यक्षं प्रति विषयस्य कारणत्वेन वर्तमानस्यैव च प्रत्यक्षविषयत्वेन द्वितीयक्षणे स्वविषयकप्रत्यक्षदशायां ज्ञानेवावस्थातुमुचितमिति-वाच्यम्, स्वभावत एव ज्ञानस्य विनशित्वोपगमनोक्तनियमस्याकिञ्चित्करत्वात्, क्षणिकज्ञानानां नित्यचिदभास्यत्वाभ्युपगमाच्च, स्वातन्त्र्यवादेस्वविषयकत्वस्यापि वक्तुं शक्यत्वाच्चेतिभावः।

पदेषु शक्तिग्रह एव' इत्यादिना चर्चितरीत्या। एतेनेति। अलीकस्य स्फुरणात्मकत्वेन। तथात्वप्रसङ्गः = परमार्थत्वप्रसङ्गः। प्रतीतेरिति। अलीकविषयिण्येत्यादिः। तथात्वमिति। कालावच्छिन्नत्वमित्यर्थः। औचित्यप्राप्तमिति। प्रतीतिमात्रसारत्वात्तस्य।

ननु प्रतीतेश्चिदात्मकत्वेन नित्यतया कथं तस्याः कालावच्छिन्नत्वमित्यत आह—प्रक्रियादशायामिति। सन्निकर्षाधीनकार्यकारणभावप्रयोज्यव्यवहारदशायाम्। नवनवभासाः = नवीनानिनवीनानि ज्ञानानि। उदयव्यय भाजः = उत्पादविनाशवन्ति।

सौक्ष्म्यस्येति। वस्तुतः संविदेकैव, न फलभेदजनितस्तस्या भेदः, कालस्यातिसूक्ष्मक्षणात्मकत्वात्। कालसौक्ष्म्यस्य कोऽवधिरितिजिज्ञायामाह—सौक्ष्म्यस्य = कालगतसौक्ष्म्यस्यावधिर्ज्ञानमेव, तच्च ज्ञानं वृत्तिविशेषावच्छिन्नचित्,

यह भी अनाशङ्कनीय है कि—"कालानवच्छिन्न पदार्थ को यदि पारमार्थिक माना जाय तो खपुष्पादि अलीक भी पारमार्थिक होने चाहिए"। क्योंकि अलीकविषयक प्रतीति के कालावच्छिन्न होने से प्रतीति रूपतया खपुष्पादि अलीक का भी कालावच्छिन्न होना ही उचित है। प्रक्रियादशा अर्थात् सन्निकर्षाधीन कार्यकारणभावप्रयोज्य व्यवहार दशा में अन्तःकरण तत्त्व माना जाता है, अतः उसी के द्वारा क्षणिक एवं विपर्यय आदि ज्ञान भी मान लिये जाते हैं। जैसाकि अभिनव गुप्त ने कहा है कि—नव नवभासा इत्यादि [प्रतिक्षण नवीन नवीन उदयविनाशशाली ज्ञान होते हैं]। तन्त्रालोक में भी कहा है—"सौक्ष्म्यस्य"······इत्यादि [सूक्ष्मता का अवधीभूत ज्ञान जितने कालपर्यन्त स्थिर रहता है, वही क्षण है। इसके अतिरिक्त क्षण का निर्वचन निपुणजन भी नहीं कर

**इति च तन्त्रालोके। प्रकारान्तरेण क्षणनिर्वचनभङ्गस्तु नेह प्रस्तूयते, मन्दप्रयोजनत्वात्। न चैवं घटादेरपि तत्तत्क्षणिकज्ञानात्मकत्वमेव स्यान्न नु परमार्थचिद्रूपत्वमिति शङ्क्यम्, क्षणिकज्ञानानामपि चिद्विषयत्वेन तथात्वात्, तेषां भेदप्रतीतेराविर्भावतिरोभावप्रतीतेश्च भगवतश्चिद्वपुषः स्वातन्त्र्यचमत्कारमात्रसारत्वादिति वक्ष्यते। आह च—**

क्षणनिर्वचनेति। स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वम्, स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वमित्यादिक्षणनिर्वचनम्। मन्दप्रयोजनत्वादिति। यावत्तिष्ठति ज्ञानं तावत्वेव मया तादृशलक्षणानां समन्वेतव्यत्वादितिभावः।

तद्धि यावति काले तिष्ठति, स एव कालः क्षणत्वेन व्यवहार्य इत्यर्थः। ननु किमिति ज्ञानमादायक्षणं निर्वक्ति, कालस्य परोपाधिकत्वेन प्रकारान्तरेणापि निर्ववतुं शक्यत्वादित्यत आह—अन्यथेति। अभेद्यो निरंशः काललवक्षणः इत्यादिना-साक्षाल्लक्षणेनेत्यर्थः। उत्पादानन्तरं निरोध इत्युक्तावादिमध्यवसानात्मकांशत्रयवत्त्वापत्त्या तस्य निरंशत्वव्याघात्। प्रकारान्तरेणेति। क्षणत्वं च स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वम्, स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयत्वम्, स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वम्, स्ववृत्तियावदभावविशिष्टसमयत्वम्, स्वस्वपूर्ववर्तियावत्पदार्थविशिष्टसमयत्वम्, वेति सन्ति हि प्रकारान्तरेण निर्वचनानि क्षणस्य दीधितिकारोक्तानि। नेह प्रस्तूयत इति। अत्र हेतुः—मन्दप्रयोजनत्वात्। तच्च सूत्रितं मूलकर्त्रैव टीकायाम्।

वस्तुतस्तु निरुक्तलक्षणानां स्वत्वसमयत्वादिघटितत्वादननुगमात्माश्रयादिदूषणगणग्रस्तत्वाद्वक्तुमशक्यत्वमेवेत्यन्यत्र विस्तरः।

अलीकवद्घटादेरपि क्षणिकज्ञानात्मकत्वं शङ्कते—न चैवं घटादेरपीति। ननु सर्वस्य चिद्रूपत्वे तदात्मकतया सर्वस्याप्यभिन्नत्वेन घटपटभेदप्रतीतिर्न स्यात्, नस्याच्चोदयास्तमयप्रतीतिर्नित्यत्वाच्चितिशक्तेरित्यत आह—तेषां भेदप्रतीतेरिति। भगवत इत्युक्त्या सर्वविधैश्वर्यसम्पन्नत्वं तस्य ध्वनितम्। स्वातन्त्र्यचमत्कार इति। पराहंभावात्मकस्याहंविमर्शस्यानन्दमयताया अलौकिकास्वादश्चमत्कारः।

सकते]। मन्द प्रयोजन होने से हम ने यहाँ प्रकारान्तर से होने वाले क्षण के निर्वचनों का निरास प्रस्तुत नहीं किया।

यदि कहें कि घटादि पदार्थ भी तत्तत् क्षणिकज्ञानरूप मान लिया जाय, न कि परमार्थचिद्रूप, तो ऐसी आशङ्का नहीं करना, क्योंकि क्षणिकज्ञान भी चैतन्य का विषय होने से चिद्रूप ही है। उन ज्ञानों में भेदप्रतीति तथा आविर्भावतिरोभावप्रतीति चिद्रूपपरमात्मा के स्वातन्त्र्य का चमत्कारमात्र ही वक्ष्यमाण है। कहा है कि—

मायाशक्त्या विभोः सैव भिन्नसंवेद्यगोचरा ।
कथिता ज्ञानसङ्कल्पाध्यवसायादिनामभिः" ॥ इति ॥

सैवेति । चितिशक्तिरेवेत्यर्थः । प्रासङ्गिकमिदम् । प्रकृतमनुसरामः—

अथास्त्वेवम्, तथापि नित्यत्वे नित्यत्वमस्ति नवेत्यादिविकल्प्य निरसनस्य किमुत्तरम्, एवं प्रकाशस्य व्यापकताया अप्यवश्योपेयत्वेन तस्याप्युदीरितरीत्या दोषभाजनत्वमेवेति चेन्न, नित्यत्वव्यापकत्वादिकं धर्मजातं तद्विशिष्टञ्च चिन्मात्रातिरिक्तमेवमपलप्यते चिन्मात्रं वा । नाद्यः, तदपला-

मायाशक्त्येति । विभोरात्मनः परमेश्वरस्य मायाशक्त्या—माया = अनुपपन्नं यत्प्रकाशभिन्नतया वस्तुनः स्फुरणम्, तच्च स्वातन्त्र्यमेवात एव शक्तिरभेदे भेदोत्थापिका, तादृशस्फुरणसामर्थ्यमिति यावत् । तया सैव चितिशक्तिर्विमर्शाख्यैव भिन्नसंवेद्यगोचरा—भिन्नं भिन्नतया प्रतीतं यत्संवेद्यमर्थजातं तदेव गोचरो विषयो यस्या सा, तथा सती ज्ञानसंकल्पाध्यवसायादिनामभिरूच्यते । तत्रेन्द्रियार्थसन्निकर्षाधीनं संवित्त्वं ज्ञानम् । अर्थविषयकं मानसमस्फुटमवभासनं संकल्पः । बुद्ध्यधीनार्थविषयको निश्चयोऽध्यवसायः । आदिना संशयादिः ग्राह्यः ।

ननु क्षणिकत्वस्य स्ववृत्यवृत्तिभ्यां निरासवन्नित्यत्वस्यापि निरस्तत्वेन तन्निरासोक्तेः किं समाधानमित्याह—अथास्त्वेवमिति । एवमुक्तरीत्या नित्यचितिरस्तु नाम । अथेतिप्रकृतानुसरणे । यद्यपीत्यध्याहार्यम्, तथापीति सम्बन्धात् । यद्यप्यर्थे वाऽथशब्दः । व्यापकताया अपीति । अपिना विज्ञाननित्यत्वस्यावश्योपेयत्वं दृष्टान्तीक्रियते । तस्याप्युदीरितरीत्येति । यथा विज्ञाननित्यत्वं दोषभाजनं तथा तद्व्यापकत्वमपीत्यपेरर्थः । व्यापकत्वे व्यापकत्वमस्ति न वा, आद्ये आत्माश्रयः, द्वितीये देशानवच्छिन्नस्य देशावच्छिन्नत्वं व्याहतमित्युदीरितरीतिः । समाधत्ते—नित्यत्वव्यापकत्वादिकमिति । क्षत्यभावादिति ।

"मायाशक्त्या"……इत्यादि । वह एक चितिशक्ति ही पारमेश्वरी मायाशक्तिवशात् भिन्न-भिन्न घटादि पदार्थों को विषय करती हुई ज्ञान, संकल्पअध्यवसायादि नामों से व्यवहृत होती है । प्रकृत पद्य में सैव शब्द चितिशक्ति का वाचक है । यह सब प्रासङ्गिक था, अब हम प्रकृत का अनुसरण करते हैं ।

शङ्का—अस्तु सब चिद्रूप है । तथापि नित्यत्व में नित्यत्व है, या नहीं इत्यादि विकल्पों से विज्ञान के नित्यत्व का निरास किया गया है । उसका क्या उत्तर है एवं अवश्य मन्तव्य प्रकाश का व्यापकत्व भी उक्तरीत्या दोषग्रस्त ही है ।

समाधान—नित्यत्व व्यापकत्वादि धर्म तथा तादशधर्मविशिष्टचैतन्यमात्र से

पेऽस्माकं क्षत्यभावात्, नहि घटे निषिद्धे पटो निषिद्धो भवति। नित्यत्ववैशिष्ट्यं फलतोऽपलप्यते इति चेत्तस्यापि चिदतिरेको वा तदनतिरेको वेति विकल्प्यत्वात्। न द्वितीयः, चिद्रूपापलापस्य भवतोऽप्यनिष्टत्वात्। क्षणिकत्वविशिष्टं मदिष्टमिति चेत् क्षणिकत्वस्याप्युक्तरीत्या दौःस्थ्यात्, तस्मात्सर्वधर्मविवर्जितं सर्वकल्पनाविकलं किमपि लोकोत्तरं तत्त्वमवश्योपेयम्, एवं च विरुद्धधर्माध्यासस्य तद्भेदकत्वशङ्कैव नावतरति, सर्वधर्मराहित्याभिप्रायेण तु तस्य शून्यत्व-

सर्वधर्मराहित्याभिप्रायेणेति। लोके शून्यशब्दस्याभावाधिकरणे एव प्रयोगो नत्वभावप्रतियोगिनि, तथाहि वक्तारो भवन्ति शून्यं गृहमिति, अत एव स्वच्छन्दतन्त्रे—

अशून्यं शून्यमित्युक्तं शून्यं चाभाव उच्यते।
अभावः स समुद्दिष्टो यत्र भावाः क्षयं गताः॥ (४—२९२)

इत्यत्र निष्प्रपञ्चचिदानन्दरूपपरशिवस्यैव शून्यत्वमुक्तम्, अत्राभावपदमुत्तरार्धानुसारेणाभावाधिकरणपरमिति भावः।

चिन्मात्रस्यैवास्माभिर्नित्यत्वाभिधानात्। विशिष्टस्य विशेषणजातस्य वा मायावशाच्चिन्मात्रातिरिक्ततया प्रतीतस्य विकल्पात्मकत्वात्। वैशिष्ट्यस्याप्येषैव गतिरिति शङ्कापूर्वकमाह—नित्यत्ववैशिष्ट्यमिति। चिद्रूपापलापस्य = चिन्मात्रापलापस्य। भवतोऽप्यनिष्टत्वादिति। सौगतेनापि चिन्मात्रस्य स्वीकृतत्वेन तन्नित्यत्वानित्यत्वयोरेव विवादात्। मदिष्टमिति। सौगतोऽत्रास्मच्छब्दार्थः। क्षणिकत्वस्याप्युक्तरीत्येति। क्षणिकत्वस्य स्ववृत्तित्वे आत्माश्रयः, अवृत्तित्वे च स्थायित्वप्रसङ्गः।

प्रकृतार्थमुपसंहरन् निर्धर्मकतत्त्वं परिशेषयति—तस्मादिति। एवञ्चेति। सर्वधर्मविवर्जितस्य सर्वकल्पनाविकलस्य तत्त्वस्य स्वीकारे। ननु तादृशं तत्त्वं

अतिरिक्त का अपलाप करते हैं, या चैतन्यमात्र का ही। प्रथम पक्ष में-चिन्मात्रातिरिक्त के अपलाप से हमारी (स्वातन्त्र्यवादी) कोई हानि नहीं है। जैसे घट के निषिद्ध होने से पट निषिद्ध नहीं होता, उसी प्रकार धर्म एवं धर्मविशिष्ट के अपलाप से चिन्मात्र का अपलाप नहीं होता। यदि फलतः नित्यत्ववैशिष्ट्य का ही अपलाप माने तो वह (नित्यत्व-वैशिष्ट्य) भी चिदतिरिक्तत्व अनतिरिक्तत्व विकल्पों से पराहत है। [भाव यह है उसके चिदतिरिक्तत्व पक्ष में चिन्मात्र को हानि नहीं हैं, और द्वितीयपक्ष (चिदनतिरिक्तत्व) के द्वितीयकल्प में अन्तर्भूत होने से "न द्वितीयः" के द्वारा निरास कर रहे हैं]।

द्वितीयकल्प भी ठीक नहीं है। क्योंकि चैतन्यमात्र का अपलाप करना आप (बौद्ध) को भी इष्ट नहीं है। यदि कहें कि क्षणिकत्वविशिष्टविज्ञान हमें (बौद्ध) इष्ट है तो यह कहना उचित नहीं, क्योंकि क्षणिकत्व पूर्वोक्तरीति से निरस्त हो चुका है। अतः सर्वधर्मवर्जित समस्त कल्पनाओं से शून्य एक लोकोत्तरतत्त्व अवश्य ही मानना होगा।

**मप्युच्यमानं न कामपि क्षतिमातनोति, निस्स्वरूपत्वं तु कुतः ? एवं च स्वतः-सिद्धिरपि स्वेतरानपेक्षतया निर्धर्मकस्यैव सम्भविनी न तु क्षणिकज्ञानस्य। तदेतत्सर्वमभिप्रेत्याह खण्डनकारः—"प्रकाशात्मतामात्रस्यैव स्वतःसिद्धिसम्भवेन जड़ात्मनां धर्माणां केषामपि तदन्तर्भावानुपपत्ते" रिति। उक्तञ्च वेदान्तिभिरेव—**

एवं च स्वतः सिद्धिरपीति। तत्तद्धर्मवैशिष्टयस्य चित्स्वरूपातिरिक्ततया चित्स्वरूपमात्रनिष्ठस्वतःप्रकाशतामहिम्ना तस्य समर्थनानुपपत्तेरितिभावः।

शून्यमेवेति चेत्तत्राह–सर्वधर्मराहित्याभिप्रायेणेति। व्यक्तमत्र रहस्यं टीकायाम्। निःस्वरूपत्वं तु कुत इति। स्वरूपतस्तदभावे प्रमाणाभावादितिभावः। न तु क्षणिकज्ञानस्येति। तदीयजीवनस्य परोपजीवकत्वात्। प्रकाशात्मतामात्रस्यैवेति। अभानापादकाज्ञानविरोधीचित एव प्रकाशात्मतापदेनाभिधानम्। तथा च स्वतः सिद्धिसम्भवे इत्यस्य नासङ्गतिः। जड़ात्मकधर्मप्रतिद्वन्द्वितासूचनाय तु तल्न्तप्रयोग औपचारिकधर्मतामादाय।

अनानन्दापादकाज्ञानविरोधिचित एवानन्दत्वम्, असत्त्वापादकाज्ञानविरोधिचित एव सत्तात्वमित्याशयेन मात्रपदम्। स्वतः सिद्धिसम्भवे = स्वान्यसंविदपेक्षव्यवहारविषयान्यत्वसम्भवात्। जड़ानां तु तादृशविषयत्वमेव। पूर्णानन्दांशस्य सर्वदाऽपरोक्षत्वविरहेऽपि संविदस्तदनन्यत्वात्तस्य तादृशविषयान्यत्वमक्षतमेवेति भावः। जड़ात्मनां = निरूक्तविषयत्ववतामज्ञानान्तःकरणादीनां धर्माणामाध्यासिकसम्बन्धेन चिदाश्रितानां तदन्तर्भावानुपपत्तेः = प्रकाशाभेदानुपपत्तेः, प्रकाशाभेदे हि तेषां जड़त्वमेव न स्यात्, प्रकाशत्वमेव वा प्रकाशस्य न स्यात्।

धर्ममात्रस्याध्यस्तत्वेन चिन्मात्रस्यैव परिशेषः स्वतःसिद्धिश्चेत्यत्र वेदान्तोक्तिं दर्शयति—उक्तञ्च वेदान्तिभिरेवेति।

एवञ्च नित्यत्व अनित्यत्व आदि विरुद्ध धर्माध्यासों से उसमें भेद की शङ्का भी सम्भव नहीं है। सर्वधर्मराहित्य के अभिप्राय से उसे शून्य कहना भी क्षतिकर नहीं है। उससे धर्मशून्यता ही सिद्ध होती है न कि उसकी नि-स्वरूपता भी। इस प्रकार स्वेतरानपेक्ष होने से स्वतःसिद्धि भी निर्धमक चैतन्य में ही सम्भव है न कि क्षणिकविज्ञान में। इन्हीं सब अभिप्रायों से खण्डनकार श्रीहर्ष ने कहा है—"प्रकाशात्मता·········इत्यादि"। (चैतन्यमात्र ही स्वतःसिद्ध हो सकता है, उसमें किसी भी जड़ धर्मों का अन्तर्भाव नहीं किया जा सकता)। तथा वेदान्तियों ने ही यह कहा है—"अन्तर्भावे·········इत्यादि। बाह्यपदार्थों का चैतन्य में अन्तर्भाव (लय) होने पर चिन्मात्र के अवशिष्ट होने से परमात्मा निरञ्जन ही है। और यदि बाह्यघटादि पदार्थ परमात्मा से वहिर्भूत है तो उनके बाह्य होने से ही परमात्मा निरञ्जन है।

**"अन्तर्भावे तु बाह्यानां चित्स्वभावो निरञ्जनः।**
**बहिर्भावे तु बाह्यत्वाच्चित्स्वभावो निरञ्जनः" ॥ इति ॥**

**एवञ्च दिव्यलोचनमुन्मील्यैवालोचितं वेदान्तिभिः 'साक्षिणो बाधासम्भव' इति। तद्विकलस्तु शून्यवादी सधर्मकमेव सर्वं बाधमानो भ्रान्तो मोदत इति। धर्मिणो भिन्नस्य भिन्नाभिन्नस्य वा तत्समसत्ताकस्यैव धर्मपदमुख्यार्थत्वम्, अत्यन्ताभिन्ने तु धर्मत्वं परिभाषामात्रमेव, एवञ्च स्वीकृतमिदन्निर्धर्मकत्वमभिनवगुप्तपादैरपि, यदाहुस्तन्त्रालोके—**

**"न चास्य विभुताद्योऽयं धर्मोऽन्योन्यं विभिद्यते।**

अन्तर्भावेत्विति। बाह्यानां चिदतिरिक्तपदार्थानां तादात्म्येन चित्यध्यस्तत्वे चिदात्मैवावशिष्यते। अधिष्ठानस्याध्यस्तासंपृष्टत्वात्। तदुक्तं भाष्यकृता—"तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते" इति। अतएव चिन्मात्रस्वभावत्वात् निरञ्जनः। बहिर्भावे चित्तादात्म्यानापन्नत्वे तु बाह्यत्वादसत्त्वादेव तेषां, चिदात्माऽवशिष्यते।

दिव्यलोचनम् = अबाध्यविषयकदृष्टिम्। साक्षिणो बाधासम्भव इति। स्वातिरिक्तसर्वबाधावाधित्वात्तस्य। तथात्वञ्च तस्य व्यक्तमेव प्राक्, वक्ष्यते च। तद् विकलस्त्विति। दिव्यलोचनविकलस्त्वित्यर्थः।

नन्वन्ततोगत्वा प्रकाशत्वमेव धर्मः प्रकाशस्येति सुव्याहतं चितो निर्धर्मकत्वमिति चेत्तत्राह—धर्मिणो भिन्नस्येति। तत्समसत्ताकस्यैवेति। धर्मिसमानसत्ताकस्येत्यर्थः। एतच्च भिन्ने भिन्नाभिन्न इत्युभयत्रान्वेति। तथा च प्रकाशत्वादेर्न चिद्धर्मत्वम्, चित्समानसत्ताकत्वाभावादिति न व्याहतिरितिभावः।

एवञ्च वेदान्तियों ने दिव्यदृष्टि से विचार कर उचित ही कहा है कि "साक्षी का बाध होना सम्भव नहीं है"।

तादृश दिव्यलोचनविहीन शून्यवादी सर्व सधर्मकों का बाध मान कर ही भ्रान्त होते हुए भी हर्ष-अनुभव करते हैं। तात्पर्य यह है कि शून्यवादी सर्वं शून्यं कहकर जिस जिस का बाध करता है, वह सभी सधर्मक ही है क्योंकि निधर्मक चैतन्य (साक्षी) का बाध हो नहीं सकता, वह बाध का भी साक्षी है। ऐसी स्थिति में भी शून्यवादी उसका बाध मानते हैं, अतः भ्रान्त हैं। धर्मी से भिन्न या भिन्नाभिन्न अथवा धर्मिसमानसत्ताक पदार्थ ही धर्मपद का मुख्य अर्थ है, क्योंकि धर्मी से अत्यन्ताभिन्न को धर्म कहना परिभाषा (स्वीयसंकेत) मात्र है। आचार्य अभिनवगुप्त ने भी एतादृशनिर्धर्मक को स्वीकार किया है। जैसाकि तन्त्रालोक (१/६७) में कहा है—"न चास्य""""इत्यादि"। प्रकाश (परमात्मा) के विभुत्वादि धर्म न प्रकाश से भिन्न है और न परस्पर में ही भिन्न है, क्योंकि वे सब परप्रकाशात्मक है। परमात्मा का एक यह स्वातन्त्र्याख्य धर्म ही जो

एक एवास्य धर्मोऽसौ सर्वाक्षेपेण वर्तते ॥
तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः" । इति ।

विभुतादेः प्रकाशात्मकत्वेन परस्परमप्यैक्यमेवेत्यहम्प्रत्यवमर्शाख्य-स्वातन्त्र्यशक्तिरेव मात्रयापि ततोऽनतिरिक्तापि धर्मशब्देन व्यवह्रियते इति तत्सम्प्रदायानुसारिणी व्याख्या । अधिकञ्चाग्रे वक्ष्यामः । एतेन विषयविषयि-भावस्य निरस्ततया सांवृतत्वेन सम्बन्धिनोरपि तथात्वमित्यपि प्रत्यादिष्टम् । उक्तरीत्या चित्सिद्धौ विषयविषयिभावस्य तदनतिरेके तत्सिद्धिरेव तत्सिद्धिः, अतिरेके तु तद्बाधेन चिद्बाधश्चौरापराधेन माण्डव्यनिग्रहमनुहरति । न वा

न चास्येति । विभुत्वं नित्यत्वञ्च योऽयमस्य धर्मः, न भिद्यते प्रकाशात् परस्परञ्च, सर्वस्य परप्रकाशात्मकत्वात् । एक एवास्यासावहं प्रत्यव-मर्शाख्यो धर्मः, यः सर्वमपि विभुत्वादिकमाक्षिपेत् । येन संकुचितः प्रमातृवर्गः विभुत्वादिकं व्यवहरेत् । अयमेव च स्वातन्त्र्याख्या शक्तिरिति तयैव सर्वमपि संपद्यते इति तात्त्विको मार्गः । तमेतं पिण्डीभूतार्थं दर्शयति ग्रन्थकारः— विभुतादेरिति । व्यवह्रियत इति । तद्व्यवहार एव न वस्तुत इति भावः ।

एतेनेति । विषयविषयिभावस्य सांवृतत्वेऽपि न तत्सम्बन्धिनश्चिदात्मनः सांवृतत्वं, न चापि तद्बाधेन चिदात्मनो बाध इत्याह—उक्तरीत्या चित्सि-द्धाविति । तदनतिरेके = चिदव्यतिरेके । तत्सिद्धिरेव तत्सिद्धिरिति । चित्सि-द्धिरेव विषयविषयिभावसिद्धिरित्यर्थः । अतिरेके = चिद्भिन्नत्वे । विषयविषयि-भावस्यैव बाधो न तु चितोऽन्यबाधेन चिद्बाधाभ्युपगमस्यानुचितत्वात् । अनौ-चित्ये निदर्शनं प्रस्तौति—माण्डव्यनिग्रहमिति । माण्डव्यो मुनिशार्दूलः स्वा-

वस्तुतः प्रकाश से अभिन्न है, सभी विभुत्वादि धर्मों के व्यवहार का निर्वाह कर देता है। अतः परमात्मा को स्वातन्त्र्यशक्ति-युक्त मानना ही उचित है ।

विभुत्वादिधर्मों के प्रकाशात्मक होने से परस्पर भी उनकी एकता ही है, अतएव 'पूर्णोऽहम्' इत्याकारक प्रत्यवमर्श ( अनुसन्धान ) रूपस्वातन्त्र्यशक्ति ही सर्वथा प्रकाशाभिन्न होने पर भी धर्मशब्द से व्यवह्रियमाण हो जाती है । यह तत्सम्प्रदाया-नुसारिणी व्याख्या है । यहाँ विशेष वक्तव्य आगे कहेङ्गें ।

'पारमार्थिक विषयविषयिभाव के निरस्त हो जाने से कल्पित विषयविषयिभाव ही मानना होगा, अतः उस विषयविषयिभाव के सम्बन्धी चित् और विषय की भी आविद्यक सत्ता ही माननी चाहिए' यह पूर्वपक्ष भी निराकृत हो गया, क्योंकि उक्त रीति से चित् के सिद्ध होने पर—यदि विषयविषयिभाव उस चित् से अभिन्न है तो चित् की सिद्धि ही, विषयविषयिभावकी सिद्धि है । और यदि वह चित् से

चितोऽसिद्धौ किञ्चिन्निरसनमपि सिद्धयतीत्युक्तम्। एवं च लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति मर्यादा निर्धर्मकचित्येव व्यभिचरिता। तदाह खण्डनकृत्— "वस्तुतस्तु स्वात्मसिद्धमेव चिद्रूप" मिति। आह च तन्त्रालोककारोऽपि—

निरसनमपि सिद्धयतीति। पूर्वापरपरामर्शस्य निरसनप्राणस्य स्थायितत्त्वसापेक्षत्वादिति भावः। वस्तुतस्तु स्वात्मसिद्धमेवेति। अत एवाभौतिकचित्स्वरूपास्तितायां प्रमाणे भरद्वाजेनानुयुक्तस्य भगवतो भृगोर्भणितिः—

'तं पूर्वापररात्रेषु युञ्जानः सततं बुधः।
लध्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि'॥ इति। ( म० भा० शा० अ० १८७ )

अत्र हि चरमचरणे चितिश्चकास्ति स्वरूपप्रतिष्ठा स्वतः समाधाविति भाति।

## समाधौ स्फुरणस्य चित्तैनैवान्यथासिद्धिशङ्का

ननु न तावदिदं सम्प्रज्ञातमधिकृत्य, यद्यपि नास्ति किञ्चित्स्फुरणं किन्तु शून्यमेवेत्य-

श्रमगततस्करग्रहणेन गृहीतः राजाज्ञया शूलारोहणं प्रापदिति प्रसिद्धम्-तदुक्तम्—

तं राजा सह तैश्चौरैरन्वशाद् वध्यतामिति।
स रक्षिभिस्तैरज्ञातः शूले प्रोतो महातपाः॥
(म० भा० आदि० १०६।१२) इति।

सर्वेषामपि प्रमाणप्रमेयादीनां चिदधीनसिद्धिकत्वमभिसंधायाह खण्डनकारः—वस्तुतस्त्विति। स्वात्मसिद्धमेव = मानमनपेक्ष्यैव सच्चिदंशे संशयाद्यविषयः। एतेनानन्दांशे आवरणभङ्गाय वृत्यपेक्षणेऽपि न क्षतिः। प्रमाणादीनां चिदधीनसिद्धिकत्वस्यागमसम्मतत्वं दर्शयितुमाह—आह च तन्त्रालोककारोऽपीति।

भिन्न है तो उस विषयविषयिभाव के बाध के द्वारा चित् का बाध ( सांवृतत्व ) मानना—चौर के अपराध से माण्डव्य ऋषि को प्राप्त शूलारोहण दण्ड के समान है। [ तात्पर्य यह है कि जैसे चौर के अपराध से माण्डव्य ऋषि को शूलारोहण दण्ड मिलना सर्वथा अनुचित है, वैसे ही यहाँ मिथ्याभूतविषयविषयिभाव के बाध के द्वारा चित् का बाध मानना सर्वथा अनुचित है। अतः विषयविषयिभाव के कल्पित होने पर भी चित् पारमार्थिक ही है ]। कह चुके हैं कि—चित्तत्व के असिद्ध होने पर तो किसी वस्तु का निरास करना भी सम्भव नहीं है। [ क्योंकि पूर्वापर परामर्श निरसन का प्राण है। और तादृश परामर्श स्थायि तत्व की अपेक्षा करता है ]।

एवञ्च 'लक्षणप्रमाणाभ्यां वस्तुसिद्धिः' यह नियम भी निर्धर्मक चैतन्य में ही व्यभिचरित है। खण्डनकार ने खण्डन में कहा है कि—'वस्तुतस्तु स्वात्मसिद्धमेव चिद्रूपम्' [ वस्तुतः चिद्रूप तो स्वत एव सिद्ध है ]।

प्रमाणान्यपि वस्तूनां जीवितं यानि तन्वते ।
तेषामपि परो जीवः स एव परमेश्वरः ॥ इति ॥

सम्प्रज्ञाताधिकारेऽपि न शक्यं वक्तुम्, लिङ्गादिप्रतिसन्धानाभावेऽपि 'तदा शून्यमेवासी' दितिपरामर्शस्य जायमानस्य स्फुरणं विनाऽनुपपत्तेः, स्वरूपसतो हि परामृश्यमानता न दृष्टचरीति सम्प्रज्ञाते सुतरां दुरपह्नवं स्फुरणम्, तथापि क्रियाशक्त्यात्मकप्राणसहचरस्य ज्ञानशक्त्यात्मनश्चित्तस्य पदे पदे परिवर्तनशीलस्यावश्योपेतव्यस्य वृत्त्यपरपर्याया दशैव काचित्स्वतः स्फुरति सम्प्रज्ञात इत्यनुज्ञायताम् । ध्येयमात्रगोचरा सा न स्वात्मानमपि गोचरयेदिति त्वीदृशसूक्ष्मार्थेऽनुभवस्य दुर्विवेकतया न सशपथं केनाप्यभिधातुं प्रभूयते, प्रत्युत नित्यस्फुरणस्य कूटस्थतया संस्कारात्मकावस्थाविशेषासादनेऽप्रगल्भ या परामर्शानुपपादकत्वेन वृत्तिविशिष्टरूपेण तथात्वोपगमस्य च प्राप्ताप्राप्तविवेकन्यायेन वृत्तावेव पर्यवसन्नत्वेन तद्विषयकसंस्कारोपार्जनार्थं वृत्त्यन्तरस्य तद्विषयकस्य स्वीकारे नानावृत्तिमत्तया सम्प्रज्ञातपक्षत्यागप्रसङ्गेन तस्याः स्वविषयकतायाः सर्वैरुपेतव्यतया नित्यचित्यात्मकस्फुरणस्य स्वतः सिद्धत्वं समाधौ लभ्यत इत्यभिधानमप्रमाणम् । न च समाधौ वृत्तिरूपदशानाशस्य तया विषयीकारानुपपत्त्या तस्य स्फूर्तिः काचिन्नित्या स्यात्; न स्यात्, तस्मिन् समये तावद् 'वृत्तिनाशो मे स्फुरती' ति न प्रतीतिः, न वा 'इदानीं वृत्तिनाश इति प्रतीतिः। प्रतीतौ वा न समाधिरिति वृत्त्यन्तरस्यापि तादृशनाशविषयकस्य तदा स्वीकारे का क्षतिः, पश्चात्तु जातो 'वृत्तिसामान्याभाव एव ममाभू' दिति परामर्शो न शक्यो नित्यस्फुरणेनाप्युपपादयितुमित्युक्तमेव । असम्प्रज्ञातसमाधेश्चायं परामर्श इति तत्रापि नित्यं स्वतः स्फुरणमिति निराकृतमेतावता ।

अथ भवतापि त्वेष परामर्श उपपाद्य एवेति चेत्तर्हि मिलित्वा मन्त्रयावहे, यथा क्लृप्तेन चित्तेनैवोपपन्नः स्यादसौ । निरोध एव स्वात्मानं वेत्तीति तावन्नैवावाभ्यामभ्युपेयम् । निरुद्धावस्थचित्तो एव तु निरोधवेदिता कुतो न कल्प्यताम् । अथ वेदकचित्तसद्भावे निरोध

प्रमाणान्यपीति । घटादिवस्तूनामस्तित्वं यानि प्रमाणानि साधयन्ति तेषामपि चैतन्यसंपादकोऽस्तित्वप्रकाशः परो जीवः, स एव परप्रमातृरूपः परमेश्वरः शिवः । अत एवोक्तम् "ज्ञेयस्य च परं तत्त्वं यः प्रकाशात्मकः शिव," इति ।

तन्त्रालोककार ने भी कहा है—प्रमाणान्यपि'''इत्यादि' घटादिवस्तुओं का जीवन अर्थात् अस्तित्व जिन प्रमाणों के द्वारा सिद्ध किया जाता है उन प्रमाणों का भी जीवन यानी अस्तित्व चैतन्यसम्पादक पर जीव है और वही परमेश्वर है । [ भाव यह है कि बाह्य पदार्थ जबतक स्वरूपसंविद् में बूडित अर्थात् निमग्न नहीं होगा, तबतक उसका कोई अस्तित्व भी नहीं हो सकता, अतः उसे प्रकाश अपना स्वरूप बनाकर ही प्रकाशित करता है, यही उसका चैतन्यसम्पादन है और यही अस्तित्व है ] ।

एव कथम् ? उद्रिक्ता न काचिद्दशा चेतसस्तदेत्येतावतैव निरोधव्यवहारात्, अनुद्रिक्तं तु चित्तमन्तर्निलीनमिव स्वात्मानं किमिति न जानीयात्, उक्तपरामर्शोपपादेन हि प्रवृत्तावावाम्, तत्रान्या का गतिरिदानीम् । यदि तु चित्तस्य साक्षात्स्वयमेव निरोधविषयकत्वे तन्नाशेनैव संस्कारस्यार्थनीयत्वेन व्युत्थानविलोपापातः, सूक्ष्मदशयैव चित्तस्थितेरित्युच्यते, तदाऽत्यन्त सूक्ष्मतया काचिञ्चेतसः परिणतिस्तदन्तःस्तरे शयानेव वृत्त्यन्तराभावमवगाहमाना स्वसूक्ष्मावस्थात्मकसंस्कारार्जनस्य प्रभवन्त्यनुमन्यताम् । यदि च सैव परिणतिर्वृत्त्यन्तराभावकालीनतया निरोधावस्थेत्याद्रियते, तदा निरोधः स्वयमेव स्वस्य वेदितेतिपक्षोऽपि निरुपप्लव एव पर्यवस्यति । तस्मात्समाधौ भवदभिमता भाति चितिरिति कथं विश्वसनीयम् ।

अथ—चित्तस्यानानन्दतया समाधौ परिस्फुरत आनन्दस्य स्वरूपभूततैवेत्येवं वस्तुगतिमाश्रित्य 'पश्यत्यात्मानमात्मनि' इत्युच्यते, योगजधर्मप्रसूतार्षदर्शनेन पदार्थान्तरस्येवात्मनोऽपि नित्यत्वादिना निर्णयो हि नात्र विवक्षिततया सम्भावितोऽपि, किन्तु यस्यां कस्यामपि निरोधावस्थायामवर्जनीयतया स्वरूपभूताऽऽनन्दात्मिका चितिः स्वतः स्फुरत्येवेति, संस्कारार्जनाय तु त्वया रचिता प्रक्रिया रमणीयैवेति—ब्रूषे, तदपि न, एवं हि सर्वेष्वपि समाधिषु सुखस्फुरणप्रसङ्गात्, न चानुभववैषम्यं युज्यते, शून्यप्रायाऽप्यवस्था कदाचिदासाद्यते हि योगिना, साङ्ख्ययोगैश्च त्यक्तः स्वरूपसुखपक्षः, सत्त्वोद्रेकनिबन्धनं च सुखं चैत्तमेवानुत्तमसमाधावनुभूयते इति शक्यं वक्तुम्, उत्तमे तु समाधौ संवित्रुपेक्षात्मिकैव, इत्थमेव च निरोधमार्गगाः सौगता अपि संगिरन्ते, श्रीगोरक्षनाथसिद्धैरपि सिद्धसिद्धान्तपद्धतौ 'सर्वतत्त्वानां समावस्था निरुद्यमत्वमनायासस्थितिमत्त्वम्' इति समाधेर्लक्षणे निवेशितानायासस्थित्या दुःखाभावमात्रस्यैव तत्र सद्भावः किन्न सूचितः । तस्मादनुभवकलहे कथमियं वस्तुगतिर्निश्चीयताम् ।

अथैवमुच्यते—चित्तस्य स्थायितया पूर्वापरानुसन्धानाधीनव्यवहारनिर्वाहकत्वोपपत्तावपि परिणामित्वेनानित्यतयाऽनादिभवप्रवाहानुभवितृतानुपपत्त्या नित्योऽस्ति कश्चित्तदनुभविता कल्पनार्हः, नहि नानाचित्तोपगमे तज्जनकादृष्टोपार्जनस्यादरणीयत्वे स्वामिनं विना निर्वाहः, न खलु पूर्वचित्तमुत्तरचित्तस्य स्वाभोग्यस्य स्वामि, एवं चायमेव नित्यः पुमान् समाधाववर्जनीयतया चिद्रूपः परिस्फुरतु, चित्तं चोक्तरीत्या संस्कारार्जनानुकूलां दशामाश्रयतु । अचिद्रूपमात्मानमादाय तु नात्र प्रत्यवस्थीयते, तथासति निरोधसमाधौ कथञ्चिदगत्या चेतसो निर्वर्णितपरिणतेरेकस्याः सोढव्यत्वेऽपि तादृशात्मभानार्थं परिणत्यन्तरमसह्यमेव प्रसज्येत, गुणगुणितादात्म्यस्यैव च प्रामाणिकत्वेनेच्छाज्ञानाद्यागमापायद्वारा तादृशात्मनोऽपि चित्तवदेवानित्यताया अपि प्रसक्त्या स्वीकारानर्हत्वाच्चेति; नैतदपि सारम्, साङ्ख्यनये सर्वथोच्छेदाभावेन चित्तस्य त्रिकालानुस्यूता दशैव पुरुषकार्यकारिणीति शक्यवचनत्वात्, यदि च खाण्डनिकरीतिमाश्रित्य चित्तस्य दुर्निरूपलक्षणप्रमाणकार्यकारणभावा-

दिकतया दृश्यत्वादिना च मिथ्यात्वं व्यवस्थाप्यासंसृष्टमेव चिन्मात्रं सत्यतया निर्णीयेत, तदापि समाधिकालीनानुभवस्योक्तरीत्या चित्तेनैवान्यथासिद्धिशङ्काग्रस्ततया विशिष्याभौतिकचितौ प्रमाणतयोपन्यासो न युक्तः प्रतिभातीति पूर्वपक्षः ।

## चिदतिरिक्ते चित्ततानिरासः

अत्रोच्यते—स्यादेवमन्यथासिद्धिशङ्का यदि चित्तं किञ्चिदतिरिक्तं स्यात्, अवश्यमुक्तरीत्योपेया चितिरेव तु तत्तद्विषयसम्बद्धा चित्तमिति रहस्यवेदिनां विमर्शः, तथा च प्रत्यभिज्ञाहृदयसूत्रम्—'चितिरेव चेतनपदादवरूढा चेत्यसङ्कोचिनी ( चेत्येन सङ्कोचिनी ) चित्तम्' इति । तादृशसम्बन्धानुकूला तु चितिस्वभावभूता काचिदचिन्त्यप्रभावा शक्तिः, अतएव—चितेस्तत्स्वभावभूतायाश्च शक्तेर्व्यापकत्वेनैकत्वेन च सुख-दुःखादिव्यवस्था न स्यादिति चित्तमतिरिक्तं ताभ्यां प्रतिशरीरं भिन्नं सुखाद्यनुभवितृ स्वीकर्तुमुचितमिति—नाशङ्कनीयम्, स्वातन्त्र्यवशादेव तस्याः शक्तेस्तत्तच्छरीरावच्छेदेनोत्पन्नसुखादेस्तत्तच्छरीरावच्छेदेनैवानुभवोपपादनसम्भवेन जडेष्वनुभवितृताकल्पनाया असहनीयत्वात् । चितौ त्वनुभवरूपायामनुभवितृताव्यवहारो विषयिताविशेषाश्रयत्वनिबन्धनः, ज्ञानमर्थं गृह्णातीत्यादौ ज्ञानार्थकधातूनां विषयितापरत्वदर्शनात् । अन्यत्रमना अभूवमिति व्यवहारस्तु विषयान्तरसम्बद्धतया चितिमेवालम्बते ।

ननु चितितच्छक्त्योश्चाञ्चल्यमसम्भवि, तस्यापकृष्टपरिमाणधर्मत्वादित्यतिरिक्तं चित्तं स्वीक्रियतामिति चेन्न, नहि भ्रमणं चाञ्चल्यं किन्तु वासनानामुन्मेषः, नाडीमार्गेषु प्रचारस्तु प्राणस्यैवावधानभाजाऽनुभूयमानश्चित्तीयत्वेनाध्यवसीयते, शिक्षैव हि तस्य तादृशी, चितिरेव तु तत्र शक्त्या नाडीमार्गसंलग्नेव दर्शिता । ननु ज्ञानस्य सूक्ष्मावस्था संस्कारवासनादिशब्दैरुच्यते, न च कूटस्थचितेः सा सम्भवति, मैवम्, चितौ पूर्वः विषयसम्बन्ध एव हि विद्यमानतादशायां क्षणिकज्ञानसद्भावव्यवहारं निर्वाहयन्नुत्तरविषयसम्बन्धदशायां संस्कारादिशब्दव्यवहार्यतां भजते, न त्वन्यः कश्चित्संस्कारः, अतीतस्यापि विषयसम्बन्धस्य सूक्ष्मरूपतया सद्भावाच्च पुनः प्रबोधोऽपि सम्भाव्यते, संस्कारप्रबोधः स्मृतिरिति त्वनर्थान्तरमेव, तयोः पूर्वापरभावमाश्रित्य पार्थक्यकल्पनायां प्रमाणाभावात् । ननु विजातीयसंस्कारस्य प्रबोधोऽपि विजातीयतयोच्यमानः कथञ्चिद्विश्वसनीयः स्यात्, अतीतविषयसम्बन्धस्य तु कः प्रबोध इतिचेत्, चित्याऽतीतविषयसम्बन्धसम्बन्ध एव, घटेन हि सम्बद्धा चितिः 'अयं घट' इत्यनुभवव्यवहारहेतुतामासादयति, प्राचीनेन घटसम्बन्धेन तु सम्बद्धा 'स घट' इति तत्तोल्लेखिव्यवहारमर्जयति । उत्तरोत्तरविषयसम्बन्धेन तु विषयान्तरसञ्चारतयाऽत्र वक्ष्यमाणेन प्रतिबन्धात् 'अयं घट' इत्येतदव्यवहितानन्तरमेव 'स घट' इति व्यवहारो न प्रसूयते । स्वसम्मतसंस्कारस्योद्बोधकतया परैर्यद्युच्यते, तत् तत्तोल्लेखिव्यवहारे जननीये चितेरेव सहकारितयाऽस्माभिर्वक्तव्यम्, अयं तु विशेषः,

यदन्यत्र सदृशदर्शनचिन्तादिकं पृथक् अत्र तु सहचरितधर्माद्याकारतां शक्त्याऽऽपादिता चितिरेव । विद्यमानस्य विषयसम्बन्धस्य सम्बन्धं चितावादाय तु घटमहं जानामीत्यादिर्व्यवहारः । एतावता च 'अन्नमयं हि सोम्य मनः' इतिश्रुतेरपि विरोधो न शङ्कनीय इत्युक्तप्रायम्, निर्वर्णितवासनाप्रबोधेऽन्नस्य विशिष्य वैचित्र्याधायकतेत्यत्र तत्तात्पर्यात् । दृढोऽस्य संस्कारः, बुद्धिरस्य तीव्रेत्यादौ तु तत्तत्फलानुकूलं शरीरविशेषावच्छेदेनादृष्टादिरूपसहकारिवैजात्यं चितावभिप्रेयते ।

नन्वन्यादृशसंस्कारस्योपादानं चित्तमात्मा वोच्यते, विषयसम्बन्धस्योपादानं तु न चिति, अपरिणामित्वात्, नापि विषयः, सम्बन्धो ह्यत्र न संयोगो विवक्षितः, अनुमित्यादिविषये तदसम्भवात्, अपि त्वाकारताऽऽख्यः, सोऽपि च कैश्चिद् यद्यपि वृत्तेरेव नियन्त्रितः, तथापि चित्तपरित्यागे तद्वृत्तेरपि त्यक्ततया त्वया स चितेरेव वक्तव्यः, एवं च परोक्षस्थलीयविषयस्य तदुपादानत्वे तस्य न प्रत्यक्षं स्यात्, नह्युपादानं विहायोपादेये प्रत्यक्षता दृष्टचरीतिचेन्न, अन्येषामपि मते ज्ञानज्ञेयसम्बन्धस्य विषयो नोक्तरीत्यैवोपादानम्, नापि ज्ञानम्, नैयायिकानां तस्य गुणत्वात्, चित्तपरिणतिभेदस्य ज्ञानत्वपक्षे तस्य द्रव्यत्वेऽपि द्वयोः सम्बन्धं प्रति नैकस्य सम्बन्धिन उपादानत्वसम्भवः, सविषयकस्यैव ज्ञानस्योत्पत्त्या विषयविषयिभावं प्रति तस्योपादानताया असम्भाव्यत्वाच्च, नहि विषयिताशून्या कापि ज्ञानस्यानित्यस्य दशा केनचिदुररीकृता । अथ नैयायिकानां विषयविषयिभावस्य स्वरूपसम्बन्धरूपतयाऽनतिरिक्तत्वेन न सम्बन्धिद्वयीयोपादानातिरिक्तोपादानापेक्षितेति चेत्तथापि तेषां विषयताऽतिरिक्तः पदार्थ इतिनिष्कृष्टपक्षे पर्यनुयोगसम्भवात् सनिरूपकभावपदार्थमात्रस्यानित्यताया औचित्येन तस्या नित्यताया वक्तुमशक्यत्वात् । तस्माद्यदाऽनुभवैकशरणैः संयोगस्यापि गुणत्वपरिभाषां परित्यज्य निमित्तमात्रायत्तावस्थाविशेषरूपत्वं सम्बन्धिनोः स्वीकृतम्, तदा का कथा सम्बन्धान्तराणामिति न प्रकृते उपादानजिज्ञासा युक्ता, निमित्तता तु शक्तिविशेषे तदुपाहृतदृष्टादृष्टकारणेषु च न दुर्लभा । तथापि यदि कस्यचिदापातत उपादानजिज्ञासा स्यात्तदापि शक्तिरेवेयमुपादानभावेऽपि प्रभविष्णुरेव विचित्रचमत्कारतया । अतएव प्रस्तुतसम्बन्धस्य सम्बन्धिद्वयबहिर्भूतेयं कथं तदुपादानमिति न चोदनीयम्, न चेदेवम् शुक्त्यवच्छेदेन चितौ जातस्य रजतसम्बन्धस्य न रजतमुपादानम्, युगपदध्यासेन तस्य सम्बन्धात्पूर्वमसद्भावात्, नापि चितिः, अपरिणामित्वात्, नापि शुक्तिः, सम्बन्धस्य व्यावहारिकत्वापातात्, किन्त्वेतत्त्रितयबहिर्भूताऽविद्येति कथमिति वेदान्तिभिरपि मौनमुद्रैवाश्रयणीया स्यात् ।

नन्वेवं विषयसम्बन्धस्य सूक्ष्मदशामादाय संस्कारव्यवहारोपपादनमप्यनुपादेयमेव, घटादेरेव सूक्ष्मदशाया लोके प्रसिद्धिर्न तु सम्बन्धस्य; न च घटादेर्नाशकालीनसूक्ष्मदशायाश्चितौ सम्बन्ध एव घटादेः सूक्ष्मसम्बन्धः; घटादेरनाशेऽपि तद्विषयकसंस्कारस्योपपाद्यत्वात्, शरीरविशेषावच्छिन्नचितेः स्थूलावस्थघटादिनैव सम्बद्धाया अपि सम्भवाच्चेति

चेन्मैवम्, उत्तरविषयसम्बन्धेनाभिभूततया एव फलबलकल्प्यायाः सूक्ष्मताशब्देन विवक्षितत्वात्। वस्तुतस्तु सकृज्जातो विषयसम्बन्धो न कदापि विलोपमापद्यते, अत एवातीतानल्पकल्पवृत्तान्तप्रतिभासो महायोगिनाम्। न च विषयेषु नष्टेष्वपि तत्सम्बन्धी न नश्यतीति कथम्; सम्बन्धान्तरापेक्षया विषयविषयिभावसम्बन्धस्य विलक्षणस्वभावत्वात्, संयोगादिदृष्टान्तानुसारे त्वतीतादिविषयकानुमित्यादेर्भवतोऽप्यभावापत्तेः।

अथ हानोपादानादेरननुगतत्वेनाज्ञाननिवृत्तिस्थानीयमनुगतं चितौ जातस्य विषयसम्बन्धस्य किं फलमिति चेत्पूर्वकालावच्छिन्नस्य विषयसम्बन्धाभावस्य निवृत्तिरेव, ज्ञाननाश्यत्वेन रूपेण भावरूपाज्ञानस्यानभ्युपगमनीयतया वक्ष्यमाणत्वात्, शक्तिविशेषतया तु तदुपगमे नाशानर्हताया अपि प्रतिपादयिष्यमाणत्वात्। तथा चैतदुक्तं भवति, शरीरविशेषावच्छेदेन पूर्वं शक्त्याऽननुज्ञातश्चितौ घटादेः सम्बन्धः स्वस्वातन्त्र्योद्भासितप्रमाणप्रक्रियासम्पत्त्यनन्तरमनुज्ञायत इति। चितेर्व्यापकतया सर्वदैव विषयमात्रसम्बद्धत्वेऽपि घटादिव्यवहारे कादाचित्कत्वं हि तत्तदिन्द्रियलिङ्गादिव्यापृतिकालीनचित्सम्बन्धस्यैव तत्तद्व्यवहारहेतुताश्रयणेन समर्थनीयम्।

नन्वेवं विषयसम्बन्धस्यैव चितौ चित्ततार्पकत्वे स्थिते ब्रह्मविषयकज्ञानविलोपप्रसङ्गः, स्वस्मिन् स्वस्यासम्बन्धादितिचेदेकत्र विषयविषयिभावाभ्युपगमपक्षे स एव सम्बन्धो ब्रह्मणि, तदनभ्युपगमपक्षे तु ब्रह्मेतरसम्बन्धाभाव एव ब्रह्मसम्बन्धतया व्यवह्रियते, यदाह ब्रह्मैव प्रकृत्य—

जाग्रतः प्रत्ययाभावं यस्याहुः प्रत्ययं बुधाः।<br>सर्वसङ्कल्पसन्यासश्चेतसा यत्परिग्रहः॥ इति महोपनिषदि।

तदेवं संस्कारतन्मूलकपरामर्शादिव्यवस्थायाश्चित्यैवोपपादनसम्भवे समाधौ तत्तद्विषयसम्बन्धाभावरूपनिरोधं कदाचिद्गाहमाना कदाचिच्च तमपि न्यक्कृतवतीव सा स्वत एव स्फुरतीति युक्तमुक्तं समाधिधनेन ब्रह्मर्षिप्रवरेण श्रीभृगुणा पश्यत्यात्मानमात्मनीति।

इदन्त्ववधेयम्—ज्ञानतत्संस्कारस्मृतीनां प्रक्रियायाश्चितौ सञ्चार एवात्र तात्पर्यम्, कायव्यूहस्थल इवैकस्याश्चितेरनन्तशरीरेषु कर्मसम्पादकताभोक्तृतादशाऽऽश्रयणसम्भवेऽपि मृत्स्वादिसमये उत्क्रान्त्याद्यौपयिकतया स्वोचितशब्दैरुच्यमानमातिवाहिकशरीरघटकं वस्तुजातं मूलशक्तेरवस्थाविशेषरूपं तु स्वीकार्यमेव। इच्छाकृत्योरपि चान्यथाऽनुपपत्तेः।

ज्ञानाद्युपयुक्तातिरिक्तचित्तस्वीकारपक्षे तु तस्य समाधौ चिद्भास्यकोटावेव प्रवेशोऽनुद्रिक्तस्य विषयविशेषाकारतां वा गतस्येति भासिकायाश्चितः स्वतः स्फूर्तिरौचित्यप्राप्तैवेति पूर्वपक्ष एवोक्तम्, 'प्रमाणवस्त्वादायातः प्रवाहः केन वार्यते' इति नयने च समाधौ सूक्ष्मायाश्चित्तव्यापृतेरपि प्राप्ताया मर्षणीयत्वात्। अस्मिन् पक्षे 'चितिरेव चेतनपदादवरूढा चेत्यसङ्कोचिनी चित्तम्' इति सूत्रं तु कथञ्चिदेव योजनीयम्, पृथिव्या-

दिकं यथा चितिरेव, न तु चितिः पृथिव्यादिकमेव, तथा चित्तमपि चितिरेव, न तु चितिश्चित्तमेवेति विवर्तवादे निरूपयिष्यमाणत्वात्। 'तत्सृष्ट्वा तदेवानुप्राविशत्' इतिश्रुत्या च चेत्यस्य पूर्वं सृष्टिमादाय तेन सङ्कोचिनी सती चित्तमित्यस्याप्युपपत्तेः, ऐश्वरप्रमातृतायाः सृज्यापेक्षया प्राक्तनत्वेऽपि चैत्रमैत्रादिप्रमातृतायास्तदन्तरभावित्वात्, अतएव चित्तस्य विशिष्ट चितिरूपत्वाभिधाने किं बीजमिति नाशङ्कनीयम्, तस्य प्रमातृताघटकत्वेनाभ्यर्हितत्वादिति। किन्तु नेयं सूत्रव्याख्या स्वारसिकीति तु स्पष्टमेव। प्रकाशात्मतायाः प्रकाश्ये चितिरेव चित्तमित्येतावतैव बोधनसम्भवेन चितावुद्देश्यायां विशेषणद्वयनिवेशानौचित्यात्। 'तत्परिज्ञाने ( परिपूर्णस्वरूपप्रत्यभिज्ञाने ) चित्तमेवान्तर्मुखीभावेन चेतनपदाध्यारोहाच्चितिः' इत्युत्तरसूत्रविरोधाच्च, नहि त्रिगुणात्मकचित्तमेव चितिः स्यात्कथमपि, एवं हि तादृशचित्तदशायामवच्छेदशून्यचित्स्वरूपस्यापलाप आपतेत्। अन्वेषणीयश्चायमर्थो योगवाशिष्ठावपि यच्चिदेव वासनाकलुषिता सती चित्तजीवादिशब्दैर्व्यवह्रियत इति। इत्थं तु परं व्याख्यायताम्—चेत्येन = अन्तःकरणाद्युपाधिना सङ्कोचिनी = परिच्छिन्ना सती चितिरेव चित्तम् = जीव इत्यर्थ इति।

'मनोबुद्धिरहङ्कारस्तथा तन्मात्रपञ्चकम्।
एतत्पुर्यष्टकं प्रोक्तं देहोऽस्मावातिवाहिकः ॥

इति वदतो योगवासिष्ठकारस्यापि तु पुर्यष्टकघटकतया किञ्चिदन्तःकरणं सम्प्रतिपन्नमेव। उपाधिकृतावच्छेदतिरस्कारे तु जीवत्वदशाया अप्यपगमेन ब्राह्मस्वरूपोज्ज्वलीभाव एव 'तत्परिज्ञाने' इत्यादिसूत्रेण वर्ण्यत इति।

आत्मन एवानन्दरूपत्वं सत्त्वोद्रेकदुःखाभावादेस्तु तद्व्यञ्जकत्वमित्युपपादितमद्वैतस्वरूपनिरुपणशारदातद्राजहंसयोरितिसमाधावानन्दास्वादनमादायापि स्वरूपभूतचितेस्तत्र भानमिति शक्यत एव वक्तुम्। कफवातपित्तानां साम्येन यथाऽवस्थितौ स्थूलशरीरस्य स्वास्थ्यम्, एवं सत्त्वरजस्तमसां साम्येनावस्थितावान्तरं स्वास्थ्यमिति सत्त्वानुद्रेककालीनसमाधौ स्वरूपभूतानन्दस्य भासमानस्याप्यनुल्लसिततैवेति कृत्वा तस्य तत्र नैव भानमित्युक्तिरपि प्राप्तावसरा सम्पद्यते केषाञ्चित्। समाधौ निरसीमसुखास्वादे हि पुण्यप्रचयोऽपेक्ष्यत इति तस्य फलदानानुन्मुखत्वदशायां कथं विजातीयः सत्त्वोद्रेकः कथं च तादृशसुखास्वादः स्यात्। नन्वेवं गुणानां वैषम्यादान्तरं स्वास्थ्यं तु विलुप्तमेव; किमेतावता, दूषणतया प्रसिद्धमपिक्वचिद् गुणतां याति यतः, अतएव वातपित्तप्रकृतेरिव रोगप्रसक्त्यविशेषेऽपि कफप्रकृतेर्जनस्य बहवो गुणा निरूपिताश्चरकादौ। एवं च समाधिसुखास्वादस्यापि स्थायित्वाभावेन केचित्ततोऽपि वैराग्यं प्राप्य गुणत्रयसाम्यकालीनमेव समाधिमुत्तमतया वर्णयाम्बभूवुरिति रुचिवैचित्र्यमेवोत्तमानुत्तमसमाधिविभागे बीजमिति तमादायकस्याश्चिद्वस्तुस्थितेर्निरूपणमनुचितम्। भावुका ह्यसमसुखोल्लासमयीमेव दशामुत्तमतयाऽऽकलयन्ति। एवं चैतेभ्य आन्तरस्वास्थ्यस्वरूपमप्यन्यादृशं

तदित्थं निरूपितं स्फुरणतत्त्वम्, अनौपाधिकप्रेमास्पदतया तु वेदान्त-दर्शन इव तदानन्दात्मकमपि । "यो वै भूमा तत्सुखम्" "आनन्दं ब्रह्मणो रूप" मित्यादिश्रुतेश्च ।

आत्माऽऽनन्दमयः सर्वप्रियहेतुत्वतः शिवे !
भारादित्यागसुव्यक्तसुखात्मत्वाच्च शङ्करि ! ॥"

रोचते । स्वस्मिन् = उल्लसत्पूर्णानन्दे तिष्ठतीति स्वस्थः, तस्य भावो हि स्वास्थ्यमिति । गुणत्रयसाम्यकालीनोऽपि च समाधिर्नाल्पैःपुण्यैः प्राप्यत इति तस्यापि कादाचित्कत्वेन ततोऽपि वैरस्यं कुतो नासाद्यते । 'स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' इति न्यायेन तु समाधानं समानमन्यत्राभिनिवेशाद् । स्वरूपगोपनकारिण्या च शक्त्या पूर्वमावृतोऽपि परानन्दस्तदुपकल्पितोपायकलापसम्पादनैरात्मनैव प्रकाशते । अत एव–सुखस्य संवेद्यमानतयैव प्रथनात्तस्याः संवेदनाक्षेपकतया मोक्षेऽपि संवेद्यसंवेदनयोर्द्वयोरभ्युपगमेऽद्वैतहानिः, तयोरैक्ये त्वेकत्र विषयविषयिभावप्रसङ्ग इति शङ्कोत्पत्तन्त्येवोपहता सम्पद्यते सुखस्यानावृततया एवापेक्षणीयत्वादिति । सौगतादिभिः सत्त्वादिगुणत्रयानङ्गीकारेणादृष्टविशेषमादायैव तत्स्थानीया व्यवस्था समर्थनीयेति त्वन्यदिति शिवम् । तदित्थमिति । पूर्वप्रकरणराजहंसेऽभावस्वरूपालोचनप्रणाल्या तु पारमार्थिकैकभावसिद्धिस्तत्प्रकरणीयमूले 'निषेधस्य परिशेषो ध्रौव्येणापतती' त्युक्त्या व्यञ्जितैवासीदिति नात्र तदनुपनिबन्धेऽपि काचित्क्षतिः । इत्यादिश्रुतेश्चेति । 'आनन्दो ब्रह्मेति व्यजाना'दित्यादिका श्रुतिरादिपदार्थः । 'तच्च ज्ञानं नात्मधर्मो धर्मत्वे जडताऽऽत्मनः । ज्ञानस्य जडशेषत्वं न दृष्टं न च सम्भवि । तस्मादात्मा ज्ञानरूपः सुखरूपश्च सर्वदा । सत्यः पूर्णोऽप्यसङ्गश्च द्वैतजालविवर्जितः ॥'

प्रकरणार्थमुपसंहरन् स्फुरणतत्त्वस्यानन्दात्मकत्वं साध्नोति – तदित्थमिति । अनौपाधिकम् = निर्निमित्तकम् । पुत्रमित्रकलत्रादिष्वात्मव्यतिरिक्तो, स्वात्मनिमित्तकमेव प्रेम लक्ष्यते न तु तथाऽत्मनि । अत्रोक्तमभियुक्तैः—

तत्प्रेमात्मार्थमन्यत्र नैवमन्यार्थमात्मनि ।
अतस्तत्परमं तेन परमानन्दतात्मनः ॥ (प. १।९) इति ।

इस प्रकार स्फुरणतत्त्व-निरुपण सम्पन्न हुआ; यह स्फुरणतत्त्व अनौपाधिक ( अहेतुक ) प्रेमास्पद होने से वेदान्त दर्शन के समान आनन्दरूप भी हैं, 'यो वै भूमा तत्सुखम्' 'आनन्दं ब्रह्मणो रुपम्' इत्यादि श्रुतियाँ भी उसे आनन्दरूप कहती है ।

परमानन्द तन्त्र में भी कहा है—

'आत्मानन्दमय''' इत्यादि' ( २४-९६ ) हे शिवे ! शाङ्करि ! आत्मा आनन्दमय है, क्योंकि वह सर्वत्र प्रियत्वबुद्धि का हेतु है । तथा उसकी आनन्दरूपता भारादि त्याग के द्वारा व्यक्त भी होती है ।

**इति परमानन्दतन्त्राच्च । स्वरूपभूतसुखस्यापि पुरुषार्थत्वोपपत्तेरात्म-**

तत्र श्रुतिं प्रमाणयति—"यो वै भूमा तत्सुखम्" इति। "बहोर्लोपो भू च बही," रिति सूत्रेण बहुशब्दाद्भूमशब्दनिष्पत्तेर्बहुत्वं भूमशब्दार्थः। तस्य च निरतिशयस्यात्मन्येव पर्यवसितत्वादात्मैव भूमा, स च सुखस्वरूप इति भावः।

तत्रैवागमोऽपि—आत्माऽऽनन्दमय इति। आत्माऽऽनन्दमय आनन्दैकरूपः। "तत्प्रकृतवचने मयट्"। आनन्दप्रचुरत्वं चास्य "स एको मानुष आनन्द" इति मनुष्यत्वादारभ्य "स एको ब्रह्मण आनन्द" इति सर्वातिशाय्यानन्दरूपतां ब्रह्मणः प्रदर्शयन्तो श्रुतिः प्रतिपादयति। तत्र हेतुमाह—सर्वप्रियहेतुत्वत इति। सर्वेषां प्राणिनामन्यत्र प्रियत्वे प्रियत्वबुद्धौ हेतुत्वात्। आत्मार्थमन्यत्सर्वं प्रियं यस्मादिति यावत्। "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवतीति" श्रुतेः।

"आत्मनोऽर्थं प्रियं सर्वं पुत्रमित्रकलत्रकम्" इत्युक्तेश्च।

लोकेऽपि कृशानुनाप्रदीप्तगृहात्प्रियत्वेनाभिमतं पुत्रादिकं परित्यज्यापि स्वस्य वहिर्निर्गमनदर्शनात्प्रियतरत्वं स्वात्मन्येव न तत्र देहस्यैव प्रियतरत्वं शङ्क्यम्, रूजाविष्टे सति तस्मिन्नपि जिहासा उपावर्तते, न चात्मनि तथेति न देहस्य प्रियतरत्वसम्भवः। अत एवोक्तम्—अप्रतिसमाधेयव्याधीनां जलादिप्रवेशेन प्राणत्यागः इति।

किञ्च तृप्त्यर्थमोदनं प्रियमित्यौदनात्तृप्तेः प्रियतरत्वम्, तृप्तिरपि स्वात्मसुखाय प्रियमिति स्वात्मसुखं प्रियतमम्, सुखमपि स्वात्मार्थमिति स्वात्मैवातिप्रियतमः।

किञ्च सर्वेऽपि स्वत एव स्वात्मसत्तामेव वाञ्छन्ति न त्वसत्त्वं कदापि। न च निवृतिर्वा केनचिदिष्यते इति सुखरूपत्वमात्मनः प्रियेषु पर्यवसानभूतस्यैव सुखरूपत्वौचित्यात्। तस्यैव परमफलत्वादात्मैव सुखरूपः। अत एवोक्तम्—

इयमात्मा परानन्द परप्रेमास्पदं यतः।
मा न भुवं न भूयासमिति प्रेमात्मनीक्ष्यते ॥

आत्मनः सुखमिति भेदव्यवहारस्तु राहोः शिर इत्यादिवन्नेयः।

नन्वात्मनः सुखरूपत्वं नानुभवसिद्धमित्याशङ्क्यास्तीत्यनुभवमेव प्रदर्शयति—भारादित्याग इति। मस्तकसमूढात्यभारादित्यागेन सुष्ठु संशयादिराहित्येन व्यक्तमनुभूतं सुखात्मत्वं यस्य।

स्वरूपभूत सुख में पुरुषार्थत्व की उपपत्ति तथा आत्मा के सद्भाव में भी क्लेशों की अनुपपत्ति खण्डन-शारदा में उपवर्णित है।

**सद्भावेऽपि क्लेशानुपपत्तेश्च प्रकारस्तु शारदायां दर्शितः । इदानीन्तु वेदान्तसिद्धान्तात्स्वातन्त्र्यवादवैषम्यं निरूप्यते ।**

**तथाहि—यथा लौकिकः प्रतिभासो न विमर्शानात्मकः, नचैवं विमर्श-**

इति च देवीभागवते । क्लेशानुपपत्तेश्चेति । अहङ्कार एव क्लेशानां मूलमिति परवैराग्येण निवर्तनीयः स सत्यपि चिन्मात्रे आत्मनि । तस्मिन् सति नाहङ्कारो निवर्तन इति तु भ्रमः, प्रत्युत तदसद्भावे निराधाराऽहङ्कारनिवृत्तिरेव कथमिति भावः ।

विमर्शानात्मक इति । लौकिको विमर्शो ज्ञेयस्य ज्ञानद्वाराऽहमर्थलग्नतया भानम् । अलौकिकस्त्वग्रे निरुक्तः ।

ननु स्वरूपभूतसुखे स्वीयत्वज्ञानाभावात्कथं तस्य पुरुषार्थत्वमिति चेत्तत्राह-स्वरूपभूतसुखस्यापीति । शारदायां दर्शित इति । स्वरूपभूतसुखस्यानावृतत्वलाभाय चिद्रूपतापि तस्य । तथा च सुखं मेऽनावृतं भवत्वित्यादीच्छानां मन्निष्ठावरणविषयताशून्यत्वप्रकारकसुखविशेष्यकत्वेन सुखस्य तादृशविषयताशून्यत्वेनैव पुरुषार्थताया वक्तत्वात्स्वरूपात्मकसुखस्यापि तथात्वोपपत्तिः । सिद्धे इच्छानुदयेन स्वात्मकसुखस्य च सर्वदा सिद्धत्वेन "अहं स्याम्" सुखं वास्यामित्यादीच्छाया असम्भवेऽपि स्वात्मकसुखनिष्ठानावृतत्वस्यासिद्धत्वेन तद्विषयकेच्छायाः सम्भवेन पुरुषार्थतायां स्वातिरिक्तत्वस्याप्रयोजकत्वादितिध्येयम् । विस्तरस्तु तट्टीकात एवावगन्तव्यः ।

विचारान्तरमुपक्रमते—इदानीन्त्विति । वैषम्यप्रकारं दर्शयति—तथाहीति । यथा लौकिकः प्रतिभासो न विमर्शानात्मक इत्यस्य "तथा विश्वोत्तीर्णोऽपि प्रकाशो विमर्शात्मक एवेति परेणान्वयः । लौकिकः प्रतिभासः = घटादिज्ञानम् । सर्वस्य लौकिकप्रतिभासस्य तदात्मकत्वं स्फोरयितुं नञ्द्वयोपादानम् । प्रकाशस्य स्वात्मसंवेदनं विमर्शः । नहि लौकिकोऽपि कोऽपि प्रतिभासस्तद्रहितः क्वचिदनुभूयते । तदाह—न खलु विज्ञाने सति जिज्ञासोरपि कस्यचिज्जानामि न वेति संशयो न जानामीति वा विपर्ययो व्यतिरेकप्रमा वेति ।

ननु सर्वस्य लौकिकप्रतिभासस्य विमर्शात्मकत्वे ग्रामं गच्छतस्तृणस्पर्शादौ जायमानमुपेक्षात्मकं ज्ञानं कथं स्यात्, तस्यापि तदात्मकत्वे संस्कारजनकतया स्मृतिजननस्यापि ध्रौव्येणोपेक्षात्वमेव जह्यादित्याशयेनाशङ्क्योपेक्षात्मक ज्ञानं निरस्यति—न चैवं विमर्शत्वस्येति । तद्विकलमिति । स्मृतिजननयोग्यता

इदानीं वेदान्तसिद्धान्त से स्वातन्त्र्यवाद का वैषम्य निरूपण करते हैं—जैसे लौकिक प्रतिभास ( घटादिज्ञान ) विमर्श से भिन्न नहीं होता, अपितु विमर्शात्मा ही होता है । यदि कहें कि लौकिक प्रतिभास को विमर्शात्मा मानने पर—विमर्शत्व के स्मृतिजननयोग्यता से नियत होने से स्मृतिजनन योग्यता रहित उपेक्षात्मक ज्ञान नहीं

**त्वस्य स्मृतिजननयोग्यतानियततया तद्विकलमुपेक्षात्मकं ज्ञानं न स्यात्; न स्यादेव, मनोऽवधाने मया तृणं स्पृष्टमित्यादौ प्रमातृविश्रान्त्यपरपर्यायस्याहमर्थलग्नतया भानस्यौचित्यावर्जितत्वेन विमर्शात्मकतावत्तौ स्मृतिजननयोग्यताया आवश्यकत्वात्, मनोऽवधानाभावे च ज्ञानोत्पत्तेरेवासम्भवात्, न चाजिज्ञासितविषयकज्ञानानामुपेक्षात्वं सर्वानुभवसिद्धमेव, तैश्च संस्काराजननेन स्मृतिजननयोग्यताऽपि तत्र नास्तीति वाच्यम्, अजिज्ञासितविषयकज्ञानं हि दृढतरत्वादिरूपवैजात्यविशेषविशिष्टं संस्कारं नाधत्ताम्, संस्कारमात्राधानं तु कथं वार्यताम्; एतेन संस्काराजनकत्वमुपेक्षात्वमिति परास्तम्। एवञ्च विशिष्य मनोऽ-**

तच्छब्दार्थः। तादृशयोग्यतात्मकव्यापकवैकल्याद् विमर्शत्वरूपव्याप्यस्यापि वैकल्यम्। न स्यादेवेति। नैव भवतीत्यर्थः। तदेवोपपादयति—मनोऽवधान इति। ननु मनोऽनवधानदशायां जायमानमुपेक्षात्मकं ज्ञानं स्यादिति चेत्तत्राह—मनोऽवधानाभावे चेति। मनोऽवधानस्य सामान्यविशेषचर्चा त्वनुपदमेव चर्चिष्यति।

ननु तत्र लक्षणप्रमाणयोः सत्त्वे कथं तदभाव आपाद्यते इत्यभिप्रायेण तल्लक्षणप्रमाणे शङ्कते—न चाजिज्ञासितविषयकेति। अजिज्ञासितविषयकज्ञानस्य संस्कारजनकतामभिधत्ते—अजिज्ञासितविषयकज्ञानं हीति। मनोऽवधानाभावे च ज्ञानोत्पत्तेरेवासम्भवादित्यत्र मनोऽवधानसामान्यभावो विवक्षितस्तेन विशिष्यम-

होना चाहिए। [ तात्पर्य यह है कि विमर्शत्व एवं स्मृतिजननयोग्यता का व्याप्यव्यापकभाव होने से 'व्यापकाभावाद् व्याप्याभावः' नियमानुसार स्मृतिजननयोग्यतात्मक व्यापक के न रहने से विमर्शत्वात्मक व्याप्यदल से शून्य उपेक्षात्मक ज्ञान नहीं होना चाहिए ]। तो ठीक है, उपेक्षात्मक ज्ञान नहीं ही होता। मन के समवहित ( एकाग्र ) होने पर—'मया तृणं स्पृष्टम्' ( मैंने तृण का स्पर्श किया ) इत्यादि स्थलों पर प्रामतृविश्रान्तिरूप अहमर्थलग्नतया भान ही औचित्य प्राप्त है। ज्ञेय का ज्ञान द्वारा अहमर्थलग्नतया भान होना ही विमर्श है, अतः तृणस्पर्शादिज्ञान के भी विमर्शात्मक होने से स्मृतिजनन योग्यता भी उसमें मानना आवश्यक है और मन के अनवधान दशा में तो ज्ञानोत्पत्ति ही असम्भव है।

शङ्का—अजिज्ञासितविषयक ज्ञानों में उपेक्षात्व के अनुभवसिद्ध होने पर भी उनके द्वारा संस्कार की उत्पत्ति न होने से स्मृतिजनन योग्यता उनमें नहीं है।

समाधान—अजिज्ञासितविषयकज्ञान दृढ़त्वादिरूपवैजात्यविशेष से विशिष्ट संस्कार को भले ही उत्पन्न नहीं करता है, किन्तु संस्कारमात्र को उत्पन्न करने में उसे कौन रोकेगा। [ अर्थात् संस्कारमात्र तो तादृशज्ञान से भी उत्पन्न होता ही है, उसी से उसमें स्मृतिजननयोग्यता भी रह जायेगी ]। इससे—संस्काराजनक ज्ञान

**वधानं विना ज्ञानदर्शनेऽपि सामान्यतोऽपि मनोऽवधानं विना ज्ञानोत्पत्तौ न मानम् । अहमर्थलग्नतया तु भानाभावे भानमपि जड़प्रायमेव ।**

**तथा विश्वोत्तीर्णोऽपि प्रकाशो विमर्शात्मक एव । विमर्शश्चासौ चैतन्य-स्फुरत्तास्पन्दसत्तैश्वर्यादिशब्दितोऽपि । चैतन्यञ्च वेदान्तिनामिव न स्वव्यवहारे**

नोऽवधानाभावे ज्ञानोत्पत्तावपि न क्षतिरित्याह—एवञ्च विशिष्येति । जड़प्राय-मेवेति । यथा घटः सन्नपि न स्वात्मा स्वेनाहमिति परामृश्यते, ततो न चेत्यते इति जड़ इत्युच्यते, तथैव प्रकाशोऽपि यदि स्वात्मा स्वेनाहमिति न परामृश्येत तर्हि न चेत्येत, यदा स्वात्मन्यप्येषा सरणिः किमुतान्येषां लौकिकप्रतिभासानाम् । तथा च तादृशभानस्य जड़प्रायता एव ।

ननु विकल्पात्मनोऽर्थप्रकाशस्य भवतु नाम विमर्शात्मत्वम्, अविकल्प-विशुद्धसंविदवपुषि भगवति तु तत्कथमित्याशङ्कां परिजिहीर्षुः दार्ष्टान्तिकमाह—तथा विश्वोत्तीर्णोऽपीति । प्रकाशो हि विकल्पात्मको वाऽविकल्पात्मको वा विमर्श-स्वभाव एव, तदभावे जड़त्वापत्तेरुक्तत्वात् । तदुक्तमागमाचार्यैः—

स्वभावमवभासस्य विमर्शं विदुरन्यथा ।
प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः ॥

( ई० प्र० ५।५।११ ) इति ।

विमर्शम् = अहमेवं प्रकाशात्मा प्रकाशे इत्यात्मकम्, स्वभावम् = स्वात्मविश्रान्ति-लक्षणम्, अनन्यमुखापेक्षित्वमिति यावत् ।

विमर्शस्यानेकशब्दवाच्यतां दर्शयति—विमर्शश्चासाविति । सत्तेति । सत्ता ह्येषा महासत्ता अखण्डा च प्रकाशरूपा, सैव चिद्रूपा, नात्र शाक्तशैवयोर्वैमत्यं सा हि स्वातन्त्र्यमपीत्यत्रापि तयोस्तथैव, सदेव चित्, चिदेव सत्, तदुक्तम्—"महासत्ता महादेवी विश्वजीवनमुच्यते" इति । 'ऐश्वर्यादि' इत्यत्रादिना उर्मिब-लादीनां संग्रहः । वेदान्तमतवैषम्यं दर्शयति—स्वव्यवहार इति । स्वात्मकविश्वा-कारतयेति । विश्वस्य प्रकाशाब्रुडिततया प्रकाशात्मकत्वम् । प्रकाशश्च न निर्वि-मर्शः, विमर्शोऽपि न तच्छून्य इत्युक्तम् ।

उपेक्षात्मक होता है' यह लक्षण भी निरस्त हो गया । एवञ्च–विशेषरूपेण मनोऽवधान ( एकाग्रता ) के विना ज्ञानोत्पत्ति देखी जाने पर भी सामान्यतः मनोऽवधान के विना ज्ञानोत्पत्ति में कोई प्रमाण नहीं है । अहमर्थलग्नतया भान न होने पर तो भान भी जड़ प्राय ही है ।

वैसे ही विश्वोत्तीर्ण प्रकाश भी विमर्शरूप ही है । यह विमर्श ही चैतन्य, स्फुरता, स्पन्द, सत्ता, ऐश्वर्य आदि शब्दो से व्यवहृत होता है । और यह चैतन्य वेदान्तियों के चैतन्य के सदृश स्वव्यवहार में संविदन्तरानपेक्षत्व में पर्यवसन्न स्वप्रकाशत्व-

**संविदन्तरानपेक्षत्वपर्यवसन्नं स्वप्रकाशत्वमात्रम्, अपि तु केवलस्वात्मभाने स्वात्मकविश्वाकारतया च भाने इतरानपेक्षत्वम्, अत एव स्वात्मकवेद्यांश-प्राधान्यविवक्षायां विमर्शशब्देन वेदकांशप्राधान्यविवक्षायां तु तदेव प्रकाश-शब्देनोच्यत इत्यपि क्वचिद्व्यवहारः। उक्तचैतन्यमेव स्वातन्त्र्यम्, इयमेवास्य शक्तिदशाप्युच्यते स्पन्दत्वमपि किञ्चिच्चलनात्मकत्वमुक्तार्थे एव पर्यवस्यति,**

स्यादेतत्, प्रकाशविमर्शयोः परस्परात्मस्वभावतया द्वयोपैक्ये प्रकाशविमर्श-शब्दाभ्यां प्रतिनियतव्यवहारः कथमित्यत आह—अतएवेति। प्रकाशस्य तादृश-विमर्शात्मकत्वादेव। तदेव = एकमेव तत्त्वम्।

एतदुक्तं भवति। वस्तुत एकमेव तत्त्वम्, तदेव कदाचित्किञ्चिद् विवक्षया धर्मिरूपेणात्मानमुद्भासयत् प्रकाश, आत्मा इत्यादिशब्देन व्यवह्रियते। कदाचिच्च कयाचिद्विवक्षया धर्मरूपेणात्मानमुद्भावयच्चैतन्यविमर्शसत्तैश्वर्यादि-शब्दव्यवहारभाजनं भवति। तदाह—चैतन्यमात्मा ( शि० सू० १।१ ) इति। अभिनवगुप्तोऽपि—

"आत्मात एव चैतन्य" मित्यादिना॥

यतो विमर्श एव मुख्यमात्मनो रूपम्, अत एवात्मा धर्मिस्वभावोऽपि चैतन्यमिति धर्मवाचिना शब्देन व्यवह्रियते इति प्रत्यपादि। तादृशान्यनिरपेक्षतैव स्वातन्त्र्य-पदार्थ इत्याशयेनाह—उक्त चैतन्यमेवेति। इयमेवास्येति। अस्य = प्रकाशस्य, इयमेव = तादृशभाने परनिरपेक्षतैव, वेद्यांशप्राधान्यविवक्षया तादृशविमर्शरूपतैव वा। उक्तविवक्षावैचित्र्येणैव भेदमादाय षष्ठी, अन्यथा राहोः शिर इतिवत्सा बोध्या। स्पन्दत्वमपीति। परमात्मनोऽहमस्मीति किञ्चिच्चलनात्मिकादशा स्पन्दः। तदाह—"इह परमेश्वरस्य महाप्रकाशात्मनो विमलस्यापि एकैव परामर्शशक्तिः किञ्चिच्चलत्ताभासरूपतया स्पन्दः" ( स्प० सं० १) इति। अस्मा-देव "अहमि" त्यनुलोमगत्या सृष्टिः, विलोमगत्या तु संहृतिः, अत एव "महादेव" इत्यन्वर्थनामेति रहस्यवेदिनां विमर्शः। विशेषता मातृकार्थस्तु टीकायां कणेहत्य द्रष्टव्यः। अन्यथेति। स्पन्दस्य चितः शक्तिदशातोऽतिरिक्तकिञ्चिच्चलनात्मक-

मात्र नहीं है, अपितु केवल स्वात्मभान तथा स्वात्मकविश्वाकारतया भान में इतरान-पेक्षत्वरूप है। अत एव वही चैतन्य स्वात्मकवेद्यांश के प्राधान्य विवक्षा में विमर्शशब्द से तथा वेदकांशके प्राधान्यविवक्षा में प्रकाशशब्द से व्यवहृत होता है, यह भी क्वचित् कहा गया है। उक्त चैतन्य ही स्वातन्त्र्य है। यही (स्वातन्त्र्यरूपता) इस चैतन्य यानी परमात्मा की शक्तिदशा भी कही जाती है। किञ्चिच्चलनात्मकस्वरूप स्पन्दत्व का भी उक्तार्थ (तादृश इतरानपेक्षत्व) में ही पर्यवसान होता है। तादृश इतरानपेक्ष होकर भासित होना ही किञ्चित् चलनात्मक स्पन्द है न कि क्रियारूप, क्योंकि उसे क्रियारूप

अन्यथाऽनित्यत्वप्रसङ्गात्, अतएवोक्तम्—

किञ्चिच्चलनमेतावदनन्यस्फुरणं हि यत्।
उर्मिरेषा विबोधाब्धेर्न संविदनया विना॥ (इति तन्त्रालोके)

अनन्यस्फुरणं स्वयमेव तथा तथा प्रकाशमानत्वमिति तत्सम्प्रदायः। एवञ्च विश्वस्यैव दृश्यमानस्य स्वातन्त्र्यगर्भीभावे तस्य चिदात्मकत्वमेव।

एतेन दृग्दृश्ययोर्दर्पणप्रतिबिम्बभावोप्यादर्शितः, प्रतिबिम्बस्य दर्पण-

क्रियारूपतास्वीकारे। अनित्यत्वप्रसङ्गादिति। लौकिकी किञ्चिच्चलनात्मिकाक्रिया हि पूर्वरूपपरित्यागपूर्वकरूपान्तरप्राप्त्याद्यात्मिका कादाचित्की चातस्तद्रूपतोपगमेऽनित्यत्वप्रसक्तिः। अतएव = चितस्तादृशभाने निरपेक्षत्वादेव। किञ्चिच्चलनमिति। यदनन्यस्फुरणम् अन्यनिरपेक्षं तथा तथा प्रकाशनं स्वप्रकाशतेति यावत् एतदेव किञ्चिच्चलनम् स्पन्दपदार्थः। न चैषा तादृशस्वप्रकाशता आगन्तुकस्वरूपाऽपि त्वस्यैव विबोधाब्धेश्चिदब्धेरूर्मिः। नहि सागरस्योर्मिस्तस्य स्वभावात्पृथक्, सागरस्यैव काचिद्घूर्णितदशा सा जलमात्रत्वात्तथैव चिदब्धिमात्रमेव, अत आह—न संविदनया विनेति। इदमेव संविदः संवित्त्वं यत्सर्वमामृशतीति। तथा चोक्तमेव—तथा तथा प्रकाशत इति।

निश्चयोतितार्थं ब्रूते—अनन्यस्फुरणमिति। स्वात्मकविश्वाकारतयेत्यंशघटकं विश्वस्य स्वात्मकत्वं स्फुटयति—एवञ्च विश्वस्यैवेति।

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥ यो० वा०

इत्यादिनोक्तस्य दृग्दृश्ययोर्दर्पणप्रतिबिम्बभावस्य तात्पर्यमुपवर्णयति—

मानने पर क्रिया के कादाचित्क होने से अनित्यत्वापत्ति हो जायेगी। अतएव तन्त्रालोक (४।१८४) में कहा है—

किञ्चिच्चलनम्…… ……………… इत्यादि।

प्रकार (परमात्मा) का अनन्यस्फुरण अर्थात् तादृश इतरानपेक्षत्वरूपस्वप्रकाशत्व ही किञ्चित् चलनात्मकस्पन्दतत्त्व है। उस ज्ञान समुद्र की यह उर्मि (तरङ्ग) है। अतः यह संवित्तत्व इस स्पन्द के बिना नहीं रहता।

अनन्य स्फुरण का तात्पर्य है कि वह संवित् स्वयं ही तत् तत् रूपों से प्रकाशमान होता है, यह आगम सम्प्रदाय का कहना है।

एवञ्च सभी दृश्यमान जगत् स्वातन्त्र्य के अन्तःपाति (गर्भिभूत) होने से चिदात्मक ही है।

इससे दृग् दृश्य का दर्पणप्रतिबिम्बभाव भी व्यक्त कर दिया। दृग्रूपदर्पण में

**पार्थक्ये मानाभावेन दर्पणात्मकत्वेन दृग्दृश्ययोरभेदस्यैव विज्ञानवादे निरूपितस्य तेन विवक्षितत्वात्। विस्तरं तु विवर्तवादे वक्ष्यामः। बिम्बस्थानीयतायाः प्रकाशे विमर्शात्मके दर्पणात्मकेऽपि व्यवहारस्तु भेदमौपचारिकमादायैवेत्यत्र नातीवाभिनिवेष्टव्यम्, उक्तविवक्षितार्थस्यैवादरणीयत्वात्। प्रतिबिम्बस्य मिथ्यात्ववादस्तु न युक्तः, क्वापि न मिथ्यात्वमित्यस्य वक्ष्यमाणत्वात्। एवञ्च जड़भाषाऽपभाषैव चिद्भिन्नतया प्रथनमूला, तादृशप्रथनेऽपि मूलमुक्तस्वातन्त्र्यमेव, भेदस्यापि तद्घटकाकारघटकत्वात्। एवञ्चात्र दर्शने वैषम्यनैर्घृण्यप्रसङ्गोऽपि**

बिम्बस्थानीयताया इति। विमर्शे जडप्रधाने जलस्थानीयताविवक्षायां प्रकाशस्य सूर्यस्थानीयस्य बिम्बत्वम्, प्रकाशे निष्प्रतिबिम्बदर्पणात्मकत्वविवक्षायां तु विमर्शस्येच्छाशक्तिघटितस्य बिम्बकार्यकारितया तत्स्थानीयत्वम्, सप्रतिबिम्बदर्पणस्थानीयता तु विमर्शस्येति विवक्षावैचित्र्येण विवेक्तव्यम्।

एतेनेति। चिद्विषयस्य विश्वस्य चिदात्मकत्वेन। तेन दर्पणप्रतिबिम्बनिदर्शनेन। ननु अत्यन्ताभेदे दर्पणप्रतिबिम्बभाव एव दृग्दृश्ययोरनुपपन्न इति चेत्तत्राह—बिम्बस्थानीयताया इति। ननु प्रतिबिम्बस्य मिथ्यात्वेन तदभिन्नस्य दर्पणस्थानीयविमर्शात्मकप्रकाशस्यापि मिथ्यात्वापत्तिरित्याक्षेपं निराचष्टे—प्रतिबिम्बस्येति। न मिथ्येति। तत्र हेतुः—क्वापि न मिथ्यात्वमित्यस्य वक्ष्यमाणत्वादिति। एवं जड़त्वमप्यपहस्तयति—एवञ्च जड़भाषेति। अपभाषा = मृषा भाषा, तादृशकथनमात्रमेव, न वस्तुत इति, चित्स्वातन्त्र्यमेव स्वभिन्नतया प्रकाश्य जड़त्वव्यवहारं प्रयोजयति, सोऽयमात्मानमावृत्यस्थितो जड़पदं गतः" ( तन्त्रा० १।१३४ ) इत्युक्तेः। अत एव तत्र चिद्भेदोऽपि वस्तुतश्चिदतिरिक्तो न कश्चिदित्याह—भेदस्यापीति। अयं भावः—परप्रकाशात्मनः परमशिवस्य स्वाभिन्ना परविमर्शरूपा महाशक्तिर्या स्वातन्त्र्यादिनामभिरुद्घोष्यते, सैव भेदमयमभेदमयं

समस्त दृश्य प्रतिबिम्ब के समान है। प्रतिबिम्ब के दर्पण-पार्थक्य में प्रमाण न होने से जैसे प्रतिबिम्ब को दर्पणात्मक मानना ही उचित है, वैसे ही दृग् दृश्य का अभेद ही जो विज्ञानवाद में निरूपित है, दर्पण प्रतिबिम्बभाव में विवक्षित है। इसका विस्तार विवर्तवाद में करेंगे।

दर्पणस्थानिक विमर्शात्मक प्रकाश में औपचारिक भेद मान कर बिम्बत्व होता है, इसमें विशेषाग्रह करना उचित नहीं है क्योंकि उक्ताविवक्षितार्थ (दृग्दृश्यका अभेद) ही आदरणीय है। प्रतिबिम्ब को मिथ्या कहना तो युक्त नहीं है क्योंकि "क्वापि न मिथ्यात्वम्" यह वक्ष्यमाण है। एवञ्च चिद्भिन्नतया प्रथनमूलक जड़त्वव्यवहार अनास्थेय है। वस्तु का चिद्भिन्नतया भान भी उक्तस्वातन्त्र्य मूलक है क्योंकि भेद भी चैतन्य (स्वातन्त्र्य) में भासित होनेवाले आकार (घटादि) के अन्तर्गत है।

नावतारणीयः, वैषम्याद्यात्मना दुःखित्वाद्यात्मना पुण्यापुण्याद्यात्मना च स्वयमेव स्फुरणात्। न चैवमितरापेक्षत्वमप्रसिद्धं कथं निषिध्यते ? खपुष्प-

भेदाभेदमयं संसारमुद्वमति। पशोर्द्वैतात्मकसंसारे स एव विमर्शोऽविद्यारूपेण भेदमुन्मीलयति, शिवस्याद्वैतसंसारे स एव विद्यारूपेण भेदाभावमुद्भासयति। तदुत्तरं भेदाभेदमयं ताभ्यामुल्लासयतीति सर्वं विमर्श एव करोति। तद्घट-केति। स्वातन्त्र्यं तत्पदार्थः। अत एवोक्तम्—संविद्रूपे न भेदोऽस्ति वास्तवो यद्यपि ध्रुवे। ( तन्त्रा० १।१३८ ) इति।

ननु यद्येक एव विमर्शात्मापरमेश्वरः स्वस्वातन्त्र्यवशात्सर्वं स्फोरयति, तर्हि कांश्चिद् दुःखिनः, कांश्चित्सुखिनः, कांश्चिद्दरिद्रान्, कांश्चिद्धनि इति विषमां सृष्टिं निर्मिमाणस्य तस्य रागद्वेषविशिष्टत्वमापतति। अत्यन्तं दुःख-ज्वालाजटिलान् प्राणिनः प्रति दुःखयोगविधानान्नैर्घृण्यमपीत्याशङ्कां परिहरति—एवञ्चात्र दर्शने इति। कस्यचिच्चिदतिरिक्तत्वे हि तद्दोषौ प्रसज्येयाताम्, न तु तथा। विमर्शः स्वयमेव तथा तथाऽवभासत इत्युक्तत्वादित्याह—वैषम्या-द्यात्मनेति।

न चैवं चिदतिरिक्तस्यासत्त्वेन तदपेक्षत्वस्याप्यसिद्धत्वान्निषेधस्य च प्रतियोगिज्ञानमन्तरा ग्रहीतुमशक्यत्वात्कथं तस्य तादृशभाने इतरानपेक्षत्वमित्या-शङ्कते—न चैवमितरानपेक्षत्वमिति। दत्तोत्तरत्वादिति। यथाहि खपुष्पाद्यलीक-पदार्थानां सर्वथाऽभावेऽपि "महासत्ता हि खपुष्पादिकमपि व्याप्नोति" ( ई० प्र० वि० १।५।१४ ) इत्युत्पलदेवोक्तदिशा विमर्शब्रुडिततया तत्तच्छब्देन तत्तदलीकस्य भानं, तदतिरिक्तालोकस्य च तत्र निषेधोऽपि, तथैव प्रकृतेऽपि वस्तुतश्चिदति-

एवञ्च इस त्रिकदर्शन में परमेश्वर में वैषम्यनैर्घृण्य दोष भी आपन्न नहीं होता। क्योंकि वैषम्यादिरूप से, दुःखित्वादिरूप से, तथा पुण्यापुण्यादिरूप से चित्तत्व स्वयं ही प्रकाशित होता है।

यदि कहा जाय कि—वैषम्यादि सभी वस्तुओं के रूप से स्वातन्त्र्य के ही स्फुरित होने से इतरापेक्षत्व सर्वथा अप्रसिद्ध ही है, ऐसी स्थिति में उसका निषेध कैसे करते हैं।

[ तात्पर्य यह है कि इतर के अप्रसिद्ध होने से इतरापेक्षत्व अप्रसिद्ध है तथा इतरापेक्षत्वरूप प्रतियोगिके अप्रसिद्ध होने से तन्निषेधात्मक इतरानपेक्षत्व नहीं कह सकते]। तो यह कथन उचित नहीं है क्योंकि खपुष्पादि विकल्पों के आलोचन से इसका उत्तर दिया जा चुका है। [अभिप्राय यह है कि खपुष्पादिके समान अभेद में भेदोत्थापक शक्तिवशात् इतरतया प्रतीयमान वस्तु भी प्रतीत्यात्मक ही है, अतः उसका निषेध भी हो सकता है ]।

**मित्यादिविकल्पालोचनेन दत्तोत्तरत्वात् । न च सुखित्वादिरूपेणैव कुतो न भाति ? नियतात्मना भाने किमिदं स्वातन्त्र्यमपि तु परिच्छित्तिरेव । दुःखस्वरूपाननुभवे च सुखस्वरूपस्यैव विवेक्तुमशक्यत्वेनोक्तपर्यनुयोगस्यैवासम्भवात् । तस्माद् द्वन्द्वात्मना भानमपि फलतः सुखप्रतीतय एव । आहुश्च–हिंसाप्यनुग्रहः स्याद्व्रणगदिनां शस्त्रवैद्यकव' दिति । सर्वथाऽपि स्वातन्त्र्यमपर्यनुयोज्यमेव । एतेन विश्वाकारत्वे सततमेव सर्वैराकारैः कुतो न भातीति परास्तम् ।**

रिक्तस्येतरस्याभावेऽपि स्वस्वातन्त्र्यबलादेवेतरापेक्षत्वप्रसिद्धिरितरभासनेन तन्निषेधोऽपि चेति भावः ।

नियतात्मना भाने किमिदं स्वातन्त्रमिति । स्वातन्त्र्यम् हि स्वतन्त्रस्य भावः, "गुणवचनेति ष्यञ् । स्वतन्त्रशब्दश्च स्वम् आत्मा, तन्त्रं प्रधानमस्येति व्युत्पत्त्याऽपराधीनत्वपर्यवसायी । नियन्त्रित भानञ्च पराधीनत्व एवोपजायते, न स्वातन्त्र्ये, तथा च सति स्वस्वातन्त्र्यमेवापजह्यात् । अत एवाह—परिच्छित्तिरेवेति ।

दुःखभानस्याऽऽवश्यकत्वमप्याह—दुःखस्वरूपाननुभव इति । अनुकूलतया वेदनीयस्यापि दुःखाव्यतिरिक्तत्वेन ज्ञाते सुखत्वबुद्धेरनुदयात्, तिक्तौषधभक्षणादौ तथा दर्शनात् । अतस्तदर्थं तस्य दुःखानुभवस्याप्यवश्यमनुसरणीयत्वात् । प्रसिद्धं हि—"सुखं हि दुःखान्यनुभूय शोभते" इति । द्वन्द्वात्मना = सुखदुःखाद्यात्मना । आहुश्चेति । तन्त्रालोक इति शेषः । हिंसाप्यनुग्रह एवेति । यथा व्रणार्तानां कृते—"ततः प्रशस्तेषु तिथिकरणमुहूर्तनक्षत्रेषु दध्यक्षतान्नपानरत्नैरग्निं विप्रान् भिषजश्चार्चयित्वा, कृतबलिमङ्गलस्वस्तिवाचनं लघुमुक्तवन्तं प्राङ्मुखमातुरमुपवेश्य, यन्त्रयित्वा प्राङ्मुखो वैधो मर्मसिरास्नायुसन्ध्यस्थिधमनीः परिहरन् अनुलोमं शस्त्रं निदध्यादापूयदर्शनात् । सकृदेवापहरेच्छस्त्रमाशु च, महत्स्वपि च पाकेषु द्व्यङ्गुलान्तरं त्र्यङ्गुलान्तरं वा शस्त्रपदमुक्तम्" ( सु० सं० ५।७ ) इति सुश्रुताद्युक्तवाक्यविहितं शस्त्रकर्मातिक्रूरमपि हितकरत्वेनानुग्रहायैव, तथा संविदो

यह प्रश्न करना भी सम्भव नहीं है कि वह चैतन्य सुखीत्वादिरूप से ही भाषित क्यों नहीं होता; क्योंकि नियतरूप से भान होने पर स्वातन्त्र्य ही क्या रहा, वह तो परिच्छित्ति (सीमा) है । किञ्च दुःखस्वरूपानुभव के बिना सुखस्वरूप-विवेचन के अशक्य होने से उक्त आक्षेप निराधार है । तस्मात् सुखदुःखादि द्वन्द्वात्मना भान भी फलतः सुखप्रतीति के लिए ही है । कहा है—"हिंसाप्यनुग्रहः स्याद् व्रणगदिनां शस्त्रवैद्यकवदिति । [जैसे व्रणरोगियों के लिए आयुर्वेद में विहित शस्त्रप्रयोग भी हितकर होता है, वैसे ही ईश्वरकर्तृकहिंसा भी अनुग्रह ही है] । तथा च स्वातन्त्र्य सर्वथा अपर्यनुयोज्य (अनाक्षेप्य) ही है । इससे यह कथन भी निरस्त हो गया कि—चित् के विश्वाकार होने से वह सतत सभी आकारों से भासित क्यों नहीं होती ।

**प्रक्रियादशायान्तूक्तस्वातन्त्र्यशक्तिरेवेच्छाज्ञानक्रियाशक्तिरूपेण विभक्ततया वर्ण्यते, सर्वस्यापि व्यवहारस्य त्रितयनान्तरीयकत्वात्, ज्ञानशक्तिरप्यनुभवस्मृत्याद्यनेकशक्त्यात्मिका, 'स तपोऽतप्यते' ति श्रुतिसिद्धमालोचनमपि**

'भगवत्या निग्रहात्मना भानमप्यनुग्रहफलकमिति भावः । एतेनेति । चित्स्वातन्त्र्यस्यापर्यनुयोज्यत्वेन । अप्रतिहतस्वातन्त्र्यरूपाविच्छिन्नविमर्शात्मा हि प्रकाशः परमशिवस्तादृशविमर्शान्तःपातितयाऽनन्तानन्तशक्तिसंघट्टात्मा सन्नपि जागतिकव्यवहारे मुख्यतयाशक्तित्रयात्मनैव कार्यकारणभावोपयोगितयाऽवभासत इति तस्य तच्छक्तित्रयमुट्टङ्कयति—प्रक्रियादशायान्त्विति । तत्र—परमेश्वरस्य "अहमीशे, भासे, स्फुरामि, विमर्शे" इत्येवं यद्विमर्शनं तदिच्छाशक्तिः । सा च विमर्शस्यानन्यमुखतारूपा । न तत्र कश्चित्क्रमः । सैवान्तरवभासमानस्वभावतया ज्ञानशक्तिरिति, बहिर्भावरूपेण क्रमोपबृंहितेन विमर्शदार्ढ्येनोपलक्षिता सती क्रियाशक्तिरिति चोच्यते । तदुक्तम्—

स्वामिनश्चात्मसंस्थस्य
भावजातस्य भासनम् ।
अस्त्येव न विना तस्मा—
दिच्छामर्शः प्रवर्तते । ( ई० प्र० १।५।१० ) इति ।

एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम् ।
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते ॥
एवं भूतमिदं वस्तु भवत्विति यदा पुनः ।
जाता तदैव तत्तद्वत् कुर्वत्यत्र क्रियोच्यते ॥ इति च ।

तथा च भगवत एव परमशिवस्याक्रमत्वेऽपि युक्तो ज्ञानक्रियायोगः ।

तस्य व्यवहारौपयिकत्वमाह—सर्वस्यापीति । त्रितयेत्यत्रशक्तिरित्यादिः । "द्वित्रिभ्यां तयस्यायज्वा" इत्यवयवार्थेतयप् । एतेन ज्ञानेच्छाक्रियास्वन्यतमस्यान्यतमत्वेन व्यापकत्वं ध्वनितम् । "अनन्तशक्तित्वमप्यस्य स्वशक्त्यैवावियुक्तता" इतिन्यायेन तदात्मकैकैकशक्तिरप्यनन्तशक्तिसंवलितेत्याह—ज्ञानशक्तिरपीति । ननु चिदेव स्वातन्त्र्यवशाज्जगदात्मना भासते इत्यत्र "स तपोऽतप्यत" इति तपसा जगत्सृष्टिप्रतिपादकश्रुतिविरोध इत्याशङ्कां व्युदस्यति—"स तपोऽतप्यत" इत्यादिना । अत्र तपः शब्देन ज्ञानमेव गृह्यते नत्वितरः कायक्लेशाद-

प्रक्रिया दशा में उक्त स्वातन्त्र्य ही इच्छाशक्ति, ज्ञानशक्ति तथा क्रियाशक्ति रूप से विभक्ततया उपवर्णित है । क्योंकि सभी व्यवहार उक्त शक्तित्रय से व्याप्त है । इनमें ज्ञानशक्ति भी अनुभव स्मृति आदि अनेक शक्त्यात्मक है । "स तपोऽतप्यत" इस श्रुति से प्रतिपादित आलोचना भी ज्ञानशक्ति रूप ही है ।

**ज्ञानशक्तिरूपमेव। सर्वं च सर्वात्मकमेव, तदभिन्नाभिन्नस्य तदभिन्नत्वध्रौव्यात्। तथापि तु तत्तद्रूपस्य प्राधान्याप्राधान्यविवक्षायामुक्तत्रिकव्यवहारः। एवं तदेव**

**तदेव परपरापरापरात्मकमिति। शिवैकीभूतं स्वातन्त्र्यं तदा परामृश्यते।**

रूपः, सृष्टेः प्राग् ब्रह्मणो देहाद्यभावात्। तदुक्तम् भाष्यकृद्भिः—"तपोऽतप्यत। तप इति ज्ञानमुच्यते, "यस्य ज्ञानमयं तपः" इति श्रुत्यन्तरादाप्तकामत्वाच्चेतरस्यासम्भव एव तपसः। तत्तपोऽतप्यत तप्तवान्। सृज्यमान जगद्रचनादिविषयमालोचनमकरोदात्मेत्यर्थः। (तै० उ० २।६) इति। आलोचनमित्यनेन तप आलोचन इति वैयाकरणप्रसिद्धिरप्यनुकूला प्रकृते तपो ज्ञानमित्यत्रेति सूचितं भवति। सर्वञ्चेति। यद्यपीत्यादिः, तथापीति समाधाने सम्बन्धात्।

तदभिन्नाभिन्नस्येति। ज्ञानशक्त्यभिन्नस्वातन्त्र्याभिन्नत्वादिच्छादिशक्तेः। तदभिन्नत्वम् = ज्ञानशक्त्यभिन्नत्वम्। तथा चैकत्वमेवेति कथं त्रित्वव्यवहारः ज्ञानेच्छाक्रियाशक्तीनामित्यत आह—तथापीति। प्रोक्तस्वातन्त्र्यशक्तेरेव शिवशक्तिनरात्मकत्वं द्योतयति—एवं तदेवेति। निरूक्त स्वातन्त्र्यमेव तच्छब्दार्थः।

अत्रेदमवधेयम्—शिवः शक्तिर्नरश्चेति तत्त्वत्रयं त्रिकदर्शने। तत्र शिवः प्रथमः। स च-

परः, पूर्णोऽहमितिपरामर्शाधिशायित्वात्। परत्वञ्चापकर्षानाश्रयत्वम्। अत एव—

अभेदात्मा, सर्वस्य स्वात्मनि निमज्जनात्।

अत एव,

अनुत्तरतत्त्वात्मा, अ इति मातृकाव्यङ्ग्यत्वात्।

अत एव,

सदेवेत्यादि श्रुतिप्रतिपाद्यः। "सदेव सोम्येदमग्र आसीत्" (छा० ६।२।१)

अत्र सदिति अस्तितामात्रं विवक्षितम्, न तु सत्ताजात्यादिकम्। एवशब्दोऽवधारणार्थः। इदं नामरूपात्मकं परिदृश्यमानं जगदग्रे जगतः प्रागुत्पत्तेः सदेवासीदिति श्रुतेरर्थः। अस्तिता च ब्रह्मसत्ता, अस्तीत्येवोपलब्धव्य इति श्रुतेः।

यद्यपि सभी सर्वात्मक ही है। [भाव यह है कि एक स्वातन्त्र्य शक्ति ही ज्ञान इच्छा एवं क्रिया तीन रूपों से वर्णित है, वस्तुतः तो वह एक ही है। अतः उक्त तीन शक्तियों का भी तदभिन्नाभिन्नस्य तदभिन्नत्वन्याय से परस्पर अभेद है, और उन शक्तियों से समस्त जगत् का व्यवहार होता है, अतः व्यवह्रियमाण घटपटादि जगत् भी शक्तित्रयात्मक ही है, इस प्रकार सभी वस्तु सर्वात्मक है] तथापि तत्तद्रूपों (ज्ञानशक्ति,

**परपरापरापरात्मकं क्रमेणाभेद-भेदाभेद-भेदभानप्रयोजकमनुत्तरेच्छोन्मेषात्मकं**

अत एव,

अहं भवामीत्युत्तमपुरुषव्यवहार्यः, तत्त्ववेदनदशायाम् अहमितिप्रकाशमानत्वात् ।

द्वितीयपदार्थः—शक्तिः

सा च,

परापरात्मिका, मायिकोत्कर्षापकर्षाश्रयनैकविध-
लीलाविग्रहात्मना प्रथनात् ।

अत एव,

भेदाभेदात्मिका,

अत एव,

इच्छात्मिका, "इ" इति मातृकाव्यङ्ग्यत्वात् ।

अत एव,

एकोऽहं बहु स्यामिति श्रुतिप्रतिपाद्या ।

अत एव,

त्वं भवसीति मध्यमपुरुषव्यवहार्या, उपासनादशायां भिन्ना इव भासमानत्वात् ।

तृतीयपदार्थः—नरः ।

स च,

अपरात्मकः, संकोचात्मकाधस्तनकक्षाधिशायित्वात्

अत एव,

भेदात्मकः, किञ्चिज्ज्ञोऽहमिति अल्पज्ञत्वेन शिवाद्भिन्नतया भासमानत्वात् ।

अत एव,

उन्मेषात्मकः, "उ" इति मातृकाव्यङ्ग्यत्वात् ।

अत एव,

सच्चत्यच्चाभवदिति श्रुतिप्रतिपाद्यः । सच्च मूर्तं त्यच्चामूर्तमभवदित्यर्थः ।

अत एव,

इदं भवतीति प्रथमपुरुषव्यवहार्यः ताटस्थ्येन भासमानत्वात् ।

इच्छाशक्ति, क्रियाशक्ति) के प्राधान्याप्राधान्यदृष्टि से शक्तियों त्रित्वव्यवहार किया जाता है एवं वह शिवाभिन्न स्वातन्त्र्य ही शिव, शक्ति तथा नररूप से वर्णित होता है ।

## 'अ इ उ' इति मातृकाक्रमव्यङ्ग्यं 'सदेव सोम्येदमग्र आसीद्' 'एकोऽहं बहु

## मातृकाद्यर्थसंक्षेपः

अ इ उ इतिमातृकेति । एतत्त्रितयस्यैव प्राधान्यादिह चर्चाऽऽदृता, मातृकान्तरेष्वपि विस्तरस्तु तन्त्रालोक—परात्रिंशिकाविवरण—मातृकाचक्रविवेकादौ सूक्ष्मेक्षिकयाऽवगन्तुमुचितः । किञ्चित्तूच्यते—[1]अनुत्तरतत्त्वमेव स्वात्मविश्रान्ततया [2]आनन्दरूपं विश्वोल्लासने [3]इच्छाशक्तिमाश्रित्य [4]ईशितृदशामधिशय्य विश्वस्य [5]उन्मेषेण [6]ऊतामिव स्वयं याति; द्वैतप्रतिभासेव हि वस्तुतत्त्वमावृतमिति सुविदितमेव । अत्र चेकारेणेच्छासामान्यं द्योत्यते । स्वविषयविशिष्टतया तद्विवक्षायां तु विषयस्य प्रकाशकप्रकाश्यात्मना द्वैविध्यात्तेजोरूपस्य प्रकाशकस्य वह्निबीजेन रेफेण पृथिव्याद्यात्मनः प्रकाश्यस्य च पृथिवीबीजेन लकारेणोपलक्षणीयतामाश्रित्य ऋ[7] ( रि ) ऌ[8] ( लि ) इति मातृकाद्वयमाविर्भावितं परशिवेन, अत्र चानुत्कटैवेच्छा प्रतीयते, उत्कटां तां द्योतयितुं तु[9] ॠ ( री ) ॡ[10] ( ली ) इति मातृके प्रथेते ।

अत्रैवमप्याहुः—यथा हि योगी सर्वविकल्पशून्ये स्वात्मनि प्रविविक्षुः प्रथमं भास्वररूपसंवित्तिमासादयति, तदनु तु निश्चले रूपे प्रविशति । एवमनुद्भिन्नबाह्यप्रसरतया शून्यप्राये स्वात्मनि कदाचिद् विश्राम्यन्तीच्छाशक्तिः प्रथमं भास्वररूपं तेजोमयमवगाहते, अनन्तरं तु निश्चलरूपानुप्रवेशे पदमर्पयतीति द्योतनाय रलश्रुत्यनुगमः, अथवा केषाञ्चिदिष्यमाणानामचिरस्थिरत्वम्, केषाञ्चित्तु चिरस्थिरत्वमिति सूचनाय, रेफस्याग्नेर्लकारस्य च स्थिरस्वभावपृथिव्या बीजत्वादिति । अत्र पृथिव्याः निश्चलस्वभावत्वं प्रातीतिकं वा वास्तवं वेति चिन्तनीयमेव । 'भूगोलस्तु महेशानि ! कदम्बकुसुमप्रभः । सदा भ्रमति देवेशि !' इत्यादिवचनानामपि शक्तिसङ्गमतन्त्रादौ सद्भावात् । जगज्जनकत्वेनेच्छाया इष्यमाणरूषितं निरूप्यते न तून्मेषशवतेरिति तु द्रष्टव्यमेव । न चोन्मेषशक्तेर्जनकत्वाभावेऽप्यनुत्तरस्य जनकत्वेन तत्र विषयरूषणा स्यादेव; विषयरूषणादशायामनुत्तरस्येच्छारूपतायामेव पर्यवसानादिति मन्तव्यम् ।

अनुत्तरानन्दयोरिच्छाया उपचयार्थं संयोजनमे[11]कारेण तयोरुन्मेषस्य संयोजनं तु [12]ओकारेण प्रत्याय्यते । अत्रैवोत्कटयप्रतीतिस्तु मात्राधिक्य सति [13]ऐऔ [14]इत्येतद्द्वयेन स्यात् ।

### अ इ उ इति मातृकार्थस्तु

टीकातोऽवगन्तव्यः । एवञ्चेति । अहमिति विभक्तिप्रतिरूपकमव्ययम् अव्यतिरिक्ते प्रकाशे वर्तते, तस्य भावः, अहमिति स्वरूपविमर्शलक्षणोऽहन्ता, सैव प्रकाशस्य

इनमें शिवतत्त्व परतत्त्व है, वह अभेद भान का प्रयोजक है तथा अनुत्तरतत्त्वात्मक होकर "अ" इस मातृका के द्वारा व्यङ्ग्य होता है। वही "सदेव सोम्य" इत्यादि श्रुति से प्रतिपादित होकर "अहं भवामि" इस उत्तमपुरुष से व्यवहृत होता है।

आसां वियुक्ततयेव संयुक्ततयेव च दर्शितानां शक्तीनामाश्रयतया विवक्षितं तत्त्वं तु विन्दुनाऽऽवेद्यते, वेत्तीति विन्दुरिति व्युत्पत्त्या स्फुरणतत्वं हि विन्दुः। विवर्तवादे वक्ष्यमाणरीत्या शब्दार्थयोरैक्यमाश्रित्य तु सर्वत्रैवात्र अकारोऽनुत्तरतत्त्वमित्यादिसामानाधिकरण्यव्यवहारः। विसर्जनं तु पदार्थानामन्तर्बहिश्च, तत्राद्यं विलापनं द्वितीयं तूल्लासनमिति द्योतयन् विन्दुद्वयात्मा विसर्गः स्यात्। इयं च शक्तिप्रधाना दशा। अपि च दर्शितयोः शक्तिशक्तिमतोः सामरस्यमाविष्कर्तुं प्रवृत्तोऽयं विसर्गः। अत एवाकारहकारयोः सामरस्येनोच्चारणमस्य युक्तम्, तयोश्च शक्तिशक्तिमद्रूपत्वं 'अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः। नकारो व्योमरूपः स्याच्छक्त्यात्मा सम्प्रकीर्तित' इत्यादौ प्रसिद्धमेव। अत्रान्तर्विसर्जनानुकूला बहिर्विसर्जनानुकूला च दशा शक्तेः स्वलक्षणात्मिकैव, फलीभूतयोस्त्वन्तर्विलयबहिरुल्लासयोः शक्तेः सूक्ष्मस्थूलदशात्मकत्वम्, तत्राद्या शैवी, बाह्याभाससम्भेदत्यागे शक्तेः शिवात्मकत्वात्, द्वितीया तु जाड्यप्रधाना नरतत्त्वमयी।

चिदानन्देच्छाज्ञानक्रियाख्यास्तावत्पञ्च शक्तयः 'सर्वे सर्वार्थवाचका' इति नयेन अ इ ऋ लृ उ इति मातृकापञ्चकेनावगन्तव्याः, इकारश्रुतिघटितयोक्तरीत्या इकारानन्तरं ऋकारलृकारयो निर्देशः शोभत एव, अत एव वैयाकरणैः 'अकुहविसर्जनीयानां कण्ठः, इचुयशानां तालु' इतीकारस्थानं निर्दिश्य 'ऋटुरषाणां मूर्धा, लृतुलसानां दन्ता' इति ऋकारलृकारयोः स्थानं निर्दिष्टम्, पश्चात्तु 'उपूपध्मानीयानामोष्ठौ' इत्युक्तम्, अत्र च स्थानसाम्येनाकारात्मा सूक्ष्मो नादो जिह्वाग्रोपाग्रमध्यमूलानां तत्तत्स्थानेन स्पर्शादिप्रयत्नसाहाय्येन किञ्चित्स्थौल्यमिव यातःकवर्गरूपतां प्राप्नोति, एवमिकाराद्यात्मा सूक्ष्मो नादश्चवर्गादिरूपतामिति शक्यं कथञ्चिदनुभवपथमवतारयितुम्, अन्यथा स्थानसाम्यस्याकिञ्चित्करत्वापत्तेरित्युक्तशक्तिपञ्चकात्कवर्गादिवर्गपञ्चकोदयः, सर्वस्य सर्वात्मकत्वेन चैकैकस्या अपि शक्तेः पञ्चशक्त्यात्मकतया प्रतिवर्गं वर्णपञ्चकाविर्भावः। तत्र कवर्गः पृथ्वीजलतेजोवायुव्योमात्मा, शब्दार्थयोरैक्यस्योक्तत्वात्, तेषां वाचको वा, एवमग्रेऽपि। चवर्गो गन्धरसरूपस्पर्शशब्दात्मा, टवर्ग उपस्थपायुपादपाणिवागात्मा, तवर्गो घ्राणजिह्वाचक्षुस्त्वक्श्रोत्रात्मा, पवर्गो मनोबुद्धयहङ्कारप्रकृतिपुरुषात्मा। उक्तशक्तिपञ्चकादेव तु यवर्गशवर्गयोरप्याविर्भावो निर्दिष्टस्थानसाम्येनावगन्तव्यः, दन्तोष्ठ्यवकारस्य तु चरमशक्तिद्वयस्थूलरूपता, तत्राद्यो वर्गो नियतिरागकला-विद्येति तत्त्वचतुष्टयात्मा, मायायाः कालस्य चात्रैवान्तर्भावमाहुः। अन्तः = प्रमातृतत्त्वे कञ्चुकवदवस्थानमभिप्रेत्य त्वेतेषामन्तःस्थशब्दव्यपदेश्यता। शवर्गे तु शषसा ईश्वर-सदाशिव-शक्तिरूपाः, हकारस्तु सर्वमन्त्रमूलभूतानाहतमयी काचिच्छक्तिदशा। ईश्वरादितत्त्वेष्वभेदांशस्योन्मेषेण शवर्गस्योष्माभिधानत्वमित्याहुः। शेखरे तु ऊष्मा – वायुस्तत्प्रधानो वर्गोऽयमित्युक्तम्। एवमवर्गेण साकमष्टौ वर्गाः।

एतावता 'अह'मिति प्रत्याहारोऽपि निरूपितः, अकारहकारयोः 'अकारः सर्ववर्णाग्र्य' इति प्रागुद्धृतवचसा शिवशक्तिरूपयोर्मध्ये तत्त्वान्तराणामपि समावेशात्, तयोः समरसी-

भावानुभवाय 'नादस्यान्ते शिवं स्मरे'दिति स्वाभाविकस्थित्या नादमुत्थाप्य द्वादशान्ते तद्विलापनेनात्मविश्रान्तेः सर्वमन्त्रानुसन्धानफलीभूताया लाभमालोच्यान्ते मकारप्रयोगः। अयञ्च 'अह' मितिशब्दो वैयाकरणैरव्ययेषु निक्षिप्यते, अस्मच्छब्दनिष्पन्नाद् अहन्तादिशब्दसिद्ध्यसम्भवात्, अस्मच्छब्दस्य हि तलि 'अस्मत्ता' इति स्यात्, एकार्थतायां तु मम भावो 'मत्ता' इति स्यात्, 'प्रत्ययोत्तरपदयोश्च' इत्यस्य प्रवृत्तेः। 'ममता' इति तु विभक्तिप्रतिरूपकाव्ययादेव। 'युष्यसिभ्यां मदिक्' इत्युणादिसूत्रानुसारेण अस्यति = सर्वाक्षेपेण वर्तते, अस्ति वा त्रैकाल्येऽपीतिरीत्या तु अस्मच्छब्दार्थोऽप्यनुत्तरतत्त्वात्मैव पर्यवस्यति। योषादिशब्दनिष्पादकयुषिधातोस्तु निष्पन्नो युष्मच्छब्दो चिदचिन्मिश्रितमेव तत्त्वमवगमयति, अत एव प्रथमपुरुषस्य मध्यमपुरुषे एवान्तर्भावमभिप्रेत्य 'युस्मदस्मत्प्रत्ययगोचरयो'रिति शाङ्करभाष्ये पुरुषद्वयमेवोपात्तम्, उत्तमपुरुषस्यैव चिन्मात्रत्वेन विषयित्वात्।

संयुक्ताक्षरेषु मातृकायामुपलक्षणविधया कस्यचिद् दर्शनीयत्वे स्वरेष्वकारविसर्गयोराद्यन्ततयोक्तरीत्या व्यञ्जनेषु प्रथमोपस्थितककारस्याकारात्मकतया विसर्गसकारयोश्च शक्तिरूपतया लोकेऽपि तयोः स्थान्यादेशतात्मकसम्बन्धस्य प्रसिद्धतया च ककारसकारसंयोजनात्मा क्षकार एव दर्श्यते।

एतावता चाक्षप्रत्याहारोऽपि व्याख्यातः, यमादाय जपगणनौपयिकी अक्षमाला प्रवृत्ता, अत्र हि अकारात्प्रभृति क्षकारपर्यन्तं वर्णजातं विभाव्यते, क्षकारं सुमेरुस्थानीयं कृत्वा हकारोत्तरं लकारस्य लकारावस्थाविशेषस्य प्रक्षेपेण पञ्चाशद्वर्णसम्पत्त्याऽनुलोमप्रतिलोमगत्या च शतसङ्ख्यापूर्तौ पूर्वोक्तवर्गाष्टकसम्मेलनेनाष्टोत्तरं शतं सम्पद्यत इति।

एवम्—ओमित्यपि प्रत्याहार एव, यद्यपि केचिदकार ऋग्वेदादि; उकारो यजुर्वेदमध्यः, मकार सामवेदान्त्य इत्येवं तस्य वेदत्रयप्रत्याहारतां वर्णयन्ति, तथापि पूर्वोक्तस्य अ–इ–ऋ–ऌ–उ–इति शक्तिपञ्चकस्यान्तर्णीतसकलमातृकाचक्रस्याप्यसौ प्रत्याहारः सम्भवत्येव, अन्ते मकारयोजनं त्वनुपदमुदिताहम्प्रत्याहारन्यायेनैव, उक्तशक्त्याश्रयतया च बिन्दोरन्ते योजनं युज्यत एव, अन्यथा हि उकारशक्तिविलासीभूतपवर्गान्तगतमकारस्य दशैवोज्ज्वला काचिद्बिन्दुरित्येवमेव शक्तिपञ्चकान्तर्णीतता बिन्दोर्वक्तव्या स्यात्। एवञ्चान्तर्णीतसकलशक्तिचक्र प्रकाशात्मबिन्दुतत्त्वमेव प्रणवार्थः, लक्षणया तु कैश्चिन्निष्कृष्टं चैतन्यं तदर्थतया परं वर्ण्यते। तत्र यद्यपि अ-उ-म्—इत्येषामुच्चारणे मुखस्य विकासकिञ्चिन्निमीलन-मुद्रणैः सर्वतो विविक्तताऽनुत्तरधामनि, उन्मेषे किञ्चिद्द्वैतसंस्पर्शः, मकारे तु सर्वथैव द्वैततादात्म्यं सृष्टिक्रमेण सूच्यत इति शक्यते कथञ्चिद्वक्तुम्, तथापि मोक्षमन्त्रेऽस्मिन् संहारक्रमस्यैवौचित्यप्राप्ततयाऽन्ते प्रकाशात्मबिन्दोरेव निवेशिततया च मुखविकासादित्रयेण प्रत्येकं क्रमेण भेदभेदाभेदाभेदावस्थाः सूच्यन्त इत्यवोचितं वक्तुम्, अध्यारोपापवादन्यायेन चानुत्तरानन्दयोरुन्मेषदशायां प्रसरणेन ओभावप्राप्त्या बिन्दोरेव परिशेषः शोभामाधत्ते।

स्याम्' 'सच्च त्यच्चाभवत्' इति श्रुतिभिः क्रमेणावगाहितं शिवशक्तिनरात्मकं 'अहं भवामि, त्वं भवसि, इदं भवति' इत्युत्तममध्यमप्रथमपुरुषैः समीक्षितमीक्ष्यते, परमेश्वरो हि प्रथमं तटस्थ इवेति प्रथमपुरुषः, उपासनादशायां तु त्वमित्यवभासते इति मध्यमपुरुषः, तत्त्ववेदनवेलायां त्वहमिति चकास्ती-

अत्रावान्तरप्रभेदादरे तु मकारोपरि बिन्दुः, अर्धचन्द्रः, रोधिनी, नादः, नादान्तः, शक्तिः, व्यापिनी, समना, उन्मना इति मात्राणां सत्त्वेन संहृत्य प्रणवे द्वादशमात्राः सम्पद्यन्ते, स्वच्छन्दतन्त्रोक्तरीत्या अकारोकारमकाराणां ह्रस्वदीर्घप्लुतरूपत्वे तु तिस्रो वर्धन्ते, सर्वोर्ध्वदेशोपलक्षितं विश्वोत्तीर्णं महाबिन्द्वात्मकं तेजस्तु वामकेश्वरतन्त्रे निरूपितमिति मिलित्वा षोडश गण्यन्ते अत्रैव क्वचिन्नामादिपरिवर्तनेन तु षोडश नारदपरिव्राजकोपनिषदि (पृ० ७७९)। माण्डूक्योपनिषदि प्रसिद्धानां चतसृणां विश्वविश्वः, विश्वतैजसः, विश्वप्राज्ञः, विश्वतुरीय इत्येवं परस्परं प्रगुणीकारेण षोडशेति तु प्रस्थानान्तरं परमहंसपरिव्राजकोपनिषदि। संक्षिप्य तु अकारोकारमकारबिन्दुनादा इति मात्रापञ्चकम्, ह्रस्वदीर्घप्लुतसूक्ष्मातिसूक्ष्मेति तु तासां कालपञ्चकम्, ब्रह्मविष्णुरुद्रेशसदाशिवेति तु वाच्यपञ्चकम्, एवं तदधिष्ठेयधराप्रकृतिमायेश्वरसदाशिवतत्त्वानां चतुर्थवर्णोच्चारयित्रवस्थानां तु जागरास्वप्नसुषुप्तितुर्यतुर्यातीतानां पञ्चमं पञ्चकमिति स्वच्छन्दतन्त्रे। इदं च प्रसङ्गादावेदितम्। प्रकृतमनुसरामः।

स्कन्दपुराणे तु (माहे० खं० कौ० खं० अ० ५) मातृकाचक्रमधिकृत्य चतुर्दशस्वराश्चतुर्दश मनवः, अनुस्वारविसर्गजिह्वामूलीयोपध्मानीया जरायुजादयश्चत्वारः, ककारादयष्ठकारान्ता द्वादशादित्याः, डकराद्या बान्ता एकादश रुद्राः, भाद्या षकारान्ता अष्टौ वसवः, सहौ अश्विनौ। इत्येष भावार्थः। तत्त्वार्थस्तु य एतानाश्रित्य क्रियापरास्तेऽर्धमात्रात्मके नित्ये पदे लीयन्त इति निरूपितमिति।

द्वितीय तत्त्व शक्तितत्व है जो परापररूप है, क्योंकि शक्तितत्व ही शिवदशा में पर तथा नर दशा में अपररूप होने से परापररूप से वर्णित है। अतएव वह भेदाभेद भान का प्रयोजक है और इच्छाशक्तिरूप होकर "इ" इस मातृका के द्वारा व्यङ्ग्य होता है। वही शक्ति तत्त्व "एकोऽहं बहुस्याम्" इस श्रुति से प्रतिपादित होकर "त्वं भवसि" इस मध्यमपुरुष से व्यवहृत होता है।

तृतीयतत्त्व नरतत्त्व है, जो अपरात्मक होने से भेदभाव का प्रयोजक है और उन्मेषात्मक होने से "उ" इस मातृका से व्यङ्ग्य है। और वही नरतत्त्व "सच्च त्यच्चाभवत्" इस श्रुति से प्रतिपादित होकर "इदं भवति" इस प्रथमपुरुष से व्यवहृत होता है।

परमेश्वर ही प्रथम तटस्थ ( दूरस्थ ) सा प्रतीत होता है, अतः उसके लिए प्रथम पुरुष का प्रयोग किया जाता है। उपासनादशामें वही युस्मदर्थ त्वम् ऐसा भासित

त्युत्तमपुरुषः । एवं च पूर्णाहन्तोल्लेखिपरामर्शमादायैव परत्वम् । तदाह—

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' ॥ इति ॥

शक्तितत्त्वमेवाक्षरमित्युक्तम्, नरतत्त्वं तु क्षरमिति, अत्रैव घटादेरन्तर्भावः ।

निजं लक्षणम् । एतदेव शिवशक्तिनरात्मकं त्रिकतत्त्वं व्युत्क्रमेण क्षराक्षरपुरुषोत्तमेति गीतास्वप्यभिहितं त्रिभुवनानिबन्धनवन्धुनेत्याह—तदाहेति । यस्मादिति । यस्माद् हेतोः, क्षरम् प्रतिक्षणविनश्वरजन्मादिविकारयोगिभौतिकशरीराभिमानिनं स्थूलं प्रमातारमतीतोऽतिक्रान्तः, तथाऽक्षरात् क्षरस्वरूपविलक्षणस्वरूपात् सूक्ष्मात्प्रमातुरप्युत्तमः प्रकृष्टः, ततोऽन्वर्थया पुरुषोत्तम इति संज्ञया लोकशास्त्रयोः प्रथितः प्रख्यातः । उत्तमः पुरुषस्त्वन्य इति । एताभ्यां क्षराक्षराभ्यां पुरुषाभ्यामन्यः सत्यस्वरूपमात्रप्रतिष्ठितत्वाद्विलक्षणः, अत एवोत्तमः सर्वपुरुषातिशायिधर्मा, अत एव परमात्मा, माया हेतुकागमापायानित्यधर्मसामानाधिकरण्याभावात्परमो निरुत्तरः सत्य आत्मा । तदित्थं स्थितेऽत्र त्रिप्रकारः प्रमातृव्यवहारो व्यवस्थितः । तथाहि—यस्य भौतिकशरीरनिष्ठाहंप्रत्ययनिबन्धनो व्यवहारः स स्थूलः प्रमाता, क्षरपदवाच्यः । यस्य च तादृक् शरीरवेदकतद्व्यतिरिक्तजीवनिष्ठाहं प्रत्ययनिबन्धनो व्यवहारः स सूक्ष्मः प्रमाता, अक्षरपदवाच्यः । द्वावेतौ मायीयौ प्रमातारौ । यस्य पुनरशेषक्षेत्रव्यापकपरमार्थसत्यसंवित्प्रकाशैकस्वभावपरमात्मनिष्ठाहं प्रत्ययनिबन्धनो भेदप्रतीतिकल्पनामात्रसंस्पर्शशून्यस्वरूपप्रत्यवमर्शमात्रात्मको व्यवहारः स परमार्थसत्यः परमपुरुषः परमात्मपदवाच्यः । शक्तितत्त्वमेवाक्षरमित्युक्तमिति । अत्र भगवत्पादा अपि— क्षरश्च क्षरतीति क्षरो विनाश्येको राशिरपरः पुरुषोऽक्षरस्तद्विपरीतो भगवतो मायाशक्तिरिति, क्षरः सर्वाणि भूतानि समस्तं विकारजातमित्यर्थः । कूटस्थः कूटो राशिरिव स्थितः, अथवा कूटो माया वञ्चना जिह्मता कुटिलतेति पर्यायाः, अनेकमायादि प्रकारेण स्थितः कूटस्थः संसारबीजानन्त्यान्न क्षरतीत्यक्षर उच्यते" इति च प्रत्यपत्सत ।

होने लगता है, अतः वह मध्यम-पुरुष के प्रयोग का विषय बन जाता है । वही तत्त्वज्ञान दशामें "अहम्" रूप से भासित होने से उत्तम पुरुष के प्रयोग का विषय होता है । एवञ्च "पूर्णोऽहम्" इस प्रकार पूर्णाहन्ता के उल्लेखी परामर्श के द्वारा ही उसमें परत्व आता है । भगवान् ने गीता में कहा है—"यस्मात्क्षरम्... ... इत्यादि । "क्योंकि मैं क्षर अर्थात् संसारभाव से अतीत (परे) हूँ और संसार के बीजभूत अक्षर (शक्तितत्त्व) से भी उत्तम (परे) हूँ । इसीलिये अर्थात् क्षराक्षर से उत्तम होने के कारण, लोक और वेदमें, मैं पुरुषोत्तम नाम से विख्यात हूँ" । उत्तम अतिशय-

इदन्तास्पदतयैव तेषु चित्त्वे सत्यपि जडत्वव्यवहारः। जडेष्वपि क्वचित्पर-तत्त्वात्मकताध्यवसानेन तु 'मेरुः शिखरिणामहम्' इत्युत्तमपुरुषप्रयोगः। यदाह तन्त्रालोके—

तस्यैव तु स्वतन्त्रत्वाद्द्विगुणं जडचिद्वपुरिति,

शक्तिरूपताध्यवसानेन तु 'शृणुत ग्रावाण' इतिमध्यमपुरुषप्रयोगः। एवमन्यत्रापि साङ्कर्यं द्रष्टव्यम्। सम्प्रदायत्वस्य सिद्धान्तोपासनाचारत्रितयपर्याप्तत्वेऽपि सिद्धान्तमात्रसंशोधनाय प्रवृत्तस्य मे इहोपासनादिसौधमनारुह्यैव किञ्चिद-भिधाने विज्ञैर्न्यूनता न देशनीया। एतावता च त्रिकदर्शनत्वमपि व्याख्यातम्। अयं च सामान्यविभागः।

द्विगुणं जडचिद्वपुरिति। प्राणादिकमिदन्ताहन्तास्पदतया जडचिद्रूपत्वाज्जडत्व-चित्त्वलक्षणगुणद्वययोगीत्यर्थः। एतावता चेति नरशक्तिशिवेतितत्त्वत्रयस्वीकारेण चेत्यर्थः। क्रमेण क्रिया-ज्ञान-तदुभय-प्रधानं सिद्धा-नामकमालिन्याख्यतन्त्रत्रयम्, तदुपगन्तृत्वादपि त्रिकदर्शनत्वमाहुः।

ननु घटादीनां नरतत्त्वात्मकक्षरेऽन्तर्भावे नरवद्घटादेरपि चेतनत्वव्यवहारः स्यान्न तु जड़त्वव्यवहार इति चेत्तत्राह—इदन्तास्पदतयैवेति। क्वचिज्जडेष्व-प्युत्तमपुरुषमध्यमपुरुषप्रयोगयोर्हेतुप्रदर्शनेनोपपत्तिमाह—जडेष्वपीति। सन्ति त्रयोंऽशास्त्रिकदर्शने सिद्धान्त उपासनाऽऽचारश्च, तत्र सिद्धान्तस्यैवाक्षेपसमाधा-नाभ्यां व्युत्पादने तदतिरिक्ताव्युत्पादनप्रयुक्तन्यूनतां निराचष्टे—सम्प्रदायत्व-स्येति। न्यूनत्वम् अनभिधानानुमिताबोधवत्पुरुषोच्चरितत्वं ग्रन्थनिष्ठम्, कर्तृ-निष्ठञ्च तत् तादृशतद्विषयकाबोधवत्वम्। न देशनीयेति। न कल्पनीया।

उत्कृष्ट पुरुष तो अन्य हैं क्षराक्षर दोनों से विलक्षण होने से उसे परमात्मा कहते हैं।

उक्त गीता वचन में शक्तितत्त्व अक्षर तथा नरतत्त्व क्षर कहा गया है, और इस नरतत्त्व में ही घटादि पदार्थों का अन्तर्भाव है। उनके चिद्रूप होने पर भी इदन्तास्पदता अर्थात् इदम् इत्याकारक-व्यवहारविषयता होने से उन घटादिकों में जड़त्व व्यवहार होता है।

क्वचित् जड़ पदार्थों में भी परतत्त्वात्मकता के अध्यवसाय ( निश्चय ) से "मेरुः शिखरिणामहम्" ( पर्वतों में मैं मेरु हूँ ) इस प्रकार उत्तम पुरुष का प्रयोग होता है। जैसा कि तन्त्रालोक में कहा है—"तस्यैव........" परतत्त्व स्वस्वातन्त्र्यवशात् जड़ तथा चिद्रूप होकर जड़त्व चित्त्व उभयग्रहणवाला होता है। जैसे प्राणादि इदन्तास्पदतया जड़रूप-होकर जड़त्वगुण वाले तथा अहन्तास्पदतया चिद्रूप होकर चित्त्वगुण वाले होते हैं। एवं शक्तिरूपताके निश्चयसे "शृणुत ग्रावाण" ( पत्थरों सुनो ) इत्यादि स्थलों में मध्यमपुरुषका प्रयोग भी होता है। इसी प्रकार अन्यत्र भी

अथावगतमेतत् प्रपञ्चस्तु सोपादानो वा निरुपादानो वा, नाद्यः, शिवस्यातिरिक्तोपादानापेक्षित्वेऽद्वैतभङ्गात्, यत्तु दाक्षिणात्यविशिष्टाद्वैतिशैवैः श्रीकण्ठभाष्यादौ नामरूपविभागानर्हसूक्ष्मचिदचित्प्रपञ्चशक्तिविशिष्टतया केवलः शिवः सर्गकाले स्वसङ्कल्पमात्रेणोपादानकारणमनपेक्ष्यैव तत्तन्नामविशिष्टं सकलं चिदचिदर्थजातं प्रकाशयतीत्युक्तौ 'मायां तु प्रकृतिं विद्यात्' 'तस्माद्विराडजायत' इत्यादिश्रुत्या मायापुरुषयोरुपादानत्वसिद्धौ कथं निरुपादानत्वमित्याशङ्क्य यथा घटनिष्पत्तौ कुलालस्य स्वशरीरपृथक्त्वेन मृत्पिण्ड उपादानं

सिद्धान्तमात्रसंशोधनस्यैव प्रवृत्युद्देश्यत्वादिति भावः। प्रपञ्चस्य वस्तुतो निरूपादानत्वं निरूपयितुं विमृशति—अथावगतमेतदिति। एतत् = प्रकाशस्य विमर्शात्मत्वादिकम्। सम्प्रति प्रपञ्चविषये विचार्यते-प्रपञ्चस्त्विति। शैवविशिष्टाद्वैतमतमुत्थापयति—यत्त्विति।

श्रीकण्ठभाष्यादाविति। प्रकृत्यधिकरण इति शेषः। आदिना शिवार्कमणिदीपिका ग्राह्या। तत्र नामरूपादिविभागविरहितसूक्ष्मचिदचित्प्रपञ्चरूपापन्नचिच्छक्तिविशिष्टः परमेश्वरः स्थूलप्रपञ्चसिसृक्षया विभक्तरूपचिदचित्प्रपञ्चापन्नचिच्छक्तिविशिष्टोहं स्यामिति संकल्पयति। "सोऽकामयत, बहु स्यामिति" श्रुतेः। ततः सः, "इदं सर्वमसृजतेत्यादि श्रुत्युक्ततादृशस्थूलप्रपञ्चात्मना परिणमय्य तत्सृष्ट्वा तदेवानुप्राविशदित्युक्तानुसारेण स्वाभिन्ने तादृशप्रपञ्चे प्रविशतीति वस्तुतो जगच्छरीरिणः शिवस्य परमात्मन एव कारणत्वं कार्यत्वञ्च, "सच्च त्यच्चाभवदिति" श्रुतेः। तत्र तादृशसर्गे परेशस्योपादाननिरपेक्षत्वान्निरुपादानत्वं प्रपञ्चस्येति तत्सिद्धान्तसरणिः। तत्र-"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुत्यनुसारेण मायामहेश्वरयोरुपादानत्वाक्षेपस्तत्समाधानञ्च सनिदर्शनं प्रकृतग्रन्थे प्रदर्शितं निगदव्याख्यातमेव।

साङ्कर्य द्रष्टव्य है। इस सम्प्रदाय के सिद्धान्त उपासना तथा आचार त्रितयव्यास होने पर भी सिद्धान्तमात्र का संशोधन ही मेरे प्रवृत्ति का उद्देश्य है। अतः उपासनादि विषयक अप्रतिपादन से विज्ञजन न्यूनता की कल्पना न करें। स्वातन्त्र्यवाद में नर, शक्ति तथा शिव तत्त्वत्रय के प्रतिपादित होने से इसे त्रिकदर्शन भी कहते हैं। यह इसका सामान्य विभाग है।

शङ्का—प्रकाश का विमर्शात्मकत्वादि तो अवगत हो गया, किन्तु यह बतावें कि प्रपञ्च सोपादान है या निरुपादान। इसमें प्रथम पक्ष नहीं कह सकते, क्योंकि शिव से अतिरिक्त को उपादान मानने पर अद्वैत भग्न हो जायेगा। दाक्षिणात्य विशिष्टाद्वैतवादी शैवों ने श्रीकण्ठभाष्यादि में कहा है कि—नामरूपविभागानर्ह सूक्ष्मचिदचित्प्रपञ्चशक्ति विशिष्ट होने से केवल शिव ही सर्ग काल में उपादान निरपेक्ष ही स्वसंङ्कल्प-

**दृश्यते तथा न परमेश्वरात्पृथक्सिद्धं मायाद्युपादानमपि त्वपृथक्सिद्धिसम्बन्धेन परमेश्वरविशिष्टमेवेत्येव निरुपादानत्वमित्युक्तम्, तदतिरिक्तोपादानापेक्षायामेव पर्यवस्यतीति तत्रापि नाद्वैतोपपत्तिः, विशिष्टाद्वैतवादस्य निराकरिष्यमाणत्वात्। स्वयमेवोपादानत्वे तु विकारित्वप्रसङ्गात्। न द्वितीयः, भावकार्यस्य सोपादानत्वव्याप्तिभङ्गात्, प्रकृत्यादितत्त्वस्वीकारवैयर्थ्यप्रसङ्गाच्चेति चेन्न, कार्यकारण-**

अपृथक्सिद्धिसम्बन्धेनेति। मायादेः शिवात्पृथक्सिद्ध्यसम्भवात्।

यथा न केवलाच्छरीराल्लोमनखाद्युत्पत्तिर्नापि केवलाच्चात्मनोऽपितु मत्याच्छरीरिणः, एवं न केवलं मायाया जगदुत्पत्तिर्नापि च केवलाद् महेश्वरादपितु मायिनो महेश्वरात्, अत एव श्रुतौ मायिनमित्युक्तम्। इदमेव च पारिभाषिकं निरूपादानत्वमिति पूर्वपक्षाशयः।

समाधत्ते—तदतिरिक्तोपादानेति। शिवातिरिक्ताया मायायास्तत्रापेक्ष्यमाणत्वात्। नाद्वैतोपपत्तिरिति। ननु माभूदद्वैतं, विशिष्टाद्वैतन्तु स्यात्, तस्यैवास्मत्सिद्धान्तसिद्धत्वादितिचेत्तत्राह—विशिष्टाद्वैतवादस्येति। न च केवलः शिव एवोपादानमित्यपि वक्तुं शक्यमित्याह—स्वयमेवोपादानत्वे इति।

निरुपादनत्वपक्षं निराचष्टे—न द्वितोय इति। व्याप्तिभङ्गादिति। यदि भावकार्यमुपादानमन्तरैवोत्पद्येत तर्हि—यद् यद् भावकार्यं तत्तत्सोपादनमिति व्याप्तिर्भज्येत। न चेष्टापत्तिरित्याह—प्रकृत्यादीति। जगत्कारणतयैव प्रकृत्यादिपदार्थानां स्वीकारात्। समाधाता स्वाभिप्रायमुद्घाटयति—कार्यकारणभाव इति। ननु तर्हि बीजाङ्कुरस्थले पारमार्थिककार्यकारणभावाभावात्पारमार्थिककार्यका-

मात्र से तत्तत्नामविशिष्टसमस्त चिदचित्प्रपञ्च को प्रकाशित करता है। तथा इस कथन पर—"मायां तु प्रकृतिं विद्यात्" "तस्माद् विराडजायत" इत्यादि श्रुतियों से माया एवं पुरुष दोनों में उपादानत्व सिद्ध होने पर निरुपादानत्व कैसे कहा" यह आशंका कर—जैसे घटनिष्पत्ति में कुलाल के शरीर से पृथक् मृत्पिण्ड उपादान देखा जाता है, वैसे परमेश्वर से पृथक् सिद्ध माया उपादान नहीं है अपितु अपृथक् सिद्धि सम्बन्ध से परमेश्वर विशिष्ट ही उपादान है और यही प्रपञ्चका निरुपादानत्व है" इस प्रकार समाधान भी किया है। किन्तु तादृशशैवों का यह कथन शिवातिरिक्त के उपादानापेक्षता में ही पर्यवसित होता है, अतः इस पक्ष में भी अद्वैत की उपपत्ति नहीं हो पाती। यह कहना भो सम्भव नहीं है कि—विशिष्टाद्वैत ही सिद्धान्त मान लिया जाय, क्योंकि वह ( विशिष्टाद्वैतवाद ) निराकरिष्यमाण है। एवं परमेश्वर को स्वयं उपादान मानने पर परमेश्वर भी विकारी हो जायेगा। प्रपञ्च का निरुपादानत्वपक्ष भी युक्तियुक्त नहीं है, क्योंकि भावकार्य में सोपादानत्वव्याप्ति भग्न हो जायेगी, एवं प्रकृत्यादितत्त्वों को मानना भी व्यर्थ हो जायेगा।

भावस्तावद् द्विधा, पारमार्थिकः कल्पितश्च, तत्र परमेश्वर एव तथातथा भाती-त्याद्यः, बीजादङ्कुर इत्यादिलौकिकदृष्ट्या तु द्वितीयः, तमादायैव च प्रकृत्यादि-तत्त्वोपवर्णनम्। तत्रापि तु बीजात्मना भातः सन् परमेश्वर एवाङ्कुरात्मना भातीति पारमार्थिकः कार्यकारणभावोऽनुगत एव, कुलालस्यापि शिवानतिरे-कात्तु घटेऽपि शिवस्य कर्तृत्वम्। नन्वेवं फलतो निरुपादानत्वमेवापतितमित्युक्त-व्याप्तिभङ्ग एवेति चेत्सत्यम्, योगीच्छानिर्मितघटादौ निरुपादाने व्यभिचारात्, न च तत्रापि योगीच्छया घटाकारेण परमाणुसंघट्टनम्; साक्षात्तस्य लोकेऽदृष्ट-त्वात्, द्व्यणुकादिक्रमेण तस्योपगमे च झगित्येव योगीच्छया कार्यसिद्ध्यनुप-

रणभावस्य व्यवहारौपयिकत्वं न स्यात्, तथा च परमेश्वरस्य सर्वकारणत्व-व्याहतिरिति तत्राह—तत्रापीति। एवं घटादिस्थलेऽपि परमेश्वरस्यैव कारणत्व-मित्याह—कुलालस्यापीति। अत एव "नमः कुलालेभ्य" इति श्रुतिरपि। अत एव च मानसोल्लासः—

इच्छाज्ञानक्रियापूर्वा, यस्मात्सर्वाः प्रवृत्तयः।
सर्वेऽपि जन्तवस्तस्मादीश्वरा इति निश्चिताः॥ (२।४४) इति।

निरुपादानत्वपक्षे प्रोक्तव्याप्तिभङ्गमाशङ्कते—नन्वेवमिति। उक्तव्याप्ति-भङ्गः = भावकार्यस्य सोपादानत्वव्याप्तिभङ्गः। सत्यमिति। सत्यमित्यनेनेष्टनिरा-कार्यत्वं ध्वनितम्। निरूपादानत्वोक्तौ व्याप्तिभङ्गस्येष्टत्वात्। ननु दोषाभावे कथं निरुक्तव्याप्तिभङ्ग इति तत्राह—योगीच्छानिर्मितघटादाविति। निरूपादान इत्यनेन भावत्वसमानाधिकरणसाध्यासत्त्वं प्रदर्शितम्। योगीच्छया निर्मितघटादौ निरुक्तसाध्यसत्त्वमाशङ्क्य निराकरोति—न च तत्रापीति। न च न हीत्यर्थः। ननु परमाणुसंघट्टनस्य तादृशघटादिकं प्रति साक्षादुपादानत्वमुत द्व्यणुकादि-

समाधान—कार्यकारणभाव दो प्रकार का होता है। एक पारमार्थिक दूसरा कल्पित, इनमें "परमेश्वर ही तत्तद्रूपों से भासित होता है" यह प्रथम है। और "बीज से अङ्कुर" इस प्रकार लौकिक दृष्टि से जो माना गया, वह द्वितीय है। कल्पितकार्यकारण भाव के उद्देश्य से ही प्रकृत्यादितत्व उपवर्णित है। उस कल्पित में भी बीजात्मना भासित होता हुआ श्रीपरमेश्वर ही अङ्कुरात्मना भासित होता है" अतः पारिमार्थिक कार्यकारण भाव अनुस्यूत है। कुलाल के शिवातिरिक्त न होने से घट भी शिवकर्तृक ही है।

यदि कहें कि फलतः प्रपञ्च में निरुपादानत्व ही प्राप्त है।अतः प्रोक्त व्याप्ति भङ्ग हो जायेगा, तो आपका कथन सत्य है, क्योंकि पूर्वोक्त व्याप्ति योगीच्छानिर्मित निरु-पादान घटादि में व्यभिचरित हैं। यदि कहें कि घटस्थल में योगीच्छा से परमाणुओं का संघटन ही होता है तो यह कहना उचित नहीं, क्योंकि साक्षात् परमाणुसंघटन से घटनिर्माण लोकप्रसिद्ध नहीं है। यदि द्व्यणुकादिक्रम से घटनिर्माण माने तो योगीच्छा

पत्तेः। अतएव विद्युल्लेखायामारम्भवादभङ्गो वेदान्तिभिरपि दर्श्यते, चेतनस्यैव चेतनानुरोधितायां लोके दर्शनाच्च, योगिसामर्थ्यस्यावश्यादरणीयत्वे परमाणुदुराग्रहस्य निष्प्रयोजनत्वात्। एतेनाद्यकार्येऽपि निरुपादानत्वं समर्थनीयम्। किञ्चान्यथाख्यातेः शारदायां निरस्तत्वेनात्मख्यातेश्च विज्ञानवादे क्रमेण, तत्राद्यं निरस्यति—साक्षादिति। साक्षात् परमाणुसंघट्टस्य लोकव्यवहारेऽक्लृप्तत्वात्, घटनिर्माणहेतुत्वेनानिश्चितत्वात्। द्वितीयेऽनुपपत्तिं दर्शयति—द्व्यणुकादिक्रमेणेति। अत एवेति। द्व्यणुकादिक्रमेण झटिति कार्यसिद्धेरनुपपन्नत्वादेव।

ननु योगीच्छानुरोधेनैव द्व्यणुकादिक्रमेणापि झटिति कार्योत्पत्तिः सेत्स्यतीति तत्राह—चेतनस्यैवेति। चेतनानुरोधितायाः = चेतनेच्छानुरोधितायाः। निष्प्रयोजनत्वादिति। परमेश्वरेच्छावशादेव सर्वस्य प्रकाशसम्भवात्। वस्तुतस्तु स्वीकृतयोगमाहात्म्यैस्तार्किकैरपि धूमत्वावच्छेदेन वह्निजन्यत्वं न कदापि वाच्यम्।

योगिनामपि मृद्बीजं विनैवेच्छावशेन तत्।
घटादिर्जायते तत्तत् स्थिरस्वार्थक्रियाकरम्॥

इत्यभियुक्तोक्त्या योगप्रभावेण वह्निं विनापि धूमस्योत्पादनसम्भवात्। एतेन सामान्यकार्यकारणभावमात्रं तार्किकैरङ्गीकृतं पराकृतं मन्तव्यम्। यदि च योगिनाऽपि वह्निमुत्पाद्यैव धूमोत्पादनं क्रियते तदा कोऽयं योगप्रभावः। वह्नेः क्लृप्तस्वसामग्रीं विनोत्पादनोपगमे च धूमस्य तथोत्पादनोपगमेन किमपराद्धम्। एतेन भावकार्यस्य सोपादानकत्वनियमोऽप्यपास्तः। योगिना क्लृप्तद्व्यणुकादिक्रमेण कार्योत्पादनोपगमे विलम्बस्याप्रामाणिकस्यापत्तेः। युगपदेव तथोपगमे च योगप्रभावस्यादरणीयत्वप्रसङ्गे उपादानकल्पना दुराग्रहमूलैव। यथा चारम्भवादो न क्वापि प्रामाणिकस्तथा व्यक्तमाकरेषु। यदाहुः—

कणादः पारिमाण्डल्यसंयोगाद्द्व्यणुकक्रमात्।

जगदुत्प्रेक्षयन् मायावादसादरमानसः" इति। एतेनेति। घटादिकार्येषु निरुपादानत्वसमर्थनेन। समर्थनीयमिति। प्रपञ्चो निरुपादानो भावकार्यत्वाद् योगीच्छानिर्मितघटादिवदित्यनुमानादिनेति शेषः। भणितञ्च भट्टेन—

से झटिति जायमान कार्योत्पत्ति अनुपपन्न हो जायेगी। अत एव वेदान्तियों के द्वारा विद्युल्लेखा में आरम्भवाद का भङ्ग उपवर्णित है। एवं व्यवहार में चेतन का अनुरोध मानते हुए चेतन ही देखा जाता है। योगिसामर्थ्य के अवश्य मन्तव्य होने से परमाणुविषयक दुराग्रह निष्प्रयोजन है इसी से आद्यकार्य में भी निरुपादानत्व ही समर्थनीय है।

**दर्शितत्वेन स्वप्नादावपि तादृशव्याप्तिर्भग्ना, व्याप्तितज्ज्ञानोपायखण्डने शारदायाञ्च दीपितमेतत् । आहुश्चोत्पलदेवाः—**

**"चिदात्मैव हि देवोऽन्तः स्थितमिच्छावशाद्बहिः ।**
**योगीव निरुपादानमर्थजातं प्रकाशयेत् ॥" इति ॥**
**"विश्वामित्रादयः सर्वे परिपक्वसमाधयः ।**
**उपादानोपकरणप्रयोजनविवर्जिताः ।**

**प्रयोजनविवर्जिता इति । परार्थसम्भवेऽपि स्वार्थो नास्ति, करुणाप्रयुक्तं दुःखं तु ब्रह्मतत्वबोधविधुरे एव कारुणिके जायते, तेन तन्निवृत्तिरूपः स्वार्थोऽपि परिपक्वसमाधौ**

निरुपादानसंभारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥ ( स्त० चि० ९ ) इति ।

उपादानम् मायाप्रकृत्यादिः, सम्भारः कर्मादिः सहकारिग्रामः । तेन निष्क्रान्तं कृत्वा, उपादानसहकार्यादिरपि तदाभास्यत्वेन जगन्मध्ये एवानुप्रवेशात् । जगच्चित्रम् = अनाश्रितशिवादिक्षित्यन्तं नानारूपम् । कलया = स्वशक्तिवैदग्ध्येनैव श्लाघ्यः परमेश्वरः । स च तादृशं जगच्चित्रमभित्तावेव तन्वतेऽभित्तिकमेव भासयतीति महच्चित्रम् । न चैतदसम्भाव्यं, संकल्पस्वप्नयोरिव तन्निर्माणादौ संविद एव भगवत्यास्तत्तदाभासोल्लासकत्वदर्शनादिति प्रकृतस्तुतिवाक्यार्थः ।

नन्वस्तु योगीच्छानिर्मितवस्तुनि निरुपादानत्वम्, तदजन्ये तु न तथा, तदजन्यभावकार्यत्वमेव सोपादानत्वव्याप्तम्, तत्र न व्यभिचार इति चेत्तत्राह— किञ्चान्यथाख्यातेरिति । तृतीयान्तद्वयं व्याप्तिभङ्गे हेतुः । दीपितमेतदिति । प्रपञ्चस्य निरुपादानत्वम् । आहुश्चोत्पलदेवा इति । ईश्वरप्रत्यभिज्ञायामिति शेषः । चिदात्मै'वेति । यथा योगी स्वेच्छयैव' स्वसंकल्पमात्रेणोपादानकारणमनपेक्ष्येव सर्वमर्थजातं प्रकाशयति, तथैव देवश्चिदात्मा स्वसंविद् स्वस्वातन्त्र्यात्मकेच्छाविशेषवशात् स्वान्तर्गतमेव सर्वमर्थजातं बाह्यत्वेनाभासयतीति विश्वरूपाभासवैचित्र्ये चिदात्मन एव स्वातन्त्र्यमित्यर्थः ।

किञ्च शारदा में अन्यथाख्याति निरस्त है, और विज्ञानवाद में आत्मख्याति प्रदर्शित है, अतः तदनुसार स्वप्न में भी चैतन्य के ही तथा भासमान होने से भावकार्य में सोपादानत्वव्याप्ति भग्न हो जाती है । यह निरुपादानत्व व्याप्तितज्ज्ञानोपायखण्डन शारदा में उपवर्णित है । आचार्य उत्पलदेव ने कहा है— 'चिदात्मैव हि........" चित्स्वरूप परमात्मा ही स्वेच्छावशात् अन्तःस्थित पदार्थ को बाहर भासित करता है । अतः जैसे योगी स्वेच्छावशात् निरुपादान ही सृष्टि करता है, उसी प्रकार परमात्मा भी निरुपादान ही समस्त जगत् को प्रकाशित करता है ।

स्वेच्छया ससृजुः स्वर्गं सर्वभोगोपबृंहितम् ।
ईश्वरोऽनन्तशक्तित्वात्स्वतन्त्रोऽन्यानपेक्षकः ॥
स्वेच्छामात्रेण सकलं सृजत्यवति हन्ति च ।"

**इति च मानसोल्लासस्रष्टारः ।**

**अथ भवतु वेदान्तिसम्मतानाद्यविद्यैवोपादानम्, तस्याश्च मिथ्याभूततया न विद्यारूपे ब्रह्मण्यसम्भवः, समसत्ताकयोरेवविरोधादिति चेदत्रोच्यते—**

विश्वामित्रादय इति । यथा यतः परिपक्वसमाधयोऽत उपादानोपकरण-प्रयोजनविवर्जिताः उपादानञ्चोपकरणञ्च प्रयोजनञ्च तैर्विरहिताः सन्तोऽपि, तथा परमेश्वरोऽन्यानपेक्षक उपादानादिनिरपेक्षः, यतः स्वतन्त्रः । दृष्टान्त-दार्ष्टान्तिकयोरवशिष्टांशः स्पष्टार्थः ।

नन्वस्त्वविद्यैवोपादानं वेदान्तसम्मता, सा ह्यनादिभावरूपा ज्ञाननिवर्त्या च, न च सा ज्ञानाभावात्मिका वक्तुं शक्या, ज्ञाननिवर्त्यत्वानुपपत्तेः, तथाहि—सा किं ज्ञानप्रागभावरूपा, उतध्वंसात्मिकाऽऽहोस्वित् तद्भेदात्मिका, अथवाऽत्यन्ता-भावरूपा, नाद्यः, प्रागभावध्वंसस्य प्रतियोगिरूपत्वे ज्ञानप्रागभावध्वंसस्य ज्ञान-रूपतया स्वं प्रति हेतुत्वासम्भवात् । तस्य प्रतियोग्यतिरिक्तत्वेऽपि—ज्ञानप्राग-भावरूपस्याज्ञानस्य यो नाशो ज्ञानाद्भिन्नो ज्ञानादुत्पद्येत तस्यापि प्रागभावो वाच्योऽन्यथाऽज्ञाननाशस्यानादित्वापत्त्या तत्साधनवैयर्थ्यापत्तिः । तस्य चाज्ञाननाशप्रागभावस्याज्ञाननाशोत्पत्तिक्षण एव नाशः स्वीकार्यः, अयमपि चाज्ञाननाशप्रागभावनाशस्तदानीमुत्पद्यमानस्ततः पूर्वं स्वप्रागभावनाशमन्त-रेणानुपपद्यमानः स्वप्रागभावनाशमपि तदानीं साधयति, एवं सोऽपि प्रागभाव-नाशस्तथेत्येवमप्रामाणिक्यनवस्था प्रसज्येत । नापि द्वितीयः, ज्ञानेन तस्य ध्वंसासम्भवात् । अत एव न तृतीयचतुर्थौ, परैस्तयोर्नित्यत्वोपगमेन तन्नाशस्या-भिधातुमयुक्तत्वात्, प्रतियोगिमत्यपि भेदस्य विद्यमानत्वाच्च । अतो ज्ञाननिव-र्त्यमज्ञानं भावरूपमेवाङ्गीकार्यम्, तदेव चोपादानं भविष्यतीति सोपादानकत्वमेव प्रपञ्चस्येत्याशयेनाशङ्कते—अथ भवत्विति । अथ सा न जड़ाश्रिता, जड़े प्रकाशप्रसक्तेरेवाभावात्प्रसक्तप्रकाशप्रतिबन्धात्मिकायास्तस्यास्तत्र स्वीकारे प्रयोज-

मानसोल्लास के रचयिता ने भी कहा है—"विश्वामित्रादयः .... .... .... ।" जैसे परिपक्व समाधि सम्पन्न सभी विश्वामित्रादि ऋषि उपादान, उपकरण ( सामग्री ) तथा प्रयोजन रहित होते हुये भी स्वेच्छावशात् समस्त भोगसामग्री से पूर्णस्वर्गादि का सर्जन करते हैं, उसी प्रकार अनन्तशक्तिसम्पन्न स्वतन्त्र परमेश्वर भी अन्यनिरपेक्ष होकर स्वेच्छामात्र से ही समस्त जगत् का सर्जन करता है पालन करता है तथा प्रलय भी करता है ।

साक्षात्कृदात्मतत्त्वेनापि योगिना घटादिनिर्माणात्तस्य चाविद्याया असम्भवात्। तत्र द्रष्टुरेवाविद्येति चेत्तस्यापि साक्षात्कृदात्मत्वे का गतिः ? तयोरावरणांनाभावात्प्रमाणाभावाच्च। नापि जीवेश्वरयोः, तयोरविद्याया अनन्तरभावित्वेनान्योऽन्याश्रयापत्तेः। यदाह सर्वज्ञः—

आश्रयत्वविषयत्व भागिनी
　　निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो
　　नाश्रयो भवति नापि गोचरः" (सं. शा.) इति।

तथा च पारिशेष्याद् ब्रह्माश्रितैव वाच्या। तच्च न सम्भवति, विद्याविरोधिन्यास्तस्या विद्यात्मके ब्रह्मण्यवस्थाने विरोधादिति चेत्तत्राह—तस्याश्च मिथ्याभूततयेति।

समाधत्ते—साक्षात्कृदात्मतत्त्वेनापीति। यद्यविद्योपादाना संसृतिस्त्वदुक्तरीत्योररीक्रियेत, तदा तस्या आत्मसाक्षात्कारनिवर्त्यत्वाभ्युपगमात्साक्षात्कृदात्मतत्त्वेन योगिनाऽपि घटादिनिर्मितिर्न स्यात्, तस्या असम्भवादिति नोपादानकोटौ प्रवेष्टुमीष्टे तामिति भावः।

ननु जीवाश्रितैवाविद्या, न चान्योन्याश्रयः, तस्योत्पत्तौ ज्ञप्ताविव चाज्ञानस्य चिदाश्रयत्वचिदधीनस्थितिकत्वयोः सतोरपि चितोऽज्ञानाश्रितत्वतदधीनस्थितिकत्वयोरभावेन स्थितावप्यदोषादिति वाचस्पतिमिश्रमतमाश्रित्य शङ्कते—तत्र द्रष्टुरेवाविद्येति। का गतिः = किं समाधानम्, द्रष्टुरप्यविद्याया निवृत्तत्वात्।

अथ न तत्त्वसाक्षात्कारेण सर्वांशेऽविद्या निवर्तते, तथा सति जीवन्मुक्तिर्न स्याद्, व्याकुप्येयुश्च—

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदिश्रिताः,
　　अथमर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"। (बृ० उ० ४।४।७)
"प्रजहाति यदा कामान्" ( गी० २।५५ )

शङ्का—वेदान्तिसम्मत अनादि अविद्या को ही उपादान मान लिया जाय। उसके मिथ्या होने पर भी विद्यास्वरूप ब्रह्म में उसका रहना असम्भव नहीं है क्योंकि समानसत्ताक पदार्थों का ही विरोध होता है। तात्पर्य यह है कि अविद्या कल्पित है और ब्रह्म सत्य है। अतः विरोध न होने से ब्रह्माश्रित अविद्या हो सकती है।

समाधान—कृत आत्मसाक्षात्कार योगी भी घटादि निर्माण करते हैं किन्तु उनके पास अविद्या नहीं है। यदि कहें कि योगी का अज्ञान न होने पर भी तादृश स्थल में घटद्रष्टा की अविद्या मानेंगे तो जहाँ घटद्रष्टा भी तत्त्वज्ञानी हो वहाँ उसकी भी अविद्या नहीं कह सकते।

ज्ञनाशेऽपि विक्षेपांशसद्भाव एव गतिः, एवञ्च न तत्र भ्रमोऽपि त्वहार्यारोपः, अनुभवानुसाराच्च स लौकिकप्रत्यक्षात्मक इति चेद्धन्तैवं योगीच्छानुरोधात्तत्र विक्षेपांशः परिणत इत्युक्तं स्यात्, तत्र चावाचि नाचेतनस्य चेतनेच्छानुरोधित्वमिति। योगमाहात्म्यादरे चोपादानव्यसनेन कृतम्। एतेन प्रकृतिपरिणामपक्षोऽपि विक्षिप्तः। किञ्चाविद्या तावदेकजातीया विभ्वी च, न चैवंजातीयस्य वस्तुनो गगनादिकं सूक्ष्मं पृथिव्यादिकं च स्थूलं प्रति प्रत्येतव्यमुपादानत्वम्,

श्रीविश्वामित्रादावशङ्कनीय एवेति भावः। आहार्यारोप इति। बाधकालीनमिच्छाजन्यज्ञानमाहार्यमित्यन्यत्र प्रसिद्धावपीच्छाविरहस्थले बाधकालीनत्वमात्रमादायाप्याहार्यत्वव्यवहार।

रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते" ( गी० २।४९ )

इत्यादितत्प्रतिपादकश्रुतिस्मृतयः। अतस्तस्या आवरणांशमात्रं निवर्तते, न तु विक्षेपांशः, स एव च जगत्सर्जनहेतुः। तदुक्तम्—"विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत्सृजेत्" इति। इत्याशयेनाह—तयोरावरणांशनाशेऽपीति। तयोः = योगिद्रष्ट्रोः। न तत्र भ्रमोऽपीति। भ्रमं प्रत्यावरणांशस्य हेतुत्वात्, तस्य चात्मसाक्षात्कारेण निवृत्तत्वात्। समाधत्ते—हन्तैवमिति। एतेनेति। योगमाहात्म्यस्य स्वीकारेण। न केवलमविद्याया जड़तया चेतनेच्छाननुरोधित्वेन योगमाहात्म्येनान्यथासिद्धतया चोपादानत्वानुपपत्तिरपितु तदुपादानत्वं युक्तिविरुद्धमपीत्याह—किञ्चाविद्येति। एकजातीयं कारणमुपादानं स्वसमानजातीयमेव कार्यमुत्पादयतीति नियमः। प्रकृते चानेकजातीयकार्यत्वान्न तदुपादानत्वमविद्याया इति भावः।

ननु शुक्लेभ्यस्तन्तुभ्यः शुक्लस्यैव पटस्य प्रसवदर्शनादेकजातीयं कारणं स्वसमानजातीयकार्यं प्रत्येवोपादानमिति लोकप्रसिद्धमुपादानत्वं मास्तु, अविद्या

शङ्का—उन ( योगी, द्रष्टा ) के तत्त्वज्ञान से आवरणांश के नष्ट होने पर भी विक्षेपांश नष्ट नहीं होता, अतः उसी के द्वारा घटोत्पत्ति हो जायेगी। एवं उसमें उनका भ्रम नहीं है अपितु आहार्यारोप है, जो अनुभवानुसारेण लौकिक प्रत्यक्षात्मक है।

समाधान—आपके इस कथन से तो योगीच्छा के अनुरोध से वहाँ विक्षेपांश घटादिरूपेण परिणत होता है यह सिद्ध हुआ, किन्तु इस विषय में हम पहिले कह चुके हैं कि "अचेतन वस्तु चेतनेच्छानुरोधी नहीं होती"। और योगमाहात्म्य का समादर करने पर उपादान मानना व्यर्थ है। इससे प्रकृतिपरिणामवाद भी निराकृत समझना चाहिए।

किञ्च अविद्या एक जातीय तथा विभ्वी मानी गई है, किन्तु एक जातीय अविद्या को गगनादि सूक्ष्म तथा पृथिव्यादि स्थूल के प्रति उपादान नहीं कह सकते हैं, [ क्योंकि एक जातीय कारण से एक जातीय कार्य ही उत्पन्न होता है। ] यदि इस लोक

लोकप्रसिद्धोपादानभावानभ्युपगमे चानुपादानत्वं गलेपादुकान्यायेन दुर्निवारम्, न हि पारिभाषिकपदार्थैर्लोकव्यवहारनिर्वाहः। किञ्च मिथ्याभूताया अपि तस्या अनादित्वमित्यत्र वस्तुस्वभावातिरिक्तस्योपोद्बलकस्यासम्भवेन ब्रह्म-स्वभाव एव स्वात्मकविश्वात्मना भासनक्षम आस्ताम्, स एव ह्यस्माभिः स्वातन्त्र्यशब्देनोच्यत इति कृतमतिरिक्तपदार्थकल्पनया।

न वा तस्यां प्रमाणमपि, परिपूर्णानन्दाप्रथनस्य स्वरूपगोपनकारिण्या त्वघटितघटनापटीयसीति स्वविलक्षणं विभिन्नजातीयं कार्यं प्रत्यप्युपादानं स्यादिति चेत्तत्राह—लोकप्रसिद्धेति। गले पादुकान्यायेनेति। यथा—कस्यचिद् गृहस्थस्य गृहेऽन्नाद्यर्थित्वच्छलेनागतो निषण्णश्च कश्चिद् विटस्तेनं तत्त्वतो ज्ञात्वा गच्छ गच्छेति पुनः पुनरुच्यमानोऽपि यदा धौर्त्येन स्वेच्छया गमनं न स्वीकरोति, तदा पादुकासहितं पादं गले निधाय तोदयित्वा च बलान्निस्सार्यते, तथा प्रकृतेऽपि बलान्निरुपादानत्वम्। तत्र हेतुः—न हीति। किञ्चाविद्यास्वरूपपर्यालोचनयाऽपि तस्या उपादानत्वमन्यथासिद्धमेवेत्याह—किञ्च मिथ्याभूताया अपीति। आस्तामिति। तथा च प्रकृते किमायातमित्याह—स एवेति। ब्रह्मस्वभाव एवेत्यर्थः। कृतमतिरिक्तपदार्थकल्पनयेति। नासावविद्या स्वरूपतोऽपि निरूपयितुं शक्या। अनिर्वचनीया सेति ब्रुवता भावरूपा सेति निगद्यते। अनिर्वचनीया चेत्कथं भावरूपा, भावरूपा चेत्कथं ज्ञाननिवर्त्या, अनादिभावरूपायास्तस्या आत्मवन्निवर्त्यत्वानुपपत्तेः। ननु भावाभावविलक्षणायास्तस्या अभाववैलक्षण्यमात्रेण भावत्वमुपचर्यत इति चेत्, हन्त भाववैलक्षण्यमात्रेणाभावत्वमेव कुतो नोपचर्यते। न च तस्या अभावरूपत्वे उपादानत्वानुपपत्तिरभावस्यानुपादानत्वादिति वाच्यम् सिद्धं नः समीहितम्, उपादानत्वस्य निराक्रियमाणत्वात्। ऐश्वर्यबलात्परमेश्वरस्यैव तथा तथा भासमानत्वादतिरिक्तोपादानकल्पनाया निष्प्रयोजनत्वात्।

तत्र प्रमाणमपि निरस्यति—न वेति। तत्र = अविद्यायाम्। ननु "यो वै भूमा तत्सुखम्" ( छा० ७।२३।१ ) "आनन्दं ब्रह्मणो विद्वान्" ( तै० २।४।१ )

प्रसिद्ध उपादानता की उपेक्षा कर विलक्षण उपादानता की कल्पना करें तो गलेपादुकान्यायेन अनुपादानत्व ही सिद्ध होगा। क्योंकि पारिभाषिक पदार्थों से लोकव्यवहार का निर्वाह नहीं होता।

किञ्च ( दूसरी बात यह है कि ) अविद्या के मिथ्याभूत होने पर भी उसे अनादि मानने में वस्तुस्वभाव के अतिरिक्त किसी उपोद्बलक के न होने से ब्रह्म का ही ऐसा स्वभाव मान लें कि वह स्वात्मक विश्वात्मना भासित होने में समर्थ है और उसे ही हम स्वातन्त्र शब्द से कहते हैं। अतः अतिरिक्त पदार्थ कल्पना करना व्यर्थ है।

उस अविद्या में कोई प्रमाण भी नहीं है। आत्मा के परिपूर्णानन्दता के अ-

**क्रियाशक्त्यैवोपपत्तेस्तदन्यथानुपपत्तेरप्रसरात्, भ्रमस्य प्रपञ्चस्य वा सोपादानत्वान्यथानुपपत्तेरुक्तरीत्यैव वक्तुमशक्यत्वात्, "तमः आसीत्" "नीहारेण प्रावृताः" 'अविद्यायामन्तरे वर्तमानाः' 'भूयश्चान्ते विश्वमायानिवृत्तिः' 'अजामेकाम्' इत्यादिश्रुतीनां च यथासम्भवं तादृशक्रियाशक्तिपरतयाऽपूर्णम्मन्यतारूपाज्ञानपरतया वक्ष्यमाणतत्त्वान्तर्गतप्रकृतिपरतया च योजयितुं शक्यत्वात्, परिपूर्णम्मन्यतारूपर्तविरोधितयाऽनृतशब्देनोक्तक्रियाशक्तेरुक्ताज्ञानस्य वा व्यपदेशसम्भवेन 'अनृतेन प्रत्यूढा' इति श्रुतेरपि सामञ्जस्यात् । स्वरूपावारकत्वस्य**

"आनन्द आत्मा" ( तै० २।५।१ ) "आनन्दो ब्रह्मेति व्यजानात्" ( तै० ३।६।१ ) इत्यादिश्रुत्याऽऽत्मनः परिपूर्णानन्दात्मत्वेऽपि "परिपूर्णानन्दात्माहमित्यननुभवात् तत्रावरणोपगमस्य ध्रौव्येण तदन्यथानुपपत्त्याऽऽवरणात्मिकाऽविद्या सेत्स्यति । एवं भ्रमस्य प्रपञ्चस्य च सोपादानत्वनियमात् तदन्यथानुपपत्त्यापीत्यर्थापत्तिद्वयमाशङ्क्याद्यां निराचष्टे—परिपूर्णानन्दाप्रथनस्येति । द्वितीयां निरस्यति—भ्रमस्येति ।

नन्वस्तु तर्हि श्रुतिवाक्यान्येव तत्र प्रमाणानीत्यभिप्रायेण तानि प्रदर्श्य तेषामन्यपरत्वं स्फोरयति—तमः आसीदित्यादिना । तमः शब्दो हि "राहौ ध्वान्ते गुणे तमः" इत्युक्त्या गुणस्य वाचकत्वेन वक्ष्यमाणतत्त्वान्तर्गतप्रकृतेर्वाचकः । निहार शब्दस्य हिमवाचकतया हिमस्य चाच्छादकत्वात्परिपूर्णस्वरूपाच्छादकमपूर्णन्मन्यतात्मकमज्ञानं तच्छब्देन गृहीतुं शक्यम् । एवमविद्यापदवाच्यमपि तदेव । माया च चिदात्मन्यभेदे भेदोत्थापिका स्वरूपगोपनकारिणी क्रियाशक्तिरेव । एवमजामेकामित्यत्रापि । एवमनृतेन प्रत्यूढा इति श्रुतिघटकानृतशब्दस्यापि तत्परत्वमेव वक्तुं शक्यमित्याह—परिपूर्णम्मन्यतेति । सामञ्जस्यादिति । विरोधाभावादित्यर्थः ।

प्रकाश की उपपत्ति तो स्वरूप गोपन कारिणी क्रियाशक्ति के द्वारा ही सम्भव होने से अन्यथानुपपत्ति ( अविद्या के विना परिपूर्णानन्दता की अप्रथनानुपपत्ति ) का अवसर नहीं है । भ्रम या प्रपञ्च के सोपादानत्व की अन्यथानुपपत्ति भी नहीं कह सकते, क्यों कि सोपादानत्व का उक्त रीति से निरास कर चुके हैं । [ अविद्या में श्रुतिप्रमाण भी नहीं कह सकते, क्योंकि ] "तमः आसीत्" "नीहारेण प्रावृताः" "अविद्यायामन्तरे वर्तमानाः" "भूयश्चान्ते विश्वमायानिवृत्तिः" "अजामेकाम्" इत्यादि श्रुतिवाक्यों की यथासम्भव स्वरूप गोपन क्रियाशक्ति परतया अपूर्णम्मन्यतारूप अज्ञान परतया एवं वक्ष्यमाण तत्त्वान्तर्गत प्रकृति परतया योजना कर सकते हैं । अनृतशब्द के परिपूर्णम्मन्यतारूप ऋत ( सत्य ) का विरोधि होने से अनृतशब्द से स्वरूपगोपनकारिणी क्रियाशक्ति या अपूर्णम्मन्यतारूप अज्ञान का व्यपदेश सम्भव होने से "अनृतेन प्रत्यूढाः"

वस्त्रादिविलक्षणस्य भवताऽपि वक्तव्यत्वात् । विवादपदं प्रमाणज्ञानं स्वप्राग-भावव्यतिरिक्तेत्याद्यनुमानानाञ्चानुकूलतर्कशून्यत्वात् । 'त्वदुक्तमर्थं न जानामी' त्यादिप्रत्यक्षान्यथानुपपत्तेस्तु न प्रसरः, तथाहि—प्रतियोगिसिद्धयसिद्धिभ्यां तादृशज्ञानस्य व्याहतत्वेन भावरूपाज्ञानस्य तद्विषयता कल्प्यते, तथा सति तस्य साक्षिभास्यतया तदवच्छेदकतया विषयावगाहनेऽपि क्षत्यभावात् । परन्त्वज्ञानस्य ज्ञानाभावव्याप्यतया ज्ञानाभावस्यापि भवताऽनुमन्तव्यतयाऽक्लृप्ताज्ञान-

स्वप्रागभावव्यतिरिक्तेति । स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रभावदिति ।

विवरणोक्तमनुमानमपि न तत्साधकमनुकूलतर्कविरहादित्याह—विवादपदमिति । व्यक्तञ्चैतत्समग्रं पञ्जिकायाम् ।

नन्वेवं त्वदुक्तमर्थं न जानामीति सर्वजनीनानुभवोऽनुपपन्नः स्यादिति तदन्यथानुपपत्तिरेव तत्साधिकेति चेत्तत्राह—त्वदुक्तमर्थमिति । व्याहतत्वेनेति । तत्र धर्मिप्रतियोगिनोरात्मज्ञानयोः प्रतीतौ तादृशज्ञानं मयि नास्तीत्येतादृशज्ञानाभावप्रत्यक्षं व्याहन्येत । तयोरप्रतीतौ च हेत्वभावादेव तत्प्रत्यक्षानुत्पाद इत्युभयथा व्याहतिसत्त्वाद् भावरूपाज्ञानमेव तद्व्यवहारस्य विषय इति कल्प्यते इति भावः । तस्य = अज्ञानस्य । तादृशमज्ञानं तदवच्छेदकी भूतो विषयश्च साक्षिभाष्य इति वैदान्तिकैरभ्युपेयते, तत्र तादृशभावरूपाज्ञानस्वीकारापेक्षया ज्ञानाभावस्वीकारस्यैव सुकरत्वात्स एव कल्पनीय इत्याह—परन्त्विति । अज्ञानस्य ज्ञानाभावव्याप्यतयेति । आलोकविरोधिनस्तमस आलोकाभावव्यञ्जनीयत्ववत् ज्ञानविरोधिनोऽज्ञानस्यापि ज्ञानाभावव्यञ्जनीयत्वस्य ध्रौव्येणाज्ञानस्य तद्व्याप्यत्वेन वह्न्यभावे धूमाभाववत्तदभावेऽज्ञानस्यापि सत्त्वासम्भवाद् भावरूपाज्ञानवादिना

इस श्रुति का भी सामञ्जस्य हो जाता है। आत्मा के स्वरूप का आवरण तो वस्त्रादि से विलक्षण आप को भी कहना ही है।

अविद्या में अनुमानप्रमाण भी नहीं है। क्योंकि "विवादपद प्रमाणज्ञान स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं भवितुमर्हति, अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नदीपप्रभावत्" यह विवरणोक्त अनुमान अनुकूलतर्कशून्य होने से प्रमाण नहीं हो सकता है। "तदुक्तमर्थं न जानामि" इत्यादि में प्रत्यक्षान्यथानुपपत्ति की यहाँ ( अविद्या ) गति नहीं हैं। तथाहि—प्रतियोगी की प्रसिद्धि एवं अप्रसिद्धि होने पर तादृश ज्ञान के व्याहत होने से आप तादृश प्रत्यक्ष में भावरूप अज्ञानविषयकत्व की कल्पना करते हैं। तादृशस्थिति में अज्ञान के साक्षिभास्य होने से, अज्ञान का अवच्छेदक होने से विषय को भी साक्षिभास्य मानने में कोई क्षति नहीं है। परन्तु अज्ञान के ज्ञानाभावव्याप्य होने से ज्ञानाभाव आपको भी अवश्य

कल्पनापेक्षया क्लृप्तज्ञानाभावस्यैव साक्षिभास्यताकल्पने लाघवात्, साक्षिरूपाभावज्ञानं च प्रति प्रतियोगितावच्छेदकधर्मप्रकारकज्ञानस्य कारणताया अकल्पनीयत्वात्, कल्पनायाः फलबलमूलत्वात्, अतएवाभावविशेषणज्ञानविशेषणतया त्वदुक्तार्थादेरपि साक्षिभास्यत्वेऽपि न क्षतिः। अनुपलब्धिगम्य एवाभावो न तु साक्षिभास्य इति तु न परमेश्वरानुशासनम्। पटेऽपि घटज्ञानाभावसद्भावेन स्वात्मनि घटाज्ञानं साक्षात्करोमीतिवत् पटे घटाज्ञानं साक्षात्करोमीति व्यवहारापत्तेरहमर्थे एव घटज्ञानाभावस्य साक्षिभास्यत्वकल्पनया वारणसम्भवात्, अतएव सुषुप्तावपि निर्विकल्पसाक्षिभास्यत्वेन जागरायां 'न किञ्चिदवेदिष' ज्ञानाभावस्याप्यवश्यमनुमन्तव्यत्वेन तस्यैवाज्ञानपदवाच्यताभिषेकः सुकर इति कृतं बकबन्धप्रयासेनेति भावः। ज्ञानाभावस्य साक्षिभाष्यताकल्पने लाघवं व्यनक्ति—साक्षिरूपाभावज्ञानञ्चेति। अकल्पनीयत्वादिति। साक्षिणो नित्यत्वात्तेनैव तस्यापि सम्पन्नत्वादितिभावः। अकल्पनीयत्वे हेतुः—कल्पनाया इति। फलम् = न जानामीति व्यवहारः, तदात्मकं यद् बलं तदेव मूलं निमित्तं यस्याः। साक्षिणैव प्रतियोगितावच्छेदकप्रकारकज्ञानसम्पत्तिमाह—अत एवेति। कल्पनायाः फलबलमूलत्वादेव।

ननु नाज्ञानं ज्ञानाभावात्मकमभावस्य षष्ठप्रमाणगम्यत्वनियमादिति तत्राह अनुपलब्धिगम्य एवेति। ननु अज्ञानस्य भावरूपत्वे तस्यात्ममात्रवृत्तित्वात् स्वात्मन्येव घटाज्ञानाविषयकसाक्षात्कारो भवति न तु घटादौ जड़पदार्थे, तत्राज्ञानावरणे प्रमाणप्रयोजनाभावस्योक्तत्वात्। अज्ञानस्य ज्ञानाभावरूपत्वे च पटादावपि घटज्ञानाभावस्य सत्वेन तत्रापि (पटे) घटाज्ञानं साक्षात्करोमीति व्यवहारः स्यादित्याशङ्क्य परिहरति—पटेऽपीति। अहमर्थे = प्रमातरि। अत एवेति। ज्ञानाभावस्य

मन्तव्य है, ऐसी स्थिति में अप्रसिद्ध अज्ञान कल्पना की अपेक्षा क्लृप्त ज्ञानाभाव का ही साक्षिभास्य मानने में लाघव है। इस पक्ष में साक्षिरूप अभावज्ञान के प्रति प्रतियोगितावच्छेदकधर्मप्रकारकज्ञान में कारणता कल्पना भी न करनी होगी, क्योंकि कल्पना फलबलमूलक होती है। ( यहाँ साक्षिरूप अभावज्ञान के नित्य होने से वह कारणानपेक्ष है ]।

अतएव अभाव में विशेषण जो ज्ञान उस ज्ञान में विशेषणतया—त्वदुक्त अर्थादि के भी साक्षिभाष्य मानने में कोई क्षति नहीं। अभाव अनुपलब्धिगम्य ही होता है, साक्षिभाष्य नहीं होता' यह ईश्वर का अनुशासन नहीं है, जो कि अवश्य ही मन्तव्य हो। जैसे स्वात्मा में 'घटाज्ञानं साक्षात्करोमि' व्यवहार होता है, वैसे ही पट में घटज्ञानाभाव के रहने से 'पटे घटाज्ञानं साक्षात्करोमि' व्यवहार भी होना चाहिए, इस आपत्ति का वारण तो 'अहमर्थ में ही घटज्ञानाभाव साक्षिभास्य है' ईदृशकल्पना के द्वारा हो सकता

**मिति स्मरणोपपत्तिः, भाव एव निर्विकल्पकवेद्य इत्यस्यातिरिक्तधर्मिकल्पनापत्त्याऽवधीरणीयत्वात्, विषयविशेषविशेषितरूपेण तु न सुषुप्तौ साक्षिवेद्यत्वम् ।**

साक्षिभाष्यत्वोपगमादेव । सुषुप्तावपीति । अत्रान्तःकरणवृत्त्युपरमावस्था, अविद्यागोचराविद्यावृत्त्यवस्था वा सुषुप्तिः । "यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्" ( मा० उ० ५ ) "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" ( बृ० ४।३।२१ ) इत्यादिश्रुतेः । "अविवेको माया सौषुप्तमिति" (शि० सू० १०) अविवेको विवेचनाभावोऽख्यातिः, एतदेव मायारूपं सौषुप्तमित्यर्थकाच्छिवसूत्राच्च । तत्र च स्मृतेरनुभूतविषयकत्वनियमात् "सुखमहमस्वाप्सम् न किञ्चिदवेदिषमिति सुप्तोत्थितस्य स्मरणान्यथानुपपत्त्या सौषुप्तिकनिर्विकल्पकसाक्ष्यनुभवोऽभ्युपगतः साचाविद्यापरिणामः । तत्र साक्ष्याकारो नित्यसुखाकारोऽविद्याकारश्चेति त्रिविधोऽविद्यापरिणामः । अन्यथा तादृशानुभवस्य नित्यत्वेन संस्कारासम्भवादुक्तस्मरणानुपपत्तेः । अतएवाभाणोदं विवरणादौ—"ननु अज्ञानसुखानुभवयोः साक्षिचैतन्यस्य चाविनाशिनः संस्काराभावे कथमुत्थितस्य त्रयाणामनुस्मरणं स्यात् ? उच्यते—"अज्ञानगतचैतन्याभासजन्मोपाधित्वादज्ञानसुखसाक्षिविकल्पानुभवस्य, अज्ञानावस्थाभेदेन चैतन्याभासानां भिन्नत्वात् तद्विनाशसंस्कारजस्मरणमज्ञानसुखसाक्षिचैतन्याकारमज्ञानविशिष्टात्माश्रयमेव सम्भाव्यते इति वैदान्तिकैः । अत्र चशब्देन साक्ष्यनुभववदज्ञानसुखानुभवयोरप्यविनाशित्वं सूचयति ।

अथ "निर्विकल्पकबुद्धिबोध्यो भाव" इति परैर्लक्षणाङ्गीकाराद् भावस्यैव निर्विकल्पकवेद्यत्वमिति चेन्नेत्याह—भाव एवेति । अज्ञानस्य भावरूपत्वे तस्यातिरिक्तधर्मित्वं कल्पितं स्यादितिभावः ।

ननु घटादिज्ञानानां तत्राभावात् तदभाव एव साक्षिवेद्य इति चेत्तत्राह—विषयविशेषविशेषितरूपेणेति । ननु विषयविशेषरुषणा माभूत्, ज्ञानरूपप्रतियोगिविशेषिताभावबोधस्य विशिष्टवैशिष्ट्यबोधमर्यादाऽतिक्रमः कथं शक्यते कर्तुमिति चेत्तर्हि भावरूपाज्ञानस्यापि ज्ञानविरोधित्वेन भानस्यानुभवसिद्धस्यापलापासम्भवेन कथं तेन रूपेण निर्विकल्पकसाक्षिवेद्यत्वम् । अज्ञानं तदा स्वरूपतो भाति न त्वज्ञानत्वादिनेति चेत्, तर्हि ज्ञानाभावोऽपि ज्ञानाभावत्वेन न भाति, अपितु स्वरूपत इति तुल्यम्, निर्विकल्पस्यानुभवस्य सविकल्पकस्मरणजनकत्वा-

है । अतएव सुषुप्ति में भी अज्ञान के निर्विकल्पसाक्षिभास्य होने से जागरा में 'न किञ्चिद् अवेदिषम्' एतादृश स्मरण होता है । 'भाव ही निर्विकल्पवेद्य होता है' यह नियम तो अज्ञानरूप अतिरिक्त धर्मिकल्पनापत्ति के द्वारा निराकरणीय है । विषयविशेष से विशेषितरूपेण साक्षिवेद्यता सुषुप्ति में नहीं होती । तथा सुषुप्ति में विद्यमान ज्ञाना-

न वा ज्ञानाभावे ज्ञानवत्त्वेनास्मर्यमाणत्वस्य लिङ्गताऽपि न सम्भवति, उपेक्षात्मकज्ञानस्य निराकृतत्वेन व्यभिचाराभावात्, तत्स्वीकारपक्षेऽपि वा न व्यभिचाराप्रतिसन्धानदशायामनुमितेरनुपपत्तिः, न हि वस्तुगत्या साध्यवति व्यभिचारिलिङ्गेनापि नानुमितिः प्रमात्मोत्पद्यते। भवतु च मृत्वा शीर्त्वा वा कथमपि भावरूपाज्ञानपक्षेऽप्रामाण्यज्ञानानास्कन्दितबाधनिश्चयाभावत्वादिना तत्र तत्र कारणताकल्पनामपेक्ष्य भावरूपाखण्डाज्ञानत्वेन कारणताकल्पने

ज्ञानवत्त्वेनास्मर्यमाणत्वस्येति। संस्कारप्रतिबन्धककालविशेषाद्युपनिपाताभावोऽपि हेतौ निवेशनीयः, तादृशोपनिपाते हि सत्यपि पूर्वमनुपेक्षात्मकेऽपि ज्ञाने कदाचिदस्मरणं सम्भवत्येव। मृत्वा शीत्वा वेति। बाधनिश्चयस्य नोत्पत्तिप्रतिबन्धकत्वम्, अपि तूत्पन्नज्ञानेऽप्रामाण्यज्ञापकत्वमिति निष्कृष्टमते लाघवं न भावरूपाज्ञानपक्षे सम्भाव्यत इतिभावः।

सम्भव इत्यपि तुल्यम्, उक्तस्मरणस्यापि निर्विकल्पकस्याभ्युपगमः, न किञ्चिदवेदिषमित्युल्लेखस्तु ज्ञानान्तरसहकारेणेतिचेत्तदेतदपि तुल्यम्। तथाप्यभ्युपेत्यैवाह—न वेति। न सम्भवतीत्यन्वयः। तथाचात्मनां तत्र विषयानुभवे तत्स्मरणं स्यात्, न च तदुपलभ्यते, तस्मात् तत्र ज्ञानाभावानुमानम्, विमतं सुषुप्तौ नानुभूतम् अस्मर्यमाणत्वाल्लोकान्तरवर्तिपदार्थवत्। सौषुप्तिक आत्मा ज्ञानाभाववान् ज्ञानवत्त्वेनास्मर्यमाणत्वात्। ननु उपेक्षात्मकज्ञाने व्यभिचारित्वान्नायं हेतुः साधुरिति तत्राह—उपेक्षात्मकज्ञानस्येति। तत्स्वीकारपक्षेऽपि नानुमानानुपपत्तिरित्याह—तत्स्वीकारपक्षेऽपीति। अभ्युपेयते हि तार्किकादिनाऽपि वस्तुतो वह्निमति पर्वते धूलीपटले धूमभ्रमादपि वह्निप्रमानुमितिः।

नन्वज्ञानस्याभावरूपत्वे प्रतिबन्धकाभावविधयाऽनुमितिं प्रति अप्रामाण्यज्ञानानास्कन्दित बाधनिश्चयाभावस्य तथात्वेनैव कारणता वाच्येति कारणतावच्छेदके गौरवम्। अज्ञानस्य भावरुपत्वे तु बाधविषयकाज्ञानस्याखण्डाज्ञानत्वेनैव कारणतया लाघवमित्याह—भवतु च मृत्वा शीर्त्वेति। फलमस्योक्तं टीकायाम्। यद्यपि "अभावः प्रमेय इत्यादौ प्रतियोगिज्ञानमन्तराऽपि स्वरूपतोऽभावज्ञानं भवति, न तत्र प्रतियोगीज्ञानमपेक्षते, तथापि प्रतियोगिविशेषिताभावस्थलेषु प्रतियोगिज्ञानस्य कारणत्वमालक्ष्य प्रतियोगिज्ञानमन्तरा न भवत्येवाभावप्रत्यक्षमिति ज्ञाना-

भावसाधक अनुमिति में ज्ञानवत्त्वेन अस्मर्यमाणत्व लिङ्ग भी हो सकता है। क्योंकि उपेक्षात्मक ज्ञान के निराकृत होने से उसमें व्यभिचार नहीं है, और यदि उसे ( उपेक्षात्मकज्ञान ) मान भी लें तो व्यभिचार के अप्रतिसन्धानदशा में अनुमिति उपपन्न हो जायेगी। क्योंकि वस्तुतः साध्यवत्पक्ष में व्यभिचारिलिङ्ग से भी जायमान अनुमिति प्रमात्मक होती है। अथवा मान लिया जाय कि जीर्ण शीर्ण होने पर भी कथमपि भावरूप अज्ञानपक्ष में तत्र तत्र अप्रामाण्यज्ञानानास्कन्दितबाधनिश्चयाभावत्वादिना कारणता कल्पना की अपेक्षा भावरूप अखण्ड अज्ञानत्वेन कारणताकल्पना में लाघव है। तथापि तादृश-

लाघवम्, तथापि तादृशाज्ञानत्वमस्मदुक्तशक्तिविशेषे एवास्ताम्, मिथ्यात्वं तु तस्य कुतोऽनुरोधात्, प्रकाशविषयत्वे विज्ञानवादोक्तरीत्या प्रकाशात्मकतया सत्यत्वावश्यम्भावात्, तदविषयत्वे तु तन्नैव स्यादिति कृतं विस्तरेण। तदुक्तं शैवैः—

"प्रकाशमानं न पृथक् प्रकाशात्,
स च प्रकाशो न पृथग् विमर्शात्।
नान्यो विमर्शोऽहमिति स्वरूपा-
दहं स्वरूपोऽस्मि चिदेकरूपः॥" इति।

अस्मदुक्तशक्तिविशेष इति। ज्ञानानिवर्त्यं इति तु द्रष्टव्यमेव। अपूर्णम्मन्यतारूपाज्ञानस्य हि ज्ञानेन निवृत्तिर्न तु शक्तिविशेषरूपस्य स्वातन्त्र्यपर्यवसायिनः। तत्त्वानि भावापेक्षया भावरूपाज्ञानकल्पने लाघवमित्याग्रहः स्यात्कस्यचिच्चेत् तदाप्याह—अस्मदुक्तशक्तिविशेषे एवेति। स्वरूपगोपनकारिणी क्रियाशक्तिः मायाख्यशक्तिविशेषः।

प्रकाशविषयस्य प्रकाशात्मकत्वं शैवोक्त्या संवादयति—प्रकाशमानमिति। निगदव्याख्यातः। "स्वशक्तिप्रचयोऽस्य विश्वम्" ( शिव. सू. ३४ ) इति शिवसूत्रोक्तमप्यत्रस्मरणार्हम्। शक्तिश्च विमर्शरूपापि प्रकाशाभिन्नेति बहुशः समुदीरितम्। तथान्यत्रापि—

तत्तद्रूपतया ज्ञानं बहिरन्तः प्रकाशते।
ज्ञानादृते नार्थसत्ता ज्ञानरूपं ततो जगत्॥
नहि ज्ञानादृते भावाः केनचिद्विषयीकृता।
ज्ञानं तदात्मतां यातमेतस्मादवसीयत॥ ( शि. सू. वि. ३२ )

यो यमनुपजीव्य नोपलभ्यते स तस्मादव्यतिरेकी, यथा मृदं विना घटः, तस्माज्ज्ञानस्यैव ज्ञेयभावात्मतया परिनिष्ठानिश्चय इत्यर्थः।

अज्ञानत्व का पर्यवसान अस्मदुक्त शक्तिविशेष में ही हो जायेगा। उसे ( अज्ञान ) मिथ्या क्यों माना जाय। क्योंकि विज्ञानवादोक्तरीति से उसे ( अज्ञान ) प्रकाश का विषय मानने पर प्रकाशरूप हो जाने से सत्य मानना आवश्यक है। और यदि उसे प्रकाश का अविषय मानें तो वह स्वयं ही न रहेगा, अतः इस विषय में विस्तार अनावश्यक है। इस विषय में शैवों ने कहा है—"प्रकाशमानं ………।" प्रकाशमान वस्तु प्रकाश ( शिव ) से भिन्न नहीं है, और वह प्रकाश विमर्श ( शक्ति ) से भिन्न नहीं है, वह विमर्श 'अहम्' इत्याकारक ज्ञानात्मा है तदतिरिक्त नहीं, अतः मैं चिदेकस्वरूप वाला हूँ।

पूर्वोक्तं कल्पितमेव कार्यकारणभावमादाय तु विशिष्य तत्त्वविभागोऽपि, तत्र पञ्चविंशतिः पुरुषान्तानि तत्त्वानि साङ्ख्यवत्, पुरुषस्तु पशूरेव, तत्त्वञ्चापूर्णम्मन्यत्वरूपाणवमलविशिष्टत्वं नियतिकालरागविद्याकलात्मक-

साङ्ख्यवदिति। सञ्ज्ञया तौल्यं तावदस्त्येव, लक्षणेषु क्वचिदवान्तरमतभेदस्तु तदीयनिबन्धेषु द्रष्टव्यः। अपूर्णम्मन्यत्वेति। शुभाशुभवासनात्मककार्ममल—भिन्नवेद्यप्रथात्मकमायीयमलद्वयं तु नात्रोपात्तम्, सकलाख्यजीववर्गे तयोः सत्त्वेऽपि प्रलयाकलविज्ञानाकलाख्यजीववर्गयोरसत्त्वात्, प्रलयाकलेषु ह्याणवकार्ममलद्वयं न तूक्तं मायीयमपि, विज्ञानाकलेषु त्वाणवमेवेति वर्गत्रितयसाधारणमाणवमलमेवेति भावः।

वस्तुतश्चिदनतिरिक्तत्वेऽपि सर्वस्य, कल्पितकार्यकारणभावमादायतत्त्वविभागमुपपादयति—पूर्वोक्तमिति। षट्त्रिंशत्तत्त्वविभागं दर्शयति—पुरुषान्तानीति।

प्रकृतिर्महानहङ्कारो मनश्चेति चतुष्टयम्, पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, पञ्चतन्मात्राणि, पञ्चमहाभूतानि, पुरुषश्चेति पञ्चविंशतितत्त्वानि सांख्यानामपि सम्मतानि—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोड़शकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः (सां-३) इति वदताम्। तदतिरिक्तानि च—१ शिवः २ शक्तिः, ३ सदाशिवः, ४ ईश्वरः, ५ शुद्धविद्या, ६ माया, ७ कला, ८ विद्या, ९ रागः, १० कालः, ११ नियतिः, इत्येकादशतत्त्वान्याहृत्य षट्त्रिंशत्तत्त्वानि।

तत्र पञ्चविंशतितत्त्वानां लक्षणानि तावदित्थम्—प्रकृतिः = महदादिपृथिव्यन्तानां मूलकारणं प्रकृतिः। एषा च सत्त्वरजस्तमसां सुखदुःखमोहात्मकानां प्रकाशप्रवृत्तिनियमनस्वभावानां साम्यावस्थासामान्यं रूपम्। इदमेतादृगिति निश्चयकारिणी सत्त्वप्रधानत्वेन स्वच्छतया प्रतिबिम्बग्रहणयोग्यत्वाद्विकल्पप्रतिबिम्बधारिणी बुद्धिः। सैव महच्छब्देन चोच्यते। अहङ्कारो नाम—ममेद, न ममेदमित्यभिमानसाधनम्। मनः संकल्पसाधनम्। अन्तर्वेद्यस्य सुखादेर्ग्रहणसाधनत्वादेतत्त्रयमन्तःकरणम्। शब्दस्पर्शरूपरसगन्धात्मकानां विषयाणां क्रमेण ग्रहणसाधनानि-श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्चज्ञानेन्द्रियाणि। वचनादानविहरणविसर्गानन्दात्मकक्रियासाधनानि परिपाट्या वाक्पाणिपादपायू-

पूर्वोक्त कल्पित कार्यकारणभावदृष्टि से ही विशेषरूपेण तत्त्वों का विभाग भी वर्णित है। उसमें पुरुषपर्यन्त पचीस तत्त्व ( प्रकृति, पञ्चतन्मात्राएँ, मन, बुद्धि, अहंकार, पञ्चज्ञानेन्द्रिय, पञ्चकर्मेन्द्रिय, पञ्चमहाभूत एवं पुरुष ) तो सांख्य दर्शन के समान ही मान्य है। पुरुष ही पशु है। अपूर्णम्मन्यत्वरूप आणवमलविशिष्टत्व या नियतिकालराग-

**कञ्चुकपञ्चकविशिष्टत्वं वा, एतेषां च क्रमेण व्यापकत्वनित्यत्वपूर्णत्वसर्वज्ञत्व-**

पस्थानि पञ्चकर्मेन्द्रियाणि । शब्दस्पर्शरूपरसगन्धाः सामान्याकाराः पञ्च तन्मात्राणि । तदेव नाधिकं तत्रान्यदस्तीति तन्मात्रशब्देनावान्तरविशेषरहिताः शब्दाद्या उच्यन्ते । आकाशादि भूतपञ्चकम् । तत्राकाशमवकाशप्रदम् । वायुः संजीवनम्, अग्निर्दाहकः पाचकश्च । सलिलमाप्यायकं द्रवरूपञ्च । भूमिर्धारिका ।

यदा तु परमेश्वरः पारमेश्वर्या स्वातन्त्र्यापरपर्यायया मायाशक्त्या स्वरूपं गूहयित्वा संकुचितग्राहकतामश्नुते, तदा पुरुषसंज्ञः, अयमेव मायामोहितः कर्माणि स्वात्मनो बन्धकान्यभिमन्यमानः संसारी, परमेश्वरादभिन्नो बद्ध इवाभासते, अस्यैव मोहः, न तु परमेश्वरस्य, इन्द्रजालमिव ऐन्द्रजालिकस्य स्वेच्छया सम्पादिभ्रान्तेः । स च पशुरिति तस्य पशुत्वं विविङ्क्ते—तत्त्वञ्चापूर्णम्मन्यत्वरूपेति । ननु कथं परिपूर्णात्मनः परशिवस्यापूर्णम्मन्यताप्रसक्तिरिति चेन्न, तस्य परिपूर्णस्वरूपस्यापि स्वेच्छया कञ्चुकपञ्चकेनावृतत्वादित्याशयेन तल्लक्षणान्तरमाह—नियतिकालरागेति । तत्र नियतिः—इदं स्वर्गादिफलकमश्वमेधादिकमेव मया कर्तव्यं, न निरयादिफलकं ब्रह्महननादिकम् । अथ च नियतादेव कारणान्नियतमेव कार्यमुत्पद्यत, इत्यादिनियमनहेतु संकुचत्स्वातन्त्र्यम् । कालो भावानां भासनाभासनात्मकानाम् "अज्ञासिषम्, जानामि ज्ञास्यामि" इति "अकार्षं, करोमि, करिष्यामीति च ज्ञानक्रियास्वरूपेणावच्छेदकं स्वातन्त्र्यम् । रागः—इदं मम उपयुज्यते, इदं मे भूयादिति विषयेष्वभिष्वङ्गहेतुः स्वातन्त्र्यम् । विद्या-किञ्चिज्ज्ञातृत्वस्य "किञ्चिदेव घटादिकं जानामि न पुनः सर्वमित्यात्मकस्य हेतुभूतम् स्वातन्त्र्यम् । कालः-किञ्चित्कर्तृताहेतुभूतं तत् । अस्य जगत्स्रष्टुः स्वरूपावरकत्वादेतत्पञ्च कञ्चुकशब्देनोच्यते । एतेन नियत्यादिना कञ्चुकेनावृतोऽयं शक्तिदारिद्रयमनुभूय नियत्यादिमुखेनैव स्ववैभवात् प्रति वितीर्णकिञ्चिदंशः पशुरित्युच्यते । अयमत्र निष्कर्षः—चित्स्वरूपः परमेश्वरः स्वाभिन्नस्वात्मशक्तिस्वातन्त्र्यवशादभेदव्याप्तिं न्यक्कृत्य भेदव्याप्तिमवलम्बते, तदा पारमेश्वरेच्छादिशक्तयोऽसंकुचिता अपि संकोचवत्यो भान्ति, तदैवायं मलावृतः संसारीत्युच्यते । तथा च अप्रति-

विद्याकलारूप कञ्चुकपञ्चकविशिष्टत्व ही उसमें पशुता है । ( ज्ञातव्य है कि आगमसिद्धान्त में स्वातन्त्र्यशक्ति ही तत्तदंश में संकोचभाव का अभिनय कर नियतित्वादिव्यवहारभाक् होती है 'अमुक कारण से ही अमुक कार्य उत्पन्न होता है' इस संकुचितस्वातन्त्र्य को नियति कहते हैं । इसी प्रकार अमुक काल में ही अमुक कार्य होगा' इसे काल, इस समय अमुक विषय प्राप्त हो' इसे राग, 'किञ्चित्कर्तृताहेतुस्वातन्त्र्य कला, तथा किञ्चिज्ज्ञातृत्व हेतु स्वतंत्र्य विद्या कही जाती है) । इनमें प्रत्येक क्रम से व्यापकत्व नित्यत्व

**सर्वकर्तृत्वविरुद्धस्वरूपमवसेयम्, निर्वर्णितस्वतन्त्रप्रकाश एव च स्वरूपतिरोधित्सया पशुतां गतः। अनादित्वञ्च दर्शनान्तरवत्संसरणस्येष्टमेवेति स्वीकृतं त्रयोदशाह्निके श्रीतन्त्रालोके। स्वरूपतिरोधित्सात्मकमायाशक्तेरनादित्वेऽपि**

हृतस्वातन्त्र्यरूपा इच्छाशक्ति संकुचिता सत्यपूर्णम्मन्यतारूपमाणवमलम्। ज्ञानशक्तेः क्रमेण संकोचात् किञ्चिज्ज्ञत्वाप्तेरन्तःकरणबुद्धीन्द्रियतापत्तिपूर्वमत्यन्तं संकोचाभासनाद् भिन्नवेद्यप्रथारूपं मायीयं मलम्, क्रियाशक्तिः क्रमेण भेदे सर्वकर्तृत्वस्य किञ्चित्कर्तृत्वाप्तेः कर्मेन्द्रियरूपसंकोचग्रहणपूर्वमत्यन्तं परिमिततां प्राप्ता शुभाशुभानुष्ठानमयं कार्मं मलम्। तथा च सर्वकर्तृत्वसर्वज्ञत्वपूर्णत्वनित्यत्वव्यापकत्वशक्तयः संकोचं गृह्णाना यथाक्रमं कलाविद्यारागकालनियतिरूपतया भान्ति। तथाविधश्च शक्तिदरिद्रः संसारीत्युच्यते। स्वशक्तिविकासे तु शिव एवेत्यन्यत्र स्पष्टम्। एतदभिप्रायेणैवाह-एतेषां च क्रमेणेति। उपाधिविशेषमादायैव जीवेऽनित्यत्वावगति र्न तु स्वरूपतोऽद्वैतवादेऽस्मिन्निति त्ववगन्तव्यम्। निश्चयोतमुपवर्णयति—निर्वर्णित इति। दर्शनान्तरवदिति। वेदान्तदर्शने यथा—अजामेकाम् (श्वे. उ.) इति श्रुत्या "नैसर्गिकोऽयं लोकव्यावहारः" ( ब्र०सू० शा. भा. ) "स्वाभाविकोऽनादिरयं व्यवहारः" ( भामती ) "एवमयमनादिरनन्तो नैसर्गिकः" ( ब्र.सू. शा. भा.) "अनादाविह संसारे" (पं. द.) "जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा। अविद्या तच्चितोर्योगः षडस्माकमनादयः"॥ (वा०) "अनादित्वेन तन्निरासात्" ( सि. वि. ) इत्यादिभाष्यादिवचनैश्च संसारस्यानादित्वमुपगतम्, यथा च सांख्यतत्त्वकौमुद्याम्—"ननु धर्मादयो भावाः शरीरापेक्षाः, शरीरञ्च धर्माद्यपेक्षमिति परस्पराश्रयेणोभयमपि न संभवेदित्याशङ्कां समादधता मिश्रपादेन—"अनादित्वाच्च बीजाङ्कुरवन्नान्योन्याश्रयदोषमावहति। कल्पादावपि प्राचीनकल्पोत्पन्नभावलिङ्गसंस्कारवशाद्भावलिङ्गयोरुत्पत्तिर्नानुपपन्ने" ( ५२ का. ) त्युक्तम्। जैमिनियाश्च सृष्टिप्रलयमप्यानिच्छन्तो "न कदाप्यनीदृशं जगदि" ति ब्रुवन्तः सुतरामस्यानादित्वमाचक्षते, तथा प्रकृतेऽपि—

"अनादिमलसंच्छन्ना
अणवो दृक्क्रियात्मना ( तन्त्रा. १३।७८ )

"ईश्वरस्य या स्वात्मतिरोधित्सा निमित्तताम्।
साभ्येति कर्ममलयोरतोऽनादित्वव्यवस्थितिः ॥" ( तन्त्रा. १३।११० )

पूर्णत्व सर्वज्ञत्व एवं सर्वकर्तृत्व के विरोधी हैं उपवर्णित स्वतन्त्रप्रकाश ही स्वस्वरूपतिरोधानेच्छा से पशुता को प्राप्त करता है। दर्शनान्तर के समान संसार का अनादित्व हमें भी इष्ट है, यह भी तन्त्रालोक के त्रयोदशाह्निक में वर्णित है। स्वरूपतिरोधानेच्छा-

संसारः सादिरित्यस्य वक्तुमशक्यत्वात् । "यथाऽनादिप्रवृत्तोऽयं घोरः संसार-सागरः । शिवोऽपि हि तथानादिः संसारान्मोचकः स्मृतः" इत्युक्तेः । मोक्षश्चास्य पशोस्तादृशस्वातन्त्र्यशक्त्यभिन्नप्रकाशात्मक एव, "मोक्षस्य नैव किञ्चिद्धामास्ति न चापि गमनमन्यत्र । अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता

"अनादौ कोऽन्वयं क्रमः" ( त. १३।१७ ) "यदनादावस्मिन्संसारे" (त. १३।१७) इत्याद्यनेकवचनादनादित्वं संसारस्येति भावः । स्वरूपतिरोधित्सेति । परमेश्वरस्य स्वरूपधित्सा हि तिरोधातुमिच्छा । तत्र तिरोभावः पूर्णरूपस्य तस्यापूर्णत्वाभिनयः, तद्धेतुभूतेच्छा च तस्य स्वाभिन्नस्वातन्त्र्यमेव, तच्च स्वरूपगोपनकारित्वाद् मायाशक्तिरित्युच्यते । अत एव—

देवः स्वतन्त्रश्चिद्रूपः प्रकाशात्मा स्वभावतः ।
रूपप्रच्छादनक्रीड़ायोगादणुरनेककः ( त. १३।१०३ ) इत्युक्तम् ।

तस्याश्च स्वाभिन्नत्वादेवानादित्वम् । ननु स्वस्याप्यनादित्वं कुत—इतिचेत्तत्राह-यथाऽनादीति । स्वस्वातन्त्र्यवशात्संसारात्मना भासमानः स्वेच्छया समधिगतसंकोचभावं स्वात्मानमेव संसारान्मोचकः संसारवदेवानादिरित्यर्थः । वस्तुतस्तु संसारस्यानादित्वमपि शिवस्यानादित्वायत्तमेवेत्यन्यत् ।

ननु परमेश्वर एव यदि स्वेच्छया पशुभावं बिभर्ति, तर्हि कीदृशोऽस्य मोक्ष इत्यत आह—मोक्षश्चास्येति । मोक्षस्य नैवेति । मोक्षस्य कैवल्यस्य नैव किञ्चिद्धाम व्यतिरिक्त स्थानं विद्यते, न चाप्यन्यत्र कुत्रचिद् गमनं लयो मोक्षः, अपित्वज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः । अज्ञानमपूर्णम्मन्यतारूपं तच्चात्मानात्मनोः परस्पराभिमानलक्षणम् आत्मनः पूणस्वरूपसंकोचकारित्वात् ग्रन्थिरिव ग्रन्थिः—स्वकीयस्वातन्त्र्यात्मकव्यापित्वादेर्देहाद्यभिमानतया बन्धः, तस्य भिद् भेदनं पूर्णात्मस्वरूपस्वातन्त्र्यपरिशोलनं, तदेव प्रोक्तग्रन्थिविदारणम्, तेन च स्वशक्त्यभिव्यक्तता स्वात्मस्वातन्त्र्यात्मकपरिपूर्णताभिव्यक्तिः, सैव च मोक्षः इत्यर्थः । वस्तुतः स्वातन्त्र्यस्फार एवायम् बद्धमुक्ताभिनयः इति न

रूप मायाशक्ति के अनादि होने पर संसार को सादि कहना सम्भव नहीं है । कहा है—'यथाऽनादि·······। जैसे यह घोर संसारसागर अनादिकाल से प्रवृत्त है वैसे ही इस संसार से मुक्त करने वाला शिव भी अनादि है । इस पशु का तादृश स्वातन्त्र्यशक्ति से अभिन्न प्रकाशरूपता ही मोक्ष है । 'मोक्षस्य नैव········' । मोक्ष का न कोई धाम ( स्थान ) है और न मोक्ष में कहीं अन्यत्र जाना ही है, केवल अज्ञानग्रन्थि के भेदन होने से स्वस्वातन्त्र्यात्मकपरिपूर्णता की अभिव्यक्ति ही मोक्ष है ।' ( आत्मा में अनात्माभिमानपूर्वक अनात्मादेहादि में आत्माभिमानरूपमोह ही अपने पूर्णस्वरूप का संकोचदायि तथा स्वस्वातन्त्र्यस्वरूप निजीव्यापकत्वादि का देहाद्यभिमानरूप से बन्धक होने से ग्रन्थि कहा गया है ) परमार्थसारोक्त इस अभिनवगुप्तपादोक्ति का भी इसीमें तात्पर्य

मोक्षः" इति परमार्थसारेऽभिनवगुप्तपादोक्तेरप्यत्रैव तात्पर्यम् । जीवन्मुक्तिदशा तु वेदान्तिवदेवेति तत्रैवाभिव्यक्तम् । विवर्तवादे भाविशक्तिस्वरूपालोचनप्रणाल्या तु विदेहमुक्तावपि शब्दभेद एव । बन्धस्य वस्तुतोऽभावेन तु तत्प्रतियोगिकत्वेन रूपेण मोक्षोऽपि नास्तीति वेदान्तिवदेव व्यवह्रियते । यत्स्वीकृतं तन्त्रालोकटीकायाम्—

"संसारोऽस्ति न तत्त्वतस्तनुभृतां बन्धस्य वार्तैव का ।

विस्मर्तव्यम् । अत्रैव तात्पर्यमिति । मोक्षस्य स्वातन्त्र्यशक्त्यभिन्नप्रकाशात्मकत्वप्रतिपादने तात्पर्यमित्यर्थः । अन्यत्राप्युक्तम्—

मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः ।
स्वरूपञ्चात्मनः संविन्नान्यत्तत्र तु या पुनः ॥ ( त. १।१५६ इति)
स्वतन्त्रात्मातिरिक्तस्तु तुच्छोऽतुच्छोऽपि कश्चन ।
न मोक्षो नाम तन्नास्य पृथङ्नामापि गृह्यते ॥ ( त० १।३१ ) इति च ।

अत्र वेदान्तमतमाश्रित्य मुख्यसामानाधिकरण्यं बाधसामानाधिकरण्यं वेत्यन्यदेतत् । स्वाभिमतजीवन्मुक्त्यादौ वेदान्तिसाम्यं प्रकटयति—जीवन्मुक्तिदशेति । तत्रैव—परमार्थसारे—

मय्येव भाति विश्वं दर्पण इव निर्मले घटादीनि ।
मत्तः प्रसरति सर्वं स्वप्नविचित्रत्वमिव सुप्तात् ॥
अहमेव विश्वरूपः करचरणादिस्वभाव इव देहः ।
सर्वस्मिन्नहमेव स्फुरामि भावेषु भास्वररूपमिव ॥
( प. सा. ४८-४९ ) इत्यादिना ।

श्रुतयश्चाप्यत्र भवन्ति—"अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" (छा० उ० ८.१२-१) "जीवन्मुक्तः सरूपः स्यात्" (मु. उ. ३३) "यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्रको मोहः कः शोक एकत्वमनुपश्यतः" (ई. उ. ७) इत्याद्याः । विवर्तवाद इति । मूलशक्त्यालोचनमित्यादिना । बन्धस्येति । प्रोक्तरीत्या शिवस्यैव मातृमेयादिसर्वात्मना भासमानत्वेन तदतिरिक्तस्य परमार्थतो बन्धस्याप्यभाव एवेति भावः । शिवात्मना मोक्षस्य सत्यत्वादाह—तत्प्रतियोगिकत्वेनेति । तदा बन्धपरामर्शः । वेदान्तिवदेवेति । प्रदर्शितं प्राक "न निरोधो न चोत्पत्तिरित्यादिना वेदान्तमतम् । तत्र स्वमतप्रतिपादकं वचनं दर्शयति—संसारोऽस्ति

है । जीवन्मुक्तिदशा वेदान्ती के समान ही हम ( आगामिक ) मानते हैं, जो वहीं ( परमार्थसार में ) उपवर्णित है । विवर्तवाद में वक्ष्यमाण शक्तिस्वरूप आलोचन प्रणालि से विदेह मुक्ति में भी केवल शब्दमात्र का ही भेद है । और वेदान्ती के समान ही हम भी यह कहते हैं कि—वस्तुतः बन्ध के न होने से तत्प्रतियोगिकत्वेन रूपेण मोक्ष भी नहीं है । जैसा कि तन्त्रालोक की टीका में स्वीकृत है—'संसारोऽस्ति न'....। जब

बन्धो यस्य न जातु तस्य वितथा मुक्तस्य मुक्तिक्रिया ।
मिथ्यामोहकृदेष रज्जुभुजग-च्छायापिशाचभ्रमो
मा किञ्चित्त्यज मा गृहाण विरम स्वस्थो यथाऽवस्थितः ॥" इति

प्रकाशात्मना सत्यत्वेऽपि बहिष्ट्वेनाभावमभिप्रेत्य मिथ्यात्वोक्तिरेतन्मतेऽपि सम्भवति। अधिकं तु विवर्तवादे वक्ष्यामः। तादृशपशुत्वप्रयोजकं तु भेदप्रतीत्यात्मकं मायातत्त्वम्, तदुपरि अहमिदमिति परामर्शात्मकं क्रियाशक्तिप्रधानं शुद्धविद्यातत्त्वम्। अत्राहन्तेदन्तयोः समीभूयावभासनम्, तत्रैवेदमंश-

न तत्वत इति। संसारे सत्येव बन्धमोक्षव्यवस्था आपतति। शिवातिरिक्ततया वस्तुतस्तस्यैवाभावे नो बन्धो नापि च मोक्षः। ननु तर्हि—"अयं बद्धोऽयं मुक्त इति व्यवहारः कथमिति चेत्तत्राह—मिथ्यामोहकृदेष इति। एष लौकिको व्यवहारो मिथ्यामोहकृत्। मिथ्याभूतो यो मोहोऽज्ञानम् मायेति यावत्, तया कृत इत्यर्थः। तत्र दृष्टान्तः-रज्जुभुजग इति। वस्तुस्थितिमुपदिशति-मा किञ्चित्त्यज इत्यादिना। स्वस्थः, स्वस्वरूपभूते शुद्धे चिदात्मनि तिष्ठतीति स्वस्थः। तल्लक्षणन्तु निरुक्तं प्राक्। यथावस्थितः साम्ये स्थित इत्यर्थः।

ननु शिवात्मना सर्वस्यापि सत्यत्वेन कथं मिथ्यात्वोक्तिरिति तत्राह—प्रकाशात्मनेति। एतन्मतेऽपि—चित्स्वातन्त्र्यवादिमतेऽपि। ननु कीदृशं तर्हि मिथ्यात्वसत्यत्वयोः सामानाधिकरण्यमिति चेत्तत्राह—अधिकं त्विति। शिष्टतत्त्वानि निर्वचति—तादृशपशुत्वप्रयोजकमिति। भेदप्रतीत्यात्मकमिति। स्वस्वरूपेषु भावेष्वित्यादिः। तदुपरीति। तच्छब्देन मायातत्त्वं परामृशति। अहमिदमिति परामर्शात्मकम्—अहन्तेदन्तयोरैक्यप्रतिपत्त्यात्मकमित्यर्थः। क्रियाशक्तिप्रधानमिति। भावानां भासनैव विमर्शरूपा क्रियाशक्तिरिति ईश्वरप्रत्यभिज्ञादौ व्यक्तम्।

जीवात्माओं का संसार ही वास्तविक नहीं है तब बन्ध की बात ही क्या, अर्थात् वह वास्तविक हो ही कैसे सकता है और जिसका कभी बन्धन ही नहीं हुआ, उस मुक्त की मुक्तिक्रिया भी वितथ ( व्यर्थ ) ही है। बन्ध और मोक्ष दोनों ही रज्जु में सर्पभ्रम एवं छाया में पिशाचभ्रम के समान मिथ्याऽज्ञान के द्वारा कल्पित है, अतः तुम्हें न किञ्चित् परित्याज्य है और न ग्राह्य, केवल स्वस्थ ( स्वस्वरूप में स्थित ) रहो। प्रपञ्च के प्रकाशात्मना सत्य होने पर भी बहिष्ट्वेन अभाव होने से उसे मिथ्या कहना इन ( आगम ) के मत में भी सम्भव है। इस विषय में विशेषविवेचन विवर्तवाद में करेंगे। पुरुष में पूर्ववर्णितपशुता का प्रयोजक भेदप्रतीत्यात्मक मायातत्त्व है। उसके ऊपर अहम् इदम् इत्याकारक परामर्शात्मक क्रियाशक्तिप्रधान विमर्श शुद्ध विद्यातत्त्व है। इस अवस्था में अहन्ता और इदन्ता समानरूप से भाषित होती है, उसमें इदमंश का

**प्रधान्ये ईश्वरतत्त्वं ज्ञानशक्तिप्रधानम्, अहमंशप्राधान्ये तु सदाशिवतत्त्वमिच्छाशक्तिप्रधानम्, अहमित्येतावन्मात्रपरामर्शस्त्वानन्दशक्तिप्रधानं चैतन्यं शक्तितत्त्वम्। लोकेऽपि क्वचित्प्रवर्तिष्यमाणस्य स्वात्मानमनुसन्धायैव चिकीर्षितस्यबुद्धावारोहणदर्शनान्नायं दुरूहः पन्थाः। सर्वमेतत्तत्त्वव्यूहं गर्भीकृत्य वर्तमानं परिपूर्णानन्दमयं चिद्रूपं शिवतत्त्वम्। अतएव चिदानन्देच्छाज्ञानक्रियेतिशक्ति**

समीभूयावभासनम्—समानतयाऽवभासनम्। तत्रैवेदमंशप्राधान्ये इति। "ईश्वरो बहिरुन्मेषो निमेषोऽन्त सदाशिवः" ( ई. प्र. ) इत्युक्तेः। स्फुटीभूते चेदमंशे यदाहमंशं निषिञ्चति तदाऽङ्कुरितं जगदहन्तयावृत्य स्थितमीश्वरतत्त्वम्। अहमंशप्राधान्ये त्विति। यदा परमेश्वरः शुद्धचिन्मात्राधिकरण एवाहमित्यंशे इदमंशमुल्लासयति, तदा तस्य प्रोन्मिलितमानचित्रकल्पभावराशिविषयत्वेनास्फुटत्वादिच्छाशक्तिप्रधानं सदाशिवतत्त्वमितिभावः।

लोकप्रसिद्धेच्छाविलक्षणा निर्विकल्पप्राया सूक्ष्मा काचिच्चिद्दशाऽत्रेच्छाशक्तिः तेन लोके इच्छाया ज्ञानोत्तरत्वप्रसिद्धावपि न क्षतिः। अहमित्येतावदिति। जगत्स्रष्टुः परमेश्वरस्य स्वस्वातन्त्र्यमाहात्म्याद् बहिरुल्लिलसिषया परानन्दचमत्कारोद्रेकाद् अहमिति परामर्शः।

ननु तस्य बहिरुल्लसितुमिच्छैव शक्तितत्त्वमास्ताम्, तत्राहमिति परामर्शोऽकिञ्चित्प्रयोजनक इत्याशंकां लौकिकानुभवेनोपशमयितुमाह—लोकेऽपीति।

शिवतत्त्वं दर्शयति—सर्वमेतत्तत्त्वव्यूहमिति। सर्वप्रमाणामन्तः परिस्फुरत्पूर्णाहन्ताचमत्कारमयं सर्वतत्त्वोत्तीर्णं सकलतत्त्वराशिगतसृष्टिसंहारशतसहस्रप्रतिबिम्बनसहिष्णु महाप्रकाशवपुः शिवतत्त्वम्। अयमेवेच्छाज्ञानक्रियात्मककेवलपूर्णानन्दस्वभावरूपः परमशिव इत्युच्यते। तदुक्तम्—

तावान्पूर्णस्वभावोऽसौ परमः शिव उच्यते।
तेनात्रोपासकाः साक्षात्तत्रैव परिनिष्ठिताः॥ ( तन्त्रा. १।१०८) इति

अत एवेति। शिवस्य तादृशस्वभावरूपत्वादेव। क्वचिदुल्लेख इति।

प्रोक्तशक्तिपञ्चके चिज्ज्ञानयोरुभयोः परिगणितयोः परस्परपर्यायत्वभाव-

प्राधान्य होने पर ज्ञानशक्तिप्रधान ईश्वरतत्त्व होता है तथा अहमंश का प्राधान्य होने पर इच्छाशक्ति प्रधान सदाशिवतत्त्व होता है। केवल 'अहम्' इत्याकारक परामर्शात्मक आनन्दशक्तिप्रधान चैतन्य शक्तितत्त्व है। लोकव्यवहार में भी कार्यविशेष में प्रवर्तिष्यमाण पुरुष स्वात्मानुसन्धान करके ही कर्तव्यकार्य को बुद्धिस्थ करते हुए देखे जाते हैं, अतः यह दुर्ज्ञेय नहीं है। समस्त इस तत्त्वसमूह को गर्भस्थ कर वर्तमान परिपूर्णानन्दमय चित् ही शिवतत्त्व है। अतएव कुत्रचित् शिवतत्त्व में चित् आनन्द इच्छाज्ञान क्रिया

पञ्चकस्यापि क्वचिदुल्लेखः। अथ चैतन्यज्ञानयोः को भेदः? चैतन्यं तावदात्मस्वरूपमनुस्यूतमेव, तदेव त्वौत्कट्येन बाह्याभासात्मकतामापन्नं ज्ञानशक्तिरित्यवस्थाभेदात्, बाह्यस्त्विदमंशः। एवं षट्त्रिंशत्तत्त्वानि। अयं च प्रसिद्धो विभागः, शिवाद्वैतप्रतिपत्तावेव सन्नाहेन तु प्रक्रियामनादृत्य प्रकारान्त-

षट्त्रिंशत्तत्वानीति। कञ्चुकपञ्चकयोजनेन सङ्ख्या पूरणीया।

नया जिज्ञासते—अथ चैतन्यज्ञानयोः को भेद इति। जिज्ञासामुपशमयति—चैतन्यमिति। षट्त्रिंशत्तत्त्वनिरूपणमुपसंहरति—एवमिति।

ननु सत्यपि विभागान्तरे किमिति षट्त्रिंशत्तत्वविभाग एव प्रथममादृत इति तत्राह—अयञ्च प्रसिद्ध इति। प्रसिद्ध इति हेतुगर्भविशेषणम्। वस्तुस्थितिमादृत्याह—शिवाद्वैतप्रतिपत्तावेवेति। सन्नाहेन—तत्परेण। प्रकारान्तरेणापीति। अनुपदमेव वक्ष्यमाणलक्षणेन। क्रमान्तरमकारीति। तदित्थम्—

विन्दुनादौ शक्तिशिवौ शान्तातीतौ ततः परम्।
षट्त्रिंशत्तत्त्वमित्युक्तं शैवागमविशारदैः॥
(मानसोल्लासः २।४२) इति।

अत्रतावत्—

भूतैस्तु पञ्चभिः प्राणैश्चतुर्दशभिरिन्द्रियैः।
चतुर्विंशतितत्त्वानि सांख्यशास्त्रविदो विदुः॥ (मा. २।४०)

इति सांख्याभिमतानि चतुर्विंशतितत्त्वानि,

महान् कालः प्रधानञ्च मायाविद्ये च पूरुषः।
इति पौराणिकाः प्राहुः त्रिंशत्तत्त्वानि तैः सह॥ (मा. २।४१)

षड्भिरेतैः सह पूर्वोक्तानि चतुर्विंशतितत्त्वान्याहृत्य त्रिंशत्तत्त्वानि। तैश्च सहेतानि—विन्दु-नादशक्तिशिवशान्तातीतानि षट्तत्त्वान्याहृत्य षट्त्रिंशत्तत्त्वानि। तत्र विन्दुः—सर्वाधिष्ठानं चैतन्यम्। अत एव—

इस शक्तिप्रपञ्चक का भी उल्लेख मिलता हैं। यदि जिज्ञासा हो कि चैतन्य और ज्ञान में क्या भेद है तो—अनुस्यूत आत्मस्वरूप ही चैतन्य है और वही जब उत्कटरूप से बाह्याभासकतापन्न होता है, तब अवस्थाभेद से ज्ञानशक्ति कहा जाता है। इदमंश बाह्यशब्द से ग्राह्य है। एवं आगमसिद्धान्तानुसार षट्त्रिंशत् तत्त्व है। (१ शिव, २ शक्ति, ३ सदाशिव, ४ ईश्वर, ५ शुद्धविद्या, ६ माया, ७ कला, ८ विद्या, ९ राग, १० काल, ११ नियति, १२ पुरुष, १३ प्रकृति, १४ बुद्धि, १५ अहंकार, १६ मन, १७ श्रोत्र, १८ त्वक्, १९ चक्षुः, २० जिह्वा, २१ घ्राण, २२ वाक्, २३ पाणि, २४ पाद, २५ पायु, २६ उपस्थ, २७ शब्द, २८ स्पर्श, २९ रूप, ३० रस, ३१ गन्ध, ३२ आकाश, ३३ वायु, ३४ वन्हि, ३५ सलिल एवं ३६ भूमि)। यह तत्त्वविभाग प्रसिद्ध है। जो शिवाद्वैत

रेणापि तत्त्वोपवर्णनमागमेषु दृश्यते, अत एवैतन्मतोपवर्णनपरेऽपि मानसोल्लासे तत्त्ववर्णनायां क्रमान्तरमकारि। तन्त्रालोके तु—

"यत्तु सर्वाविभागात्म स्वतन्त्रं बोधसुन्दरम्।
सप्तत्रिंशं तु तत्प्राहुस्तत्त्वं परशिवाभिधम्॥"
"एवं विसृष्टिप्रलयाः प्राणे एकत्र निष्ठिताः।
सोऽपि संविदि संविच्च चिन्मात्रे ज्ञेयवर्जिते॥
चिन्मात्रमेव देवी च सा परा परमेश्वरी।

"सृष्टामया परिचिता प्रकृतिर्विसर्गः।
तां स्वात्मना कवलयन् शिव एष विन्दुः"॥

इत्युक्तम्। नादः = तस्यैव प्रणवात्मना सर्वार्थस्फोरकत्वेनाभिव्यक्तं रूपान्तरम्। शक्तिः = मायाऽविद्याभ्रामन्या सर्वाधिष्ठानत्वसामर्थ्यम्। शिवः = शक्तिमानीश्वरो लीलाविग्रहधारी। शान्तातीताविरयुभावपीश्वरस्यावस्था-विशेषौ। शिष्टानि कृतव्याख्यानि।

तन्त्रालोकोक्तं प्रकारान्तरं दर्शयति—यत्त्विति। प्रोक्तं शिवतत्त्वं विश्वोत्तीर्णत्वेऽपि विश्वमयमेकं रूपं स्वतन्त्रबोधात्मकं पर्यवसितम्। किन्तु कथं तद्विरुद्धधर्माक्रान्तमिति मा संशयीत इति तस्यैव षट्त्रिंशतत्त्वस्यैकं रूपं सप्तत्रिं-शत्वेन परिकल्पितम्। तच्च कीदृशं तत्राह—सर्वाविभागात्मेति। सर्वाविभागा-द्यात्मत्वाद्यात्मकं, तद्धि उभयवस्त्वधिष्ठानम्, अतो न विरोधः। अत एव स्वतन्त्रं बोधात्मकत्वेन रमणीयम्, किं तत्, परशिवाभिधम् तत्त्वमित्यर्थः।

एतस्यापि रूपस्य भावनोपदेशादौ कल्पितवेद्यभावे तु तस्यैवाष्टात्रिंशं रूपं तत्त्वं कल्प्यते—एवमिति! संविदीति। तत्तन्नीलाद्याभाससंभिन्नायां परिमिता-त्मरूपायाम्।

चिन्मात्रमेव देवी चेति। चितिर्हि स्वरूपपरिनिष्ठिता निस्तरङ्गाब्धि-कल्पा तुरीया त्रिपुरा। सैव यदा स्वस्वातन्त्र्यवशाच्चितिक्रियाकर्तृत्वरूपचेतन-

प्रतिपत्ति में ही बद्धदार है वे प्रकृतप्रक्रिया का अनादर कर प्रकारान्तर से भी तत्त्वों का वर्णन करते हैं। अतएव एतन्मत (आगममत) वर्णनपरक मानसोल्लास में क्रमान्तर से तत्त्ववर्णन किया गया है। तन्त्रालोक में तो कहा है कि—'यत्तु सर्वावि-भागात्म......'। जो चित्तत्व सर्वविभागातीत स्वतन्त्र तथा सौन्दर्ययुक्त है वही सप्तत्रिंशत् तत्त्वरूप से वर्णित है और उसे ही परशिव कहते हैं। एवं सृष्टि-प्रलय प्राणमें वह प्राण भी संविद् में, और संविद् ज्ञेयवर्जितचिन्मात्रतत्त्व में प्रतिष्ठित है। वह चिन्मात्र-तत्त्व ही देवी (दिव्यस्वरूपा) परमेश्वरी परा है। इस प्रकार वही चित्तत्त्व अष्टा-त्रिंशत् तत्त्वरूप से वर्णित हैं और उसे परात्पर हृदयतत्त्व कहा गया है।

अष्टात्रिंशं च तत् तत्त्वं हृदयं तत्परात्परम् ॥"

इत्यप्युक्तम् ।

केचित्तु "पञ्चविंश आत्मा भवती"ति तैत्तिरीयश्रुत्यनुगृहीतानि पञ्चविंशतिरेव तत्त्वानि, तानि च पञ्चभूतानि तन्मात्रपञ्चकं पञ्चज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनस्तत्त्वं मायाविशुद्धविद्यामहेश्वरसदाशिवात्मकानि चत्वारीति, परिशिष्टानां त्वेतेष्वेवान्तर्भावः, सर्वतत्त्वातीतं तु षड्विंशं शिवशक्तिसम्मेलनमिति प्राहुः ।

सर्वश्चायं तत्त्वनिवहः प्रागुदीरितत्रिकात्मक एवं, त्रिकं च स्वातन्त्र्यरू-

इत्यप्युक्तमिति । यद्यपि षट्त्रिंशत्वेन गीयमानमेव परतत्त्वम्, तथापि विश्वोत्तीर्णस्यापि तस्य भावनार्थं कल्पितवेद्यभावे सति वेदकतादशाधिशायिनः सप्तत्रिंशत्वम्, तस्यापि भावनार्थं वेद्यताकल्पने तु वेदकस्याष्टात्रिंशत्वम् । न चैवमनवस्था, चरमस्य वेद्यताकल्पने उपान्त्यस्य वेदकत्वात् । न चैवं षट्त्रिंशस्यैव स्वोपान्त्यवेद्यता स्यात्; तदुपान्त्यशक्तेर्वेद्यान्तःपातित्वात् । सप्तत्रिंशे तु तथा स्यात्, यदि श्रीरत्नकुलमालायामष्टात्रिंशपर्यन्ततत्त्वगणना नादृता स्यादिति तत्सम्प्रदायः । सौन्दर्यलहरीटीकाकृतां मतमाह केचित्त्विति । सामरस्यं सम्मेलनं वाऽद्वैतवादिमते ऐक्यमेव, मतान्तरे तु वैशिष्ट्यम् । इतिदर्शनसर्वस्वे स्वातन्त्र्यवादे राजहंसः ।

तामासादयति तदेश्वर इत्युच्यते । कार्यब्रह्मेति यं वेदान्तिन आहुः । तच्चिन्मात्रमेव चाष्टात्रिंशं तत्त्वम् । शेषं निगदव्याख्यातम् । अधिकन्तु टीकायां द्रष्टव्यम् । केचित्त्विति । लक्ष्मीधरदेशिकाः । प्राहुरिति । लक्ष्मीधरायाम् ( सौ. ल. व्या. ११ इत्यादिः । अक्षरार्थस्त्वतिरोहितः ।

ननु कल्पितकार्यकारणभावमादाय विशिष्य तत्त्वविभागस्यौचित्येऽपि त्रिकदर्शने त्रयाणामेव तत्त्वानां विभागः कर्तव्यताकोटिं भजते, किमित्येतावतां विभाग इति तत्राह—सर्वश्चायमिति । तत्त्वनिवहः = तत्त्वसमूहः । त्रिकात्मकः = शिवशक्तिनरात्मकः । एतद्दर्शने सर्वं विश्वं नरशक्तिशिवात्मकमेवेति तत्र तत्रोद्घोष्यते । तच्च त्रिकं स्वातन्त्र्यात्मकं स्वात्मकस्वातन्त्र्यवशादेव शिवस्य तथा-

सौन्दर्यलहरी के टीकाकार श्रीलक्ष्मीधर ने कहा है कि "पञ्चविंश आत्मा भवति" इस तैत्तरीय श्रुति से अनुमोदित पञ्चविंशति ( पचीस ) ही तत्त्व है । और वे हैं— पञ्चभूत, पञ्चतन्मात्रा, पञ्चज्ञानेन्द्रिय, पञ्चकर्मेन्द्रिय, मन, माया, विशुद्धविद्या, महेश्वर एवं सदाशिव । अवशिष्ट तत्त्वों का इन्हीं में अन्तर्भाव हो जाता है । सर्वतत्त्वातीत ( सभी तत्त्वों से परे ) शिवशक्तिसामरस्य तो षड्विंश ( छब्बीसवाँ ) तत्त्व है ।

यह सभी तत्त्वसमुदाय पूर्वोक्त त्रिकतत्त्वात्मक ही है । चित्रतत्त्व (शिवशक्तिनर)

पविमर्शात्मकमेव, विमर्शश्च प्रकाशात्मक एव। एतच्च श्रीविद्योपासकैः शाक्तैरप्यनुमन्यत एवेति शाक्तदर्शने त्रिपुरारहस्यज्ञानखण्डेऽभिव्यक्तम्। अतएव 'शक्तिविशिष्टमेव पर ब्रह्मेति तान्त्रिकसिद्धान्तेऽपि शक्तिशक्तिमतोरभेदान्न ब्रह्मणो निर्धर्मकत्वभङ्गः' इति योगिनोहृदयसेतुबन्धे भास्कररायोऽप्युररीच-

तथा भासमानत्वात्। तदुक्तम्—

शिवो ह्यच्युतचिद्रूपस्तिस्रस्तच्छक्तयस्तु याः।
ताः स्वातन्त्र्यवशोपात्तग्रहीताकारतावशात्॥ ( तन्त्रा. १०।१७९ ) इति
यत्तु ग्रहीतृतारूपसवित्संस्पर्शवर्जितम्।
शुद्धं जडं तत्स्वरूपमित्थं विश्वं त्रिकात्मकम्॥ ( तन्त्रा. १०।१८२ ) इति च।

संवित्संस्पर्शवर्जनादेव शुद्धम्। अतएव जडं वेद्यतायाः प्राधान्यान्नरात्मकम् यदुक्तम्—

यदा तु ग्राहकावेशविस्तृतेर्जड़ता स्फुटम्।
पारतन्त्र्यात्तदोदेति तत्स्वरूपं नरात्मकम्॥ इति।

विमर्शश्च प्रकाशात्मक एवेति। व्यक्तश्चैतत् प्राक्। त्रिपुरारहस्येति।

जगदादेर्हि देवस्य योगीव जगतः क्रिया।
संकल्पनगरप्रख्या सृष्टिर्देवस्य सम्मता॥
सा केवलमनोरूपा यथा तद्वज्जगच्छिवात्।
स शिवश्चितिमात्रैकरूपश्चितिरविग्रहा॥
त्रिपुरानन्तशक्त्यैकरूपिणी सर्वसाक्षिणी।
सा चितिः सर्वतः पूर्णा परिच्छेदविवर्जनात्॥
( त्रि० र० ज्ञा० ११।४१-४५ )

इत्यादिनाऽभिव्यक्तम्। अत एवेति। शाक्तैरपि तथा स्वीकारादेव। "अनन्तशक्तिकस्य ब्रह्मणः" ( पृ० १५ ) "निधर्मके ब्रह्मणि तदभिन्नशक्तेरङ्गीकारात्" ( यो० हृ० २३ ) "शिवशक्तिसामरस्यात्मकं ब्रह्म" ( यो० हृ० १०३ )" "शिवशक्त्यात्मक ब्रह्म" ( यो० हृ० १०७ ) इत्यादीनि बहूनि वाक्यानि तत्रैवात-एवोपलभ्यन्ते।

स्वातन्त्र्यरूप विमर्शात्मक है और विमर्श प्रकाशात्मक ही है। इसको श्रीविद्या के उपासक शाक्तों ने भी स्वीकार किया है, जो कि शाक्तदर्शन के त्रिपुरारहस्यज्ञानखण्ड में व्यक्त है। अत एव भास्कर राय ने भी योगीनिहृदयसेतुबन्ध में यह स्वीकार किया है कि "शक्तिविशिष्ट ही परब्रह्म है, किन्तु शक्ति-शक्तिमान् का अभेद तान्त्रिक सिद्धान्त में भी स्वीकृत होने से ब्रह्म के निर्धर्मकत्व की हानि नहीं है"। पारिभाषिक या भावना से उपनीत ( उपस्थापित ) शक्ति शक्तिमदादि व्यवहार तो अद्वैतवादि को भी खेदकर

कार। पारिभाषिको भावनोपनीतो वा शक्तिशक्तिमदादिव्यवहारो नाद्वैतवादिनं दुनोति। अधिकं तु शाक्तदर्शनीयं दर्शनीयं विवर्तवादे। शक्तिप्राधान्यं तु वैवक्षिकं न भेदप्रसाधनस्य प्रभवति।

एतेन—स्वातन्त्र्यादिशक्तिनिवह उक्तप्रकाशात् भिन्नो वाऽभिन्नो वा, आद्ये तद्विशिष्टस्याद्वैते द्वैतमेव पर्यवस्येत्, विशिष्टस्य विशेषणादिव्यतिरिक्तत्वे विशेषणादेर्विशिष्टस्य चावशिष्टत्वात्, विशेषणाद्यव्यतिरिक्तत्वेऽपि विशेषणादीनामेव बहूनामवशेषान्नाद्वैतसिद्धिः। अतएव 'शक्तिस्तु शक्तिमद्रूपाद्व्यतिरेकं न गच्छति' इत्यभियुक्तवचनं शक्तिशक्तिमतोराश्रयाश्रयिभावध्रौव्येऽप्यपृथक्-सिद्धिसम्बन्धाभिप्रायेण, तयोर्घटपटन्यायेन स्वतन्त्रपृथगवस्थानरूपभेदस्यै-

शक्तिशक्तिमद्व्यवहारमुपपादयति—पारिभाषिक इति। असत्यपि भेदे स्वसंकेतवशात्तादृग्व्यवहारः, राहोः शिर इतिवत्। भावनोपनीतो वेति। एकस्मिन्नेव परतत्त्वे स्वभावनावशात् कस्यचिच्छक्तिरिति कस्यचिच्छिव इति च व्यवहारो दृश्यते।

एतेनेति। शक्तिशक्तिमतोरैक्येन। नाशङ्कनीयमिति परेणान्वयः। तद्-विशिष्टस्येति। तादृशशक्तिसमुदायविशिष्टस्य प्रकाशस्येत्यर्थः। अद्वैत द्वैतमेव पर्यवस्येदिति। विशिष्टं हि विशेष्यविशेषणाभ्यामतिरिक्तमित्येकः पक्षः। ताभ्यामनतिरिक्तमिति द्वितीयः पक्षः। उभयथापि द्वैते एव पर्यवसानं स्यादित्याह—विशिष्टस्येति। विशेषणादीति अदिना विशेष्यस्य संग्रहः। द्वितीय पक्षं निराचष्टे—विशेषणाद्यतिरिक्तत्वेऽपीति। प्रथमपक्षोक्तमेव दूषणमत्रापीत्यपिना ध्वनितम्। कथन्तानिवृत्यर्थमाह—विशेषणादीनामेवेति। अतएवेति। विशिष्टाद्वैतपक्षस्य विशिष्टस्य विशेषणाद्यतिरिक्तत्वानतिरिक्तत्वाभ्यां निराकृतत्वादेव। अनुपादेयमिति योजना। घटपटन्यायेनेति। यथा घटपटौ स्वातन्त्र्येण पृथक् सिद्ध्यतो न तथा

नहीं है। शाक्तदर्शन के विषय में विशेष वक्तव्य विवर्तवाद में दर्शनीय है। शक्ति का वैवक्षिक प्राधान्य तो भेद प्रसाधन के लिये समर्थ नहीं है।

"स्वातन्त्र्यादि शक्तिसमुदाय उक्त प्रकाश से भिन्न है या अभिन्न, प्रथम कल्प में तादृश शक्तिविशिष्ट का अद्वैत मानने पर उसका द्वैत में हो पर्यवसान होता है। क्योंकि विशिष्ट को विशेषादि से अनतिरिक्त मानें, तो भी अनेक विशेषादि के उपस्थित होने से अद्वैतसिद्धि नहीं हो सकती। अत एव "शक्तिस्तु शक्तिमद्रूपाद् व्यतिरेकं न गच्छति" ( शक्ति शक्तिमान् से भिन्न नहीं होती है ) यह प्राचीनाचार्यों का वचन शक्ति-शक्तिमान् का आश्रयाश्रयिभाव निश्चित होने पर भी उनकी अपृथक्सिद्धि के अभिप्राय से कहा गया है। क्योंकि घटपटन्यायेन ( घट पट के समान ) शक्ति-शक्तिमान् का स्वतन्त्र पृथक् अवस्थान रूप भेद होना सम्भव नहीं। सामरस्य अपरपर्याय विशिष्ट-

**वासम्भवात्, सामरस्यापरपर्यायविशिष्टरूपतयैव च तयोरद्वैतब्रह्मादिपदार्थतो-पगमादिति दाक्षिणात्यविशिष्टाद्वैतवादिशैवमतमनुपादेयम्, अधिकं तु विवर्तवादे वक्ष्यामः। शक्तिशक्तिमतोर्भेदाभेदे तु विरोधानवस्थादिकमुक्तं प्राक्। द्वितीये तु प्रकाशतत्त्वमेकमपि कथं नानात्मना भासत इति शङ्कायां स्वातन्त्र्यशक्ति-माहात्म्यादित्युत्तरस्य स्वयमेव नानात्मना भासते इत्यर्थे पर्यवसानेन स्वयमेक-मपि कथं तथा भासते इत्युक्तशङ्कायाः पुनरुज्जीवकत्वेनानुत्तरत्वादिति—**

शक्तिशक्तिमन्ताविति व्यतिरेकी दृष्टान्तः। तयोः = शक्तिशक्तिमतोः। दाक्षिणा-त्यविशिष्टाद्वैतवादिमतम् = श्रीकण्ठादिमतम्। वक्ष्याम इति। विशिष्टाद्वैतवाद-निराकरणप्रसङ्ग इत्यादिः। स्वातन्त्र्यादिशक्तिनिवह उक्तप्रकाशादभिन्न इति द्वितीयं कल्पं दूषयति—द्वितीये त्विति। स्वयमेव नानात्मना भासत इत्यर्थे पर्यव-सानेनेति। स्वातन्त्र्यशक्तिसंविदोरभिन्नत्वे नेत्यादिः। अनाशङ्कनीयत्वे हेतुमा-चष्टे—शक्तिशक्तिमतोः सर्वथैक्यादिति।

ननु "या सा शक्तिर्जगद्धातुः कथिता समवायिनी" इत्याद्युक्त्या शक्ति-शक्तिमतोर्भेदोऽपि दृश्यते इति चेत्तत्राह—भेदस्येति। उक्तञ्च—

शक्तिश्च नाम भावस्य
स्वं रूपं मातृकल्पितम्।
तेनाद्वयः स एवापि
शक्तिमत्परिकल्पने ॥ ( तन्त्रा० १।६९ ) इति।

भावस्य यस्य कस्यचन सतः पदार्थस्य स्वमेव रूपं फलभेदाद् भेदारोपेण शक्तिरिति प्रमातृभिः परिकल्प्यते, न त्वसौ वस्तुतः पदार्थान्तरं किञ्चित्। अतः शक्तिशक्तिमत्परिकल्पनेऽपि क्रियमाणे, स एवाद्वितीयोविभुर्न काचिदद्वयखण्ड-

रूपता की दृष्टि से ही शक्ति शक्तिमान् को अद्वैतब्रह्मादि पदार्थ माना गया है।" यह दाक्षिणात्यविशिष्टाद्वैतवादि शैवों का मत अनुपादेय सिद्ध होता है। इस विषय में विशेष वक्तव्य विवर्तवाद में कहेङ्गे। शक्ति-शक्तिमान् का भेदाभेद मानने में तो विरोध तथा अनवस्थादि दोषों की प्राप्ति पूर्ववर्णित है।

यदि "स्वातन्त्र्यादि शक्तिसमुदाय उक्त प्रकाश से अभिन्न है" यह द्वितीय पक्ष मानें, तो "प्रकाशतत्त्व एक होते हुये भी नानात्मना कैसे भासित होता है ?" यदि कहें कि स्वातन्त्र्यशक्ति के माहात्म्य से प्रकाश एक होते हुये भी नानात्मना भासित होगा" तो यह समाधान सम्यक् नहीं है क्योंकि स्वातन्त्र्य शक्ति के प्रकाशाभिन्न होने से इस समाधान का पर्यवसान "स्वयमेव नानात्मना भासते" इत्यर्थ में होने पर—यह उत्तर "स्वयं एक होते हुये भी उसका नानात्मा कैसे भासित होता है" इस शङ्का

नाशङ्कनीयम्, शक्तिशक्तिमतोः सर्वथैक्यात्, भेदस्य विकल्परूपप्रतिभासमात्रत्वात्, स्वातन्त्र्यशरीरे च नानावेद्यतया भानेऽपि स्वेतरानपेक्षतायाः प्रविष्टत्वान्न द्वितीयकल्पोक्तदोषः। उक्तञ्चाभिनवगुप्तपादैः—

"पारमेश्वरशास्त्रे हि न च काणाददृष्टिवत्।
शक्तीनां धर्मरूपाणामाश्रयः कोऽपि कथ्यते॥
ततश्च दृक्क्रियेच्छाद्या भिन्नाश्चेच्छक्तयस्तथा।
एकः शिव इतीयं वाग् वस्तुशून्यैव जायते"॥ इति।

नेति यावत्। "फलभेदादारोपितफलभेद पदार्थात्माशक्तिररिति च तद्व्याख्यातारः। अभिन्नत्वपक्षोक्तदूषणं वारयति—स्वातन्त्र्यशरीरे चेति। परमेश्वरशास्त्रे हीति। यथा काणादाः—"आत्मत्वाभिसम्बन्धादात्मा" इत्यादिना धर्मिरूपमात्मानं निरूप्य "तस्य गुणा, बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारसंख्यापरिमाणपृथक्त्वसंयोगविभागाः" इत्यादिना तत्समवेतमागमापायि भिन्नं धर्मजातमभ्युपागमन्, नैवमिह पारमेश्वरागमशास्त्रे शक्तीनां धर्मरूपाणामाश्रयः, शक्तितद्वतोर्धर्मधर्मिभावः कश्चिदभिधीयते। पर एव हि स्वतन्त्रो बोधस्तत्तदुपाधिवशात् तत्तच्छक्तिरूपतया व्यपदिश्यते इति न वस्तुतः कश्चिच्छक्तिशक्तिमतोर्भेद इत्यर्थः। काणाददृष्टिवद् धर्मधर्मिभावकल्पने दोषमाह—ततश्चेति। यदि हि शक्तितद्वतो धर्मधर्मिभावन्यायेन वास्तव एव भेदः स्यात्तदा—

"इत्थं नानाविधैः रूपैः स्थावरैः जङ्गमैरपि।
क्रीडया प्रसृतो नित्यमेक एव शिवः प्रभुः"

इत्यादौ "एक एव शिव" इतीयमीश्वराद्वयप्रतिज्ञात्मिका वाक् अनेकेषां शक्तितद्वदात्मनाम् पदार्थानां सम्भवात् वस्तुशून्या अभिधेयरहिता स्यात्, अद्वयवादखण्डना स्यादिति यावदित्यर्थः। अतएव श्रीतन्त्रालोके चतुर्थाह्निके—"एवञ्चैकत्वमपि द्वयप्रतिपक्षभूतम्" इति तद्विशेषणत्वमपि न सहत इति जयरथाः।

का समाधाता नहीं है अपितु पुनः उत्थापक होने से अनुत्तर ही है।

समाधान—शक्ति-शक्तिमान् का सर्वथा ऐक्य है, उनमें प्रतीयमान् भेद तो विकल्परूप प्रतिभासमात्र ही है। एवं स्वातन्त्र्यशरीर में नानावेद्यतया भान होने पर भी स्वेतरानपेक्षत्व के प्रविष्ट होने से द्वितीय कल्पोक्त दोष नहीं है। अभिनवगुप्तपादने कहा है—"पारमेश्वर शास्त्रे···· ···· ···। परमेश्वरोक्त आगम-शास्त्र में काणाद दर्शन ( वैशेषिक दर्शन ) के समान शक्तिरूप धर्म मान कर उनका आश्रय प्रकाशतत्त्व नहीं माना जाता है, क्योंकि ज्ञानेच्छाक्रिया शक्तियों को यदि प्रकाश ( शिव ) से

**तस्मान्निरर्गलमेव चिदद्वैतं विजृम्भत इति शिवम् ।**

**इति दर्शनसर्वस्वेऽनिर्वचनीयतावादे स्वातन्त्र्यवादः ।**

एवं "तथाहि संविदेवेदम्" इति कारिकाव्याख्यानावसरे "एवकारश्चान्ययोगव्यवच्छेदकः, अन्यश्च कश्चिदपीह नास्तीति किं व्यवच्छिन्द्यादित्यादि तैरेवोक्तम् । प्रकरणार्थमुपसंहरति—तस्मादिति । प्रकरणपरिसमाप्तौ मङ्गलमासूचयन्नाह—शिवमिति । शिवस्य सर्वमङ्गलाधिष्ठानत्वात् ।

प्रणवार्थस्वरूपायै शिवायै सततं नमः ।
तदेकज्ञानवित्ताय शिवायास्तु नमो मम ॥
तत्सामरस्यवित्ताय गुरवेऽस्तु नमः सदा ।
तत्पादपद्मरजसा स्नातेभ्योऽप्यस्तु नो नमः ॥

इति दर्शनसर्वस्वव्याख्यायां चित्कलाभिधायां
स्वातन्त्र्यवादः ।

भिन्न मानें तो "एकः शिवः" यह कथन व्यर्थ हो जायेगा । तस्मात् निरर्गल चिदद्वैत ही विजयश्री का पात्र है ।

इति दर्शनसर्वस्व भाषानुवादे स्वातन्त्र्यवादः ।

## विवर्तवादः

### स्वातन्त्र्यवादनिष्पीडनम्

तदेवं निरूपितमौपनिषदाद्वैतवादसन्निहितं मतत्रयम्। तेषां च

### विवर्तवादः

सोमसूर्याग्निनेत्रां तां शिवशक्त्यैक्यरूपिणीम्।
परां या गुरुरूपेण पाति मां प्रणमाम्यहम् ॥१॥

यः शङ्करः सकलवेदरहस्यवक्ता
बुद्धादिबुद्धितमसामपि चण्डभानुः।
अभ्युद्दधार विगलच्छ्रुतिमार्गमद्धा
तं संस्मरामि मनसा यतिसार्वभौमम् ॥२॥

नमः श्रीशङ्कराचार्यपारंपर्यक्रमाय ते।
अद्ययावच्छास्त्रमार्गः पालितो येन भूतले ॥३॥

नमः श्रीगुरुनाथाय वेदतत्त्वप्रबोधिने।
संसारपारगन्तॄणां सेतवे हेतवे मतेः ॥४॥

अतात्त्विकान्यथाभावात्मकस्य विवर्तस्य वादः, विवर्ततत्त्वबुभुत्सयारम्भणीयत्वेन वादपदव्यवहार्यश्चिकीर्षितसन्दर्भः। न चैष जल्पपदव्यवहार्योऽप्यन्तरा मतान्तरखण्डनगर्भत्वेऽप्यस्य तदुद्देश्येनाप्रवृत्तत्वात्। वादश्च यथार्थबोधेच्छोर्वाक्यम्, "विजिगीषोः कथा जल्पो वादस्तत्त्वविवेदिषोः" इत्युक्तेः। स्वातन्त्र्यवादे निष्पीड्यमाने पूर्वोक्तवादान्मया किञ्चित्स्वीकार्यं किञ्चित्तु त्याज्यमेवेत्यत आह—स्वातन्त्र्यवादनिष्पीडनमिति।

वेदान्तसम्मतमौपनिषदाद्वैतवादं परिष्कर्तुं प्रकरणस्यास्य पूर्वप्रकरणेन सम्बन्धमभिधित्सुः पूर्ववृत्तमनुवदति—तदेवमिति। तन्मतत्रयमिति योजना। तत्सान्निध्यञ्च स्वप्रयोज्यस्य यत्किञ्चिदंशे प्रयोजकत्वरूपम्। तच्च तेषां त्रयाणामपि, तद्विरुद्धभेदवादिविरोधित्वात्। तदेवाह—तेषाञ्चेति। एतेनैकानन्तरम-

### विवर्तवादः

औपनिषद-अद्वैतवाद के सन्निहित मतत्रय ( विज्ञानवाद, शून्यवाद एवं स्वातन्त्र्यवाद ) का निरूपण कर दिया गया। उन तीनों के परस्पर प्रतिद्वन्द्वी होने पर भी

**परस्परमपि प्रतिद्वन्द्वित्वेऽपि विशिष्य बाह्यदृष्टिप्रधानं तार्किकं प्रति प्रतिरोधिता, तेष्वपि केवलान्तरदृष्टिप्रधानो विज्ञानवादी, आन्तरप्रपञ्चानुरोधेन बाह्यप्रपञ्चनयनात्, उभयदृष्टिप्रधानस्तु शून्यवादो, उभयोरप्यान्तरबाह्ययोः सांवृततया समीकृत्य व्यवस्थापनात्, दिव्यलोचनमात्रप्रधानस्तु स्वातन्त्र्यवादी,**

दर्शनसर्वस्वे विवर्तवादे राजहंसः

दिव्यलोचनमात्रेति । स्वातन्त्र्यवादिनोऽप्यान्तरप्रपञ्चानुरोधेन बाह्यप्रपञ्चनेतृतयान्तरदृष्टिप्राधान्येऽपि परिपूर्णविषयलाभेनान्तरदृष्टेरेव दिव्यलोचनत्वमिह विवक्षितम्; अतो न मात्रपदासङ्गतिः । अवस्थाभेदेनान्तरदृष्टेर्दिव्यलोचनस्य च भेदविवक्षया तु लोचनत्रयोक्तिरग्रे ।

पराभिधानेऽवश्यमुपेतव्या सङ्गतिरपि दर्शिता । सा च प्रकृते प्रसङ्गात्मिका, अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयतया स्मृतस्योपेक्षानर्हत्वात्, तत्कर्तृकद्वैतनिराकृत्याऽद्वैतस्य मत्यालिङ्गितत्वात् ।

सङ्गतिश्च षड्विधा—

सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा ।
निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते ॥ इत्युक्तेः ।

तार्किकस्य बाह्यदृष्टिप्रधानत्वञ्चास्तीतिधीविषयत्वरूपसत्त्वमात्राभ्युपगन्तृत्वम् । तन्मतेऽस्तीतिधीविषयस्यैव पारमार्थिकत्वात् । पारमार्थिकव्यावहारिकादिरूपस्य—

तस्माद् यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः ।
तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना ॥

इतिवद्भिस्तैरनङ्गीकारात् । तथा च तद्विषयताया विषयभेदाद्भिन्नत्वाद् भेददृष्टिप्रधानत्वं तस्येति भावः । प्रतिरोधिता = द्वैतविषयकपारमार्थिकत्वप्रकारकतार्किकज्ञानस्याप्रामाण्यज्ञापकता । तत्प्रतिरोधित्वेऽपि न तेषामैकमत्यम् परस्परवैलक्षण्यसत्वादित्याह—तेष्वपीति । विज्ञानवादिन आन्तरदृष्टिप्रधानत्वं विज्ञानातिरिक्तस्यासत्त्वाभ्युपगन्तृत्वम् । एतन्मते आन्तरविज्ञानमेव घटाद्याकारेण बहिरवभासते । आन्तरप्रपञ्चो विज्ञानम् । बाह्यप्रपञ्चः घटादिः । शून्यवादी आन्तरबाह्योभावपि प्रपञ्चौ स्वीकरोति, किन्तु द्वावपि न पारमार्थिकावपितु सांवृताविति सांवृतसत्त्वेव सर्वस्यापि । शून्यत्वमपि न पारमार्थिकमिति निवेदितं प्राक् । प्राकृतव्यवहारोऽपि सांवृताभ्यां ताभ्यामेव संपद्यते । व्यवस्थापनादिति । व्यव-

विशेषरूपेण बाह्यदृष्टिप्रधान तार्किक के प्रति तीनों ही प्रतिरोधी ( विरोधी ) हैं । उनमें भी विज्ञानवादी केवल आन्तरदृष्टिप्रधान है क्योंकि वह आन्तरप्रपञ्च के अनुरोध से बाह्यप्रपञ्च की व्यवस्था करता है । आन्तर एवं बाह्य दोनों को ही सांवृतरूप से समानकर व्यवहार की व्यवस्थापक होने से शून्यवादी उभय दृष्टि प्रधान माना जाता है ।

**यथावद्व्यवहारमव्यवस्थाप्यैव कालाकलितचिदानन्दाद्वैतनिमग्नत्वात्, विस्फारितलोचनत्रयास्तु वेदान्तिनः, आन्तरबाह्यप्रपञ्चमनवधोर्यैव तादृशाद्वैतसरसि**

हारस्येत्यादिः। दिव्यलोचनप्रधानास्त्विति। लोचनं प्रज्ञानं, लोच्यते प्रकाश्यतेऽनेन सर्वमितिव्युत्पत्तेः। तस्य दिव्यत्वञ्च पूर्णाहंताविमर्शात्मत्वम्। एतन्मते सर्वस्यापि चित्स्वातन्त्र्यविलासमात्रत्वेन चिदतिरिक्ततया व्यवहारव्यवस्था विशेषतया नादृता। व्यवहारनियमविषये—

"तत्स्वातन्त्र्यादधिकमधुना नोत्तरं बम्भणोयः"

"चिद्विलासः प्रपञ्चोऽयं सखे ते दुःखदः कथम्" इत्याद्युक्तत्वात्।

अहमर्थलग्नतयैव सर्वस्य भानस्वीकारात्, अन्यथाभानस्य जड़प्रायताया उक्तत्वात्। विस्फारितलोचनत्रयास्तु वेदान्तिन इति। लोचनत्रयम् = बाह्याभ्यन्तरदिव्यदृष्टित्रयम्। तस्य विस्फारितत्वं सर्वानुग्राहकतत्तद्व्यवहाराभावप्रयोजकीभूताभावप्रतियोगितयाऽभ्युपगमनीयत्वम्। वेदान्तिन इति बहुवचनेन वेदान्तसिद्धान्तस्यैव सर्वातिशायितया तत्रैवादरातिशयं निर्भरत्वञ्च द्योत्यते।

अत्रान्तरदृष्टिशब्देन प्रातिभासिकसत्तां बाह्यदृष्टिशब्देन व्यावहारिकसत्तां दिव्यदृष्टिशब्देन पारमार्थिकसत्ताञ्चाङ्गीकृत्य सत्तात्रयपक्षः समर्थितः। अत्रेदं बोध्यम्—अस्ति तावद् वेदान्तनये सरणिद्वयी। सत्ताद्वयपक्षः सत्तात्रयपक्षश्चेति। तत्राद्यः "एतस्मादात्मनः सर्वे प्राणाः सर्वे लोका" इत्यादिश्रुतया—

रज्जुसर्पादिवद्विश्वं नाज्ञातसदितिस्थितम्।
प्रबुद्धदृष्टिसृष्टित्वात्सुषुप्तौ च लयश्रुतेः॥

इति चिरन्तनोक्त्या चोत्तमाधिकारिणां कृते समर्थितं दृष्टिसृष्टिवादमङ्गीकृत्याचार्यैरादृतः। तत्र ब्रह्मणः पारमार्थिकसत्ता, तदतिरिक्तस्य सर्वस्यापि प्रातिभासिकी सत्ता। अत एव भामतीमङ्गलपद्येऽविद्याद्वितयशब्देनानादिमूलाविद्या पूर्वपूर्वविभ्रमजन्यः संस्कारश्चाभिप्रेयेते, तन्मते शुक्तिरूप्यादेरपि मूलाविद्याकार्यत्वेन तूलाविद्याया अनभ्युपगमात्। द्वितीयस्तु—दृष्टिसृष्टिपक्षस्याविशुद्धान्तःकरणैर्दुर्बोधतया मन्दाधिकारिणां कृते कल्पितं सृष्टिदृष्टिवादमाश्रित्याचार्यैरङ्गीकृतः। तत्र पारमार्थिकसत्त्वं ब्रह्मणः, व्यावहारिकं सत्त्वम् आकाशादेः, प्रातिभासिकं

दिव्यलोचनमात्र प्रधान स्वातन्त्र्यवादी है, क्योंकि वह व्यवहार की यथावत् ( उचित ) व्यवस्था न करते हुए ही काल से अकवलित चिदानन्दाद्वैतसागर में निमग्न रहता है। [ तात्पर्य यह है समस्त जगत् स्वातन्त्र्य का विलासमात्र है, अतः उसका व्यवहार भी स्वातन्त्र्याधीन ही है। यद्यपि स्वातन्त्र्यवादी ने भी आन्तरप्रपञ्च के अनुरोध से ही बाह्यप्रपञ्च को स्वीकार किया है, अतः इसे भी विज्ञानवादी के समान आन्तरदृष्टिप्रधान कहना चाहिए, तथापि 'परिपूर्णोऽहम्' इस प्रकार पूर्णता के लाभ की दृष्टि से आन्तर-

**निमज्जनात्। एवञ्च तन्मतानुसारेण द्वैतमिथ्यात्वसिद्धये स्वल्पमेवेदानी वक्तुमवशिष्यते।**

**ननु किमेतेनापि, यदि हि द्वैतमिथ्यात्वमस्ति तर्ह्यस्त्येव, यदि नास्ति, तर्हि नास्त्येव, नहि केषाञ्चित्खण्डनेन तन्निवर्तेत, भवदीयमण्डनेन वा प्रवर्तेत, न च तज्ज्ञापनमद्वैतप्रत्ययफलकम्, स्वातन्त्र्यवादोक्तरीत्यैवोपपत्तेः, नापि**

सत्त्वं शुक्तिरजतादेः। अस्मिन् पक्षे वियदादेरज्ञानकल्पिततया मिथ्यात्वेऽपि प्रतिकर्मव्यवस्थाप्यक्लेशेनोपपद्यते, ज्ञानात्पूर्वमिन्द्रियसंप्रयोगकाले विषयस्य विद्यमानत्वात्। सत्तात्रयपक्षे "विस्फारितलोचनत्रयास्तु" इति ग्रन्थस्य संगतत्वेऽपि सत्ताद्वयपक्षे दृष्टिसृष्टिवादमाश्रित्यासांगत्यं न देश्यम्, तत्पक्षस्याविशुद्धान्तःकरणैरनवगम्यत्वेन सर्वाधिकारिसाधारण्याभावात् प्रवृत्यादिसिद्धयर्थं बाधात्पूर्वं प्रातीतिकत्वानिश्चयेऽपि स्थिरत्वभ्रमस्यावश्यकतया स्वीकर्तुं शक्यत्वात्तमादायैवोक्तग्रन्थोपपत्तेः। अवस्थाभेदमादाय भेदस्य टीकाकृद्भिरपि दर्शितत्वात्, वस्तुत ईश्वरदृष्ट्यैव दृष्टिसृष्टिवादस्य सिद्धान्तसिद्धत्वस्याग्रे वक्ष्यमाणत्वाज्जीवदृष्टिमादायैव लोचनत्रयोक्तिरिति तु विभावनीयम्। विशेषश्चात्र वक्ष्यन्ति। अनवधार्यैवेति। यथावद्व्यवस्थाप्यैवेत्यर्थः। तन्मतानुसारेणेति। वेदान्तस्तदोऽर्थः। स्वल्पमेवेदानीमिति। द्वैतमिथ्यात्वोपपादनफलादिकम्।

ननु अस्तितया नास्तितया वा द्वैतमिथ्यात्वप्रतिपादनं व्यर्थं, निष्फलत्वहेतुनाऽयुक्तत्वसाधनसम्भवादित्यभिप्रायेण शङ्कते—नन्विति। किमेतेनापीति। द्वैतमिथ्यात्वप्रतिपादनेन किं प्रयोजनमित्यर्थः। किमाक्षेपे। वैयर्थ्यमुपपादयति—यदि हीति। निष्फलत्वं विवृणोति--नहीति। ननु द्वैतमिथ्यात्वप्रतिपादनेनाद्वैतप्रतिपत्तिर्भविष्यति, सैव चाभिप्रेताऽभयरूपत्वात् "अभयं वै जनक प्राप्तोऽसि" इति श्रुतेः। द्वैतं भयाक्रान्तं "द्वितीयाद् वै भयं भवतीतिश्रुतेः। यच्चाभयं तत्सत्यं

दृष्टि को ही दिव्यलोचन कह दिया है ]। एवं विस्फारित लोचनत्रय वेदान्ती हैं, क्योंकि वे आन्तर तथा बाह्य दोनों का तिरस्कार न करते हुए ही अद्वैत सागर में मग्न रहते हैं। [ अभिप्राय यह है कि—वेदान्ती आन्तरबाह्य व्यवस्था बनाने हेतु सत्तात्रय स्वीकार करते हैं। उनमें प्रातिभासिक सत्ता आन्तर दृष्टि है, व्यावहारिकसत्ता बाह्यदृष्टि है, तथा पारमार्थिक सत्ता दिव्यदृष्टि है। इन्हीं को लोचनत्रय कहा गया है। इनमें अवस्था भेद से त्रित्वव्यहार है। वस्तुतः आन्तरबाह्य दोनों को ही मिथ्या मानकर वे पारमार्थिक अद्वैत में विश्रान्त हो जाते हैं। ] एवञ्च वेदान्तमतानुसारेण द्वैतमिथ्यात्व सिद्धि के लिए स्वल्प वक्तव्य ही अवशिष्ट है।

**शङ्का—द्वैत में मिथ्यात्वसिद्ध होने से भी क्या लाभ है। क्योंकि यदि द्वैतमिथ्या है तो मिथ्या ही रहेगा, और यदि मिथ्या नहीं है तो नहीं रहेगा। न किसी के खण्डन**

**वैराग्योत्पत्तिफलकम्, अचिरस्थिरत्वग्रहादेव तत्सम्भवात्, अथोपायस्योपायान्तरादूषकत्वम्, तथापि विशिष्य प्रयासो मन्दप्रयोजन एव, अचिरस्थिरत्वं निश्चिन्वतामपि विषयेषु प्रवृत्तिदर्शनमिति तु समानमेव, नहि प्रपञ्चमिथ्यात्वं निश्चिन्वाना अपि सर्वे विरज्यन्ति, प्रत्युत बहवो विषयभोगस्यापि मिथ्यात्वेन**

सुखात्मकञ्च "यो वै भूमा तत्सुखमिति श्रुतेः। यच्च सत्यं तदेवास्थागोचरः इति तदर्थं द्वैतमिथ्यात्वं प्रतिपादनीयमिति चेत्तत्राह—न च तज्ज्ञापनमिति। न च नहीत्यर्थः। तत्र हेतुः—स्वातन्त्र्येति। रीतिश्चैषा—जगतश्चिदात्मना सत्यत्वेन चिदतिरिक्तत्वाभावादद्वैतमित्याद्यात्मिका। ननु तर्हि वैराग्योत्पत्तिरेव तत्फलम्। यन्मिथ्या तदसत्यं तापत्रयपरीतम्, तदनास्थेयमिति ततो वैराग्यमिति चेत्, नेत्याह—नापीति। तत्सम्भवात् = वैराग्योत्पत्तिसम्भवात्। नन्वेकस्यालयस्य नानासृतिगम्यत्ववदेकलक्ष्यप्रतिपत्तेरनेकलक्षणगम्यत्ववच्चाचिरस्थिरत्वग्रहसाध्यस्यापि वैराग्यस्य मिथ्यात्वग्रहसाध्यत्वमपि स्यादित्याह—अथोपायस्येति। मन्दप्रयोजन एवेति। तत्साध्यस्य साधनान्तरेणापि साधयितुं शक्यत्वेन विशिष्यास्याविषयत्वाभावात्।

ननु सत्यप्यचिरस्थिरत्वग्रहे विषयेषु प्रवृत्तिदर्शनेन वैराग्योत्पत्त्यभावादन्वयव्यभिचारान्न वैराग्योत्पत्तिं प्रत्यचिरस्थिरत्वग्रहस्य कारणत्वमिति चेत्तर्हि मिथ्यात्वग्रहे सत्यपि तथैव विषयेषु प्रवृत्तिदर्शनादन्वयव्यभिचारान्न तत्र मिथ्यात्वग्रहस्यापि कारणत्वं वक्तुं शक्यमित्याह—अचिरस्थिरत्वं निश्चिन्वतामपीति।

करने से वह निवृत्त हो सकता है और न आपके मण्डन करने से प्रवृत्त हो सकता है। यदि कहें कि द्वैतमिथ्यात्वज्ञापन से अद्वैतनिश्चय होता है। अतः अद्वैतनिश्चय ही उसका प्रयोजन है तो यह कथन उचित नहीं है क्योंकि स्वातन्त्र्यवादोक्तरीति से भी अद्वैतनिश्चय हो सकता है। [ तात्पर्य यह है कि जैसे स्वातन्त्र्यवादी समस्त जगत् को चिद्विलास मानता हुआ सत्यमान करके भी चिद्विषय के चिद्रूप होने से विषय की चिद् से अतिरिक्तसत्ता के न होने से अद्वैतवाद ही स्वीकार करता है, वैसे ही आप ( वेदान्ती ) भी प्रपञ्चमिथ्यात्व माने बिना ही अद्वैतनिश्चय कर सकते हैं ]। वैराग्योत्पत्ति भी मिथ्यात्वनिश्चय का फल नहीं कह सकते, क्योंकि वह अचिरस्थिरत्वग्रह से ही हो सकता है। यदि कहें कि एक उपाय उपायान्तर का दूषक नहीं होता, अतः क्वचित् अचिरस्थायित्वनिश्चय से वैराग्य होता है और क्वचित् मिथ्यात्वनिश्चय से भी होता है, तथापि मिथ्यात्व निश्चय के लिए विशेष प्रयास करना मन्दप्रयोजन ( असाधारण फलहीन ) है। यदि कहा जाय कि अचिरस्थायित्वनिश्चेताओं की विषयों में प्रवृत्ति देखी जाती है, अतः वैराग्योत्पत्ति के प्रति उसे कारण नहीं कह सकते, तो यह कथन

**तेन किमस्माकं हीयत इत्यनुशयाना अन्येभ्योऽप्यधिकं भुञ्जत इत्यद्यत्वे बहुलं विलोक्यते, तस्माद्भक्तिविशेषावर्जितेश्वरानुग्रह एव वैराग्यहेतुरिति युक्तम्, यदि च सोऽपि विषयदोषदर्शनमुत्पाद्यैव वैराग्यमर्जयति तदाप्युक्तमेव। न च मिथ्यात्वं विना क्षयिष्णुत्वादिकमपि कथम्; मा भूत्, तज्ज्ञानं तु केन वार्यते,**

पूर्वपक्षमुपसंहरन् प्रतिवादी स्वमतेन वैराग्योत्पत्तिहेतुं दर्शयति—तस्मादिति। ननु नेश्वरानुग्रहोऽपि साक्षाद्वैराग्यहेतुः। तथाहि—"सुखानुशयी रागः"। सुखे तत्साधने वा यो गर्द्ध इत्यादिसूत्रभाष्याभ्यां सुखतृष्णैव रागः। तदभावश्च वैराग्यम्। न च सुखे सहजतः कस्यापि वैतृष्ण्यं सम्भवति। "तृष्णैका तरूणायते" इत्युक्तेः। न च तादृशानुग्रहेण तादृशरागस्याहिनकुलवत् स्वरूपतो विरोधो, येन तादृशानुग्रहेण तन्निवृत्त्यात्मकं वराग्यं निष्पद्येत। ततश्चैवं मन्तव्यम्--परमेश्वरानुग्रहवशाद् यथार्थबुद्धिर्जागर्ति। यदाह—

> न देवा दण्डमादाय रक्षन्ति पशुपालवत्।
> यं हि रक्षितुमिच्छन्ति बुद्धया संयोजयन्ति तम्" ॥ इति ॥
> तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
> ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ इति भगवतापि।

यथार्थबुद्धिश्च—वस्तुतो यद् यादृशं तत्र तादृशी बुद्धिः। अतः सुखसाधनतया प्रतीतेष्वपि विषयेषु वस्तुतः दुखात्मकेषु दुष्टेषु दुःखरूपत्वक्षयिष्णुत्वादिदोषदृष्टिरुत्पद्यते। ततश्च ततो विरज्यते जन्तुरित्याह—यदि सोऽपीति। तदाप्युक्तमेवेति। विषयदोषदर्शिनामपि विषयेषु प्रवृत्तिदर्शनादित्याद्युक्तम्। मिथ्यात्वक्षयिष्णुत्वयोः समव्याप्तत्वेन मिथ्यात्वाभावे क्षयिष्णुत्वमपि न स्यादित्याशङ्क्य निराचष्टे—न चेति। नहीत्यर्थः। तज्ज्ञानं तु केन वार्यते इति। मिथ्यात्वनिश्चयाभावेऽपि वस्तुनो विनाशस्य प्रत्यक्षसिद्धत्वात् क्षयिष्णुत्वादिज्ञानं भवत्येवेत्यर्थः।

मिथ्यात्वनिश्चय पक्ष में समान ही है, क्योंकि मिथ्यात्वनिश्चेता विषयदोष दर्शियों की भी विषयविषयकप्रवृत्ति देखी जाती है। अतः यह नहीं कहा जा सकता कि सभी प्रपञ्चमिथ्यात्वनिश्चेता विरक्त ही होते हैं, प्रत्युत आजकल ऐसे बहुत से देखे जाते हैं कि—"विषयभोगों के मिथ्या होने से "उनसे हमारी क्या हानि है" ऐसा मानते हुए अन्य से भी अधिक विषयों का उपभोग करते हैं। अतः भक्तिविशेष से आवर्जित ईश्वर के अनुग्रह को ही वैराग्य के प्रति हेतु मानना उचित है। और यदि उसे भी विषयदोषदर्शन द्वारा ही वैराग्य हेतु मानें, तो उस विषय में कह चुके हैं कि—"विषयदोषदर्शि भी विषयों में प्रवृत्त देखे जाते हैं"। यह नहीं कहा जा सकता है कि मिथ्यात्व के बिना वस्तु में क्षयिष्णुत्वादि ( विनाशित्व ) भी कैसे होगा, क्योंकि भले ही मिथ्यात्व के बिना वह ( विनाशित्वादि ) न हो किन्तु उसके ज्ञान को रूद्ध कौन कर सकता है।

**अन्यथा दर्शनान्तरवेदिनां तदनुत्पत्त्यापत्तेरितिचेन्न, दृढ़तरमिथ्यात्वभावनाया ईश्वरानुकम्पासहकृतमिथ्यात्वनिश्चयस्यैव वा वैराग्योत्पादकत्वात्, व्यभिचारस्त्वव्यवहितोत्तरत्वनिवेशेनैव वारणीय इति क्वचिदचिरस्थायित्वनिश्चयेनैव वैराग्योत्पत्तावपि न क्षतिः, मुख्यं प्रयोजनं तु मुक्तिप्रदाद्वैतसाक्षात्कारविशेषौ-**

अव्यवहितोत्तरत्वनिवेशेनैवेति । वैराग्ये वैजात्यकल्पनस्याप्युपलक्षणमिदम् ।

अन्यथा = मिथ्यात्वनिश्चयाभावे क्षयिष्णुत्वादिज्ञानाभावस्वीकारे, दर्शनान्तरवेदिनां = जगत्सत्यत्ववादिनाम् । तदनुत्पत्त्यापत्तेरिति । तदा क्षयिष्णुत्वज्ञानं परामृश्यते ।

सिद्धान्ती द्वैतमिथ्यात्वप्रतिपादनफलं वक्तुमुपक्रमते-दृढतरेति । मिथ्यात्वभावना "एकमेवाद्वितीयम्" "नेहनानास्ति किञ्चन" इत्यादिश्रुतिजन्यस्तद्विषयकान्तःकरणवृत्तिविशेषः । तत्र दृढ़त्वं समानविषयकसंस्कारानेकत्वम्, अतिशयार्थे तरप् । स च जगत्सत्यत्वविषयकसंस्कारशून्यत्वरूपः । न च तादृशमिथ्यात्वभावनाया ईश्वरानुकम्पामन्तरा सम्भव इत्याह—ईश्वरानुकम्पासहकृतेति । न केवलं तत्रैव तदनुकम्पाऽपेक्ष्यते, किन्तु फलीभूतदशायामपि । अत एव—

"जगद्गुरोरीश्वरस्य सर्वप्रत्यक्स्वरूपिणः ।
प्रसादलभ्याविद्यैषा न पाण्डित्यैर्नजल्पनैः ॥
ईश्वरानुग्रहादेषा पुंसामद्वैतवासना ।
महाभयकृतत्राणा द्वित्राणां यदि जायते ॥"

इत्यादयो विदुषां मानसोल्लासाः ।

नन्वचिरस्थिरत्वनिश्चयेन जायमाने वैराग्ये मिथ्यात्वनिश्चयस्याभावाद्व्यभिचारान्न तस्य तत्र कारणतेति चेत्तत्राह—व्यभिचारस्त्विति । अचिरस्थिरत्वनिश्चयाव्यविहितोत्तरजायमानं वैराग्यं प्रति अचिरस्थिरत्वनिश्चयः कारणम् । तादृशमिथ्यात्वग्रहाव्यवहितोत्तरजायमानं वैराग्यं प्रति तु तादृशमिथ्यात्वग्रहः कारणमिति न व्यभिचार इतिभावः । न क्षतिः न व्यभिचारः । कारणकोटौ

अन्यथा अर्थात् यदि मिथ्यात्व के बिना विनाशित्व का ज्ञान भी न हो तो नैयायिकादिदार्शिनिकों को विनाशित्वज्ञान नहीं होना चाहिए । [ क्योंकि वे प्रपञ्च को मिथ्या नहीं मानते, किन्तु विनाशित्व का ज्ञान उनको भी होता है, अतः मिथ्यात्व विनाशित्वज्ञान का प्रयोजक नहीं है ] ।

समाधान—दृढ़तरमिथ्यात्वभावना या ईश्वरानुग्रहसहकृतमिथ्यात्वनिश्चय ही वैराग्य के प्रति कारण है । पूर्वोक्त व्यभिचार का वारण अव्यवहितोत्तरत्व के निवेश द्वारा किया जा सकता हैं । अतः कुत्रचित् अचिरस्थायित्वनिश्चय के द्वारा वैराग्योत्पत्ति होने पर भी कोई क्षति नहीं है । मिथ्यात्वप्रतिपादन का मुख्य प्रयोजन तो मुक्तिपद

**पयिकाद्वैतप्रतिपत्तिरेव मिथ्यात्वोपपादनस्येति न प्रयासवैफल्यम्, द्वैतसत्यत्वेऽद्वैतानुपपत्तेः।**

**तथाहि—स्वातन्त्र्यवादी प्रष्टव्यः, विश्वस्य सत्यत्वं शिवोक्तागमानुरोधाद्वोच्यते, युक्त्युपष्टम्भाद्वा, नाद्यः, भवद्भिरपि प्रमाणतयाऽनुमते**

कार्यप्रवेशस्यानौचित्यम्, अशतः स्वं प्रत्यपि स्वस्यकारणतापत्तेः, कार्योत्पत्तेः प्राक् कार्यस्याभावे तद्घटितकारणस्याप्यभावप्रसङ्गात्, तदा तस्य सत्त्वे च कारणाभ्युपगमस्य वैयर्थ्यप्रसङ्गाच्चेत्युच्यते चेत्तर्हि कार्यकोटौ वैजात्यं निवेश्यम्। तच्च विदुषामनुभवसिद्धमिति नोक्तदोषाणामुन्मेषः न चापि व्यभिचारः। अवान्तरप्रयोजनं प्रदर्श्य मुख्यं प्रयोजनमाह—मुख्यं प्रयोजनमिति। अद्वैतप्रतिपत्तिरद्वैतानुभवो वृत्यारूढो द्वैताभावोपलक्षितचिद्वा। तस्यैव मुक्तिप्रदत्वम्, अनाद्यविद्यात्मकानर्थनिवर्तकत्वात्। तस्यैव चाविद्यानिवृत्तिद्वारेण प्रत्यक्चैतन्याभिन्नब्रह्मस्वरूपाविर्भावात्माऽद्वैतसाक्षात्कारः प्रमाणफलम्।

नन्वस्तु चिदात्मना द्वैतसत्यत्व एवाद्वैतप्रतिपत्तिः, किमिति तदर्थं द्वैतमिथ्यात्वमुररीक्रियते इति चेन्न उभयोश्चिदात्मना सत्यत्वे द्वैताद्वैतयोः परस्परविरोधित्वेनोभयसत्यत्वासम्भवेनैकतरपक्षगतसत्त्वस्याभासत्वस्यावश्यवक्तव्यत्वेन तत्र द्वैतगतसत्त्वाभासत्वस्य श्रुत्यनुगुणतया सुकरत्वात्, श्रुतीनाञ्चाद्वैते तात्पर्यस्य समन्वयाधिकरणादिना निश्चितत्वात्, द्वैतमिथ्यात्वनिश्चयमन्तराऽद्वैतनिश्चयानुपपत्तेः। किञ्च चिदात्मना सत्यत्वमित्यस्यापि प्राप्ताप्राप्तविवेकन्यायेन चित्येव सत्यत्वं द्वैतस्य च मिथ्यात्वं पर्यवस्यति, घटाकाशोध्वस्त इत्यत्र ध्वंसस्य प्रतियोगितासम्बन्धेन घटगतत्ववत्। किञ्च एकमेवाद्वितीयमिति श्रुतिजन्याद्वैतनिश्चयस्याद्वैतत्वोपलक्षितब्रह्मनिर्विकल्पात्मकस्य द्वैताभावोपलक्षितबुद्धितया तद्विशिष्टबुद्धिसापेक्षत्वात्, तद्विशिष्टबुद्धेश्चाभावबुद्धित्वेन प्रतियोगिज्ञानपूर्वकत्वेन "सदेव सोम्ये"त्यादि श्रुतिसाहाय्येन द्वैतवति ब्रह्मणि द्वैतवत्त्वकालावच्छेदेन द्वैताभावाविशिष्टब्रह्मविषयकत्वादुक्तनिर्विकल्पकाद्वैतनिश्चयस्य द्वैतमिथ्यात्वनिश्चयपूर्वकत्वमिति तु व्यक्तञ्चन्द्रिकायाम्, तथा च प्रपञ्चसत्यत्वे तन्मिथ्यात्वासम्भवेऽद्वैतानुपत्तेरित्याशयेनाह—द्वैतसत्यत्वेऽद्वैतानुपपत्तेरिति।

द्वैतसत्यत्वस्य प्रामाणिकत्वमपाकर्तुं तत्रागमः प्रमाणं युक्तिर्वेति विकल्प्याद्यं निरस्यति—नाद्य इति। यत्किञ्चिदिति। भैरवस्य परमात्मनः

अद्वैतसाक्षात्कारविशेषौपयिक अद्वैतप्रतिपत्ति ही है, अतः मिथ्यात्वप्रतिपादन प्रयास विफल नहीं है, क्योंकि द्वैत के सत्य होने पर अद्वैत अनुपपन्न है। अनुपपत्ति का प्रकार दिखाते हैं—स्वातन्त्र्यवादी से पूछना चाहिए कि आप जगत् में सत्यत्व शिवोक्त आगम

विज्ञानभैरवादौ—

> यत्किञ्चित्सकलं रूपं भैरवस्य प्रकीर्तितम् ।
> तदसारतया देवि ! विज्ञेयं शक्रजालवत् ॥
> मायास्वप्नोपमं चैव गन्धर्वनगरभ्रमम् ।
> अतत्त्वमिन्द्रजालाभमिदं सर्वमवस्थितम् ॥
> किं तत्त्वमिन्द्रजालस्य इति दार्ढ्याच्छमं व्रजत् ।"

इत्यादिपरमेश्वरवचनानां जागरूकत्वात्, भवन्नये प्रकाशात्मतया शक्रजालादे-रपि सत्यत्वेन तन्न्यायेनासारत्वाद्युक्तचसम्भवात् । यत्तु शिवदृष्टौ

द्वैविध्येन सकलं निष्कलञ्च रूपं प्रसिद्धम् । तत्र यत्किञ्चित्सकलं रूपं नीला-नीलघटादिनानावैचित्र्येण जगद्रूपं, तत्सर्वं हे देवि ? असारतयाऽसारभूतं मिथ्याभूतमिति यावत् विज्ञेयम् । तत्र निदर्शनत्रयम्—शक्रजालवत्, मायास्व-प्नोपमं गन्धर्वनगरप्रभम् इति । तत्र शक्रजालवत् = इन्द्रजालतुल्यमित्यर्थः । मायास्वप्नोपममिति । माययाऽविद्यया स्वप्ने यथा दृश्यमानमपि जाग्रद्बोधेन बाधितत्वाद्मिथ्याभूतं तथैवेदमपि जगत् । गन्धर्वनगरभ्रममिति । गन्धर्वनगर भ्रमतुल्यमित्यर्थः । एवं तत्रैवापरमपि—अतत्त्वमिति । अतत्त्वं निस्तत्त्वमतएवेन्द्र-जालाभम्, इन्द्रेण कौशलाद्यैश्वर्येण जालं द्रष्टुर्नेत्रावरणं यथास्थितवस्तुदर्शना-क्षमत्वापादनम् तथा चेन्द्रजालतुल्यम्, एवञ्च किंतत्त्वम् ? न किञ्चिदित्यर्थः । तत्परन्तु सद्वस्तुव्यपदेश्यं प्रमातृतत्त्वमिति भावनादार्ढ्येन तत्त्वविदो निर्वाण-पदावाप्तिर्भवेदिति भावः ।

तथा च विश्वसत्यत्वे मिथ्यात्वप्रतिपादकानामेतेषां वाक्यानां विरोध इत्याह—भवन्नय इति । सोमानन्दपादैः शिवदृष्टौ स्वमते विज्ञानभैरवोक्तवचन-विरोधपरिहारः कृतोऽप्यकृत एवेति दर्शयितुमुपक्रमते—यत्तु शिवदृष्टाविति । विश्वस्यासत्यरूपत्वमिति । सर्वेषामपि वस्तुनां शिवैकरूपतया सत्यत्वमेवेति

के अनुरोध से मानते हैं या युक्तियों के बल से, प्रथमकल्प उचित नहीं है क्योंकि आपके द्वारा प्रमाणतया स्वीकृत विज्ञानभैरवादि में परमेश्वर के वचन इस प्रकार उपस्थित हैं—यत्किञ्चित्सकलम्.... .... .... .... .... .... ....।

भैरव का जो कुछ सविशेषरूप कहा गया है, वह सब इन्द्रजाल के समान असार है । यह सभी माया ( जादू ) एवं स्वप्न के सदृश है । गन्धर्वनगर के समान भ्रम तथा इन्द्रजाल के समान अतत्त्व ( अयथार्थ ) रूप से ही स्थित है । इन्द्रजाल का क्या तत्त्व है ? अर्थात् क्या वास्तविकरूप हैं ? इस प्रकार के विचार की दृढ़ता से शान्ति प्राप्त होती है ।" आपके सिद्धान्त में इन्द्रजाल के भी प्रकाशात्मना सत्य होने से तदनुसारेण प्रपञ्च को असार कहना सम्भव नहीं है । श्री सोमानन्दनाथ ने शिवदृष्टि में—"विश्व-

**सोमानन्दनाथैः—**

**"विश्वस्यासत्यरूपत्वं यैर्वाक्यैर्वर्णितं क्वचित् ।**
**शिवोक्तैस्तैर्विरोधः स्यात्सर्वसत्यत्ववादिनः ॥"**

**इत्याशङ्क्य विश्वासत्यत्वबोधकवाक्यानामर्थवादत्वाभिप्रायेण**

**"विश्वतुच्छत्ववाक्यानां वैराग्याद्यर्थवादिनाम् ।**
**तात्पर्येण न दोषोऽस्ति"........**

**इत्युक्तम्, तत्तु तत्रैव ग्रन्थेऽर्थवादबलादपि शिवतत्त्वसमर्थनवेलायाम्—**

**सोऽरोदीदिति वेदेऽस्ति नार्थवादो निरर्थकः ।**

सर्वसत्यत्ववादिनो भवतस्तैः शिवोक्तैर्वाक्यैर्विरोधः स्याद् यैर्विश्वस्यासत्यत्वं क्वचिद् विज्ञानभैरवादावुपवर्णितमित्यर्थः । तत्समाधानमुपवर्णयन्नाह—विश्वतुच्छत्वेति । अयं भावः—विश्वमसत्यं स्वप्नोपममिति शिवोक्तैरपि वाक्यैर्न विरोधो यत एतेषां वैराग्यनिरात्मतादिप्रयोजनाभिधानवतामेकशिवात्मतासमर्थने एव तात्पर्यमिति न कश्चिद्दोषः ।

एतदुक्तं भवति, प्रपञ्चः प्रकाशविषयत्वेन प्रकाशरूपत्वात्सत्य एव । न च तत्र "मायास्वप्नोपममित्यादिवाक्यानां विरोध इति वाच्यम् तेषां वाक्यानामर्थवादरूपत्वात् । अर्थवादवाक्यानां हि न स्वार्थप्रतिपादने तात्पर्यं भवति—अपितु विधिप्राशस्त्यादिबोधने, यथा "वायुर्वै क्षेपिष्ठा देवता" इत्यादौ । तथाऽत्रापि न प्रपञ्चमिथ्यात्वे तात्पर्यमपितु प्रपञ्चस्य शिवैकरूपताप्रतिपादन इति ।

तत्समाधानं निरस्यति—तत्त्वित्यादिना । स्ववचनैरेव सर्वथा व्याहन्यत इति योजना । तद्विरूद्धवचनानि दर्शयति—"सोऽरोदीदिति । वेदे प्रयुक्तानां सोऽरोदीदित्याद्यर्थवादवाक्यानामसत्यार्थकत्वं विधिप्राशस्त्यबोधतात्पर्यकत्वादिति न युक्तम्, यतो यद्यर्थवादस्य विध्यङ्गता सत्या तर्हि सा कथमसत्यार्थस्य स्यात्, स्वार्थमभिदधान एव ह्यर्थवादो भवति । तथा च नास्य वेदेऽपि मिथ्यार्थता ।

स्यासयत्रूपत्वं........"जिन वाक्यों से क्वचित् विश्व के असत्यत्व का वर्णन है उन शिवोक्त वाक्यों का सर्वसत्यत्ववादि के मत में विरोध होगा" इस प्रकार आशङ्का कर—विश्व के असत्यत्वबोधक वाक्यों के अर्थवादत्वाभिप्राय से—"विश्वतुच्छत्ववाक्यानां........"वैराग्याद्यर्थ विश्व में तुच्छत्व ( असत्यत्व ) प्रतिपादकवाक्यों का तात्पर्य अन्यत्र ( शिवात्मतासयर्थन में ) होने से कोई दोष नहीं है" । ऐस कहा है, वह उनका कथन—अर्थवाद बल से भी शिवतत्त्वसमर्थन काल में —"सोऽरोदीदिति........" "सोऽरोदीत्" इत्यादि वेदवाक्य अर्थवाद होने पर भी निरर्थक नहीं है क्योंकि यदि विधिवाक्य के साथ अङ्गता ( एकवाक्यता ) मानकर उनको सत्ता मानते हैं तो भी

विध्यङ्गत्वेन चेत्सत्ता नासत्यस्याङ्गता स्थिता ।
अर्थवादादपि फलं रात्रिक्रतुषु दर्शितम् ॥"

इति स्ववचनैरेव सर्वथा व्याहन्यते । अतएव 'गुणवादस्तु' इति सूत्रे निरालम्बो

अत्रेदं बोध्यम्—"वायव्यं श्वेतमालभेत भूतिकामः" इति विधिवाक्यम् । "वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति" इत्यर्थवादवाक्यम् । तत्र विधिवाक्यगता वायव्यादिशब्दा अर्थवादशब्दनैरपेक्ष्येणैव विशिष्टमर्थं विदधति । अर्थवादशब्दाश्चेतरनैरपेक्ष्येणैव भूतार्थमन्वाचक्षते, क्षिप्रगामी वायुः स्वोचितेन भागेन तोषितो भागं प्रदायैश्वर्यं प्रयच्छतीत्युक्ते रामायणमहाभारतादाविव कश्चित्प्रतीयते, न त्वनुष्ठेय किञ्चित्, अत एकवाक्यत्वाभावान्नास्त्यर्थवादस्य प्रामाण्यमिति विधिप्रामाण्यवादिन आहुः । अत्राहुर्जैमिनीयाः—माभूद् विध्यर्थवादयोः पदैकवाक्यता, वाक्यैकवाक्यता तु भवत्येव । विधिवाक्यं तावत्पुरुषं प्रेरयितुं विधेयार्थस्य प्राशस्त्यमपेक्षते, अर्थवादवाक्यञ्च फलवदर्थावबोधपर्यवसिताध्ययनविधिपरिगृहीतत्वेन पुरुषार्थमपेक्षते, ततः पुरुषार्थपर्यवसितविध्यपेक्षितप्राशस्त्यं लक्षणावृत्त्या समर्पयदर्थवादवाक्यं विधिवाक्येन सहैकवाक्यतामापद्यते, यतः क्षिप्रगामिस्वभावतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता, ततः प्रशस्तमिमं वायव्यं पशुमालभेतेति वाक्ययोरन्वयः, तस्मादर्थवादः प्रमाणमिति । अर्थवादादपि फलं रात्रिक्रतुषु दर्शितमिति । चक्षुर्थेचिन्तितम्, "क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजिनिः" ( जै० ४।३।१७ ) "प्रतितिष्ठन्ति हवा य एता रात्रीरुपयन्ति" इति श्रूयते,, तत्र रात्रिशब्देनायुर्ज्योतिरित्यादिवाक्यविहितसोमयागविशेषा उच्यन्ते । तत्र किं सोमयागफलभूतस्वर्ग एव फलमुत प्रतितिष्ठन्तीत्यर्थवादवाक्यावगतप्रतिष्ठेति संशयः । तत्र प्रतितिष्ठन्तीति वर्तमानापदेशात्प्रतिष्ठायाः सिद्धरूपतैव प्रतीयते न तु साध्यरूपतेति तस्या अपि फलत्वं कल्प्यमेव, ततो वरं विश्वजिन्न्यायेन विधिशक्त्यवगतस्वर्गफलकल्पनमिति पूर्वपक्षे सिद्धान्तः—"फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्" ( जै० ४।३।१८ ) अत्यन्ताश्रुतस्वर्गफलकल्पनापेक्षया श्रुताया एव प्रतिष्ठायाः फलत्वकल्पनं वरमिति प्रतितिष्ठन्तीति वाक्यावगतप्रतिष्ठैव तत्र फलमित्यर्थवादस्यापि फलवत्त्वमिति गम्यते । तथा च शिवोक्तानां विश्वासत्यत्वबोधकवाक्यानामर्थवादत्वेऽपि न मिथ्यात्वपरत्वहानिरिति भावः ।

सार्थक्य हो ही जाता है । क्योंकि असत्य की अङ्गता नहीं बन सकती । अतएव अर्थवाद से भी फल होता है, यह बात रात्रिक्रतु में दिखायी गयी है" इत्यादि कहे गये अपने बचनों से ही व्याहत है ।

**नार्थवाद इत्यभिप्रायेण 'प्रजापतिरात्मनो वपामुदक्खिदत्' इति कथमिदं निरालम्बनमन्वाख्यायत इत्याक्षेपे "मन्त्रार्थवादेतिहासप्रामाण्यात् सृष्टिप्रलयाविष्येते, तत्र सृष्ट्यादौ प्रजापतिरेव योगो तस्मिन् काले पुण्यकर्मोद्भवाभ्युपगमेन पशुरूपमभिनिर्माय वपोत्खननादि कृतवान्, ततोऽसमाप्त एव कर्मणि तूपरःपशुरुत्थित इतीदृशमिदं कर्म प्रत्यासन्नफलम्, एवञ्च महता यत्नेन प्रजापतिना चरितमिति सर्वं सत्यमेव। प्रतिसृष्टि चर्तुलिङ्गन्यायेन तुल्यनामप्रभावव्यापारवस्तूत्पत्तेर्नानित्यताप्रसङ्गः" इत्यभिधाय कुमारिलभट्टपादा अप्युत्तरमीमांसा-**

**तूपर इति। निःशृङ्ग इत्यर्थः। प्रतिसृष्टि चेति। एकस्मिन् वर्षे यादृशलिङ्गका ऋतवस्तादृशलिङ्गका वर्षान्तरेऽपीति ऋतुलिङ्गन्यायः। नानित्यताप्रसङ्ग इति। वेदे इति शेषः।**

अत एवेति। अर्थवादस्य स्वार्थे तात्पर्यवत्त्वादेव। अगत्याऽनुसस्रुरितिपरेणान्वयः। एवं "इत्यभिप्रायेणे"त्यस्याप्यभिधानद्वारा तत्रैव। "गुणवादस्त्विति। प्रथमाध्यायस्य द्वितीयेऽर्थवादविचारः प्रस्तुतः। तत्र गुणवादसूत्रेण "सोऽरोदीत्" स आत्मनो वपामुदखिदत्" "देवा वै देवयजनमध्यवसाय दिशो न प्रजानन्नित्यर्थवादत्रयस्यानर्थक्यं परिहृतम्। तत्र द्वितीये—"यः प्रजाकामः पशुकामो वा स्यात्स एतं प्राजापत्यं तूपरपशुमालभेत" इति विधिः। तच्छेषश्च "स आत्मनो वपामुदखिददित्यर्थवादः। तत्र गुणवाद आश्रितः, यतस्तत्काले पशूनामभावात्प्रजापतिः स्वात्मन एव वपामुद्खाद्य तत्कर्म प्रपूरयामास। तस्य च कर्मण ईदृशं सामर्थ्यं यत्तत्काल एव तूपरः पशुरूदगादिति स्तावकत्वेन सार्थक्यमिति व्याख्यातं भाष्यकृता।

तत्र "कथं पुनरिदं निरालम्बमन्वाख्यात इत्याक्षेपसमाधानभाष्यं स्वमतेन व्याचिख्यासुः सृष्ट्यादिविषयकमेतदुपाख्यानं व्याकर्तुं तदनङ्गीकारादनुपपत्तिमाशङ्क्याह तन्त्रवार्तिककारः—मन्त्रेति। व्याख्यानमाह—तत्रेति। प्रजापतिरेव योगोति। प्रजापतेः पशुरूपनिर्माणसामर्थ्यद्योतनार्थं योगिग्रहणम्। सृष्ट्यादौ पुण्यकर्मणामेव मन्वादीनामुद्भवः पुराणादिषु प्रसिद्ध इत्यभिप्रायेणाह—तस्मिन्

अतएव "गुणवादस्तु" सूत्र में "निरालम्बो नार्थवाद" ( अर्थवाद निष्प्रयोजन नहीं होता" ) इस अभिप्राय से "प्रजापतिरात्मनो वपामुदखिदत्" ( प्रजापति ने अपने वपा का उद्खनन किया ) यहाँ यह निरालम्ब कथन क्यों कर रहे हैं ? ऐसा आक्षेप प्राप्त होने पर—"मन्त्रार्थवाद………" ( मी. द. तन्त्र. वा. १.२.१.१० ) "मन्त्र अर्थवाद इतिहास के प्रमाण होने से जगत् की सृष्टि एवं प्रलय माने जाते हैं, अतः सृष्टि के आदिकाल में प्रजापति ही एक योगी था। उसे यज्ञ करना था किन्तु उस काल में पुण्यकाल का ही उद्भव स्वीकार करने से यज्ञ में उपयुक्त पशु न थे। अतः उसने स्वमाहात्म्य से अपने को ( स्वयं को ) ही पशु मानकर वपा ( मज्जा ) का उद्खनन

गतदेवताधिकरणन्यायमेवागत्याऽनुसस्रुः । एवञ्चोपनिषदामर्थवादत्वेऽपि तत्प्रतिपादितसर्वज्ञादिस्वीकारावश्यकतया तन्निराकरणं भट्टपादानां वेदेषु स्वतः

काले पुण्यकर्मोद्भवेति। तत इत्यानन्तर्यं पञ्चम्यर्थः। स्ववपोत्खननादि तच्छद्वार्थः। पशुयागस्य वपापुरोडाशाङ्गप्रचारात्मकत्वान्न वपोद्खननमात्रेण समाप्तिरित्यत आह—असमाप्त एवेति। आनन्तर्याभिधानस्य स्तुत्युपयोगं दर्शयति—ईदृशमिदं कर्मेति। वपोत्खननाभिधानस्योपयोगमाह—एवञ्चेति। सालम्बनत्वाभिप्रायः सत्यशब्दः। ननु तन्मत औत्पत्तिकं शब्दस्यार्थेन सम्बन्धमाश्रित्य "अनपेक्षत्वात् ( जै० सू० १.१.२१ ) इति वेदस्य नित्यत्वं स्थापितम्। सृष्टिप्रलयस्वीकारेचार्थस्य तत्सम्बन्धस्य चानित्यत्वापत्त्या शद्वस्याप्यनित्यत्वप्रसङ्ग इत्याशङ्कां निराचष्टे—प्रतिसृष्टि चर्तुलिङ्गन्याये नेति। ऋतुलिङ्गन्यापस्वरूपं व्याञ्ञोट्टीकायाम्।

देवताधिकरणमेवेति। प्रथमतृतीये चिन्तितम्—"अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संविष्टः" ( कठ० २.६ ) इति श्रूयते। तत्र संशयः—यदेतद्धि शास्त्रवाक्यं किं मनुष्यानेवाधिकरोति उत तत उत्कृष्टान् देवादीनपि। तत्र मनुष्यहृदयापेक्षयैवांगुष्ठमात्रत्वस्य विवक्षित्वान्मनुस्यानेवाधिकरोति नतु देवादीनिति पूर्वपक्षे प्राप्ते सिद्धान्तः—"तदुपर्यपि वादरायणः सम्भवात्" ( ब्र० सू० १.३.२६ ) मनुष्यानधिकरोतीति सत्यम्, नतु मनुष्यानेवाधिकरोतीति नियमः। तेषामुपरिष्टाद् ये देवादयस्तानप्यधिकरोति शास्त्रमिति वादरायण आचार्यो मन्यते। अर्थित्वाद्यधिकारकारणस्य देवादिष्वपि सम्भवादिति। अर्थित्वञ्च तेषामामुस्मिकफलानित्यत्वालोचनया सम्भवति, एवं सामर्थ्यमपि, मन्त्रार्थवादादिप्रामाण्यात् तेषां विग्रहवत्त्वाद्यवगमात् "वज्रहस्तः पुरन्दरः" इति। "इन्द्रो वृत्राय वज्रमुदयच्छदिति च। तथा च तत्र प्रमाणान्तर प्राप्तिविरोधाभावाद् भूतार्थवाद आश्रितः। स एवागत्या तत एव भट्टपादेनापि प्रकृते उररीकृत इति भावः।

किया। तदनन्तर उस कर्म के समाप्त होने के पूर्व ही तूपर ( निःशृङ्ग ) पशु उपस्थित हो गया। इससे यह सिद्ध है कि ईदृश यह कर्म प्रत्यासन्न फलवाला है। एवञ्च प्रजापति ने महान प्रयत्न से इसे सम्पन्न किया।" यह सब सत्य ही है। ऋतुलिङ्गन्याय से प्रत्येक सृष्टि में तुल्य नाम प्रभाव तथा व्यापारवाली वस्तुओं की उत्पत्ति होती है, अतः अनित्यतापत्ति भी नहीं है। ( ऋतुलिङ्गन्याय का स्वरूप इस प्रकार है—जैसे एक वर्ष में प्रत्येक ऋतुएँ यादृशलिङ्गक देखी जाती है वैसे वर्षान्तर में होती है )। इस प्रकार उत्तर देते हुए कुमारिलभट्ट ने अगत्या उत्तरमीमांसागतदेवताधिकरणन्याय का ही अनुसरण किया है। एवञ्च उपनिषदों के अर्थवादरूप होने पर भी उनके द्वारा प्रति-

प्रामाण्यप्रतिपत्त्यादिफलकमेवेति नेह वितन्यते ग्रन्थगौरवात्। अत एव खण्ड-

प्रतिपत्यादिफलकमिति। आदिनोपादेयं बौद्धबहिष्करणम्। सर्वज्ञस्वीकारे हि तत्प्रणीतत्वेनापि वेदानां प्रामाण्यस्य सम्भावितया बौद्धैरपि सर्वज्ञत्वेन स्वीकृतबुद्धाभिहिततया स्वसिद्धान्तागमानां प्रामाण्यं शक्येत वक्तुम्, यदि वेदान् रचयतोऽपीश्वरस्य तेषु न स्वातन्त्र्यम्, पूर्वपूर्वसर्गानुसारेण रचनादरादित्येवं कश्चित्सम्भाव्यते तेषूत्कर्षः, तदा बुद्धस्यापि तथैवास्त्वागमप्रणेतृत्वम्, अप्रामाण्यं तु कुत इरि परेणापि शक्येत वक्तुम्। नैतिकीं कक्ष्यामाश्रयन्तोऽन्यथाऽपि च भाषन्ते केचित्, अतएव—'प्रयोजनवशादपि शास्त्रकारोऽन्यथा वस्तु प्रतिपादयति, यथा भाट्टाः स्वप्रकाशविज्ञानाकार एव घटादि नंतु बाह्य- इति बाह्यार्थास्तित्वमपलपतो बौद्धान् निराकर्तुं स्वानुभवसिद्धं ज्ञानस्य स्वप्रकाशत्वं परित्यज्य नित्यानुमेयतामाहुः, तथासत्ययं घट इत्यादिज्ञानेषु ज्ञानव्यक्तेरप्रत्यक्षत्वात्प्रत्यक्षत्वेन प्रतीयमानो घटाद्याकारो बाह्यस्यैवेति सिद्धे'रिति सूतसंहितां व्यचक्षाणो माधवोऽ-

ननु भूतार्थवादमाश्रित्य देवताया विग्रहवत्त्वस्वीकारे सर्वज्ञादिप्रतिपादकश्रुतिबलादीश्वरस्यापि सिद्धेरुपनिषदामर्थवादत्वस्य वक्ष्यमाणत्वादीश्वरनिराकरणं भट्टपादानामसङ्गतमितिचेत्तत्राह—तन्निराकरणमिति। ईश्वरस्तदोऽर्थः।

"ईश्वरेच्छा यदीष्येत सैव स्याल्लोककारणम्।
ईश्वरेच्छावशित्वे हि निष्फला कर्मकल्पना॥"

इत्यादिना श्लोकवार्तिकादावित्यादिः। प्रतिपत्त्यादिफलकमिति। विशदीकृतश्चैतट्टीकायाम्।

अत्रेदबमधेयम्—सूक्ष्मेक्षया समीक्षणे नेश्वरनिराकृतौ तात्पर्यं मीमांसकानामप्यपि तु वेदस्य नित्यत्वपौरुषेयत्वप्रसाधने, तदीयस्वतःप्रामाण्यसाधने च। यद्यपि दर्शनान्तरवन्नेश्वरसाधनाय प्रयतितम् तैस्तथापि तथैव न तस्य निराकृतावपि प्रयत्नस्तेषाम्। सूत्रकृद्भिः स्पष्टतयेश्वरसाधकबाधकसूत्राविरचनात्।

यच्च तत्रत्यभाष्यकाराः शब्दार्थसम्बन्धापौरुषेयत्वप्रतिपादनावसरे "कथं पुनरिदमवगम्यतेऽपौरुषेय एष सम्बन्ध इति। पुरुषस्य सम्बन्धुरभावात्, कथं सम्बन्धा नास्ति, प्रत्यक्षस्य प्रमाणस्याभावात् तत्पूर्वकत्वाच्चेतरेषामि"त्यवोचन्, तदपि शब्दार्थसम्बन्धस्यापौरुषेयत्वप्रतिपादनपरमेव, तस्यैव प्रकरणादिति नेश्वरस्य सर्वथानिराकरणे मुख्यं तात्पर्यं तेषाम्। एवं स्थलान्तरेऽपि।

पादित सर्वज्ञत्वादिविशिष्ट ईश्वर का मानना अत्यन्त आवश्यक है। अतः भट्टपाद के द्वारा ईश्वर का निराकरण तो केवल वेद में स्वतःप्रामाण्यादिप्रतिपत्ति के लिए ही किया गया है। [ अर्थात् उनका मुख्य तात्पर्य केवल वेद में स्वतःप्रमाण्य को सिद्ध करने में ही है न कि ईश्वर के निराकरण में ] इस विषय का विशेष विस्तार ग्रन्थगौरव होने से नहीं किया जा रहा है।

भ्यधात् । तार्किकादिरीत्यापि सर्वज्ञं स्वीकृत्य वेदप्रामाण्यस्य सौगतमतनिरासस्य चोपपत्तावतिशिथिलपक्षाश्रयणं भाट्टानामनुचितमिति तु सुविदितमेव, ज्ञानविषये तु भाट्टैरापातत एवमुच्येत—प्रथमक्षणे तावद् 'अयं घटः' इत्येवानुभवः, द्वितीयक्षणे तु ज्ञानेनाऽऽहिताया ज्ञातताया 'ज्ञातो घटः' इत्यनुभवः, तृतीयक्षणे तु ज्ञानस्यैवाभावेन न प्रत्यक्षसम्भावनाऽपि, 'सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना'इति नियमादिति । परन्तु 'अयं घटः' इत्यत्रापि ज्ञानस्य ज्ञानत्वेन रूपेणास्फुरणेऽपि स्वरूपतः स्फुरणमस्त्येव, ज्ञाततायाअतिरिक्ताया अप्रामाणिकत्वेन ज्ञातो घट इत्यत्रापि ज्ञानविषयत्वस्यैव स्फुरणाज्ज्ञानस्फुरणमागतमेवे-

तत्र तद्व्याख्यातारो भट्टपादा अपि वेदस्य स्वतःप्रामाण्यं प्रतिपिपादयिषया—

"यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता' ( श्लो० वा० )

इति वदन्तः पुरुषमङ्गीकृत्य तत्स्वातन्त्र्यमेव परिजिहीर्षन्ति । अतएव तदीयेश्वरनिराकरणपरकवाक्यानामप्यैदम्पर्यमत्रैव । अत एव च तैः स्वकीयग्रन्थादौ—

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयः प्राप्तिनिमित्ताय नमः सोमार्द्धधारिणे ॥ (श्लो० वा०)

इति कीलकोक्तं तन्नमस्कारात्मकं मङ्गलमकारि । एवमन्येऽपि मीमांसकाः स्वकीयग्रन्थादावीश्वरं नमश्चक्रुः । न च वाच्यम् मङ्गलं स्वेष्टदेवताविषयः, शास्त्रन्तु निरीश्वरमेवेति, मङ्गलस्य ग्रन्थघटकतया तत्सिद्धान्तानुसारित्वस्य तत्रावश्यं स्वीकरणीयत्वेन स्वातन्त्र्येण स्वेष्टनमस्कारकल्पनाया अन्याय्यत्वात् । अतएव—

ओं नमः सर्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥ (अनु० गा० )

इतिमङ्गलस्य यथाश्रुतस्य वेदान्तानुसारित्वेऽपि गदाधरभट्टाचार्यैर्न्यायसिद्धान्तानुसारेण व्याख्यातम् ।

किञ्च 'मन्त्रार्थवादेतिहासप्रामाण्यात् सृष्टिप्रलयाविष्येते' इति ब्रुवन्तस्ते ईश्वरास्तित्वमपि तत्प्रामाण्यादेवाङ्गीचक्रुरेव ।

यदि च तद्वाक्यानामीश्वरनिरासपरत्वमपि कल्प्येत तदापि तार्किकाभिमतानुमानगम्यस्यैव तस्य निरासः, नतु वैदिकेश्वरस्य । अत एवाभाणि भवदेवेन नयविवेके—'एवञ्चेश्वरे परोक्तमेवानुमानं निरस्तम् । नेश्वरोऽपिनिरस्तः' ( मी० न० वि० १.१.५ ) इति । नारायणस्तु स्पष्टमेवाभ्यधात्—'वैदिकेश्वरः परमकारूणिकः पुनरस्माकमनुगुण एव' ( मा० मे० ) इति । अत्र मिश्रपादा ईश्वरसाधकं वैशेषिकानुमानं निराकुर्वन्तोऽपि 'नित्यत्वे हि

**नकारोऽप्युपनिषदामर्थवादत्वमुपेत्याप्यद्वैतप्रामाणिकत्वप्रकरणेऽद्वैतसिद्धिमनुमेने।** वेदानामवसिते तत्प्रामाण्यबलेनेश्वरस्यापरिच्छेद्यो महिमा, सृष्टिप्रलयौ च ऋतुलिङ्गन्यायमाश्रित्य सिध्येयुर्नत्रा वेदांस्त्वनादृत्य दृष्टानुसारेण पर्वते इवानुमानमित्याद्युक्त्येश्वरास्तित्वमुररीचक्रुः।

भाट्टदीपिकायां मीमांसाकौस्तुभे च खण्डदेवोऽपि—'सृष्टिप्रलयेश्वराद्यङ्गीकारे तु कल्पादौ प्रवचननिमित्ता श्रुतिस्सम्भवति' ( भाट्ट दी० १.१.७ ) उपासनादौ परं ध्यानमात्रमाहार्यं तस्येति जैमिनिमतनिष्कर्षः। ममत्वेवं वदतोऽपि वाणी दुष्यतीति हरिःशरणमेव शरणम् ( मी० कौ० ९.१.४ ) इति।

भाट्टचिन्तामणिकारास्तु—'नापि योगिनां प्रत्यक्षे तौ विषयौ, तेषामनङ्गीकारात्। एतेनेश्वरप्रत्यक्षमपि व्याख्यातम्' ( १.१.३ ) इति भाट्टदीपिकाव्याख्यानावसरे—'अत्रेदं वाच्यम्, पुराणानामर्थवादत्वेऽपि स्वशक्त्यार्थबोधकत्वस्यावर्जनीयतया योगिनां सिद्धिरव्याहतैव। तेषां स्वार्थप्रामाण्याभावेऽगस्त्यवसिष्ठविश्वामित्रव्यासप्रभृतीनां समुद्रपानब्रह्मास्त्रग्रसनत्रिशङ्कुस्वर्गसृष्टिभारतयुद्धहतपुनरागमनाद्यत्यन्ताशक्यार्थानुष्ठानस्यासिद्धिप्रसङ्गात्। किञ्चार्थवादानां स्वार्थे प्रमाण्याभावे घृतेन शर्कराणामञ्जनम्, उच्चैस्त्वादीनां वेदधर्मत्वम्, अश्वप्रतिग्रहेष्टेः दातृकर्तृत्वमित्याद्यनेकासिद्धान्तासिद्धिप्रसङ्गः। तस्माद् योगिनामङ्गीकार आवश्यकः। तत्सर्वज्ञत्वमवश्याभ्युपेयमेव, तस्यापि पुराणादिसिद्धत्वात्। एवं 'द्यावाभूमि जनयन्देव एकः विश्वस्य कर्ता भुवनस्य गोप्ता' इत्यादिश्रुतिभिः, 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इत्यादिस्मृतिभिः,

'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा॥'

इत्यादिपुराणवचनैः, 'क्षित्यादिकं सकर्तृकमित्याद्यनुमानैश्च ईश्वराङ्गीकार आवश्यकः। न चैतदनुमानस्य शरीराजन्यत्वादिप्रतिहेतुना सत्प्रतिपक्षत्वं शंक्यम्, प्रतिहेतोरप्रयोजकत्वात्। कार्यत्वहेतोः कार्यकारणभावरूपानुकूलतर्कसाचिव्यस्य पूर्वनिबन्धनेषु स्पष्टत्वात्। तस्मान्मूलोक्तं प्रौढिवादमात्रम् ( भा० चि० १.१.३ ) इति। "ईश्वरस्यैव गतकल्पीयवेदप्रवचनकर्तृत्वोपपत्तेर्वेदानां नित्यत्वसिद्धिरितिभावः" (भा० चि०) "ईश्वरेच्छारूपत्वे सुतरां नित्यत्वसिद्धिरितिभावः"धे ( भा० चि० १.१.४ ) इति च प्रतिपादयाञ्चक्रुः। "

अतएव खण्डनखण्डखाद्य के रचयिता श्रीश्रीहर्ष ने भी उपनिषदों को अर्थवाद मानकर भी अद्वैतप्रामाणिकत्वप्रकरण में अद्वैतसिद्धि का समर्थन किया है। प्राचीन।

**प्राञ्चो हि वेदान्तिनो वेदान्तेष्वात्मोपासनविध्यनुप्रवेशमुपेत्यैवाद्वैतं ब्रह्मोररीचक्रुः। अत एवाद्वैतवादिभिरपि भर्तृहरिपादैर्वेदमुपक्रम्य वाक्यपदीये—**

**तस्यार्थवादरूपाणि निश्रित्य स्वविकल्पजाः।**
**एकत्विनां द्वैतिनाञ्च प्रवादा बहुधा मताः॥**

त्यादि स्वप्रकाशवादशारदावौ द्रष्टव्यम्। विध्यनुप्रवेशमिति। विधेरनुप्रवेशे तच्छेतयाऽर्थवादत्वं ब्रह्मवाक्येष्वापतत्येवेत्याशयः।

अत एवेति। अर्थवादस्य स्वार्थे तात्पर्यवत्त्वादेव। खण्डनकार इति। खण्डनखण्डखाद्यकारः। अद्वैतसिद्धिमनुमेने इति। "अस्तु वा प्रश्नोऽयं यथा तथा, श्रुतिरेवाद्वैते प्रमाणमिति ब्रूमः, श्रूयते खलु "एकमेवाद्वितीयं, "नेह नानास्ति किञ्चनेत्यादिः" इत्यादिनेत्यादिः। श्रुतिरेवेत्येवकारेण मानान्तरानपेक्षत्वं सूचितम्। एकमेवाद्वितीयम्, द्वैतसामान्याभावोपलक्षितमित्यर्थः। नेह नानेति। इह = द्वैततादात्म्यापन्ने ब्रह्मणि, नाना ब्रह्मभिन्नं किञ्चन वस्तुसामान्यं नास्तीत्यर्थः।

ननूपनिषदामर्थवादत्वे वेदान्तानां विध्यङ्गत्वापत्तिरिति तत्राह— प्राञ्चो हीति। वृत्तिकाराः। सत्स्वप्यनेकेषु वृत्तिकारेषु उपवर्षा एवात्र वृत्तिकारशब्देन ग्राह्याः। एते ह्यद्वैतवेदान्ताचार्या आसन्। अत एवैते "ब्रह्मजिज्ञासापदे कर्मषष्ठीसमासप्रतिपादनाद्यवसरे क्वचिन्निराकृता अपि भगवता भगवत्पादेन स्फोटखण्डनाद्यवसरे बहुत्र "भगवानुपवर्षः" इत्याद्युक्त्या सम्प्रदायाचार्यत्वेन प्रामाणिकत्वेन चाद्रियन्ते। एतेषामेव भामतीभाष्यरत्नप्रभान्यायनिर्णयादिव्याख्यानेषु "प्राचां वृत्तिकृताम्" "वृत्त्यन्तरे" इत्यादिशब्दैर्निर्देशः। एतेषामेव च मतं "अत्रापरे प्रत्यवतिष्ठन्ते" ( ब्र० सू० भा० १.१४ ) इत्यादिना पूर्वपक्षत्वेनोपस्थापितम्। अत एव "अत्रापरे प्रत्यवतिष्ठन्त इति" इति प्रतीकमादाय रत्नप्रभायाम्—'सम्प्रति सर्वेषां पदानां कार्यान्वितार्थे शक्तिमिच्छतां विधिशेषत्वेन प्रत्यग्ब्रह्म वेदान्तैर्बोध्यते न स्वातन्त्र्येणेति वदतां वृत्तिकाराणां मतनिरासाय सूत्रस्य व्युत्पत्त्यभावभावाभ्यां संशये पूर्वपक्षमाह- अत्रापरे इति। ब्रह्मणो वेदान्तवेद्यत्वोक्तौ वृत्तिकारा पूर्वपक्षयन्तीत्यर्थः" इत्युक्तम्।

तस्येति। वेदस्यार्थवादरूपाणि अर्थवादानर्थवादरूपाणि वाक्यानि निश्चित्याश्रित्य स्वविकल्पजाः स्वस्वबुद्धिप्रभवाः; विकल्पो बुद्धिभेदः। तदुक्तम्- गन्धर्वराजेन—"रूचीनां वैचित्र्यादृजुकुटिलनानापथजुषाम्" इति। एकत्विनां

वेदान्तियों ( वृत्तिकार उपवर्ष ) ने ब्रह्म को आत्मोपसनाविधि का अङ्ग मानकर अद्वैतरूप स्वीकार किया है। अतएव अद्वैतवादि भर्तृहरिपाद ने भी वाक्यपदीय में वेद का

**इत्युपनिषदामर्थवादत्वमवादि । वेदस्य विधिमन्त्रादिपञ्चात्मकतायाः स्थिता-वुपनिषदां भूतार्थवादे एवान्तर्भावनीयत्वादिति कृतमनुप्रसक्तेन । एवं च प्रकृते**

द्वैतिनाञ्च वहुधा विभिन्नरूपेण "ममैव दर्शनं सम्यगित्येवंरूपः प्रकृष्टो वादो येषु ते प्रवादाः अनल्पादरदशनभेदा, मता अभिमता इत्यर्थः ।

तत्र-एकत्विनोऽद्वैतिनः—"एकमेवाद्वितीयम्, आत्मैवेदं सर्वम्, एतदात्म्य-मिदं सर्वम्, तत्त्वमसि, नेह नानास्ति किञ्चन, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्", "तत्र को मोहः कः शोक एकत्वमनुपश्यत" इत्यादिश्रुति-बलेन जीवब्रह्मणोरैक्यमातिष्ठानाः "द्वासुपर्णा" यः आत्मनि तिष्ठन्" अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इत्यादिद्वैतबोधकश्रुतीनां प्रत्यक्ष-सिद्धभेदानुवादकत्वेन हीनबलत्वादतत्परत्वमाचक्षते ।

द्वैतिनस्तु-प्रत्यक्षविरोधेनाद्वैतश्रुतय उपरिचरितार्था जगत्यास्थानिवृत्तये वैराग्योपष्टम्भार्था, द्वैतश्रुतयस्तु प्रत्यक्षसंवादेन सत्यार्था इति मन्यन्ते ।

वेदस्येति । अपौरूषेयं वाक्यं वेदः । स च पञ्चविधः, विधिमन्त्रनामधे-यनिषेधार्थवादभेदात् । तत्र ज्ञानकाण्डात्मकवेदचरमभागरूपाणामुपनिषदामर्थ-वादविधायामन्तर्भावः । ननूपनिषदामर्थवादत्वे तासां स्वार्थे प्रामाण्यं न स्यात् प्रस्तरादिवाक्यवदिति चेत्तत्राह—भूतार्थवाद एवेति । अत्रेदं बोध्यम्-अर्थवादो द्विविधो भूतार्थवादोऽभूतार्थवादश्च । तत्राभूतार्थवादोऽपि द्विविधो गुणवादोऽनु-वादश्च, तत्रविधिप्राशस्त्ये लक्षणातः प्रागर्थवादवाक्यार्थज्ञानम्, तस्य प्रत्यक्षा-दिप्रमाणान्तरविरोधे बाधितत्वेन स्वार्थेऽमानत्वाद् गुणवादत्वम्, तत्त्वञ्च गौणार्थ-घटितवाक्यार्थबोधकत्वम् । यथाचिन्तितम्—"सारूप्यम्" ( पू० मी० १.४.२५ ) इत्यत्र । "आदित्यो यूपः" "यजमानो यूपः" इत्यत्रानध्यवसायोऽर्थवादो वेति संशये प्रमाणान्तरविरोधान्मूख्यार्थत्वायोगाद्, गुणासम्बन्धेनार्थवादत्वस्यायुक्तत्वादन-ध्यवसाये प्राप्ते तेजस्वित्वोर्ध्वत्वाभ्यां यूपस्यादित्ययजमानसादृश्याद् गौण्या वृत्त्या सामानाधिकरण्योपपत्तेर्गुणवादात्मकार्थवादतेति राद्धान्तितम् ।

यत्र तु स्वार्थे न प्रमाणान्तरविरोधोऽपितु प्रमाणान्तरसंवाद एव, तस्य प्रमाणान्तरप्रतिपन्नार्थबोधकत्वादनुवादत्वम् । यथाह—"प्रशंसा" (मी. १.४.२६) इत्यत्र । "अपशवो वाऽन्ये गो अश्वेभ्यः पशवो गो अश्वा" इत्यत्रानध्यवसायोऽर्थ-वादो वेति संशय्य प्रसंशानवगमादर्थवादत्वायोगादनध्यवसाये प्राप्ते—अन्येषा-मपि पशुजातीयत्वेनापशवोऽन्ये गो अश्वेभ्य इति जातिनिषेधायोगात् कार्यनिषेधे पर्यवसानादपशव इत्यादिना गवादीनां पशुत्वस्य प्रतिपन्नस्य "पशवो गो अश्वा"

उपक्रम करके—"तस्यार्थवाद""""""। ( वा. ब्र. ८ ) वेद के अर्थवादरूप को मानकर द्वैतवादी एवं अद्वैतवादी अपने बुद्धिवैभव से अनेक वादविवाद करते देखे जाते हैं ।

**द्वैतमिथ्यात्वे आगमोऽनुकूल एव न तु प्रतिकूल इति।**

**अथास्त्वेवं युक्त्युपष्टम्भादिति द्वितीयः पक्षः, न च तथाप्युक्तागमविरोधस्तदवस्थ एव; युक्तिविरोधे आगमस्य भूतार्थताया वक्तुमशक्यत्वात्, अन्यथा**

इत्यनुवादाद् गवाश्वेषु पशुकार्यकतृत्वस्यागौणत्वात्प्रशंसासिद्धेरनुवादात्मकार्थवाद इति राद्धान्तितम्। यत्र पुनः प्रमाणान्तरसंवादविरोधयोरभावाद् विद्यमानस्याज्ञातार्थस्यैव ज्ञापकत्वात् प्रामाण्यशरीरनिर्वाहस्तस्य भूतार्थवादत्वम्। तत्त्वञ्च यथाश्रुतवाक्यार्थप्रमापकत्वम्। यथाह—भूमा' ( मी० सू० १.४.२७ ) इत्यत्र—"सृष्टीरूपदधाति" इत्यत्रानध्यवसायोऽर्थवादो वेति संशये—सृष्ट्यसृष्टिषु वह्वीष्विष्टासु प्राप्तासु सृष्टिशब्दस्यानुवादित्वायोगादनध्यवसाये प्राप्ते सृष्टीनां भूयस्त्वात्ताभिः सहैकोपधानक्रियायोगादन्यासामपि लक्षणयाऽनुवादसम्भवात्सृष्टिस्तुत्यर्थत्वेन भूतार्थवादात्मकार्थवादतेति सिद्धान्तः। अत्र सृष्टिपदं सृष्ट्यर्थकपदघटितमन्त्रकरणकोपधानकर्मेष्टकाबोधकम्। तदुक्तम्—

विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधामतः" ( वृ० वा० ) इति।

तथाचोपनिषदां न प्रस्तरादिवाक्यसाम्यम्, तेषां गुणवादत्वात्। उपनिषदाञ्च भूतार्थवादत्वेन स्वार्थे प्रामाण्यसम्भवादिति भावः।

शिवोक्तागमानुरोधाद् विश्वस्य सत्यत्वं न वक्तुं शक्यमितिप्रकृतार्थमुपसंहरति—एवञ्च प्रकृत इति।

विश्वसत्यत्वसाधिकां युक्तिं निराकर्तुं द्वितीयपक्षमुत्थापयति—अथास्त्वेवमिति। युक्तिश्चात्र "प्रकाशमानं न पृथक् प्रकाशादित्यादिनोक्ता। तथा च सर्वस्यापि प्रकाशात्मकत्वात् सत्यत्वं सेत्स्यतीतिभावः। ननु विश्वसत्यत्वे मिथ्यात्वप्रतिपादकानां विज्ञानभैरवोक्तवाक्यानां विरोध इति चेत् नेत्याह—न च तथापीति। प्रपञ्चसत्यत्वस्य युक्त्या सिद्धत्वेऽपि। नागमविरोधस्तदवस्थ। तत्र हेतुः—युक्तिविरोधे इति। भूतार्थपरतायाः = यथाश्रुतार्थपरतायाः। तथा च न तेषां वाक्यानां मिथ्यात्वपरत्वं वक्तुं शक्यमिति भावः।

इत्यादि कहते हुए उपनिषदों को अर्थवाद माना है। विधिमन्त्र नामधेय निषेध एवं अर्थवाद भेद से वेद के पञ्चविध होने से उसके भूतार्थवादरूप में ही उपनिषदों का अन्तर्भाव मानना उचित है। प्रसङ्गवश यह सब कहा गया, किन्तु प्रकृत में तो द्वैतमिथ्यात्व में आगम अनुकूल ही है न कि प्रतिकूल।

शंका—'युक्तिबल से विश्व में सत्यत्व सिद्ध होता है' यह द्वितीय पक्ष मान लें। यह कहना सम्भव नहीं है कि इस द्वितीय पक्ष में पूर्वोक्त आगमविरोध तदवस्थ है, क्योंकि युक्तिविरोध होने पर आगम में भूतार्थता ( यथाश्रुतार्थपरता ) नहीं कही

तत्सिद्धिपेटिकाऽसङ्गतेः, अत एव—

युक्त्याऽनुपेतामसतीं प्रकल्प्य यद्वासनामर्थनिराक्रियेयम् ।
आस्थानिवृत्त्यर्थमगादि बौद्धैर्ग्राहं गतास्तत्र कथञ्चिदन्ये ॥

इति तर्कपादस्था भट्टपादा बुद्धमागममिव मत्वाऽपि युक्तिविरोधेन क्षणिकत्वादिविषयकतदुक्तेर्वैराग्योत्पादनफलकतयाऽर्थवादत्वं वदन्तःसङ्गच्छन्ते, अन्यथोक्त-

तत्सिद्धिपेटिकेति । 'तत्सिद्धिजातिसारूप्ये' त्यादिसूत्रेण गौणवृत्तिनिमित्तसमुदायप्रदर्शकेन जैमिनिना मानान्तरविरोधे वेदवाक्यानां गौणार्थतोक्तेति भावः । गौणार्थ-

अन्यथेति । युक्तिविरोधे सत्यप्यागमवाक्यानां भूतार्थपरत्वोपगमे । तत्सिद्धिपेटिकेति । "तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवायाः" ( पू० मी० १.४.३ ) इति तत्सिद्धिपदघटितं सूत्रं पेटिकेव, सर्वगौणार्थानामभिमतानां प्राप्तिस्थानत्वात् । तत्सिद्धिः तदुद्देश्यभूता सिद्धिः, यजमानाद्युद्देश्या कार्यसिद्धिरिति यावत् । जातिः जननम्, सारूप्यं चक्षुर्ग्राह्यतेजस्वित्वादिरूपं सादृश्यम्, प्रशंसा प्राशस्त्यम्, भूमा बाहुल्यम्, लिङ्गसमवायः अल्पत्वसम्बन्धः । गुणाश्रया इति सूत्रशेषः । गुणघटका इति तदर्थः । तथा च "यजमानः प्रस्तर" इत्यादौ न यजमानादिपदं प्रस्तरादिनाम भवितुमर्हति सोमादिपदवद् अर्थान्तरेऽत्यन्तप्रसिद्धत्वादित्यादियुक्तिविरोधात्, यजमानादिपदं यजमानापेक्षणीयसिद्धिहेतुत्वादिरूपगुणयोगात् प्रस्तरादिबोधनद्वारा "उत्तरं बर्हिषः प्रस्तरं सादयति" इत्यादिविध्येकवाक्यतया प्रस्तरादिस्तुतिपरम्, "यस्मात् प्रस्तर उक्तहेतुस्तस्मात् प्रशस्त इति ।" तथाचैतत्सर्वमसङ्गतं स्यादितिभावः । अतएवेति । युक्तिविरोधे वाक्यस्य यथाश्रुतार्थबोधकत्वस्य वक्तुमशक्यत्वादेव । सङ्गच्छन्त इति परेणान्वयः ।

युक्त्येति । बौद्धैः सर्वथायुक्तिरहितामप्यसतीं वासनां "सर्वं क्षणिकमित्यात्मिकां परिकल्प्येयमर्थनिराक्रिया बाह्यार्थस्य नीलादेः स्थायित्वनिराकरणं, यदगादि प्रतिपादितम्, तदर्थविषयकास्थानिवृत्त्यर्थम्, आस्था = सत्यत्वभावना, तन्निवृत्त्यर्थम् तन्निवृत्तिश्च वैराग्यफलिका, अतस्तदर्थमेव वस्तुतः, किन्तु तत्र तदन्ये केचित्परवर्तिन वृथैव ग्राहं गताआग्रहं प्राप्ता इत्यर्थः । यदिति क्रिया-

जा सकती । अन्यथा [ प्रमाणान्तरविरोध होने पर भी भूतार्थपरता मान ली जाय तो ] तत्सिद्धिपेटिका असङ्गत हो जायेगा । [ तात्पर्य यह है कि "तत्सिद्धिजातिसारूप्य" ( मी. सू. अ. १ पा. ४, अधि. १२ ) इत्यादि मीमांसासूत्र के द्वारा जैमिनी ने मानान्तरविरोध होने से वेदवाक्यों में गौणार्थता वर्णन किया है, वह असङ्गत हो जायेगा ] । अतएव—"युक्त्यानुपेता·······" ( मी. श्लो. वा. १.१.२०१ ) [ युक्ति से रहित असत् वासनाओं की कल्पना कर बौद्धों ने जो पदार्थों का निराकरण किया है

**रीत्या तस्याः सालम्बत्वे भट्टाभिधानमत्यसङ्गतं स्यात्, अत एव युक्त्याऽनुपेतामिति विशेषितमिति चेन्न; भवत्पक्षे प्रकाशाभिन्नतया शुक्तौ रजतादेरपि सत्यत्वे उक्तागमवचनानां गौणार्थतयाऽप्युपपादनासम्भवात्, अन्यथा प्रकाशा-**

**तयाप्युपपादनासम्भवादिति । असत्यस्य प्रसिद्धौ हि तत्सादृश्येन गौणता परत्र पार्यते वक्तुमिति भावः । प्रकाशाभिन्नरजतादेर्मिथ्यात्वे त्वाह अन्यथेति ।**

विशेषणम् । अन्यथेति । युक्तिविरोधेऽपि यथाश्रुतबोधकत्वाङ्गीकारे । तस्याः = बौद्धोक्तेः । सालम्बत्वे = यथाश्रुतार्थपरत्वे । अतएव = एतदर्थमेवेत्यर्थः । समाधत्ते—भवत्पक्ष इति । स्वातन्त्र्यवादिपक्षे । उक्तागमवचनानाम् = विज्ञानभैरवोक्तवचनानाम् । गौणार्थतयापीति । अपिना तद्वचनानां मिथ्यात्वोपपादनपरत्वासम्भव उक्तः ।

गौणार्थतयोपपादनं हि गौणमुख्ययोर्विवेकज्ञानवतैव कर्तुं शक्यम्, तादृशविवेकज्ञानस्य गौणत्वव्यापकत्वात् । अतएवोक्तम् "यस्य हि प्रसिद्धो वस्तुभेदः, यथा केशरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ्मुख्योऽन्यः प्रसिद्धः, ततश्चान्यः पुरुषः प्रायिकैः क्रौर्यशौर्यादिभिः सिंहगुणैः सम्पन्नः सिद्धः, तस्य पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतो नाप्रसिद्धवस्तुभेदस्य" ( ब्र० सू० भा० १.१.४ ) इति भाष्यकृता, "परः शब्दः परत्र लक्ष्यमाणगुणयोगेन वर्तते इति यत्र प्रयोक्तृप्रतिपत्रोः सम्प्रतिपत्तिः स गौणः । स च भेदप्रत्ययपुरःसरः" इति च टीकाकृता । तथा च प्रकृतेऽपि कस्यचिन्मिथ्याभूतस्यान्यस्य प्रसिद्धावेव तद्गतबाधितत्वगुणसम्बन्धाद् रजते मिथ्यात्वोपपादनं गौणतया भवेत्, प्रकाशाभिन्नतया रजतस्य सत्यत्वे च तद्वदेव सर्वस्य मिथ्यात्वेनाभिमतस्य सत्यत्वापत्त्या न क्वचिदपि मिथ्यात्वप्रसिद्धिरिति न तद्गौणतापीति भावः । निःसारत्वप्रसङ्गेनेति । मिथ्यात्वप्रसङ्गेन । शून्यत्वस्यैवापत्तेरिति । ज्ञानं ज्ञेयं सर्वं शून्यमिति सर्वशून्यत्ववादापत्तेरित्यर्थः ।

नन्वेवं तर्हि रजते बाधव्यवहारो न स्यात्, चिद्रूपस्य बाधविरहात्, यदि च बाधव्यवहारोपपादनार्थमुत्पलदेवाचार्योक्तदिशा सम्यग्ज्ञानमिथ्याज्ञानयोर्भेदः स्वीक्रियते तर्ह्यागतोऽसि मार्गेण, त्वयाऽपि मिथ्यात्वस्य स्वीकृत-

वह केवल पदार्थविषयक आस्था निवृत्ति के लिए ही किया है । किन्तु उसमें कुछ लोग आग्रह ( हठ ) करने लगे हैं" ] । इत्यादि कहते हुए भट्टपाद ने तर्कपाद में बुद्ध को आप्त तुल्य मानकर भी क्षणिकत्वादिविषयक उनके कथन को युक्तिविरुद्ध होने से वैराग्यार्थ बताया है । जो कि उचित ही है । अन्यथा उक्तरीति से बुद्धोक्ति के सार्थक होने पर भट्ट का कथन असङ्गत हो जायेगा । अतएव "युक्त्यानुपेताम्" यह विशेषण दिया गया है ।

**स्यापि निस्सारत्वप्रसङ्गेन शून्यत्वस्यैवापत्तेः। अथ प्रकाशमानस्य चिद्रूपत्वेऽपि विरोधिपरामर्शान्तरोदयाद् रजतादेर्बाध्यत्वव्यवहारस्तावदस्त्येव, व्यवहार-प्रयोजनश्च सम्यग्ज्ञानमिथ्याज्ञानभेदः स्वीकार्य इत्याह स्म शिवदृष्टिव्याख्याया-मुत्पलदेवः 'घटज्ञानरजतज्ञानयोर्द्वयोरपि सत्यत्वे सम्यङ्मिथ्यात्वभेदस्तर्हि कथ-मित्याशङ्कोत्तरमिति चेत्सत्यं तादृशज्ञानयोर्विशेषः स्वीकार्यस्तथापि यावत्प-**

त्वादित्याशयेनाह—अथ प्रकाशमानस्येति।

व्यवहारप्रयोजनश्चेति। व्यवहारः प्रयोजनं यस्य। नेदं रजतमिति बाध व्यवहारसम्पत्त्यर्थमित्यर्थः। भेदः स्वीकार्य इति। इममेव स्वाचार्योक्त्या दृढ़यति-इत्याहस्म शिवदृष्टिव्याख्यायामिति।

मिथ्याज्ञानविकल्पानां सत्वं चिद्व्यक्तिशक्तता।
विद्यते तत्तदत्रापि शिवत्वं केन वार्यते।
इति चेदेषु सत्यत्वं स्थितमेव चिदुद्गमात्।
तथा शिवोदयादेव भेदो मिथ्यादिकः कथम्।
व्यवहाराय सत्यत्वं नच वा व्यवहारगम्॥

इति कारिकाव्याख्यानावसरे।

तत्रायं भावः। मिथ्याज्ञानविकल्पितानां रजतसर्पादीनां घटादीनामिव चिद्विषयतया प्रकाशमानतासत्तास्वीकारस्यावश्यकत्वात्, तेषां परमार्थतः शिव-रूपतायाः सत्वेऽपि नेदं रजतम्, नायं सर्प इति लोकप्रसिद्धबाधव्यवहारसम्प-त्त्यर्थं सम्यग्ज्ञानमिथ्याज्ञानयोर्भेदो लोकप्रसिद्धोऽवश्यमभ्युपेय इति। एतच्च तेषां सत्यत्वाग्रहहानमन्तरा न सम्भवतीत्याह—तथापि यावत्पर्यन्तमिति। जय

समाधान—आप [ स्वातन्त्र्यवादी ] के मत में शुक्तिरजत के प्रकाशाभिन्न-तया सत्य होने से उक्त विज्ञानभैरवोक्त वचनों को गौणार्थपरक भी नहीं कह सकते, [ क्यों कि किसी असत्य वस्तु के सिद्ध होने पर ही उसके सादृश्य से अन्यत्र गौणार्थता कही जा सकती हैं। ] प्रकाशाभिन्न रजत को मिथ्या मानने पर तो प्रकाश के भी निस्सार होने से शून्यवादापत्ति हो जायेगी।

शंका—प्रकाशमान के चिद्रूप होने पर भी विरोधी ज्ञानान्तर के उपस्थित होने पर रजतादि में बाध्यत्व व्यवहार होता है। अतः उस व्यवहार की उपपत्ति के लिए सम्यग्ज्ञान एवं मिथ्याज्ञान का भेद मानना चाहिए। जिसे कि उत्पल देवने शिवदृष्टि की व्याख्या में—घट ज्ञान एवं रजतज्ञान दोनों को सत्य मानने पर सम्यक्त्व एवं मिथ्यात्व का भेद कैसे होगा? इस शंका का उत्तर देते हुये व्यवहार के लिए अवश्य स्वीकर्तव्य बताया है। समाधान—आप का कथन उचित है, तादृश ज्ञानों का भेद स्वीकार्य है किन्तु यावत् पर्यन्त "नाप्रकाशः प्रकाशते" [ प्रकाश से भिन्न प्रकाशित

**र्यन्तं 'नाप्रकाशः प्रकाशते इति चिद्रूपत्वात्सत्यं सर्वमिति योगाचारशिक्षितानां भवतां जयदुन्दुभिर्नोपरमति तावदसौ न स्वीकर्तुं शक्यः। न च वाच्यम्—दृष्टिसृष्टिवादे भवतां यथा 'इदं रजतं नेदं रजतमित्येतयोः प्रतिभासमात्रशरीरत्वाविशेषेऽपि बाध्यबाधकभावः कथञ्चित्, तथा सत्यत्वाविशेषेऽपि कथन्न स्यादिति, यतो मिथ्यात्ववादेऽनुपपन्नो बाध्यबाधकभावो मिथ्यात्वमेवोपोद्बलयेत्, अनुपपन्नत्वमेव हि मिथ्यात्वम्, तदीयपरिष्कारान्तराणामप्यनु-**

कथन्न स्याविति। यद्यपि निर्विशेषब्रह्मदृष्ट्याऽजातवादः, ईश्वरदृष्ट्या दृष्टिसृष्टिवादः, अस्मदादिदृष्ट्या तु सृष्टिदृष्टिवाद इत्येव हृदयङ्गमः सिद्धान्तनिष्कर्ष इति वर्णितं शारदाराजहंसे, एवमेकसत्ताद्विसत्तात्रिसत्तावादानामप्युक्तदृष्टिभेदेन सर्ववेदान्तिमाननीयता न तु तत्र लेशतोऽपि मतभेदौचित्यम्, तथाच न बाध्यबाधकभावे क्लेशः, तथाप्युपेत्यैवाह यतो मिथ्यात्ववादे इति।

दुन्दुभिः—प्रकाशमानतया प्रकाशाभिन्नत्वेन सत्यत्वाग्रहः। असौ तादृशज्ञानयोर्विशेषः। सत्यत्वपक्षेऽपि बाध्यबाधकभावस्योपपादनमाशंक्य निषेधति—न च वाच्यमिति। कथन्न स्यादिति च न वाच्यमिति योजना। बाध्यबाधकभावः कथञ्चिदिति। इदं रजतमिति पूर्वज्ञाने रजतमिदमात्मकम्। नेदं रजतमिति द्वितीयज्ञाने तु स्वप्रतियोगिकत्वसम्बन्धेनाभावगतम्, दृष्टिसृष्टिपक्षे यथाज्ञानं सृष्टिस्वीकारात्, तथा च तादृशज्ञानयोर्भिन्नविषयकत्वेऽपि स्वप्नवदुक्तरजतयोरुक्तरजतत्वरूपानादिधर्मेण सारूप्याद् बाध्यबाधकभावोपपत्तेः। यद्वा विरोधिधीविषयत्वेन समानत्वात् यथा सृष्टिदृष्टिपक्षे तद्विशिष्टबुद्धौ तदभावधीर्विरोधिनी, तथा दृष्टिसृष्टिपक्षे रजतान्तराभावधीः, विरोधितावच्छेदकशक्तिविशेषस्य तस्यामपि स्वीकर्तुं शक्यत्वात्। तथा च रजतत्वादेः प्रतिसृष्टिभेदेऽपि तयोर्बाध्यबाधकभावः सम्भवतीति भावः।

नवा वाच्यं रूप्यादिबाधस्यापि दृष्टित्वे तेन रूप्यादेर्मिथ्यात्वासिद्धिरिति, बाध्यान्यूनसत्ताकत्वस्यैव बाधकत्वे प्रयोजकत्वाङ्गीकारादित्याशयेनाह—कथञ्चिदिति। भवन्मते इव नास्मन्मते बाध्यबाधकभावः क्षतिकर इत्युपपादयन् समाधत्ते—यतो मिथ्यात्ववाद इति। तदीयपरिष्कारान्तराणामप्यनुपपन्नत्वादिति।

नहीं होता ] "चिद्रूपत्वात् सर्वं सत्यम्" [ चिद्रूप होने से सब सत्य है ] इस प्रकार योगाचार की शिक्षा से शिक्षित आप का तादृश प्रकाशविषयक सत्यत्व आग्रह समाप्त न होगा तब तक उसे [तादृश भेद] स्वीकार नहीं कर सकते। यदि कहा जाय कि जैसे आप [वेदान्ती] के यहाँ दृष्टिसृष्टिवाद में "इदं रजतम्" "नेदं रजतम्" इन दोनों के प्रतिभास मात्र शरीर होने पर भी कथञ्चित् बाध्यबाधकभाव मानते हैं, उसी प्रकार हमारे [ स्वातन्त्र्यवादी ] यहाँ भी उक्त दोनों ज्ञानों के सत्य होने पर भी बाध्यबाधकभाव मान लिया जायेगा। तो यह कहना उचित नहीं है, क्यों कि मिथ्यात्ववाद में बाध्य-

**पपन्नत्वादनुपपन्नत्वव्याप्यत्वाच्च, मिथ्याभूतस्य च यन्मिथ्यात्वमपि न शक्यं निरूपयितुं तदिदमस्य गण्डस्य स्फोट इव, न पुनः सत्यत्वपर्यवसायि, एवञ्च वेदान्तिनं प्रति यः कोऽपि यस्य कस्यापि महनीयमतेः पर्यनुयोगोऽभूद्भवति भविष्यति वा, स तत्सिद्धान्तानवबोधविलास एव, चितेर्निर्धर्मकत्वेनैव पर्यनुयोगाविषयत्वात्, तदन्यस्य च मायिकस्य वा मायाया वाऽनुपपन्नत्वादेव, रक्तबीजासुरवच्च वेदान्तिनाऽन्येन वा येन केनचिदुक्तस्य चिदतिरिक्तस्य**

खण्डनशारदोक्तयुक्त्या सर्वेषामपि लक्षणादीनां निरासम्भवात् । अत एव—

"अभीष्टसिद्धावपि खण्डनाना-<br>
मखण्डि राज्ञामिव नैवमाज्ञा ।<br>
तत्तानि कस्मान्न यथाभिलाषं ।<br>
सैद्धान्तिकेऽप्यध्वनि योजयध्वम् ॥"

इत्युक्त्या खण्डनयुक्तीनामद्वैताभिमतप्रक्रियायामप्यप्रतिहतप्रसरत्वमुक्तम् । "शास्त्रेषु प्रक्रियाजालैरविद्यैवोपवर्ण्यते" इत्याद्युक्त्या वर्णनीयप्रक्रियाजालस्याविद्यात्मकत्वेनोक्तयुक्त्या तन्निरासेऽपि स्वात्मसिद्धस्य चितः साक्षित्वादेव बाधासम्भवान्न वेदान्तसिद्धान्तहानिः । गण्डस्य स्फोट इवेति । वदनैकदेशार्थकाद् गडिधातोरचि निष्पन्नो गण्डशब्दः । तत्र वदनैकदेशस्य वदनावयवत्वे क्रियावाचित्वाभावाद् गडीत्यस्य धातुत्वानुपपत्त्या वदनैकदेशशब्दो वदनक्रियापर इति शेखरकृता "तत्क्रियायाम्" इत्यादिना व्याख्यातम् । तथा च प्रकृते संजातमुखस्फोटेन "मम मुखे स्फोट" इति वक्तुमशक्यं यथा, तथा मिथ्याभूतस्यापि मिथ्यात्वं निरूपयितुमशक्यमिति मिथ्यात्वेऽप्यनुपपन्नत्वमेवेति भावः । वेदान्तसिद्धान्तस्यापर्यनुयोज्यत्वं स्फुटयति—एवञ्च वेदान्तिनामिति । निगदव्याख्यातम् ।

बाधकभाव अनुपपन्न होकर मिथ्यात्व को ही दृढ़ करता है, क्यों कि "अनुपपन्नत्व ही मिथ्यात्व है चूंकि यह मिथ्यात्वविषयक अन्य परिस्कारों के अनुपपन्न होने से, तथा अनुपपन्नत्वव्याप्य होने से सिद्ध है । और मिथ्यात्व भी अनुपपन्न ही है क्यों कि मिथ्याभूत वस्तु के मिथ्यात्व का भी निरूपण नहीं किया जा सकता, अतः यह गण्ड स्थल के फोड़े के समान है, अर्थात् जैसे मुख में फोड़ा होने पर बोलना सम्भव न होने से फोड़े के विषय में कुछ कहा नहीं जा सकता, उसी प्रकार मिथ्यात्व भी निरूपयितुमशक्य ही है । मिथ्यात्व के मिथ्या होने पर भी सत्यत्व सिद्ध नहीं होता । इस तरह वेदान्ती के प्रति जिस किसी भी विशिष्ट बुद्धिशाली विद्वान् के द्वारा जो कुछ भी आक्षेप किया गया है, या किया जा रहा है, या किया जायेगा, वह सभी वेदान्तसिद्धान्त के अज्ञान का बिलासमात्र है । क्यों कि वेदान्तसिद्धान्त में दो ही पदार्थ है, एक चैतन्य,

निर्वाहकस्य निर्वाह्यस्य वा पदार्थस्य भेदनं द्वैतविभेदाय तर्कासुरशतानि प्रसूते। अधिकं तु शून्यवादे एवोक्तप्रायम्। सत्यत्ववादे तु नैवं शक्यं वक्तुम्, तत्र हि स्तोकतोऽप्यनुपपत्तिः सत्यत्वं न मृष्यते, उपपन्नत्वमेव तद्व्याप्यमेव वा हि सत्यत्वम्।

एतेन—यद् 'व्यवहारस्तु न कदाचिद्वास्तवोऽपि तु भ्रम एव' इतिशिवदृष्टिवृत्तावुत्पलदेवोदितम्, सम्बन्धसिद्धौ च सम्बन्धबुद्धेर्भ्रमत्वमाशङ्क्य विश्वमपीदं चिदभेदाख्यातिमयभ्रान्तिपदमेव, भ्रान्तावपि चास्यां पुनः

सत्यत्वपक्षे बाध्यबाधकभावस्यासाङ्गत्यं दर्शयति—सत्यत्ववादे त्विति। अन्यान्यपि विश्वसत्यत्वविरुद्धानि वाक्यानि दर्शयति—एतेनेति। वक्ष्यमाणदूषणेन। हन्तव्यमिति परेणान्वयः। स्वरूपेण प्रकाशमानस्य शिवरूपतामङ्गीकृत्यापि तद्व्यवहारस्य भ्रमत्वमाह वृत्तावित्याह—व्यवहारस्त्विति। ननु भ्रमात्मकव्यवहारविषयस्यावस्तुत्वात् कथं तस्य वृत्तौ शिवरूपतोक्तेति चेन्नावस्तुनोऽपीश्वरात्मत्वमेवावस्त्वाभासरूपेणैव तस्यावस्थानात्। सम्बन्धसिद्धाविति। एतदभिधानकेग्रन्थे। "कस्तावत्सम्बन्धशब्दार्थः" इत्यतः 'सामान्याद्भ्रान्तिविषयः सम्बन्धः' इत्यन्तेन ग्रन्थेनेत्यादिः। तत्रग्रन्थे 'तदप्यत्यल्पमुक्तमित्युक्त्वा तस्याल्पत्वमुक्त्वा 'न केवलं सम्बन्धस्यैव भ्रान्तिविषयत्वमपि तु सर्वस्यापि विश्वस्येत्यभिप्रायेणाह—विश्वमपीदमिति। चिदभेदाख्यातिमयभ्रान्तिपदमेवेति। चिदभेदख्यातिर्हि प्रमा, सर्वं चिन्मयमित्यात्मिका, तादृशाख्यातिश्चाप्रमा भ्रान्तिस्तद्विष-

दूसरा मायिक अथवा माया। इन दोनों में चैतन्य के निर्धर्मक होने से वह किसी भी आक्षेप का विषय नहीं हो सकता। और उस से भिन्न मायिक अथवा माया तो अनुपपन्न होने से ही आक्षेप का विषय नहीं है। [ अर्थात् आप आक्षेप के द्वारा उस के अनुपपन्नत्व को ही सिद्ध करेङ्गे, वह तो हमारे [ वेदान्ती ] लिए अनुकूल हा है। क्यों कि उस से मिथ्यात्व ही पर्यवसित होगा। ]

वेदान्ती के द्वारा अथवा अन्य जिस किसी के भी द्वारा किया गया-चैतन्य से अतिरिक्त निर्वाहक या निर्वाह्य पदार्थ का भेदन द्वैतनिरास के लिए रक्त बीज के समान शतशः तर्कासुरों को उत्पन्न करता है। इस विषय में विशेष कथन शून्यवाद में किया जा चुका है। किन्तु विश्वसत्यत्ववाद में तो उक्त बाध्यबाधकभाव की उपपत्ति नहीं की जा सकती, क्यों कि सत्यत्ववाद में लेश भी अनुपपत्ति सत्यत्व को सह्य नहीं है। उपपन्नत्व अथवा उपपन्नत्वव्याप्य ही तो सत्यत्व है।

शिवदृष्टि व्याख्या में उत्पलदेव ने कहा है—"व्यवहारस्तु····" व्यवहार तो कदापि वास्तविक नहीं है अपितु भ्रम ही हैं। पुनः उन्होंने ही सम्बन्धसिद्धि में कहा है—"विश्वमपीदं ···· ····" यह समस्त विश्व चिदभेदाख्यातिरूपभ्रान्ति का विषय ही

**स्वप्नद्विचन्द्रादिवद्भ्रान्तता नास्ति संवादाद्' इति तेनैवोक्तम्, यच्च 'रजतैकविमर्शेऽपि' इतीश्वरप्रत्यभिज्ञाकारिकावृत्तौ 'अपूर्णख्यातिरूपाऽख्यातिरेव भ्रान्तितत्त्वम्, तद्वशेनासद्विपरीतानिर्वाच्यादिख्यातयोऽप्युच्यन्ताम्। ननु सत्यरूप्यज्ञानमप्यपूर्णख्यातिः। ततः किम् ? इदम्, अतः सर्वं भ्रान्तिरित्यागच्छेत्।**

असद्विपरीतेति। असत्ख्यात्यन्यथाख्यातीत्यर्थः।

यभूतं सर्वं विश्वमित्यर्थः। ननु सर्वस्य भ्रान्तिविषयत्वे स्वप्नद्विचन्द्रादिवद् बाध्यत्वमपि स्यादिति चेन्न तद्वैलक्षण्यादिति तद्वैलक्षण्यमेव प्रतिपादयति—भ्रान्तावपीति।

अभिनवगुप्तपादोक्तमपि दर्शयति—यच्चेति। अभिनवगुप्तपादैराकलितमित्यन्वयः। रजतैकविमर्शेऽपीति। शुक्तौ न रजतस्थितिः।

'उपाधिदेशासंवादात् द्विचन्द्रेऽपि नभोऽन्यथा' ॥ इतिपूर्णपद्यांशः। अपूर्णख्यादिरूपा, सत्यविमर्शविश्रान्तिपर्यन्तमख्यापनादपूर्णख्यातिः। सत्यविमर्शविश्रान्तिपर्यन्तस्यैव ज्ञानस्य पूर्णज्ञानरूपत्वात्तद्भिन्नस्यापूर्णत्वम्। अपूर्णज्ञानरूपा चाख्यातिरज्ञानम् भ्रान्तितत्त्वम् भ्रान्तिस्वरूपमित्यर्थः। तादृशभ्रान्तिमादायैवान्यैर्वादिभिरसद्विपरीतानिर्वाच्यादिख्यातय उच्यन्ते। तत्र शून्यवादिन "इदं रजतमित्यत्रासदेव रजतं भासते इत्यसत्ख्यातिं वदन्ति। तार्किकादयश्चान्यदेशकालगतं रजतं तद्विपरीतान्यदेशकालगतत्वेन संस्कारवशेन पुरुषो गृह्णातीति विपरीतख्यातिं ब्रुवन्ति। अनिर्वाच्यख्यातिवादिवेदान्तिनस्तु रजतस्य प्रत्यक्षतया भानादसत्त्वायोगात्, बाधितत्वेन हस्तेन गृहीतुमशक्यत्वेन च सत्त्वायोगात् सदसद्भ्यां विलक्षणमनिर्वनीयमेव रजतं भासत इति संगिरन्ते। आदिना विज्ञानवादिनामात्मख्यातिर्ग्राह्या। तथा च ते तथा तथा वदन्तु नाम नास्माकं काचिद्धानिरिति भावः।

ननु तादृशापूर्णज्ञानस्य भ्रान्तित्वे लौकिकपारमार्थिकरजतज्ञानस्य तथात्वेन भ्रान्तित्वं स्यादिति शङ्कते—नन्विति। फलितार्थमाह—अतः सर्वं

है किन्तु भ्रान्ति होने पर भी उस में स्वप्न द्विचन्द्रादि के समान भ्रान्तता नहीं है क्यों कि यहाँ प्रामाणिक व्यवहार का संवाद [ सफल प्रवृत्यादि ] प्राप्त है। "रजतैकविमर्शेऽपि' [ २।३।१३ ] इत्यादि ईश्वर प्रत्यभिज्ञा कारिका की व्याख्या में श्रीअभिनवगुप्तपाद ने कहा है—"अपूर्णख्याति .... × अपूर्णोऽहम् इस प्रकार अपूर्णख्यातिरूप अख्याति ही भ्रान्ति पदार्थ है उसी के द्वारा असत् ख्याति, विपरीतख्याति अन्यथाख्याति ] अनिर्वचनीयख्याति आदि ख्यातियों का भी उपपादन करते हैं। प्रश्न—सत्य रुप्यज्ञान भी अपूर्णख्याति हो जायेगा। उत्तर—रहे, उस से क्या हुआ। प्रश्न—यह हुआ, कि इस से समस्त ज्ञान ही भ्रान्ति रूप ही हो जायेगा। उत्तर–भाग्य से श्रीमान् की दृष्टि

**दिष्ट्या दृष्टिरुन्मिमीलिषति आयुष्मतः, मायापदं हि सर्वं भ्रान्तिः, तत्रापि तु स्वप्ने स्वप्न इव गण्डे स्फोट इवापरेयं भ्रान्तिरुच्यते, अनुवृत्त्युचितस्यापि विमर्शस्यास्थैर्याद्' इत्यभिनवगुप्तपादैराकलितम्, यच्चैतैरेव शैवदर्शनानुसारि-परमार्थसारे—**

'विज्ञानान्तर्यामिप्राणविराड्देहजातिपिण्डान्ताः ।
व्यवहारमात्रमेतत्परमार्थेन तु न सन्त्येव ॥'

भ्रान्तिरित्यागच्छेदिति । भासमानं समस्तमपि वस्तुजातं शुक्तिरूप्यन्यायेन भ्रान्ति-र्भविष्यतीत्यर्थः । व्याख्याता इष्टापत्ति सूचयन् श्रोतुः प्रोत्साहं करोति–दिष्ट्येति । दृष्टेरून्मेलनम् याथार्थ्यपरिज्ञानं पूर्णख्यात्यात्मकम् । मायापदं मायाविषयो भेदः । ननु सत्यतया भासमानपदार्थस्य भ्रमत्वे कस्तर्हि प्रसिद्धो भ्रम इत्यत आह—तत्रापीति । अपरा प्रसिद्धा भ्रान्तिः । सत्यरूप्यज्ञानस्य भ्रान्तित्वे हेतुमाह—अनुवृत्त्युचितस्यापीति । अनुवृत्तौ उचित इत्यनुवृत्त्युचितस्तस्य । अपिना, प्रसिद्धभ्रान्तिपरामर्शस्यास्थैर्यं दृष्टान्तीकृतम् ।

यच्चैतैरेवेति । अभिनवगुप्तपादैरेवेत्यर्थः । विज्ञानेति । विज्ञानमेव क्षणिक-मनादिवासनावशाद् नीलाद्याकारेण बहिरवभासते इति विज्ञानवादिनो बौद्धाः । अस्तिविज्ञानात्मान्तर्यामी "पुरुष एवेदं सर्वमि"त्यादि श्रुतिसिद्धः, तस्यैवानाद्य-विद्यावशाद् विवर्तः प्रपञ्च इति ब्रह्मवादिनः । प्राण एव ब्रह्मणोरूपम्, तस्यैव विस्तारः प्रपञ्च इति प्राणोपासकाः । अन्ये विराड्देह एवं ब्रह्मणः स्वरूपम्, स च "यस्याग्निरास्यं द्यौर्मूर्धा-इत्याद्युक्त्या सर्वात्मा तत एव जगदुत्पत्तिरिति स्वीकुर्वन्ति । वैशेषिकास्तु महासत्तासामान्यलक्षणजातेरेव पारमार्थिकत्वमभ्युप गच्छन्ति । ततोऽपीतरे केचिज्जातिं विहाय पिण्डात्मकव्यक्तीनां सत्यत्वं प्रति-पादयन्ति । एवं विज्ञानादारभ्य पिण्डान्तं सर्वमपि वस्तुतः व्यवहारमात्रम् संवृतिसत्त्वमेव तेषाम्, नतु परमार्थतः सन्तीत्यर्थः । रज्वां नास्ति भुजङ्ग इति ।

खुलना चाहती हैं, क्यों कि माया का विषय सम्पूर्ण विश्व भ्रान्ति ही है, किन्तु उस में भी स्वप्न में स्वप्न के समान तथा कपोल में फोडे के समान यह एक दूसरी भ्रान्ति है जो "इदंरजतं' इत्यादिव्यवहार में होती है । यहाँ अनुवृत्ति के योग्य होने पर भी विमर्श की स्थिरता नहीं है । एवं पुनः उन्होंने ही शैवदर्शनानुसारिपरमार्थसार में कहा हैं— "विज्ञानान्तर्यामि ...... ......' "विज्ञान अर्थात् उपाधिशून्य क्षणिकविज्ञान ही नामरूप रहित होते हुये भी अनादि वासनाओं के प्रबुद्ध होने पर बाह्यनीलादिरूप से भासित होता है 'यह विज्ञानवादी का कथन, "सब का अन्तर्यामी ब्रह्म ही है वह शुद्ध होते हुये भी अनादि अविद्यावशात् भिन्न भिन्न रूप से भासित होता है , यह ब्रह्मवादियों का कथन, "प्राण सम्पूर्ण विश्व को व्याप्त करके रहता है अतः प्राण ही ब्रह्म का स्वरूप

**'रज्ज्वां नास्ति भुजङ्गस्त्रासं कुरुते च मृत्युपर्यन्तम् ।**
**तद्वद्धर्माधर्मस्वर्निरयोत्पत्तिमरणसुखदुःखम् ।**
**वर्णाश्रमादि चात्मन्यसदपि विभ्रमबलाद्भवति'**

**इति भाषितम्, तत्सर्वं तेषामेव प्रपञ्चस्य सत्यत्वप्रतिपादकवाक्यैर्व्याहतमिति—हन्तव्यम् ।**

परमार्थत इति शेषः । अक्षरार्थस्तु सुगमः । "भ्रान्तेर्महती शक्तिर्न विवेक्तुं शक्यते नाम" इति चोत्तरार्द्धम् । तद्वदिति । यथा रज्जुः परमार्थसती भ्रान्त्या सर्पतया विमृष्टापि सर्पगतामर्थक्रियां करोति, तथैवात्मनि परमार्थतोऽसदपि धर्मादि विभ्रमबलाद् भासते । तत्र धर्मोऽश्वमेधादिः । अधर्मो ब्रह्महननादिः । स्वर्निरतिशया प्रीतिः, निरयो यातना, उत्पत्तिर्जन्म, मरणं देहत्यागः, सुखमाल्हादः, दुःखम् राजसः क्षोभः, वर्णो ब्राह्मणत्वादिः, आश्रमो ब्रह्मचर्यादिः, आदिना तपः पूजाव्रतानि ग्राह्याणि । सत्यत्वप्रतिपादकवाक्यैरिति । प्रकाशमानं न पृथक्प्रकाशादित्यादिभिः ।

है, यह प्राणात्मवादियों का कथन, "विराट् ही ब्रह्म का यथार्थ स्वरूप है,, यह विराट्-देहवादियों का कथन, "महासत्ता ही सामान्य पदार्थ है वही जाति शब्द से कही जाती है,," यह जातिवादिवैशेषिकों का कथन, तथा सभी व्यक्तियाँ परमार्थसत्य है,, यह व्यक्तिवादियों का कथन, सब व्यवहार मात्र ही है । परमार्थ दृष्टि से कुछ भी नहीं है, केवल परमप्रकाश परमार्थ स्वतन्त्र चैतन्य महेश्वर ही सत्य है । "रज्वां नास्ति ....." वस्तुतः रज्जु में भुजङ्ग [ सर्प ] नहीं है, तथापि उस की भ्रान्ति मृत्युपर्यन्त कष्ट प्रद है । उसी प्रकार अश्वमेध आदि धर्म, ब्राह्मण बधादि अधर्म, स्वर्ग, नरक, जन्म, मरण, सुख, दुःख, ब्राह्मणादि वर्ण एवं ब्रह्मचर्यादि आश्रम सभी वस्तुतः आत्मा में न होते हुये भी विभ्रमबलाद् भासित होते हैं । यह सभी उत्पलदेवादि के कथन—सत्यत्ववाद में यत्किञ्चित् अनुपपत्ति भी सह्य न होने से उन्हीं के प्रपञ्चसत्यत्वप्रतिपादक बचनों से व्याहत होने से निरस्त हो जाते हैं । [ तात्पर्य यह है कि स्वातन्त्र्यवादी प्रपञ्च को सत्य मानता है अतः उसके द्वारा प्रपञ्च को मिथ्या कहना सम्भव नहीं है और यदि वह मिथ्या कहता है तो उसका अपसिद्धान्त होता है । इस लिए सत्यत्ववादी विश्व को सत्य मानने में लेश भी अनुपपत्ति को सहन नहीं कर सकता, अन्यथा सत्यत्व ही सिद्ध न होगा, और ' इदं रजतं नेदं रजतं इत्यादि सब को सत्य मानने पर तो अनुभूयमान बाध्यबाधकभाव ही अनुपपन्न हैं अतः उस अनुपपत्ति के तथा मिथ्यात्वप्रतिपादक आगम वचनों के उपस्थित होने के कारण सबको सत्य न मान कर स्वातन्त्र्यवादी को भी हठात् विवर्तवाद ही मानना होगा ।]

**किञ्चैतादृशवचोभिः सत्तात्रैविध्यं भवद्भिर्हृदयङ्गमी कृतमिति व्यज्यते । अथास्त्वेवमेव, प्रातिभासिकव्यवहारिकपारमार्थिकभेदेन सत्तानानात्वोपगमे क्षत्यभावात् । इयांस्तु विशेषः, यद्भवन्मते प्रातिभासिकव्यावहारिकसतोर्मिथ्यात्वम्, मन्मते तु प्रकाशमानतया सत्यत्वम्, सत्येऽपि चोत्कर्षापकर्षप्रथा स्वातन्त्र्यमूला, आहुश्चाभिनवगुप्तपादाः—'चेतन एव तु तथा तथा भवति**

सत्तात्रैविध्यमिति । "सच्च त्यच्चाभवत्" ( तै. २।६ । "अथ रथान् रथयोगान् पथः सृजते" ( बृ० ४।३।१० ) "एकमेवाद्वितीयम्" नेहनानास्तिकिञ्चन" इत्यादिश्रुतिसिद्ध "त्रिकालाबाध्यत्वब्रह्मज्ञानमात्रबाध्यत्वब्रह्मज्ञानेतरबाध्यत्वेत्यादिलक्षणलक्ष्यं वेदान्त्यभिमतं सत्तात्रैविध्यं पारमार्थिकत्वव्यावहारिकत्वप्रातिभासिकत्वाख्यमित्यर्थः। भवद्भिरपि = आगमिकैरपि। सर्वस्य भ्रान्तित्वस्वीकारे तदधिष्ठानस्य चितोऽवश्यं पारमार्थिकत्वमभ्युपेयमेव। तथा च चितः पारमार्थिकत्वम्, तदतिरिक्तस्य संवादादित्याद्युक्त्याव्यावहारिकी सत्ता, स्वप्नादेः "स्वप्नद्विचन्द्रादिवद्भ्रान्तता नास्ति संवादादित्युक्त्या व्यावहारिकापेक्षया न्यूनसत्ताकत्वबोधनात्, तदतिरिक्तस्य च वैलक्षण्यासम्भवात् प्रातिभासिकी सत्ता, एवं स्वप्ने स्वप्न इवेत्युक्त्यापि। तत्रेष्टापत्तिं शङ्कते—अथास्त्वेवमेवेति।

नन्वेवं सर्वं सत्यमिति तवसिद्धान्तो भज्येतेतिचेन्नेत्याह—इयांस्तुविशेष इति। अथवा—सत्तात्रयपक्षस्वीकारेऽपि वेदान्तसिद्धान्ततः स्वसिद्धान्तस्य वैशिष्ट्यं दर्शयति—इयांस्तु विशेष इति। ननु सर्वसत्यत्वे प्रातिभासिकव्यावहारिकयोरुत्कर्षापकर्षौ कथं स्यातामिति तत्राह–सत्येऽपीति। तथा च भगवत्स्वातन्त्र्यमेव प्रकाशात्मनि तौ विशेषाविति नैतच्चित्रम्, स्वातन्त्र्यादेव। तत्राचार्यसंवादं दर्शयति—आहुश्चेति। तथा तथा—उत्कर्षाद्यात्मना। भगवान् समस्तैश्वर्यसम्पन्नः।

किञ्च एतादृश आगम वचनों के द्वारा आप ने भी सत्ता के त्रैविध्य (प्रातिभासिक व्यवहारिक पारमार्थिक) को हृदय से मान लिया है ऐसा व्यक्त होता है। **प्रश्न**— अस्तु मान लिया, क्योंकि प्रातिभासिक व्यावहारिक पारमार्थिक भेद से सत्ता को नाना मानने में हमारी कोई क्षति नहीं है। अन्तर इतना ही है कि आप ( वेदान्ती ) के मत में प्रातिभासिक एवं व्यावहारिक सत्ता को मिथ्या मानते हैं। और मेरे ( स्वातन्त्र्यवादी ) मत में तो प्रकाशमानतया उनको भी सत्य मानते हैं। दोनों के सत्य होने पर भी उत्कर्ष अपकर्ष प्रथा स्वातन्त्र्यमूलक है। [ अर्थात् स्वातन्त्र्यवशात् प्रातिभासिक की अपेक्षा व्यावहारिक सत्ता का उत्कर्ष माना जाता है ]। जैसा कि अभिनव गुप्तपाद ने कहा है—"चेतन एव....' नियति के अतिक्रमण में परमस्वतन्त्र अनन्त ऐश्वर्यों से खचित चेतन भगवान् महादेव परमशिव ही तथा तथा घटादि

भगवान् भूरिभर्गो महादेवो नियत्यनुवर्तनोल्लङ्घनघनतरस्वातन्त्र्यः' इति । असारमिदम्, उत्कर्षापकर्षौ वास्तवौ वाऽवास्तवौ वा, आद्ये त्याज्योऽद्वैताभिनिवेशः, न चोत्कर्षापकर्षयोश्चिदात्मकत्वेऽपि चितो न तदात्मकत्वमिति नाद्वैतक्षतिः; अस्य पक्षस्य द्वैतमिथ्यात्वे पर्यवसानस्य वक्ष्यमाणत्वात् । द्वितीयस्तु विवर्तवादस्यैवोद्गार इति स्वागतं विधीयतां तस्य । न च प्रकाशात्मना वास्तवत्वेऽपि बाह्यरूपेणावास्तवत्वमिति वाच्यम्, बाह्यत्वं नाम प्रकाशभिन्नत्वम्, अन्यस्यासम्भवात्, तथा च तदपि वास्तवं वाऽवास्तवं वेति विकल्पकवलितमेव ।

अवास्तवं वेति । नच प्रकाशभिन्नत्वमपि स्वविषयप्रकाशात्मना वास्तवम्, अन्यथा त्ववास्तवमिति वाच्यम्, प्रकाशभिन्नत्वविषयकप्रकाशो यद्युपाधिसम्भिन्नस्तदा सोऽप्यवास्तव इति तेनात्मना कस्यचिद्वास्तवत्वं कथम्, यदि त्वसौ शुद्धस्तदाऽसम्भवः, नहि घटात्मको घटभेदः, तथासति घटाभाववति घटभिन्ने घटवत्ताप्रत्ययप्रमात्वप्रसङ्गात् । अत्र भेदाभेदेन समाधाने तु प्रकाशभिन्नत्वतद्विषयकप्रकाशयोरपि भेदाभेदस्योपगन्तव्यत्वे

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना ॥
उत्पत्तिञ्च विनाशञ्च भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति ॥

इत्याद्युक्तेः । यतो भूरिभर्गः, स्वात्मशक्त्युपबृंहितानन्तशक्तिखचितः । यतो महादेवः ।

अथवा भूरिभर्गः महाप्रकाशात्मा, कामाद्यखिलदोषाणामतिशयेन भञ्जको वा । समाधत्ते—असारमिदमिति । उत्कर्षापकर्षयोश्चिदतिरिक्तत्वेन भासमानयोश्चिद्वत्पारमार्थिकत्वे द्वैतापत्तिः स्यादित्याशयेन पारमार्थिकत्वपक्षमपहस्तयति-आद्ये इति । द्वितीयस्य स्वाभिमतत्वं स्फोरयति—द्वितीयस्त्विति ।

रूपेण भासित होते हैं' । उत्तर - यह आपका कथन असारभूत है, क्योंकि उत्कर्षापकर्ष वास्तविक है, या अवास्तविक, यदि उसे वास्तविक ( सत्य ) माने तो आप को अद्वैत का आग्रह परित्याज्य होगा । यदि कहें कि—उत्कर्ष अपकर्ष के चिदात्मक होने पर भी चित् तद्रूप ( उत्कर्षापकर्ष ) नहीं है, अतः अद्वैतक्षति नहीं है तो आप के इस कथन का द्वैतमिथ्यात्व में पर्यवसान वक्ष्यमाण है, और यदि उसे ( उत्कर्षापकर्ष ) अवास्तविक ( मिथ्या ) माने तो यह विवर्तवाद का ही उद्गार मात्र है, अतः आप का स्वागत है । यदि कहा जाय कि प्रकाशात्मना सत्य होने पर भी बाह्यरूपेण अवास्तविक है, तो यह कथन उचित नहीं है क्योंकि अन्यपरिस्कार के सम्भव न होने से प्रकाशभिन्नत्वरूप ही बाह्यत्व कहना होगा, तथा च वह भी 'वास्तव है या अवास्तव' इस विकल्प से ग्रस्त है ।

**एतेन—शैवग्रन्थेसु 'विश्वमनतिरिक्तमप्यतिरिक्तमिव भासते' ज्ञान न भवतो भिन्नं ज्ञेयं ज्ञानात्पृथङ् नहि। अतो न त्वितरत्किञ्चित्तस्माद्भेदो न वास्तवः' इत्यादिव्यवहाराणां विवर्तवादं विनाऽसाङ्गत्यमवगन्तव्यम्।**

**यदपि बाह्याभाससम्भिन्नं चैतन्यमेव ज्ञानशक्तिरित्यादिरीत्या ज्ञानेच्छाक्रियाशक्तीनां निरूपणम्, तदप्येतेन निरस्तम, बाह्यत्वस्य बाह्याभाससम्भेदस्य च चेतने उक्तरीत्यैव विकल्प्यत्वात्। एवञ्चोक्तशक्तित्रयस्य विवर्तान्तःपातित्वमेवायाति चिच्छब्दस्तु ब्रह्मपर्याय इति चिच्छक्तेः सत्यत्वमेव, यदाहुः**

भेदस्य वास्तवावास्तवत्वे विकल्पनीये। वस्तुतस्तूपाधिविधुरप्रकाशे किञ्चिद्विषयकत्वानुपपत्त्याऽप्यसम्भव उद्भावनीयः। प्रकाशात्मना वास्तवत्वस्य च प्रकाशस्यैव वास्तवत्वे पर्यवसानं परतो वक्ष्यते, प्रकाशविषयत्वं च मिथ्यात्वस्यैव व्याप्यमित्यपि वक्ष्यमाणमेव। अवास्तवत्वं तु यद्यलीकत्वम्, तदा व्यवहारविशेषो विरुध्यते, जगति शिवभेदस्यालीकानुपपाद्यव्यवहारविषयत्वात्, यदि तु मिथ्यात्वम्, तदा विवर्तवादप्रसङ्ग उक्त एवेतिभावः।

शैवग्रन्थोक्तव्यवहारान्यथानुपपत्त्यापि विवर्तवादः सिध्यतीत्याह—एतेनेति। अर्थस्त्वतिरोहितः।

आगमोक्तज्ञानेच्छाक्रियाशक्तीनामपि विवर्तत्वं स्फुटयति—यदपीति। ज्ञानेच्छाक्रियाशक्तीनां विषयविशिष्टचैतन्यरूपतया विषयाणां विवर्तत्वेन तद्विशिष्टचैतन्यस्यापि विवर्तत्वात्। नन्वेवं तर्हि चितोऽपि मिथ्यात्वं स्यात्, नेत्याह—चिच्छब्दस्त्विति। तथा चाधिष्ठानभूतं ब्रह्मैव चिच्छब्दार्थः। तस्य-चाधिष्ठानतया सत्यत्वेन तत्स्वरूपभूतायाश्चिच्छक्तेरपि सत्यत्वम्।

चिच्छक्तेर्ब्रह्मत्वं गौड़पादाचार्योक्त्या पुष्णाति—यदाहुः श्रीविद्यारत्नसूत्रविधातार इति। गौड़पादाचार्या इति शेषः। "आत्मैवाखण्डाकार इति। आत्मा निरवच्छिन्नं चैतन्यं, स एवाखण्डाकारः। एवकारेण परिच्छिन्नात्मनो व्यावृत्तिः। अन्तःकरणादिना परिच्छिन्नस्य परिच्छिन्नत्वादेव प्रादेशिकत्वेन

'विश्व....'। विश्व चैतन्य से अतिरिक्त ( भिन्न ) न होने पर भी अतिरिक्त सा प्रतीत होता है' 'ज्ञानं न भवतो....'। ज्ञान आत्मा से भिन्न नहीं है और ज्ञान से भिन्न ज्ञेय नहीं है अतः चैतन्य से अतिरिक्त कुछ न होने से भेद वास्तविक नहीं हो सकता'। इत्यादि शैवग्रन्थोक्तव्यवहार भी विवर्तवाद के बिना अनुपपन्न हैं।

'बाह्याभास से विशिष्ट चैतन्य ही ज्ञानशक्ति है' इत्यादिरीति से ज्ञान-इच्छा-क्रियाशक्तियों का जो निरूपण किया गया है, वह भी इससे निरस्त हो जाता है क्योंकि बाह्यत्व और बाह्याभाससम्भेद ( बाह्याभासवैशिष्ट्य ) भी चेतन में वास्तव है या अवास्तव इत्यादि उक्तविकल्पों से पराहत है। इससे सिद्ध है कि उक्तशक्तित्रय भी विवर्तान्तःपाती ही है। चित् शब्द तो ब्रह्म का पर्याय है। अतः चित् शक्ति सत्य ही

श्रीविद्यारत्नसूत्रविधातारः 'आत्मैवाखण्डाकारः' 'चैतन्यस्वरूपा चिच्छक्तिः' इति। 'सत्यं ज्ञानम्' इति श्रुतौ तु चैतन्याभिप्रायेणैव ज्ञानशब्दप्रयोगो ननु बाह्याभाससम्भिन्नाभिप्रायेणेति न तद्विरोधः। वस्तुतस्तु यदष्टात्रिंशं तत्त्वं "घटमहं जानामि" इति यत्किञ्चिज्ज्ञातृत्वमेव, नतु सर्वज्ञातृत्वम्, अतस्तस्य खण्डाकारत्वमेव प्रसिद्धम्। ननु निरवच्छिन्नस्य तस्य कथमाकारवत्त्वं "असङ्गोह्ययं पुरुषः" "असङ्गो नहि सज्जते" इत्यादिश्रुत्या तस्यासङ्गत्वप्रसिद्धेः, आकारवत्त्वे च तस्य परिच्छिन्नत्वानित्यत्वापत्तेरितिचेन्मैवम् अखण्डत्वमेवाकार इत्यखण्डाकार इति विवक्षितत्वात्। अखण्डत्वञ्चैकत्वमद्वैतमिति यावत्। तदेवाकारः—स्वरुपं तस्य चैतयन्स्य, नह्युपाधिसम्बन्धमन्तरा तत्र कश्चन भेदो भवति। तथा च श्रुतिः–"एकमेवाद्वितीयम्" एको देवः सर्वभूतेषु गूढः" इत्यादि। अनुमानञ्च—चैतन्यं नित्यमेकञ्चोपाधिपरामर्शमेन्तरेणाविभाव्यमानभेदत्वात्-परमते गगनवदिति।

नन्वेवं सिद्धान्ते जीवस्यापि "नान्यतोऽस्तिद्रष्टा" इत्यादिश्रुत्या निरवच्छिन्नचैतन्यानतिरिक्तत्वबोधनात् तस्यापि तादृशत्वं स्यादिति चेत्परमार्थदृष्ट्या त्विष्टापत्तेः। "तत्सृष्ट्वा तदेवानुप्राविशत्" इति परस्यैव जीवात्मना प्रवेशश्रवणात्। व्यावहारिक्यां तु दशायामुपाधिभेदमादायैव भेदः। "चैंतन्यस्वरुपा चिच्छक्तिरिति। चैतन्यस्य ब्रह्मणः स्वरूपा चिच्छक्तिः। चैतन्यस्येति षष्ठीचौपचारिकी, राहोः शिरः, पुरुषस्य चैतन्यमितिवद्बोध्या। तथा च ब्रह्मैव चिच्छक्तिरिति भावः।

ननु ज्ञानशक्ते मिथ्यात्वे "सत्यं ज्ञानमनन्तं ब्रह्म" त्यत्रापि ज्ञानं मिथ्या स्यात्, तथा सति तत्स्वरुपस्य ब्रह्मणोऽपि तथात्वापत्तिरितिचेत्तत्राह—सत्यं ज्ञानमिति। वस्तुस्थितिमादर्शयति—वस्तुतस्त्विति। अष्टात्रिंशत्तत्त्वञ्चोपवर्णितम्-तन्त्रालोकादौ—

चिन्मात्रमेव देवी च सापरा परमेश्वरी।
अष्टात्रिंशं च तत्तत्वं हृदयं तत्परात्परम्॥

इत्यादिना। अत्रापि च प्राक् स्वातन्त्र्यवादे। वेदान्तिनां निर्विशेषं ब्रह्म परिच्छेदत्रयशून्यं तदेवागमोक्ता चितिरिति चितेरागमोक्तं तादृशं स्वरुपं दर्शयितुं शाक्तदर्शनोक्त वाक्यमुपस्थापयति—त्रिपुरेति। त्रिभ्यः पुरेति व्युत्पत्या त्रिमूर्ति-

है, जैसा कि—श्रीविद्यारत्नसूत्रकार ने कहा है—'आत्मैवाखण्डाकारः' 'चैतन्य स्वरूपा चिच्छक्तिः' ( ३-४ )। 'सत्यंज्ञानम्' इसश्रुति वाक्य में तो केवल चैतन्य के अभिप्राय से ज्ञान शब्द प्रयुक्त है न कि विषयविशिष्टचैतन्य के अभिप्राय से,। अतः उसका विरोध नहीं है।

वस्तुतस्तु पूर्ववर्णित अड़तीसवा तत्त्व ही उपनिषद् प्रतिपाद्य चित्तत्त्व है।

प्रागुपवर्णितं सैवौपनिषदी चितिः, अन्यत्तु सर्वं शबलान्तःपाति । उक्तञ्च शाक्त-दर्शने त्रिपुरारहस्यज्ञानखण्डे—

त्रिपुराऽनन्तशक्त्यैक्यरूपिणी सर्वसाक्षिणी ।
सा चितिः सर्वतः पूर्णा परिच्छेदविवर्जनात् ॥ इति

त्रिपुरा हरिहरादित्रिकादपि पूर्वं सद्भावात्,

'त्रिमूर्तिसर्गाच्च पुराभवत्वात्त्रयीमयत्वाच्च पुरैव देव्याः ।

सर्गपूर्वभाविनश्चित्तत्त्वस्य त्रिपुरेति नाम । साचानन्तशक्त्यैक्यरुपिणी, "शक्त-योऽस्यजगत्सर्वमित्याद्युक्त्या घटाद्याभासरूपा अनन्ता याः शक्तयस्तासामैक्यं सङ्घट्टस्तद्रुपिणी । यथा दर्पणे भासमानानां नानाविधपदार्थानां दर्पण एवैकं वास्तविकं रूपम्, तद्वदितिभावः । सा च सर्वसाक्षिणी, यत; साचितिः चिद्रुपा-नतु जड़ा, अतः सर्वसाक्षिणी । सर्वतः पूर्णा परिच्छोदविवर्जनात् परिच्छेद त्रयशून्यत्वादित्यर्थः । परिच्छोदशून्यत्वञ्चास्यास्तत्रैवोपवर्णितम्—

कालो देशश्च लोकेऽस्मिन्परिच्छेदकरः स्मृतः ।
तत्राकारमयो देशः कालस्तु स्यात् क्रियामयः ॥
यां चितिं समुपाश्रित्य स्यादाकारः क्रियापि वा ।
तस्याः परिच्छेदकत्वमनयोः स्यात् कथं वद ॥
कस्मिन् देशे च काले च चितिर्नास्तीह तद् वद ।
यत्र न स्याच्चितिः सोऽपि कथं स्यादिति वै भवेत् ॥
(त्रि० र-ज्ञा. ११।४६-४८)

वस्तुपरिच्छेदशून्यत्वस्याप्युपलक्षणमेतत् । त्रिमूर्तिसर्गपूर्वभावित्वात् त्रिपुरेति नामेति भगवत्पादोक्त्या द्रढयति—त्रिमूर्तिसर्गाच्चेति । हरिहरविरञ्चिमूर्तित्रयात् प्राक् सद्भावात्, पुरैव देव्यास्त्रयीमयत्वाच्च । त्रयीमयत्वञ्चास्याः सच्चिदानन्दरूपत्वम् । त्रैलोक्यालयेऽपि पूरणत्वात् । अम्बिका सर्ववाङ्मया-धिष्ठात्री वर्णभिमानिनी देवता । अन्यत्राप्यत्र—

ब्रह्मविष्णुमहेशाद्यैस्त्रिदशैरर्चिता पुरा ।
त्रिपुरेति सदा नाम कथितं दैवतैस्तव ॥ (वारा० तन्त्र)

तदतिरिक्त सभी पदार्थ शबलान्तः पाती ( मायाराज्यान्तः पाती ) है । शाक्तदर्शन के त्रिपुरारहस्य ज्ञानखण्ड में कहा है—'त्रिपुरानन्त·····' । जो चिति, ( चैतन्य ) घटाद्या-भासरूप अनन्त शक्तियों की ऐक्य ( संघट्ट ) रूप है, सर्वसाक्षी है तथा परिच्छेदशून्य होने से सर्वतः परिपूर्ण है, वही त्रिपुरा है । हरिहर तथा ब्रह्मा इन तीनों से भी पूर्व विद्यमान होने से उसे त्रिपुरा कहते हैं ।

प्रपञ्चसार में श्रीभगवत्पाद ने भी कहा है—त्रिमूर्तिसर्गाच्च················।

लये त्रिलोक्या अपि पूरणत्व त्प्रायोऽम्बिकायास्त्रिपुरेति नाम' इति प्रपञ्चसारे श्रीभगवत्पादोक्तेः। शक्तिशब्दस्तु तत्वपर्यायः 'स्वरूप-

ब्राह्मी रौद्री वैष्णवीति शक्तयस्तिस्र एव हि।
पुरं शरीरं यस्याः सा त्रिपुरेति प्रकीर्तिता ॥ (पुरश्चर्य०)
त्रिकोणं मण्डलं यस्या भूपुरञ्च त्रिरेखकम्।
मन्त्रोऽपि त्र्यक्षरः प्रोक्तस्तथा रूपत्रयं पुनः॥
त्रिविधा कुण्डली शक्तित्रिदेवानाञ्च तुष्टये।
सर्वं त्रयं त्रयं यस्मात्तस्मात्तु त्रिपुरा मता॥ (ल० स० भा०)
मूर्तित्रयस्यापि पुरातनत्वात्।
तदम्बिकायास्त्रिपुरेति नाम॥ (ल० स० भा०)
नाडीत्रयं तु त्रिपुरा सुषुम्णा पिङ्गला इड़ा।
मनो बुद्धिस्तथा चित्तं पुरत्रयमुदाहृतम्॥
तत्र तत्र वसत्येषा तस्मात्तु त्रिपुरा मता॥ (ल० स०)

अत एव— देवानां त्रितयी त्रयो भुजभुजां शक्तित्रयं त्रिस्वरा-
स्त्रैलोक्यं त्रिपदी त्रिपुकरमथो त्रिब्रह्मवर्णास्त्रयः।
यत्किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गादिकं,
तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः॥

इतिलध्वाचार्योक्तिरपि संगच्छते।

अथवा—त्रिपुरस्य परमशिवस्य राजमहिषी सुन्दरी भार्या त्रिपुरा। अत्र त्रीणि पुराणि ब्रह्मविष्णुशिवशरीराणि यस्य सस्त्रिपुरः परमशिवः। तदुक्तम् कालिका पुराणे—

प्रधानेच्छावशाच्छम्भो शरीरमभवत्त्रिधा।
तत्रोर्ध्वभागः संजातः पञ्चवक्त्रचतुर्भुजः॥
पद्मकेसरगौराङ्गः कायो ब्राह्मो महेश्वर।
तन्मध्यभागो नालोङ्ग एकवक्त्रश्चतुर्भुजः॥
शङ्खचक्रगदापद्मपाणिः कायः स वैष्णवः।
अभवत्तदधो भागो पञ्चवक्त्रचतुर्भुजः॥
स्फटिकाभ्रमयः शुक्लः स कामश्चन्द्रशेखरः।
एवं त्रिभिः पुरैर्योगात् त्रिपुरः परमः शिवः॥इति॥ (का० पु०)

निर्विशेषे ब्रह्मणि शक्तिशब्दप्रयोगोऽपि न विरुद्ध इत्याह—शक्तिशब्द-स्त्विति। शक्तिशब्दस्य तत्त्वपर्यायित्वं योगदर्शनोक्त्या प्रमाणयति—स्वरूपप्रति-

ब्रह्म-विष्णु-रूद्रात्मक त्रिमूर्ति के पूर्व विद्यमान होने से, ब्रह्म विष्णु रूद्र एतत्त्रितयात्मक होने से अथवा सतचित् आनन्द रूप होने से तथा त्रैलोक्य के प्रलय काल में भी पूर्ण होने से अम्बिका त्रिपुरा नाम से विख्यात है।

शक्तिशब्द तत्व का पर्याय है, "स्वरूप प्रतिष्ठा वा चिति शक्तिः कैवल्यम्"

प्रतिष्ठा वा चितिशक्तिः कैवल्यम्' 'चितिशक्तिरप्रतिसङ्क्रमा'इति योगनिबन्धेषु तथा दर्शनात्। 'शक्तयोऽस्य जगत्कृत्स्नम्' इत्यभिप्रायेण त्वनन्तेत्युक्तम्, यथा च शक्त्यन्तराणां विवर्तत्वेऽपि 'अनन्तशक्त्यैक्यरूपिणी' इत्यनेन 'एवं जगच्चिदात्मैकरूपं सत्यमुदीरितम्' इत्युक्तज्ञानखण्डवाक्यान्तरेण च न विरोधस्तथाऽनुपदं वक्ष्यामः। चितिरिति शक्तिरिति स्त्रीलिङ्गशब्दप्रयोगस्तु भावनाविशेषायत्तः, वस्तुतस्तु निर्विशेषतैव, तदुक्तं तत्रैव—

'न स्त्री न षण्ढो न पुमांस्त्रिपुरा चिच्छरीरिणी।

चितिशक्तिरिति। शक्यप्रतियोगिकत्वविवक्षया चितौ शक्तिपदप्रयोग इत्यपि केचित्।

ष्ठेति। स्वरूपं ह्यनौपाधिकं चैतन्यं तद्रूपेणैव प्रतिष्ठिता चितिशक्तिश्चित्तत्त्वं कैवल्यमित्यर्थः। अत्र मिश्रपादा अपि–'न जातु कूटस्थनित्या चितिशक्तिः स्वरूपाच्च्यवते तेन यथा निरोधे तथैव व्युत्थानेऽपि, न खलु शुक्तिकाया प्रमाणविपर्ययज्ञानगोचरत्वेऽपि स्वरूपोदयव्ययौ भवतः प्रतिपत्ता तु तथाभूतमप्यतथाभूतत्वेनाभिमन्यते" इत्यवोचन्। "चितिशक्तिरपरिणामिन्यप्रतिसङ्क्रमा" इतिभाष्योक्तिः। "यतश्चितिशक्तिर्धर्मलक्षणावस्थालक्षणपरिणामशून्या, अतः कार्यजननाय प्रतिसञ्चारविहीना" इति तदर्थः। शक्तयोऽस्य जगत्कृत्स्नमिति।

शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते।
शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तु महेश्वरः॥

इति समग्रं पद्यम्। एतच्च परमार्थसारविवृतौ (पृ० १०) श्रीसर्वमंगलाशास्त्रश्लोकत्वेनोद्घृतम्।

ननु ज्ञानेच्छादिशक्तीनां विवर्तान्तःपातित्वस्योक्तत्वात्, तासां परिच्छिन्नचिद्रूपतया सत्यत्वोक्तिरसङ्गतेति चेत्तत्राह—यथाचेति। भावनाविशेषायत्तइति। मातृभावनाधीन इत्यर्थः। निर्विशषरूपत्वे आगमोक्तिं दर्शयति—न स्त्री न षण्ढ इति। अवाङ्मनसगम्येति। अत्र श्रुतिरपि—"न तत्र चक्षुर्गच्छति

( स्वस्वरूप में प्रतिष्ठित चित्तत्त्व ही कैवल्य है ) "चितिशक्तिरप्रतिसङ्क्रमा" ( चितिशक्ति अपरिणामिनी है अतएव परिणत कार्यों में असङ्क्रान्त है ) इत्यादि योगदर्शनोक्त वाक्यों में शक्ति शब्द तत्त्वअर्थ में प्रयुक्त देखा जाता है। "शक्तयोऽस्य जगत्सर्वम् ( समस्त जगत् पारमेश्वरशक्ति समुदाय ही है )। इसी अभिप्राय से उसे अनन्त कहा है। ज्ञानेच्छाक्रिया आदि शक्त्यन्तर को विवर्त मानने में "अनन्त शक्त्यैक्यरूपिणी" इस वाक्य का एवं "जगच्चिदात्मैकरूपं सत्यमुदीरितम्" इस ज्ञानखण्डोक्त वाक्य का विरोध जिस प्रकार नहीं है उसका प्रतिपादन आगे करेंगे। चिति, शक्ति, इत्यादि स्त्री लिङ्ग शब्दों का प्रयोग तो भावनाविशेष के अधीन है अर्थात् उपासक की मातृभावना के कारण उस निर्विशेष तत्त्व के लिए स्त्रीलिङ्ग शब्दों का प्रयोग होता है। वस्तुतस्तु वह

अवाङ्मनसगम्या सा चेत्यनिर्मुक्तचिन्मयी' ॥ इति चेत्यनिर्मुक्तेत्यनेन चिद्भास्यस्य मिथ्यात्वं सूचितम्। अतएव पदार्थानां स्वभावस्य दुर्विवेकत्वेन विचारासहत्वमालोच्य तत्र—

'अत एव हि भावानां विचारासहरूपता।
तथाहि सूर्यालोको हि वस्तूनामवभासकः॥
उलूकादिदिवान्धानां विपरीतोऽन्धकारवान्।
प्रकाशत्वान्धकारत्वे न विविक्तेऽनयोः स्फुटे॥
एवं विषं कस्यचित्स्यादविषं कस्यचिद्भवेत्।

विविक्तेऽनयोरिति। सन्धिरार्षः। अनयोः = प्रकाशान्धकारयोः।

न वागगच्छति नो मनो विद्मो न विजानीम" इति। (के० २।३) निर्विशेषस्य ब्रह्मण एव चिदविषयत्वम्, तदन्यस्य सर्वस्यापि चिद्विषयत्वान्मिथ्यात्वमिति चरमपदतात्पर्यार्थं प्रकटयति—चेत्यनिर्मुक्तेत्यनेनेति। चेत्यनिर्मुक्तचिन्मयी = चिद्विषयताविनिर्मुक्तचिन्मात्रस्वरूपा इत्यर्थः।

अत एव हि भावानामिति। चिदतिरिक्तपदार्थानां विचारासहत्वम्—इदमित्थमेवेति विचारेण निर्णेतुमशक्यत्वम्। एतदेवोपपादयति—तथाहीति। विपरीतः = अनवभासकः। सौरालोकस्य मनुष्यादीन् प्रत्यवभासकत्वेन तस्यैवोलूकादीन् प्रत्यनवभासकत्वेन, एव तमसोऽपि मनुष्यादीन् प्रत्यनवभासकत्वेनोलूकादीन् प्रति चावभासकत्वेन, कस्य प्रकाशकत्वं कस्य वाऽन्धकारत्वमिति निर्णेतुमशक्यत्वेन विचारासहत्वम्। तद्वत् सर्वेषां पदार्थानां तथात्वमिति भावः। एवमान्येषामपि विचारासहत्वं दर्शयति—एवमिति एकमेव विषं कस्यचिन्मनुष्यस्य कृते मारकत्वाद् विषम् कस्यचित्तदुत्पन्नकीटादेः कृतेऽमारकत्वादविषम्, भित्तिः कुड्यम्। सा च मनुष्याणां

तत्त्व निर्विशेष ही है। जैसा कि वहीं कहा है—"न स्त्री न षण्ढ............। "श्रीश्रीत्रिपुराम्बा वस्तुतः न स्त्री है न षण्ढ ( नपुंसक ) है और न पुरुष ही है, वह तो केवल चैतन्यस्वरूपा है। वह मन वाणी से अगम्य है एवं सभी चैत्य पदार्थों से निर्मुक्त चैतन्यमात्र स्वरूप है।" यहाँ पर "चेत्यनिर्मुक्त" इस विशेषण से चिद्भास्य पदार्थों में मिथ्यात्व सूचित है। अतएव पदार्थों का स्वभाव दुर्विवेक होने से उनमें विचारासहत्व की आलोचनाकर त्रिपुरारहस्य में कहा है—"अतएव हि भावानाम्............। चिदतिरिक्त सभी पदार्थ विचारासह हैं। सूर्य का आलोक मनुष्यों के लिए वस्तुओं का प्रकाशक होते हुये भी दिवान्ध उल्लूओं के लिए विपरीत अर्थात् अप्रकाशक है, इसी प्रकार अन्धकार भी मनुष्यों के लिए अनवभासक ( प्रकाशप्रतिबन्धक ) होते हुये भी उल्लू के लिए अनवभासक नहीं है, अतः यह स्पष्ट है कि सौर आलोक और तम में प्रकाशत्व एवं अन्धकारत्व का विवेक नहीं किया जा सकता। इसी प्रकार विष भी किसी के लिए मारक होने से विष है और वही किसी अन्य के लिए मारक न होने से विष

मनुष्यादेः प्रतिघातकरी भित्तिर्हि लक्ष्यते ॥
योगिनां गुह्यकादीनामप्रतिघातलक्षणा ।
कालो देशश्च दीर्घो यो मनुष्यादिप्रभावितः ॥
स एव विपरीतो वै देवानां योगिनामपि ।
दर्पणे भासमानस्य दूरादेर्दूरता यथा ॥
तथैवास्य स्वभावोऽपि विचारे न स्थिरीभवेत् ।
अत आश्रयरूपेण विना नास्ति हि किञ्चन ॥

लौकिकदिक्कालविलोपः ।

काल इत्यादि । प्रभावितः = विभावितः, प्रतीत इति यावत् । ननु देवादीनामानन्दाभिव्यक्त्याधिक्येनाधिकोऽपि कालोऽल्पतया प्रतीयते, वास्तवस्तु कालमानो मानवमतिमानित एव, अत एव मानवीयपक्षमासादिसङ्कलनयैव शास्त्रेषु पितृदेवादीनां कालमानवर्णनमिति चेन्न, दुःखाभिव्यक्तिप्रकर्षेणाल्पीयानपि कालो दीर्घतया भाति मनुजानाम्, वास्तवस्तु देवादीनामेव कालप्रतिभास इति वैपरीत्यस्याप्युपन्याससम्भवात्, देवादिष्वप्युत्तरोत्तरं कालसूक्ष्मताप्रकर्षदर्शनेनान्ततः परमात्मन्येव चैतन्यचन्द्रे निरतिशयानन्दनिधितया दुःखकणेनाप्यसंस्पृष्टे सर्वथैव कालकलनाया विलोपस्य वक्तव्यत्वेनान्यत्र सर्वत्रैव कालप्रतिभासोऽवास्तव इत्येव च किन्न स्यात् । व्युत्थाने आनन्दाभिव्यक्त्यभावक्षणेष्वपि सिद्धसंकल्पेन परकीये कालप्रतिभासे वैचित्र्याधानसम्भवाच्च । प्राकृतमतौ तु

गमनप्रतिबन्धकरी न तु योगिनां गुह्यकादीनां देवानाम् । कालो देशश्चेति । यः कालो देशश्च मनुष्यादिभि दीर्घत्वेन गृहीतः, स एव देवादीनां योगिनाञ्चादीर्घत्वेन परिज्ञातो भवति । यथा दर्पणे दूरत्वेन परिदृश्यमानोऽपि देशः वस्तुतः दर्पणानतिरिक्ततया न दूरः । एवमेवात्र चिति भासमानस्य भावस्य स्वभावो न स्थिरः । यथा दर्पणेऽस्तीति भासमानां प्रतिविम्बनामाश्रयभूतदर्पणव्यतिरेकेण नास्ति किञ्चित्सत्त्वम् तथैव चिति भासमानां चितिरेव तत्त्वम् नान्यत्, सा च महेश्वरीति स्वस्मिन् प्रतिविम्बात्मकवैचित्र्यभासने स्वैश्वर्यमेव निमित्तम् । सुगममन्यत् । उक्तमिति । त्रिपुरारहस्य ज्ञानखण्डइति शेषः ।

अविष हो जाता है । भित्ति भी मनुष्यों के गमन प्रतिबन्धक होती है और योगियों, तथा गुह्यकादि देवताओं के लिए नहीं । काल एवं देश की भी यही स्थिति हैं जो काल मनुष्यों को दीर्घ यानी लम्बायमान प्रतीत होता है वही देवों को योगियों को विपरीत अर्थात् अत्यन्त छोटा प्रतीत होता है । देश भी मनुष्यों के दूरतया प्रतीत होते हुये भी योगियों के लिए समीपतर प्रतीत होता है । अतः सभी वस्तु दुर्विवेक है । जैसे दर्पण में दूरतया भासित वस्तु की दूरता वास्तविक नहीं है । वैसे ही इस जगत् का स्वभाव भी विचार करने पर स्थिर नहीं हो पाता । अतः जैसे दर्पण में भासित वस्तु की सत्ता

यदस्तीति भाति तत्तु चितिरेव महेश्वरी ।' इति
संवेदनं सत्यमेकं संवेद्यं तत्र कल्पितम् ।
आदर्शनगरप्रख्यं मृषैव प्रभावितम् । इति चोक्तम् ।

सूर्यस्यादर्शनोत्तरदर्शनेन दर्शनोत्तरादर्शनेन च दिवसरात्रिविभागो व्यवहारसौकर्यार्थं च तत्रैव मुहूर्तप्रहरादिविभागो भातः, तादृशदिवसरात्रिसङ्कलनात्मकमत्या च मासादिकल्पनाऽपि परिपोषिता ।

परन्तु येनादित्यमण्डलं विलोक्यते सर्वदा, न तद्दृष्ट्योक्तरीत्या विभागसम्भवः, जन्यञ्च सावयवत्वाददो मण्डलमिति कालविशेषावच्छिन्नम्, तद्दर्शनेष्वपि च पूर्वापरकालावच्छिन्नता प्रतीयते एव, न च केनचिदखण्डेन कालेन शक्यमेतन्निर्वाहयितुमिति क्रियामालम्बिरे केचित्; परन्त्वेवं कलसोऽस्मिन् समये इति प्रतीतिस्थाने कलसोऽस्यां क्रियायामित्यपि कदाचित्स्यात्प्रतीतिः, न चात्र कालिकसम्बन्धो न भासितुं क्षमत इति वाच्यम्, क्रियायां कालत्वसत्त्वेऽपि तदनुरूपसंसर्गस्य भानाभावे नियामकस्य दुर्भणत्वात्, नचास्मिन् समये इति प्रतीतौ क्रियावच्छिन्नमहाकालेऽधिकरणता भासते न त्वस्यां क्रियायामिति प्रतीताविति विशेष इति वाच्यम्, अस्मिन् समये इत्यत्र कालमात्रेऽधिकरणताभानेनाकालघटितकालेऽधिकरणताभानाभावात्, यथा च घटादिकं स्वस्थितये कालान्तरव्यावृत्तं कालमपेक्षते, एवं क्रियापोति तत्र व्यावर्तकान्तरोपन्यासेऽनवस्थापि, तेनापि व्यावर्तकविशेषस्यापेक्षणीयत्वात्, न च घटादिकं स्वस्वोपहिते महाकाले वर्तत इत्यस्तु, किं व्यावर्तकान्तरगवेषणयेति वाच्यम्, यतो घटादेरेवं कालविशेषेणानियन्त्रिततया महाकालालिङ्गने नित्यता प्रसज्येत, न चैवं कालतत्वस्वोकृतौ किञ्चित्प्रयोजनमपि, इदानीं न तदानीमित्यादिप्रतीतेः सर्वथैवापातप्रवृत्तत्वपर्यवसानात् । घटादेः स्वयमेव नियन्त्रितत्वोपगमस्य च स्वभावेन भङ्गुरतया अभ्युपगमे पर्यवसन्नत्वेन क्षणभङ्गवादविजयप्रसङ्गात् ।

क्षणिकत्वव्यवहारश्च न शक्यः केनाप्युपाधिनोपपादयितुम्, क्रियाया बहुक्षणस्थायित्वात्, स्वजन्यविभागप्रागभावावच्छिन्नायाश्च तस्या अनुगतक्षणव्यवहारानुपपादकत्वात्, स्वत्वस्य प्रतिव्यक्तिविश्रान्तत्वात्, विभगस्योत्पत्तौ सत्यां तत्प्रागभावस्याभावेन तदानीं क्षणव्यवहारार्थमुपाध्यन्तरस्यैव वाच्यत्वेनाप्यननुगमाच्च, कयाचित्कयाचित् क्रियया जननीयस्य विभागस्य प्रागभावः सर्वदैव वर्तते इत्येवं प्रत्यवस्थाने तु स्थुलकालेऽपि क्षणत्वव्यवहारप्रसङ्गात् । अथास्तु क्षणोऽतिरिक्तः पदार्थः कालोपाधिः क्षणिकः, प्रकृतेरेव वाऽस्तु कश्चित्परिणामः क्षणाख्यः, एकक्षणतया व्यवह्रियमाणसमये प्रकृतेर्विभुत्वेन परिणामानन्त्येऽपि क्षणाख्यपरिणामस्यैक्यादिति चेन्न, स क्षणो यस्मिन् क्षणे वर्तमानतया

दर्पणरूप आश्रय से भिन्न नहीं है; वैसे ही चिति में अस्तित्वेन भासित वस्तु भी महेश्वरी चिति के अतिरिक्त कुछ नहीं है, वस्तुत चिति मात्र है । एक चैतन्य ही सत्य है उसी चैतन्य में सभी संवेद्य वस्तु कल्पित है, अतः दर्पण में दृश्यमान नगर की भांति सब मिथ्या ही है ।

अतएवेति। चेत्यस्य व्यभिचारित्वेन चितेश्चानुस्यूतत्वेनेत्यर्थः। यदस्तीत्यादिनाऽधिष्ठानानुवेधोऽभिहितः। संवेद्यं तत्र कल्पितमित्यनेन प्रकाश्यत्वस्य

क्षणिक इत्युच्यते तस्यान्यस्यैव क्षणिकस्य वाच्यत्वात्, स्वस्मिन् स्वस्य कथमप्यवृत्तेः, एवं चैकक्षणतया प्रसिद्धेऽपि कालेऽनन्तक्षणाभ्युपगमप्रसङ्गः, न च तावतापि निर्वाहः, कस्य कः क्षणोऽधिकरणमित्यत्र विनिगमकाभावेन बालकेलिप्रसङ्गात्। तस्माद् यथा देशानां मूर्तानां परमाणौ विश्रान्तिरुक्तापि न सोढुमुचितेति विज्ञानवादे आवेदितम्, तथा प्रहरमुहूर्तादिकालानां विश्रान्तिरुक्तापि क्षणे न क्षन्तव्येत्युक्तमिदानीमिति लोकप्रसिद्धयोर्दिक्कालयोर्विलोपप्रियतैवोचिता।

तस्माद् यत्र पदार्थानां परिच्छेदप्रतिभासप्रयोजकत्वरूपं कलयितृत्वं विश्राम्यति सा पारमेश्वरी कापि कलनाशक्तिः। सा च कालिकतया दैशिकतया च लोकाऽऽलोकितपरत्वापरत्वरूपक्रमस्य प्रतिभासे सौक्ष्म्यदैर्घ्यव्यत्यासे कामपि चातुरीमातन्वती तादृशक्रमस्य तदाक्रान्तपदार्थसार्थस्य च बाह्यवपुर्ग्रासेन प्रतिभासमात्रसतत्त्वतां समर्थयन्ती चिदद्वैतोपपादने धूर्वहैव, स्वयं च सा कथञ्चिच्चिद्भिन्नतया व्यवह्रियमाणापि वस्तुतस्तदभिन्नैवेति चर्चनीयं परतः, एवं चामुष्याः स्वकीयपरमार्थवपुषो यतो निरुक्तप्रयोजकत्वरूपकलनाख्यव्यापृतिविशेषस्य सर्वथैव व्यावृत्तिस्तद्दिक्कालातीतं चेत्यनिर्मुक्तचित्तत्वमुच्यत इत्यास्तां विस्तरः।

चेत्यस्य व्यभिचारित्वेनेति। चेत्यानां परस्परतादात्म्येनैवभासमानत्वस्याभावेनेत्यर्थः। कदाचिद्भ्रममादाय परस्परतादात्म्येन भानसम्भवेनैवकारार्थविवक्षा। अनुस्यूतत्वेनेति। स्वतादात्म्यविषयतानिरूपितविषयत्वाभावानाश्रयचेत्यकत्वेनेत्यर्थः। स्वं चितिः। उक्ताभावस्तस्यामेव प्रसिद्धः, अत्यन्ताभेदे तादात्म्यानङ्गीकारात्। एवं च यद् यत्तादात्म्येनैव भासते तत् तत्र कल्पितमिति व्याप्तिः, जातिमात्रस्य सद्रूपत्वेन तत्तादात्म्येन भासमानानां व्यक्तीनां तु तत्र कल्पितत्वमिच्छन्त्येवाद्वैतिनः। अस्ति नीलं रूपमित्यादौ प्रत्यक्षात्मके तु बोधे गुणादिकं न गुण्यादितादात्म्येनैव भासते, अतो न तत्र व्यभिचारः। न च दृष्टनष्टाया यादृशव्यक्तेर्भ्रममादाय व्यक्त्यन्तरतादात्म्येनैव भानं न तु कदाचिदन्यथा, तत्र व्यभिचार इति वाच्यम्, तादृशव्यक्तौ मानाभावात्, तत्तादात्म्यविषयत्वानिरूपितविषयतायोग्यत्वाभावस्य तदध्यस्तत्वव्याप्यताया विवक्षणसम्भवाच्च। चित्तादात्म्यविषयत्वानिरूपितविषयताविरहवतश्चिदध्यस्तत्वमिति विशिष्यैव वा वक्तव्यम्, अग्रे दर्पणप्रतिबिम्बालोचन्यानेनाप्रयोजकत्वस्याशङ्कनीयत्वात्। अधिष्ठानानुवेधः = सत्तादात्म्येन भानम्।

अधिष्ठानानुवेध इति। आरोप्यनीलादितादात्म्यापन्नमधिष्ठानम्। नीलाद्यस्तीत्यादौ आरोप्यनीलाद्युत्पत्तिकालोत्पन्नतादात्म्यापन्नं सदपरोक्षतया भाति। श्रुतिरप्यत्र—

"चेत्य के व्यभिचारी होने से तथा चिति के सर्वत्र अनुस्यूत होने से" यह "अतएव" का अर्थ है। "यदस्ति" इत्यादि से अधिष्ठानानुवेध ( अधिष्ठान सम्बन्ध )

**मिथ्यात्वव्याप्यत्वं न तु सत्यत्वव्याप्यत्वमिति सूचितम्। एतच्च परत उपपादयिष्यते। अतएव रहस्यनामसहस्रेऽपि 'मिथ्याजगदधिष्ठाना' इत्युक्तम्, तत्राधिष्ठानपदस्य कर्मव्युत्पत्त्या मत्वर्थीयाच्प्रत्ययेन वाऽध्यस्तार्थकतया बहुव्रीहिः, आर्षो वा लिङ्गव्यत्ययः। अत्र भास्कररायस्यान्यथाव्याख्यानं त्वविद्या-**

"अस्ति भाति प्रियं रूपं नामचेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥" (स० र० उ०) इति।

तथा च घटोऽस्ति घटो भाति घट इष्ट इत्यादयो व्यवहारा अधिष्ठानचितिसम्बन्धमादायैव सम्पद्यन्ते। अधिष्ठानन्तु शुद्धचिदेव सर्वस्यापि प्रपञ्चजातस्य। तत्राधिष्ठानत्वञ्च सामान्यतो ज्ञातत्वे सत्यज्ञातविशेषवत्त्वरूपस्य निर्विशेषे निस्सामान्ये च ब्रह्मण्यसम्भवात् स्वरूपेण ज्ञातत्वे सति विशेषेणाज्ञातत्वरूपमेव। वस्तुतस्तु ज्ञातत्वे सत्यज्ञातत्वमेवाधिष्ठानत्वप्रयोजकम्। ज्ञातस्याज्ञातत्वन्तु न विरूध्यते, स्वरूपविशेषरूपाभ्यां ज्ञातत्वाज्ञात्वसम्भवात्। सद्रूपपूर्णानन्दरूपयोश्च न न्यूनाधिकवृत्तिकत्वरूपः सामान्याविशेषभावोऽपितु भ्रमे भासमानाभासमानत्वरूपो बोध्यः। एतेनासतोऽधिष्ठानत्वं कैश्चिदुक्तं निरस्तम्। ज्ञातत्वे सत्यज्ञातत्वस्य तत्रासम्भवात्, असतोऽनुभवायोग्यत्वात् असज्ज्ञानस्यानिवर्तकत्वाच्च।

मिथ्याजगदधिष्ठानेति। अधिष्ठानस्य हि सामान्यतो ज्ञातत्वे सति विशिष्याज्ञातत्वलक्षणत्वेऽधिष्ठानशब्दस्य नित्यनपुंसकत्वेन कथं तादृशः प्रयोगः। यदि तु अधितिष्ठत्यस्यामित्यधिकरणे ल्युटा तादृशः प्रयोगः समर्थ्यते, तदा तस्याधिकरणार्थत्वं स्यात्, न च प्रकृते तदिष्यते। किञ्च ल्युटि षष्ठ तत्पुरुषे "टिड्ढाणञ्" इत्यादिना ङीप् स्यान्न तु टाबित्यसाङ्गत्यं तस्येत्यत आह—तत्राधिष्ठानपदस्येति। तथा च कर्मणि ल्युटाऽधिष्ठानपदस्याधिष्ठितार्थकतया बहुव्रीहिसमासेन च तत्सिद्धिः। ङाप्सूत्रे चानुपसर्जनादित्यनुवर्तनान्नापि स दोषः। ननु कर्मणि ल्युड्दुर्लभः, राजभोजनाः शालयः" इतिवत् तत्र तत्समर्थनेऽप्याधेयतार्थकत्वं स्यादिति तद् दूषणमावर्तते इत्यत आह—मत्वर्थीयाच्प्रत्ययेनेति। तथा च नपुंसकभावे ल्युडन्तादर्शआद्यचि तस्य साधुत्वम्। अधिष्ठानवैशिष्यञ्चाध्यासिकसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धेन। अत्र यदि वृत्तिद्वयगौरवमालोच्यते तदाप्याह—आर्षो वा लिङ्गव्यत्यय इति। ऋषीणां तपोमाहात्म्येन न तद् दूषणम्, स्मृत्याद्यन्तर्गतपाठाच्च नास्माकमपीत्यन्यत्र स्पष्टम्।

कहा गया गया है। "संवेद्य तत्र कल्पितम्" के द्वारा प्रकाश्यत्व मिथ्यात्व का व्याप्य है, न कि सत्यत्व का" यह सूचित किया है। इसका आगे उपपादन करेङ्गे। अत एव श्रीमाता के सहस्रनाम में—"मिथ्माजगदधिष्ठाना" कहा गया है। उसमें अधिष्ठान पद को "अधिष्ठीयते यत्तदधिष्ठानम्" इस कर्मव्युत्पत्ति से या अधिष्ठानमस्यास्ति" इस अर्थ में मत्वर्थीय

**विलसितमेवेति वक्ष्यते । परमानन्दतन्त्रेऽपि—**

**'यद्यत्रानेकरूपेण भाति तत्तत्र कल्पितम्,**
**अनेकेष्वेकरूपेण भाति यत्तदकल्पितम् ।**

वस्तुतस्तु वशिन्यादिवाग्देवताभिरेव निर्मितत्वादस्य, तासाञ्च "अनन्तशक्तित्वमप्यस्य स्वशक्त्यैवावियुक्तता" इत्युक्त्या मूलशक्तिरूपतया चितिशक्त्यैव निर्मितत्वात् "निःश्वसितमस्य वेदा इति न्यायेन निःश्वासभूतत्वादस्य वेदत्वमेवेति, "सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङाञ्च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन" इति शाब्दिकसिद्धान्तात् "व्यत्ययो बहुलमिति स्मरणेन न कोऽपि दोषः । सामान्यविशेषयोः कल्पितत्वाभ्युपगमे तु वस्तुतस्तच्छून्येऽपि चिति न तद्घटितलक्षणस्यासाङ्गत्यम् । भ्रमोपादानाज्ञानविषयो वाधिष्ठानम् । ननु जगतो ब्रह्मपरिणामत्वं स्वीकुर्वतां तान्त्रिकाणां मते जगतः सत्यत्वमेव, भेदमात्रस्य मिथ्यात्वस्वीकारेणाद्वैतश्रुतीनामखिलानां निर्वाहः, तथा च मिथ्याभूतं जगतोऽधिष्ठानं भेदघटितसम्बन्धेनावस्थितिर्यस्यामिति विग्रहात् स्त्रीलिङ्गतोपपत्तिरित्युक्तं सौभाग्यभास्करभाष्ये भास्करेण स्वीक्रियतामिति चेत्तत्राह—भास्कररायस्येति । अविद्याविलसितम्—तान्त्रिकसिद्धान्तानवबोधविजृम्भामात्रमेतत् । ब्रह्मरूपेण सत्यत्वोक्तेः प्राप्ताप्राप्तविवेकन्यायेन ब्रह्मण्येव सत्यत्वमित्यत्रैव तात्पर्यमित्यस्य वक्ष्यमाणत्वात् ।

यद्यन्त्रेति । यद् घटशरावादिकं गजतुरगादिकं तरङ्गकल्लोलावर्तबुद्बुदादिकं यत्र मृदि दर्पणे जलधावनेकरूपेण परस्परव्यावृत्तविचित्ररूपेण भवति प्रकाशते तद् घटगजतरङ्गादिकम्, तत्र मृद्दर्पणजलधिषु कल्पितमारोपितम्, रज्जुभुजङ्गवत् । तत्सत्ताऽतिरिक्तसत्तारहितमिति यावत् । अनेकेषु घटगजतुरङ्गादिव्यावृत्तरूपेण यद् भाति, तत् मृदादिकमकल्पितम्, अनारोपितम् । यत एकत्र ज्ञानप्रकाशे देहोऽनेकरुपो भासते, अनेकरूपे देहे ज्ञानमेकरूपं प्रकाशते, तस्मात् प्रागुक्तसामान्यव्याप्त्याऽनेकरूपो देहः कल्पितः स्वातन्त्र्येण सत्ताभाववान्, एकं ज्ञानन्त्वकल्पितं स्वतन्त्रं सदिति तत्रत्यव्याख्यासरणिः ।

अच् प्रत्यय होने से अध्यस्तपरक मानकर "मिथ्याजगद् अधिष्ठानं ( अध्यस्तं ) यस्याम्" इस विग्रह में बहुव्रीहि समास किया गया है । इसलिए अधिष्ठान शब्द के नित्य नपुंसक होने पर भी स्त्रीलिङ्ग प्रयोग है । अथवा यहाँ लिङ्गपरिवर्तन आर्ष है । यहाँ भास्कर राय के द्वारा जगत् को ब्रह्म का परिणाम मानकर किया गया अन्यथा व्याख्यान उनके अविद्या ( अज्ञान ) का विलासमात्र है ।

परमानन्द तन्त्र में भी कहा है—यद्यत्रानेक रूपेण............ । जो जो वस्तु अनेक रूप से अर्थात् परस्पर व्यावृत्तरूप से जहाँ भासित होती है वह सब वहाँ कल्पित ( मिथ्या ) है । इसलिए अनेकरूपेण भासित पदार्थों में एकरूपेण अर्थात् अनुस्यूतरूपेण

देहोऽनेकः कल्पितः स्याज्ज्ञानं त्वेकमकल्पितम् ॥ इत्युक्तम् ।

**एवञ्च समानप्रक्रियाऽवलम्बितया शैवसयूथ्यानामपि शाक्तानां प्रपञ्च-**

अत्र "येषु व्यावर्तमानेषु यदनुवर्तते, तत्तेभ्यो भिन्नं यथा कुसुमेभ्यः सूत्रमिति भामतीकृतापि, घटादयः स्वानुगतप्रतिभासे वस्तुनि कल्पिता विभक्तत्वात्, यथा सर्पमालादिकम् स्वानुगतप्रतिभासे रज्वा इदमंशे विभज्यते, एवं ब्रह्मण्यनुगच्छति घटादिकं विभज्यते, सन् घटः सन् पट इत्यानन्दबोधोक्तमप्यत्र स्मर्तव्यम् ।

ननु प्रपञ्चमिथ्यात्वस्य शैवानुमोदितत्वेऽपि शाक्तास्तत्र विप्रतिपद्येरन्निति चेन्नेत्याह—एवञ्चेति । शैवशाक्तयोर्मिथ्यात्वविषये वैमत्याभावे, हेतुः—समानप्रक्रियाऽवलम्बितयेति । आगमान्तर्गतशैवशाक्तदर्शनयोरुभयोरपि तत्त्वसाम्यमेव । उभयत्रापि त्रिविधं तत्त्वम्, शिवतत्त्वं, विद्यातत्त्वम्, आत्मतत्त्वञ्च । तत्र शिवतत्त्वं द्विविधम्, शिवतत्त्वं शक्तितत्त्वञ्चेति ।

विद्यातत्त्वमपि त्रिविधं सदाशिवतत्त्वम्, ईश्वरतत्त्वम्, शुद्धविद्यातत्त्वञ्च । आत्मतत्त्वमेकत्रिंशत्तत्त्वात्मकं पूर्वोक्तं मायाकलाविद्याद्यात्मकमिति षट्त्रिंशतत्त्वं समानम् । एवं बन्धमोक्षव्यवस्थापि समैव । उभयत्राप्याणवमायीय कार्ममलत्रयात्मकमज्ञानमेव बन्धकारणम् । विद्या च मोक्षस्य कारणम् । विद्या सम्यज्ज्ञानम्, तच्च शिवत्वस्य शक्तेर्वा पूर्णज्ञानात्मकम् । मोक्षः स्वस्वरूपप्रथनात्मकः ।

"मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः"
मोक्षस्य नैव किञ्चिद्धामास्ति, न चापि गमनमन्यत्र ।
अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः"

इत्याद्युक्तेः । तथा च

न शिवेन विना देवी न देव्या च विना शिवः ।
नानयोरन्तरं किञ्चिच्चन्द्रचन्द्रिकयोरिव ॥
न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी ।
शिवः शक्तस्तस्था भावानिच्छया कर्तुमीहते ॥
शक्तिशक्तिमतोर्भेदः शैवे जातु न वर्ण्यते ।
(शिवदृ० ३।२-३)

इत्याद्युक्त्या शिवशक्त्योः सर्वथाऽभिन्नत्वेऽपि प्रकाशप्राधान्यविवक्षा-

भासित जो चित्तत्त्व है वह अकल्पित है । देह अनेक है, इसलिए कल्पित है, और ज्ञान सभी विभक्ततया प्रतीयमान देहों में एक है, अतः अकल्पित अर्थात् सत्य है" ।

एवञ्च समानप्रक्रिया के अवलम्बी होने से शैवों के सयूथ्य शाक्तों का भी प्रपञ्च के मिथ्यात्व में विवाद नहीं है । तथा च शक्त्यद्वैत एवं शैवाद्वैत दोनों का समीकरण करने

**मिथ्यात्वे न विवादः। तथाच शक्त्यद्वैतशिवाद्वैतयोः समीकरणायैव वेदान्त-**

मात्रेण शैवत्वव्यपदेशः, विमर्शप्राधान्यविवक्षामात्रेण च शाक्तत्वव्यपदेशः। एतदभिप्रायेणैव शिवसूत्रशक्तिसूत्रयोः कतिपयग्रन्थानाञ्च पार्थक्यव्यपदेशोऽपि संगच्छते। अत एवोक्तम्—शैवसयूथानामपीति।

तथाचेति। शैवशाक्तयोरैक्यमत्ये। अत्रेदंबोध्यम्, पुंस्त्रीनपुंसकभेदेन लिङ्गं त्रिविधम्।

लिङ्गञ्चेदमर्थनिष्ठम्। अर्थनिष्ठत्वञ्च तादात्म्येन लिङ्गस्यार्थरूपत्वात्। यद्यपि शब्दार्थयोस्तादात्म्येन तदभिन्नाभिन्नस्य तदभिन्नत्वन्यायाच्छब्दनिष्ठत्व-मपि तथापि "स्वमोर्नपुंसकात्" इति सूत्रभाष्ये "न हि नपुंसकं नाम शब्दोऽस्ति" इति भाष्यादर्थाभिन्नत्वेनैव प्रतीतिस्तस्य। पुंलिङ्गः शब्दः इति तु वाच्यवाचक-योरभेदात्।

लिङ्गमिदं लोकेऽपि प्रसिद्धमेव, यस्य लक्षणम्—

स्तनकेशवती नारी लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यच्च तदभावे नपुंसकम्॥

इत्यादिना कृतम्। अत्रान्तरशब्दः सादृश्यपरः। तथा चोभयोः स्त्रीत्व पुंस्त्वप्रयोजकयोः सादृश्यं यत्र नास्ति, तन्नपुंसकमित्यर्थः।

किन्तु नैतद्धि वैयाकरणैराश्रयितुं शक्यम्, तद्धि न लिङ्गाख्यावयवविशेष-समवेतत्वे सति प्राणित्वं पुंस्त्वं, योनिसमवेतत्वे सति प्राणित्वं स्त्रीत्वं, तदुभया-समवेतत्वे सति प्राणित्वं क्लीबत्वम् इति वक्तुं शक्यम्, घटखट्वाफलादि-साधारणस्य पुंस्त्वादिव्यवहारस्यासिद्धिप्रसङ्गात्। नापि जातिविशेषनिबन्धनः स्त्र्यादिशब्दः रमामानुषीखट्वागवादिसाधारण्येन प्रयोगदर्शनात्सर्वसाधारणस्यानु-गतसंस्थानस्याभावेनानुगतसंस्थानव्यङ्ग्यत्वाभावात्। न चापि क्वचिदर्थे पारि-भाषिकोऽयं शब्दस्तादृशसंकेताभावात्। तस्मादलौकिकमेव किञ्चिल्लिङ्गमास्थेयं शाब्दिकैः। तच्च–सत्त्वादीनां गुणानामुपचयापचयस्थितिरूपम्। सत्त्वर जस्तम-साङ्गुणानामुपचयः पुंस्त्वम्। तेषामपचयः स्त्रीत्वं, तत्साम्यञ्च क्लीबत्वम्। साम्य-मेव स्थितिपदेनोच्यते। तदुक्तं स्त्रियामिति सूत्रभाष्ये भाष्यकृता-"तटे च खल्वपि सर्वाणि लिङ्गानि दृष्ट्वा—तटस्तटी तटमिति। कस्तावदध्यवसातु मर्हति–इयं स्त्री, अयं पुमान्, इदं नपुसकम् इति ? तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्था-तुम्। अवश्यञ्च कश्चित् स्वकृतान्त आस्थेयः। कोऽसौ स्वकृतान्तः ? संस्त्यान-प्रसवौ लिङ्गमास्थेयौ। किमिदं संस्त्यानप्रसवाविति। संस्त्याने स्त्यायते ड्रट् स्त्री सूतेः सप् प्रसवे पुमान्" इति।

अत्र संस्त्यानप्रसवशब्दाभ्यां तृतीयावस्था साम्यावस्थापि लक्षणीया।

**के लिए ही वेदान्त दर्शन में परमात्मा के लिए "ब्रह्म" इस नपुंसकलिङ्ग शब्द का**

संस्त्यानं तिरोभावः। एतदेव संस्त्यानमपचयशब्देनोच्यते। यद्यपि स्त्यायेते शुक्रशोणिते यत्रेति व्युत्पत्त्या संस्त्यानं सङ्घः। लोकेऽपि ड्रट्प्रत्ययान्तः स्त्रीशब्दो यद्यप्येतस्यैवार्थस्य प्रतिपादकः, तथापि स्त्रीत्वस्य खट्वादि साधारण्योपपत्तये तस्य तिरोभावपरत्वमेव स्वीकृतम्। "एवं सूतेः सप्" सकारस्य पकारोभवतीत्यर्थकभाष्योक्त्या सूङ्धातोरौणादिको "म्सुन्प्रत्ययः सस्य प् इत्यादेशो ह्रस्वश्चेत्येवं रीत्या पुंस् शब्दो व्युत्पादितः। यद्यप्यस्य सूतेऽपत्यञ्जनयति इत्यर्थेन प्राणिनि पुरुषे एव पुम्स् शब्दस्य शक्तिर्लभ्यते, तथापि तस्य वृक्षादिसाधारण्येनोपपत्तयें प्रवृत्तिराविर्भावरूपा पुमान् इत्यनेनोच्यते।

एवं यदा न तिरोभावो ( संस्त्यानम् ) न वा प्रवृतिः ( आविर्भावः ) किन्तु साम्यावस्था, सैव स्थितिर्नपुंसकशब्देनोच्यते। सत्त्वरजस्तमःसु कस्यचिद् गुणस्याविर्भावस्तिरोभावः स्थितिश्च सर्वदा सर्वत्रोपलभ्यते पदार्थमात्रस्य गुणत्रयात्मकत्वात्। विवक्षावशाच्च सर्वथाव्यवस्था, भाष्ये तथैवोक्तत्वात्।

नन्वेवं निर्गुणे निर्विशेषे ब्रह्मणि सत्त्वादिगुणानामभावात् ब्रह्मशब्दस्य नपुंसकत्वमात्मशब्दस्य पुंस्त्वं चितिशब्दस्य च स्त्रीत्वं कथमिति चेन्न "परास्य शक्तिर्विविधैव" "आत्मनि चैव विचित्राश्च हि" इत्याद्यनेकश्रुतिसूत्रवाक्येषु पुंस्त्वादिना तस्य निर्देशदर्शनात् पारमार्थिकत्वेन पुंस्त्वादीनामभावेऽपि तादात्म्येन तत्र सर्वस्याप्यध्यस्तत्वेन तथा व्यवहारसम्भवात्।

अथवा स्थितिशब्देन सत्तैव गृह्यते। अध्यस्तस्य चाधिष्ठानसत्तामादायैव सत्तावत्त्वान्न काप्यनुपपत्तिः। ततः "प्रवृत्तिः खल्वपि नित्या" इति भाष्योक्त्या पुंस्त्वादीनां केवलान्वयित्वमपि सिद्ध्यति। तच्च-किञ्चिद्धर्मिनिष्ठात्यन्ताभावाप्रतियोगित्वरूपम्। यदि च शब्दे लिङ्गाभावेन केवलान्वयित्वहानिरित्युच्यते, तदा-अर्थप्रतियोगिकान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपमेवात्र तत्त्वं बोध्यम्।

तथा च सकलकार्यकारणीभूतसत्त्वरजस्तमोगुणानामुपचयापचयसत्तारूपं क्रमेण पुंस्त्वस्त्रीत्वनपुंसकत्वरूपम्, चेतनाचेतनसकलपदार्थसाधारणम्।

वस्तुतस्तु प्रकाशरूपत्वं पुंस्त्वं विमर्शरूपत्वञ्च स्त्रीत्वं, उभयोः सामरस्ये च क्लीबत्वम्, इत्येव तत्स्वरूपम्। यद्यपि प्रकाशविमर्शयोरयुतसिद्धत्वम्, तथापि "प्राधान्येन व्यपदेशाः भवन्ति, मल्लग्राम इतिवत् इति तथा बोध्यम्। शैवशाक्तमतयोरभेद एव वा, उभयोर्मते एकैकस्याद्वैतरूपत्वात्। सामरस्यञ्चोभयोर्ब्रह्मण्येवेति नपुंसकत्वम्। लिङ्गताप्यस्य लीनं गमयत्यर्थं लिङ्गमित्यभिधीयते" इत्याद्युक्त्या, लिङ्गयति लीनमर्थं गमयति, लिङ्ग्यतेऽनेन वा इत्यादिव्युत्पत्त्या वाऽलिङ्गेऽपि भगवति सामञ्जस्यमश्नुते, विचित्रप्रपञ्चवैचित्र्योपादानत्वात्। एवञ्च वेदान्तिना ब्रह्मेति नपुंसकलिङ्गशब्दप्रयोगः समुचित एवेत्यभिप्रायेण सुष्ठूक्तं श्रीचरणैः—समीकरणायैवेति। अत एवेति। वक्ष्यमाण हेतोरेव। सङ्ग-

दर्शने ब्रह्मेति नपुंसकलिङ्गशब्दप्रयोगः। अतएव 'नपुंसकमनपुंसकेनैकवच्च-
इति सूत्रयन् पाणिनिः सङ्गच्छते, स्त्रीत्वपुंस्त्वयोस्तदभावयोर्वा क्लीबे समीभा-
वात्। एवञ्च ब्रह्मशब्दः स्वरसतो निर्विशेषमेव तत्त्वं वेदयते इति तत्रैवोत्तर-
च्छत इत्यन्वयः। नपुंसकमनपुंसकेनैकवच्चेति। "नपुंसकमनपुंसकेनैकवच्चा-
स्यान्यतरस्यामिति पूर्णं सूत्रम्। अक्लीबेन सहोक्तौ क्लीबं शिष्यते, तच्च वा
एकवत्स्यात्तल्लक्षण एव विशेषश्चेत्" इति तत्रत्या दीक्षितोक्तिः। अनपुंसकेन =
तत्तादात्म्येनाध्यस्तेन नपुंसकमेव शिष्यते। अन्यतरस्यामिति सर्गप्रलयावधिकृत्य-
एकवदिति च सर्गानेकत्वबुद्धिमाश्रित्येति सूक्ष्ममीक्षणीयम्। सर्वथा प्रक्रिया
ग्रहिलता चाविद्यादशाधिशायिनी "शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते"
इत्युक्तेः। सर्गस्तु स्वस्वकृतान्तानुसारेणेति न क्लीवत्वे सर्गानुपपत्तिः। हेतुमाह—
स्त्रीत्वपुंस्त्वयोस्तदभावयोर्वेति। "यद्युभयं सर्वत्र, कुतो व्यवस्था ?। विवक्षातः,
संस्त्यानविवक्षायां स्त्री, प्रसवविवक्षायां पुमान्, उभयविवक्षायां नपुंसकम्"
इति महाभाष्यपंक्तौ 'उभयोरविवक्षायां नपुंसकमिति पाठान्तरम्। तथा
चोभययोः संस्त्यानप्रसवयोर्यत्र समीकरणम्, अथवा तयोरविवक्षा = तदभावयो-
र्विवक्षा समीकरणं यत्र, तत्र नपुंसकलिङ्गमित्यर्थः।

नन्वेदं ब्रह्म सविशेषं निर्विशेषं वा, नाद्यः, अज्ञानतत्कार्याविषयकज्ञानस्यैव
तदुभयनिवर्तकत्वेन सविशेषब्रह्मज्ञानस्य च विशेषणतया विशेषस्यापि विषयीकर-
णात्तज्ज्ञानस्याज्ञानानिवर्तकत्वेन तत्प्रतिपादनवैयर्थ्यात्। अन्यथा "अहमज्ञः,
अयं घट इत्यादिज्ञानानामप्यज्ञाननिवर्तकत्वे मोक्षसाधनत्वप्रसङ्गात्। न द्वितीयः,
तत्र प्रमाणाभावादिति चेत्तत्राह—एवञ्च ब्रह्मशब्द इति। स्वरसत इति।
ब्रह्मशब्दव्युत्पादनादेवेत्यर्थः। वृद्ध्यर्थकवृहिधातोः "वृहेर्नोच्च" इत्यतिशायने
मनिन् प्रत्यये नकारस्याकारे यणि च कृते ब्रह्मशब्दो निष्पद्यते। तस्य च निरति-
शयवृहत्वम्, निरतिशयव्यापकत्वमर्थः। एतच्चानवच्छिन्नस्यैव ब्रह्मणो, न तु
सविशेषस्य, तस्य परिछिन्नतया निरतिशयव्यापकत्वाभावात्। अत एवोक्तं
भाष्यकृता—"ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते,
बृहतेर्धातोरर्थानुगमादिति (ब्र. सू. १।१।) अत्रैव भामतीपतिरपि—"वृद्धिकर्मा
हि बृहतिरतिशायने वर्तते। तच्चेदमतिशायनमनवच्छिन्नं पदान्तरावगमितं

प्रयोग किया है। अतएव "नपुंसकमनपुंसकेनैकवच्चास्यान्तरस्याम्" (पा. सू. १।२।६९)
[ अनपुंसक के साथ नपुंसक प्रयुक्त होने पर नपुंसक लिङ्गक शब्द ही अवशिष्ट रहता है,
और वह एकवत् होता है, तल्लक्षणगतविशेषता गत्यमान हो तो ] इत्यादि पाणिनि
सूत्र भी सङ्गत हो जाता है। स्त्रीत्व पुंस्त्व इन दोनों का अथवा इन दोनों के अभाव का
समीकरण ( एकीभाव ) नपुंसक लिङ्ग में होता है।

एवञ्च स्वरसतः ब्रह्मशब्द भी निर्विशेष तत्त्व का ही बोधक है। और उसी

मीमांसायास्तात्पर्यमिति प्रसङ्गादवगन्तव्यम् । सति चैवं श्रीमद्भगवत्पादैर्न परमुपनिषद एव शब्दतोऽपि स्वर्थत आगमानां सिद्धान्तांशा अप्युत्तरमीमांसायां परिमार्जिताः । शङ्करोपज्ञागमविरुद्धार्थवर्णनं च न शङ्करस्यैव युज्यते । शुभा-

नित्यशुद्धबुद्धत्वाद्यभ्यनुजानातीत्यर्थः" (ब्र० सू० भामती. १।१।१) इति । निरतिशयव्यापकत्वादेव चात्मैव ब्रह्मेति गीयते । अत एव भाष्यकृता—"आत्मा च ब्रह्म"—इत्युक्तम् ।

इतिशब्दो हेत्वर्थः । तत्रैव = निर्विशेषे ब्रह्मण्येवेत्यर्थः । उत्तरमीमांसायास्तात्पर्यमिति । धर्मविचारपरायाः पूर्वमीमांसाया व्यावृत्यर्थमुत्तरशब्दः । तत्त्वञ्च पूर्वमीमांसाऽप्रतिपाद्यप्रतिपादकत्वम् । अथवा ब्रह्मविशेषयकत्वम्) मीमांसा पूजितविचारः । पूजार्थकमान् धातोः "मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्येत्यनिच्छार्थे सन् प्रत्ययविधानात् । अतएव भामतीकृता—"नान्तत्वं निपात्य माङ् माने इत्यस्माद्वा मान् पूजायामित्यस्माद्वा धातो "मान् बधेत्यादिनाऽनिच्छार्थे सनि व्युत्पादितस्य मीमांसाशब्दस्य पूजितविचारवचनत्वादित्युक्तम् । पूजितत्वञ्चात्र परमपुरुषार्थहेतुभूसूतक्ष्मतमार्थनिर्णयफलकत्वम् । तादर्थ्याच्छास्त्रमपि—उत्तरमीमांसा । "नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् । अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" (मा० उ० ७) "सवा एष महानज आत्मा अजरोऽमरोऽमृतोऽभयो" (बृ० ४।४।२४) इत्यादि शतशः श्रुतिवाक्यानां निर्विशेषे ब्रह्मणि तात्पर्यं, "तत्तु समन्वयात्" इत्यादिसूत्रैश्च दृढीकृतम् । तेन न तत्र प्रमाणाभावशङ्कापि ।

सति चैवमिति । शास्त्रतात्पर्यस्याद्वैततत्त्वपरत्वोपवर्णने सतीत्यर्थः । आगमानां सिद्धान्तांशा इति । शिवाद्वयवादो हि आगमसिद्धान्तः । स च ब्रह्माद्वैतवादाभिन्नतया भगवत्पादेनापि समर्थित एव । परिष्कृतश्चायमेव ब्रह्मातिरिक्तस्य ब्रह्मविवर्तत्वमाश्रित्य मिथ्यात्वमङ्गीकुर्वता भाष्यकृता विवर्तत्वानङ्गीकारे सृष्टेरनुपपत्तिमालक्ष्य । शक्तेश्चागमसिद्धान्तसिद्धायां भगवत्पादैरपि तथैव स्वीकारात्, तैरेव "शक्तिश्च कारणस्य कार्यनियमार्था कल्प्यमाना नान्याऽसती वा कार्यं नियच्छेत्, असत्त्वाविशेषादन्यत्वाविशेषाच्च । तस्मात्कारणस्यात्मभूता शक्तिरित्युक्तत्वात्" । गीताभाष्ये च शक्तेश्चिद्रूपत्वम् "शक्तिर्ब्रह्मैव, शक्तिशक्तिमतोऽनन्यत्वादित्यादिना स्पष्टमेव तयैवोक्तम्, विशेषश्चाग्रे वक्ष्यते ।

शङ्करोपज्ञागम इति । उपज्ञाज्ञानमाद्यं स्यादित्युक्त्याऽऽगमाविर्भावभूमिः,

( निर्विशेषतत्त्व ) में उत्तरमीमांसा का तात्पर्य भी निश्चित है। ऐसी स्थिति में श्रीमद्भगवत्पाद ने न केवल शब्दत उपनिषदों का ही व्याख्यान किया है अपितु अर्थतः

**शुभत्वेन कैश्चित्परिभाषितागमेषु समयकौलाद्याचारभेदप्रतिपादनं त्वधिकारि-**

शिवादागत इत्यर्थः । अत एव "आगम" इत्यन्वर्थसंज्ञा,

आगताः शिववक्त्रेभ्यो गताश्चगिरिजामुखे ।
मग्नास्तद्हृदयाम्भोजे आगमास्तेन कीर्तिताः ॥ इत्याद्युक्तेः ।

शङ्करस्यैवेति । शङ्करः श्रीमद्भगवत्पादः ।

व्याकुर्वन् व्याससूत्राणि श्रुतेरर्थं यथोचिवान् ।
श्रुतेर्न्याय्यः स एवार्थः शङ्करः सवितानन: ॥ (शै० पु०)
"चतुर्भिः सहशिष्यैस्तु शङ्करोऽवतरिष्यति" । (वा० पु०)
भविष्यत्यवतारेण शङ्करो नीललोहितः ।
श्रौतस्मार्तप्रतिष्ठार्थे भक्तानां हितकाम्यया ॥
उपदेक्ष्यति यज्ज्ञानं भक्तानां ब्रह्मसंज्ञितम् ।
सर्ववेदार्थसारं हि धर्माद् वेदनिदर्शनात् ॥
ये तद् विप्रा निवेषन्ते संन्यासेनोपचारतः ।
विजित्य कलिजान्दोषान्यान्ति तन्मयतां हि ते ॥ (कू० पु०)

इत्यादिपौराणिकवचनैः श्रीमद्भगवत्पादस्य शङ्करावतारत्वावमात् । अत एवाभाणि मधुसूदनस्वामिपादैरपि—

श्रीशङ्कराचार्यनवावतारं विश्वेश्वरं विश्वगुरुं प्रणम्य इति । "शङ्कराचार्यरूपेण नवतयाऽवतीर्णं बिश्वेश्वरं प्रणम्येत्यर्थः" इति प्रत्यपीपदत् ब्रह्मानन्दोऽपि तत्रैव । तथाच शिव एव एको निगमागमवक्ता, इति कथं तयोः परस्परविरोधः स्यादिति भावः ।

ननु वक्तु रेकत्वेऽप्यागमवर्त्मन्येव दृश्यते विरोधः समयाचारकौलाचारयोः, कथमन्यथा समयाचारपथानुवर्तिनो लक्ष्मीधरादयः कौलाचारमनुचरन्तमाक्षिपेरन्, कौलपथानुवर्तिनस्तानितिचेत्तत्राह—शुभाशुभत्वेन कैश्चिदिति । समयाचारमनुसरन्तो हि समयाचारं शुभत्वेन प्रतिपादयन्ति, कौलाचारञ्चाशुभत्वेन, एवं कौलाचारपथगामिनोऽपि कौलाचारं शुभत्वेनाशुभत्वेन च समयाचारं निरूपयन्ति । कैश्चित् लक्ष्मीधरादिभिः ।

समयकौलाद्याचारेति । सत्स्वपि बहुष्वाचारेषु प्राधान्येन समयाचारः

आगमों के सिद्धान्तांशो का भी उत्तरमीमासा में परिमार्जन किया है । शङ्करोक्त आगमों से विरूद्ध अर्थ का वर्णन शङ्कर के द्वारा ही करना युक्ति युक्त नहीं है । शिवोक्त आगमों में कुछ लोग शुभाशुभरूप से समयाचार [ विधिनिषेधादिपरिपालक ब्राह्मणोचित वह आचार जिसमें चर्या का उपयोग भावना से ही किया जाता है, बाह्य नहीं ] कौलाचार [ कौल सम्प्रदायोचित वह आचार जिसमें चर्या का उपयोग बाह्य भी किया

कौलाचारश्चेत्याचारद्वयमङ्गीकृतमागममार्गे। तत्र समयाचारेऽन्तर्यागस्यैव प्राधान्यम्। अत्र समयशब्दो समं (साम्यं) यातीति व्युत्पत्त्या शिवशक्त्योर्वाचकः। तयोरेकशेषः। साम्यञ्च शिवेन सह शक्त्याः, शक्त्या च सह शिवस्येति बोध्यम्। तथा च समयः शिवः, समया च शिवा, तयोः साम्यं यस्मिन्नाचारे स समयाचारः। तच्च साम्यं पञ्चविधम्—अधिष्ठानसाम्यमनुष्ठानसाम्यमवस्थानसाम्यं नामसाम्यं रूपसाम्यञ्चेति। तत्राधिष्ठानं पूजाधिकरणं चक्रादि। अनुष्ठानं सृष्ट्यादिकृतम्। अवस्थानं नृत्यादिक्रिया। नाम भैरवादि। रूपमारूण्यादि। अथवा समयाचारः—अन्तर्यागेन मूलाधारस्थां परां कुण्डलिनीमुत्थाप्य स्वाधिष्ठानादिचक्रभेदनेन सहस्रारचक्रस्थितपरमशिवेन सामरस्यसम्पादनरूपः। अत्र बहिर्यागस्य प्राधान्यं नास्ति। नापि च बाह्यतया चर्योपयोगः। अत एव—"समयिनां मन्त्रस्य पुरश्चरणं नास्ति। बाह्यहोमोऽपि नास्ति। बाह्यपूजाविधयो न सन्त्येव। हृत्कमल एव यावत् सर्वमनुष्ठेयमित्युक्तम"न्यत्र।

अत एव भास्करराय:—दहराकाशावकाशे चक्रं विभाव्य तत्र पूजादिकं समय इति रूढ्या उच्यते सर्वैर्योगिभिरैकमत्येन निर्णितोऽर्थः। इति संकेतरूपत्वादपि समयः, तत्प्रतिपादकत्वाद् वसिष्ठशुकसनकसनन्दनसनत्कुमाराख्यं तन्त्रपञ्चकमपि समयपदेन व्यवह्रियते ( ल० स० ) इत्यवादीत्।

कौलाचारे त्वन्तर्यागेन सहास्ति बहिर्यागस्याप्युपयोगः। चर्या अप्यत्रोपयुज्यते बहिः। तत्र कुलशब्दार्थोऽनेकधा विमृष्टः। कुलशब्दः शक्तेर्वाचकः। तथा च कुलस्येदं कौलं कुलसम्बन्धः। स चाकुलेन शिवेन यस्मिन्नाचारे सः कौलाचारः।

कुलं शक्तिरिति प्रोक्तमकुलं शिव उच्यते।<br>कुलेऽकुलस्य सम्बन्धः कौलमित्यभिधीयते॥

इति स्वच्छन्दोक्तेः। कुः पृथिवीतत्त्वं लीयते यत्र तत्कुलमाधारचक्रमिति भास्करोक्त्या मूलाधारचक्रं कुलम्, तत् सम्बन्धाल्लक्षणया तत्र स्थिता कुण्डलिनीशक्तिरपि कुलपदव्यवहार्या। अस्मिन्नप्याचारे समयाचारवत् कुलपद्मनि स्थितां कुलाख्यां कुण्डलिनीं पराशक्तिमुपासनयाऽभ्युत्थाप्य तस्याः सहस्रारचक्रस्थितेन परमशिवेन सार्धं तादात्म्यसम्पादनमेव मुख्यं कर्तव्यम्। तत्रैव बहिर्यागस्य बहिश्चर्यायाश्चोपयोगः। पूर्वोत्तरभेदेन कौला अपि द्विविधाः तत्र शिवशक्त्योः सत्यपि साम्ये शेषशेषिभावो भवत्येव, शिवः शेषी शक्तिश्च शेषः। अथवा शक्तिः शेषिणी, शिवः शेष, इति पूर्वकौला वदन्ति। उत्तरे तु शेषशेषिभावं नाङ्गीकुर्वन्ति, तन्मते शक्तेरेव प्राधान्यं जगत्कर्तृत्वञ्च, प्राधान्यादेव शक्तेर्न शेषत्वम्। अत्रोपेयस्याभेदेऽप्यान्तर्बाह्यदृष्ट्या उपायस्य भेदः।

**भेदेन सर्वानुकम्पकस्य नाप्ततां व्याहन्तुमीष्टे। भेद-भेदाभेदयोः प्राधान्येन केषुचिदागमेषु निरूपणं तु स्थूलारुन्धतीन्यायेनैव।**

अधिकारिभेदेनेति। यथा वेदान्तेऽधिकारिभेदेन एकसत्ताद्विसत्तात्रिसत्तावादानामुपदेशः। यथा वा "न हिंस्यात् सर्वाभूतानि" श्येनेनाभिचरन्यजेत" इति वाक्ययोर्विरोधपरिहारायावजितक्रोधारातयो निषेधेऽधिक्रियन्ते, क्रोधारातिवशीकृतास्तु श्येनादौ। तथा प्रकृतेऽपि शुद्धान्तःकरणो गुरुणा केनचित् दीक्षाप्रकारेणानुगृहीतः सामान्यतस्तन्त्राधिकारी। स्वगताधारतारतम्यादेव जीवो भेद-भेदाभेदाभेदपक्षं कक्षीकरोति। अत एव केचिद्बुद्धयालम्वनाः, केचित्प्राणालम्बनाः, केचित् करणमुद्रादिक्रियालम्बनास्तत्तदुपायमाश्रित्यत्तदाचारवन्तो लक्ष्यं साधयन्तीति तदुपन्यासः शास्त्रेषु तदुद्दिधीर्षयैव। समयाचारकौलाचारयोरपि स्थूलदृष्ट्याऽस्ति भेदः इति प्राक् चर्चितम्। सूक्ष्मदृष्ट्या तु विशेषव्युत्पादनवशात् लक्ष्यसाधनैकत्वेऽभेदः। अत एव "कौलात्परतरं न हो'' त्युक्तम्। अथवा कौलाचारे—आणवशाक्तोपायप्राधान्यम्। समयाचारे तु शाक्त शाम्भवोपायप्राधान्यमिति भेदस्तयोरिति व्यक्तमन्यत्र।

ननु शैवशाक्तवैष्णवादिभेदेन विविधेष्वागमेष्वपि वैष्णवागमानां प्राधान्येन द्वैतप्रतिपादकत्वं प्रसिद्धमेव। शैवशाक्तागमेष्वपि द्वैतद्वैताद्वैताद्वैतपरतया विभिन्नस्थलेषु व्याख्यानमुपलभ्यते। अतएव मुख्यतया दश भेदप्रधानाः, अष्टादश भेदाभेदप्रधानाश्चतुषष्टिसंख्याकाश्चाभेदप्रधानाः शैवाद्यागमाः सन्ति। सर्वेऽप्यमी शिवोक्ता एवेति कथन्न परस्परं शङ्करोक्तिविरोध इतिचेत्तत्राह—भेद-भेदाभेदयोरिति। स्थूलारून्धतीन्यायेनेति। यथाऽतिसूक्ष्म्यां मुख्यामरून्धतीं तारां दिदर्शयिषुर्मन्ददृष्टिं' शिष्यं प्रति प्रथमं तद्दृष्टेः स्थिरत्वसम्पादनाय स्थूलां ताराममुख्यामरून्धतीति ग्राहयित्वा पश्चात्तां प्रत्याख्याय मुख्यामरून्धतीमेव ग्राहयति, तथैव मुख्यमद्वैततत्त्वमेवोपदिदिक्षुर्भगवान् मन्दानप्यनुनजिघृक्षुः प्रथमं लोकबुद्धिमनुसरन् द्वैतं द्वैताद्वैतञ्च तत्त्वतया प्रदर्श्य पुनरन्ते तौ प्रत्याख्याय मुख्यमद्वैततत्त्वमेव स्थापयाञ्चकार। प्रथन्ते चाभेदप्रतिपादका भैरवाष्टकयामलाष्टकमताख्याष्टकमङ्गलाष्टकचक्राष्टकभेदेनाद्वयप्रधानाश्चतुषष्टिभैरवागमाः' इति भावः।

जाता हैं। ] भेद का प्रतिपादन करते हैं, किन्तु वे केवल विभिन्न अधिकारी विशेष की दृष्टि से किया गया है, अतः सर्वानुग्राहक का वह तादृश वर्णन वर्णयिता की आप्तता का विघातक नहीं है। कुछ आगमों में जो भेद भेदाभेद का प्राधान्येन निरूपण किया गया है, वह स्थूल अरून्धतीन्याय के अनुसार है।

तात्पर्य यह है कि जैसे मुख्य अरून्धती तारा दिदर्शयिषु मन्ददृष्टि द्रष्टा को पहिले अमुख्य स्थूल किसी तारा को "यह अरून्वती तारा है" कह कर दिखाता है क्रमश स्थूल से सूक्ष्म, सूक्ष्मतर सूक्ष्मतम तारा में दृष्टि स्थिर करते हुये पश्चात् पूर्वप्रदर्शित

"प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम"

इति प्रपञ्चसारोक्तेस्तु न विरोधः, एकस्यैव परमार्थतत्त्वस्य परप्रकृतित्वेन परपुरुषत्वेन परकालत्वेन च भेदविवक्षया तथाऽभिधानात्, उत्तरग्रन्थे प्रकृतेः "स्वसंवेद्यस्वरूपा सा" इति पूर्वोक्तचितिरूपतया तस्या एव च "साऽहम्" इत्यात्मरूपपरपुरुषरूपतया "सा तु कालात्मना सम्यग्" इति प्रपञ्चकलनात्मकतया स्वयमेवोक्तत्वात् । अपरप्रकृत्यादेरपि चितिरूपत्वं वक्तव्यरीत्या सम्भवदुक्तिकमेव । किञ्च प्रकृतिपुरुषकाला अकारोकारमकाराः, ते नित्याः = निय-

अद्वैतवादे एकस्यैव तत्त्वस्य नित्यत्वेन तत्र प्रकृतिपुरुषकालेति त्रयाणां नित्यत्वाभिधायिन्याः प्रपञ्चसारोक्तेर्विरोधं परिहरति—प्रकृतिरित्यादिना । विरोधाभावे युक्तिमाचष्टे—एकस्यैवेति । एकमेव परमतत्त्वं कदाचित्परप्रकृतित्वेन, कदाचित्परमपुरूषत्वेन, कदाचित्परकालत्वेन कल्पितभेदमादाय व्यवह्रियते, न तत्र वास्तविको भेदः । तत्र विनिगमकमाह—

उत्तरग्रन्थ इति । प्रपञ्चकारणत्वविवक्षया प्रकृतित्वम्, चित्स्वरूपत्वेनात्मरूपतया पुरूषत्वम्, प्रपञ्चपरिच्छेदकत्वविवक्षया कालत्वम् । प्रपञ्चकलनम् परिच्छिन्नत्वेन भासनम् । स्वयमेवोक्तत्वादिति । श्रीमद्भगवत्पादेनैव प्रपञ्चसारे उक्तत्वादित्यर्थः ।

वस्तुतस्तु नात्र नित्यत्वं सत्यत्वसमनियतं ध्वंसाप्रतियोगित्वरूपमद्वैतव्याघातकं येन विरोधः स्यादपि तु नियमेन प्रयोक्तव्यत्वरूपम् । अथ च प्रकृत्यादिशब्दा अपि न प्रसिद्धप्रकृत्यादिपराः, अपितु प्रणवघटकाकाराद्यक्षरपराः ।

सभी स्थूल ताराओं का प्रत्याख्यान करके अन्त में मुख्य अरून्धती तारा को दिखाता है, उसी प्रकार मुख्य अभेद ( अद्वैततत्त्व ) का दिदर्शयिषु अद्वैत के अतीव सूक्ष्म होने से प्रथम भेद भेदाभेद का निरूपण कर पश्चात् अभेदज्ञान की योग्यता आने पर पूर्व प्रदर्शित भेद भेदाभेद का निषेध कर अन्त में अद्वैत पर विश्राम कर देता है । इस प्रकार भेदादि के निरूपण का भी मुख्य तात्पर्य अद्वैततत्त्व प्रतिपादन में ही है ।

अद्वैत मानने में "प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम ( सज्जन ! प्रकृति, पुरुष तथा काल नित्य हैं ) इस प्रपञ्चसारोक्ति का भी विरोध नहीं है क्योंकि एक ही परमार्थतत्त्व का परप्रकृतित्वेन परपुरुषत्वेन परकालत्वेन भेद विवक्षा से तादृश वर्णन किया गया है । क्योंकि उसी ग्रन्थ में आगे स्वयं ग्रन्थकार ने ही "स्वसंवेद्यस्वरूपा सा" कहकर प्रकृति का चिद्रूप से वर्णन किया है और फिर उसी का "साऽहम्" कहकर आत्मरूप परमपुरुषरूप से वर्णन कर "सा तु कालात्मना सम्यग्" इत्यादि के द्वारा उसे प्रपञ्चकलनात्मक कालरूप कहा है । अपरप्रकृत्यादि भी वक्तव्यरीति से चिद्रूप कहे जा सकते हैं ।

मेन प्रयोज्याः, सन्ध्योपासनादिकं नित्यं कर्मेत्यादौ तथादर्शनादित्यादिना प्रणवादिपरतयोक्तप्रघट्टकस्य पद्मपादाचार्यैर्व्याख्यातत्वान्न तद्विरोधशङ्काऽपीति दिक्।

## विवर्तवादस्वातन्त्र्यवादयोरेकीकरणप्रकारः

यदि तु—स्फुरणतत्त्वस्य प्रागुक्तरीत्या व्यापकत्वेन तद्बहिर्भूतस्तावन्न प्रपञ्चः, तदन्तरपि च न नारिकेलफले इव जलम्, तच्छून्यदेशस्यैवाभावात्,

तथा च नाद्वैते कश्चनविरोध इत्याशयेनाह—किञ्चेति। नियमेन प्रयोक्तव्यार्थे नित्यशब्द प्रयोगं दर्शयति—संन्ध्योपासनादिकमिति।

### विवर्तवादस्वातन्त्र्यवादयोरेकीकरणप्रकारः।

चिच्चेत्ययोर्विम्बप्रतिबिम्बभावं "आदर्शनगरप्रख्यम्" इत्याद्यागमोक्तं पर्यालोचयन् प्रतिबिम्बस्य दर्पणात्मकत्वं न तु बिम्बात्मकत्वमिति च संसाधयन् "सर्वं ब्रह्माभिन्नमिति सिद्धान्तं प्रपञ्चमिथ्यात्वे पर्यवसायितुमुपक्रमते—यदित्विति। "भेदोऽस्तु मिथ्यैवेत्युच्यते" इति परेणान्वयः। प्रपञ्चो हि किं चितो बहिरस्ति, चिदन्तर्वेति विकल्पाद्यं निरस्यति—स्फुरणतत्त्वस्येति। प्रपञ्चस्य चितो बहिः सत्त्वं चित्प्रतियोगिकात्यन्ताभाववन्निरूपितवृत्तित्वरूपं वा चित्प्रतियोगिकध्वंसाधिकरणवृत्तित्वं वा स्यात्, तत्र नोभयथाऽपि सम्भवतीत्याह—व्यापकत्वेनेति। परिच्छेदत्रयशून्यत्वेनेत्यर्थः। द्वितीयं निराचष्टे—तदन्तरपि चेति। चिच्चेत्ययोः किमाधाराधेयभावो विवक्षित उतांशांशिभावो, नाद्यः, इत्याह—न नारिकेलफल इति। तत्र हेतुः—तच्छून्यदेशस्यैवाभावादिति। नारि-

किञ्च "प्रकृतिपुरुषकाला………" प्रकृति, पुरुष तथा काल अकार-उकार-मकाररूप है और वे नित्य है अर्थात् नियमेन प्रयोक्तव्य हैं; "सन्ध्योपासनादिकं नित्यं कर्म" इत्यादि में नियमेन प्रयोक्तव्यत्वरूप अर्थ में नित्यशब्द का प्रयोग देखा जाता है" इत्यादि के द्वारा पद्मपादाचार्य ने प्रकृत्यादिप्रतिपादक उक्त प्रघट्टक की प्रवणादिपरतया व्याख्या की है। अतः इस व्याख्या के अनुसार जो विरोध की शंका भी सम्भव नहीं है।

### विवर्तवाद और स्वातन्त्र्यवाद के एकीकरण का प्रकार

पूर्वोक्त प्रकार से स्फुरणतत्त्व के व्यापक होने से प्रपञ्च को उससे बहिर्भूत तो

तदविषयकप्रतीत्यविषयत्वात्, अयं घटः सन्नित्यादावपि स्वरूपतः स्फुरणभानाभ्युपगमात्, कालादिवदन्यत्रोपदर्शितदिशा नीरूपत्वेऽपि चाक्षुषत्वादेरपि

कालादिवदिति। कालस्य ज्ञानविषयत्वरूपसत्तायाः सत्ताजातेश्च मतभेदेन सर्वेन्द्रियजन्यग्रहविषयत्वं स्वीक्रियते, सर्वेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षानियमादिति परिच्छिन्नत्वहेतूपपत्तावद्वैतसिद्धितच्चन्द्रिकयोर्द्रष्टव्यम्।

केलफले तच्छून्याकाशप्रदेशस्य सत्वेन तत्र जलाधारता सम्भवति। चित्तत्वस्य विज्ञानघनरूपत्वान्न तथा वक्तुं शक्यं, तथात्वञ्च तस्य "अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" ( बृ० ४।५।१३ ) इति श्रुतेः। ननु मा भूत्तच्छून्यदेशः, तद्भिन्नदेशस्तु स्यादिति चेन्नेत्याह—तदविषयकप्रतीत्यविषयत्वादिति। तथा च देशो न चिद्भिन्नस्तदविषयकप्रतीत्यविषयत्वात्संविद्वदितिप्रयोगसम्भवात् तद्भिन्नदेशस्याप्यभावात्।

नन्वयं घटः सन्नितिप्रत्यक्षप्रतीतेः स्फुरणाविषयत्वेन घटे तदभिन्नत्वासिद्ध्या घटस्यैव तद्भिन्नदेशत्वमिति चेत्तत्राह—अयं घटः सन्नित्यादावपीति।

ननु रूपवत एव चाक्षुषत्वदर्शनान्नीरूपस्य चितो न चाक्षुषत्वसम्भव इत्याशङ्कां निराचष्टे—कालादिवदिति। मीमांसका हि यथेदानीमयं घट इति प्रतीतिबलान्नीरूपस्यापि कालस्य चाक्षुषत्वमभ्युपगच्छन्ति, तद्वच्चितोऽपि चाक्षुषत्वसम्भवः। अन्यत्रोपदर्शितदिशेति। दिगेषाऽद्वैतसिद्धितच्चन्द्रिकयोः प्रदर्शिता व्यक्तीकृता च टीकायाम्।

किञ्चायं घटः सन्नित्यादौ सत्ताभानस्य सर्वैरपि प्रेक्षावद्भिरङ्गीकृतत्वेन सत्तासमनियततया तदभिन्नस्फुरणभानमप्यवश्यमुपेतव्यमित्याशयेनाह—सत्ता-

कह नहीं सकते। यदि उसके अन्तर्गत कहा जाय, तो किस प्रकार कहें, नारिकेल फल में जल के समान कह नहीं सकते, क्योंकि स्फुरणतत्त्व से रहित कोई देश ही नहीं है। सभी पदार्थों के स्फुरणाविषयकप्रतीत्यविषयक होने से [ तात्पर्य यह है कि जो पदार्थ तदविषयक प्रतीति का विषय होता है, वह उससे भिन्न ( तच्छून्य ) कहा जाता है। जैसे घटाविषयक प्रतीति पट इत्याकारक का विषय होने से पट-घट शून्य कहा जाता है। नारिकेलफलाविषयक "जलम्" इत्याकारक प्रतीति का विषयक होने से जल नारिकेल से शून्य है किन्तु किसी भी प्रतीति के स्फुरणाविषयक न होने से स्फुरण शून्य देश ही अप्रसिद्ध है। [ यह नहीं कह सकते कि—"अयं घटः सन्" इत्याकारक प्रतीति स्फुरणाविषयक है; क्योंकि "अयं घटः सन्" इस प्रतीति में भी स्वरूप से स्फुरण का भान मानते हैं। अद्वैतसिद्ध्यादि में दर्शितदिशा से नीरूपकाल के समान निरूपस्फुरणतत्त्व का भी चाक्षुष

**सम्भवाच्च, सत्तास्फुरणयोरैक्याच्च, एतेन प्रपञ्चे स्फुरणभेदपक्षः परास्तः, भेदलक्षणप्रमाणानां खण्डने शारदायां निरासाच्च नाप्रयोजकता। नापि समुद्रे**

स्फुरणयोरैक्याच्चेति। सत्ता यदि चिद्रूपा न स्यात् स्फुरणमेव न स्यात्। स्फुरणञ्च यदि सत्तारूपं न स्यात्, असत् स्यादित्यभेदोऽवश्यं स्वीकार्यः।

एतेनेति। तदविषयकप्रतीत्यविषयत्वहेतुना स्फुरणाभिन्नत्वसाधनेन। प्रपञ्चः स्फुरणभेदाभाववान् तदविषयकप्रतीत्यविषयत्वादित्यनुमानेऽप्रयोजकत्वशङ्कां परिहरति--भेदलक्षणप्रमाणानामिति। भेदशब्दस्य कर्मभावकरणव्युत्पत्त्या स्वरूपान्योन्याभाववैधर्म्यादिपरत्वं तार्किकादिभिरङ्गीकृतम्। तत्र स्वरूपभेदपक्षे घटपटयोः स्वरूपं परस्परस्माद् भेदत्वेन प्रतीयमानं परस्परमविशेषणीकृत्य न सम्भवति, विशेषणताया औत्सर्गिकत्वेन भेदत्वेन प्रतीयमाने प्रतियोगिनो विशेषणत्वे विधेयान्वयित्वस्यावश्यम्भावात्, प्रतियोगिनोऽप्यनुयोग्यात्मत्वापत्तिः। एवमन्योन्याभावपक्षेऽपि। किञ्चान्योन्यशब्दस्य तादात्म्यपरत्वेन तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमिति पर्यवसितभेदलक्षस्याभावघटितत्वेन, अभावत्वस्य च भावभिन्नत्वरूपतया भेदे भेदानुप्रवेशेनात्माश्रयः, अभावत्वभेदत्वयोः परस्परघटितत्वेनान्योन्याश्रयः, भावत्वस्यात्यन्ताभावरूपतायान्तु सदातनसंसर्गाभावस्यैवात्यन्ताभावत्वेन चक्रकम्, संसर्गाभावत्वस्य स्वघटितात्यन्ताभावत्वघटितभेदत्वघटितत्वात्। न चाभावत्वस्याखण्डोपाधित्वस्वीकारान्निस्तारो नव्यमते तस्याप्रामाणिकत्वात्। न च वैधर्म्यात्माऽपि सः, वैधर्म्ये घटत्वपटत्वादौ वैधर्म्यान्तराभ्युपगमेऽनवस्थापत्तिः। अनभ्युपगमे च वैधर्म्यान्तराभ्युपगमेऽनवस्थापत्तिः। अनभ्युपगमे च वैधर्म्ययोरैक्यापत्त्या न तेन धर्मिभेदसिद्धिः। भेदस्वरूपासिद्धौ च न तत्र प्रमाणप्रसरोऽपि। तदुक्तम्--

सम्भावितः प्रतिज्ञायां पक्षः साध्येत हेतुना।
न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः" इति।

अंशांशिभावं व्युदस्यति-नापीति। तत्र हेतुः-सविशेषतापत्त्येति। माभूद-

प्रत्यक्ष होता है, और सत्ता एवं स्फुरण का अभेद होने से भी सत्ता भानस्थल में स्फुरण का भान मानना उचित है। स्फुरणाविषयकप्रतीत्यविषयक होने से ही प्रपञ्च में स्फुरण-भेद पक्ष भी निरस्त हो गया।

यदि कहा जाय कि "प्रपञ्चः स्फुरणभेदाभाववान् तदविषयकप्रतीत्यविषयत्वात्" इस अनुमान से प्रपञ्च में स्फुरणाभिन्नत्व सिद्ध नहीं कर सकते, क्योंकि यह हेतु अप-योजक ( व्यभिचारशङ्कानिवर्तकतर्कशून्य ) है। तो यह नहीं कह सकते। क्योंकि खण्डन-शारदा में भेद लक्षणप्रमाणों के निरास के द्वारा निरस्त हो चुका है।

समुद्र में तरङ्ग के समान भी चैतन्य में प्रपञ्च नहीं कह सकते, क्योंकि चैतन्य

**इव तरङ्गादिः, सविशेषतापत्त्याऽद्वैतवादानुपपत्तेः, यथा च विशिष्टाद्वैतवादोऽपि नात्र परिघूर्णितुं प्रभुस्तथोक्तं स्वातन्त्र्यवादशेषे, वक्ष्यते च। परिणामवादस्तु बालानामेवालाप इति किं तच्चर्चया। अपि तु दर्पणे प्रतिबिम्ब इव, योगवासिष्ठे आगमेषु च तथाभिधानस्य बहुलमुपलम्भात्, उक्तं च श्रीभगवत्पादैरपि**

द्वैतवादो विशिष्टाद्वैतवाद एव स्यात्, सविशेषवादाविरोधादिति तत्राह—यथा चेति। परिघूर्णितुम् = परिभ्रमितुम्। वक्ष्यते चेति। शरीरशरीरिभावभङ्ग इति शेषः।

नन्वस्तु तर्हि तयोः परिणामपरिणामिभाव एवेति चेत्तत्राह--परिणामवादस्त्विति। परिणामश्चेच्चितो जगत्तर्हि सर्वात्मना परिणमेदेकदेशेन वा, सर्वात्मनापरिणामे कथं न तत्त्वव्याहतिः। एकदेशपरिणामे वा स एकदेशस्ततो भिन्नो ऽभिन्नो वा, आद्ये कथं तस्य परिणामः, नह्यन्यस्मिन् परिणममानेऽन्यः परिणमतेऽतिप्रसङ्गात्। अभेदे च कथं न सर्वात्मना परिणामः इत्यादि दूषणनिवहस्य प्रसिद्धत्वादाह--बालानामेवालाप इति। पक्षान्तरं निराकृत्य स्वाभिप्रायमुद्घाटयति—अपि तु दर्पणे प्रतिबिम्ब इवेति। तत्र प्रमाणं स्मारयति—योगवासिष्ठ इत्यादिना।

कस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥ (यो० वा०) इति।

आगमेषु चेति।

निर्मले मकुरे यद्वद् भान्ति भूमिजलादयः।
अमिश्रास्तद्वदेकस्मिंश्चिन्नाथे विश्ववृत्तयः॥ (तन्त्रा० ३।४) इति।
तथा-"जलदर्पणवत्तेन सर्वं व्याप्तं चराचरम्"
"सदसद्वस्तुनिर्भासी दर्पणप्रतिबिम्बवत्"
"यथान्तर्निर्मलादर्शे भान्ति भावा विरोधिनः।
अनामिश्रास्तथैतस्मिंश्चिन्नाथे विश्ववृत्तयः॥
"प्रतिबिम्बन्ति यस्यार्थास्त्वन्तः स्वच्छमणेरिव"

इत्यादीनि सन्त्यागमेषु वाक्यानि।

सविशेषतापत्ति होने से अद्वैत ही अनुपपन्न हो जायेगा। यह कहना भी सम्भव नहीं है कि विशिष्टाद्वैत ही मान लिया जाय, क्योंकि विशिष्टाद्वैतवाद के अनुपन्नत्व का कथन स्वातन्त्र्यवाद के अन्त में कर चुके हैं तथा आगे भी करेङ्गे।

परिणामवाद तो बालकों का आलापमात्र है, अतः उसकी चर्चा करना व्यर्थ है। तस्मात् चैतन्य में प्रपञ्च को दर्पण में प्रतिबिम्ब के समान ही मानना उचित है। योगवासिष्ठ तथा आगमग्रन्थों में इस प्रकार के कथन बहुत उपलब्ध होते हैं। श्रीमद्भग-

"विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतम्"इति ।

अथ किमेतत्प्रतिबिम्बत्वम् ? न तावद्यद्भेदेन भासितुमशक्तमन्यव्यामिश्रत्वेनैव भाति तत्प्रतिबिम्बमिति तन्त्रसारादावभिनवगुप्तपादोक्तं शुद्धम्, प्रसिद्धप्रतिबिम्बस्य दर्पणातिरिक्ततया भासनस्यानपलपनीयत्वात् । ननु तद्वि-

अत्रैवार्थे श्रीमद्भगवत्पादसम्मतिमाह—उक्तञ्चेति । विश्वमिति ।

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥

इति सम्पूर्णः श्लोकः । अत्रैव सुरेश्वराचार्योऽप्याह—

अन्तरस्मिन्निमे लोकाः अन्तर्विश्वमिदं जगत् ।
बहिर्वन्माययाऽऽभाति दर्पणे प्रतिबिम्बितम्" इति

अनेन प्रपञ्चप्रतिबिम्बत्वमुट्टङ्कितम् । तत्र किमिदं प्रपञ्चगतं प्रतिबिम्बत्वमिति विचारं प्रस्तौति—अथ किमेतत्प्रतिबिम्बत्वमिति । किमाक्षेपे । अभिनवगुप्तपादोक्तं प्रतिबिम्बलक्षणं निराचष्टे—न तावदिति । शुद्धमित्यन्वयः । रूपादावतिव्याप्तिनिरासार्थं विशेषणदलम् । तद्घटेऽतिव्याप्तिनिरासार्थञ्च विशेष्यम्, तद्घटस्यापि स्वस्माद्भेदेन भासितुमशक्तत्वात् । तस्याशुद्धत्वे हेतुः—प्रसिद्धप्रतिबिम्बस्येति । तथा च प्रसिद्धतमे मुखादिप्रतिबिम्बेऽव्याप्त्यापत्तिः । मुखापेक्षयाऽधिकपरिमाणे दर्पणेऽल्पपरिमाणप्रतिबिम्बदर्शनाद् भेदेन प्रतीतेः स्फुटत्वात् । लक्षणान्तरं शङ्कते—ननु तद्विभागानर्हत्वे सतीति । तच्छब्देनाश्रयपरामर्शः ।

वत्पाद ने भी कहा है—

"विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतम्" इति ।

[ स्वस्वरूपभूतस्फुरणतत्त्व में ही समस्त जगत् दर्पण में दृश्यमाननगर की भाँति भासित होता है । ]

शंका—यहाँ विचार करते हैं कि प्रपञ्चगत प्रतिबिम्बत्व क्या है अर्थात् प्रतिबिम्ब का लक्षण क्या है—"यद्भेदेन भासितुमशक्तमन्यव्यामिश्रत्वेनैव भाति तत्प्रतिबिम्बम्" जो भिन्नतया भासित न हो सके, तथा अन्याश्रित होकर ही भासित हो उसे प्रतिबिम्ब कहते हैं ।

यह तन्त्रसारादि में अभिनवगुप्तपादोक्त लक्षण ठीक नहीं है, क्योंकि प्रसिद्ध प्रतिबिम्ब के दर्पणादि से भिन्नतया भासन का अपलाप नहीं कर सकते, अतः उसमें यह लक्षण अव्याप्त है । "तद्विभागानर्हत्वे सति तत्पारन्त्र्यं तत्प्रतिबिम्बत्वम्"

भागानर्हत्वे सति तत्पारतन्त्र्यं तस्मिन् प्रतिबिम्बत्वमिति वक्तव्यम्, तद्घट-विभागानर्हत्वस्य तद्घटेऽपि सत्त्वेनातिव्याप्तिवारणाय विशेष्यदलम्। नैवम्, घटीयरूपादेर्घटादौ प्रतिबिम्बत्वव्यवहारापत्तेः। तदन्तर्गतत्वं सत्यन्तार्थ इति चेत्, तद्यदि तत्तादात्म्यम्, तदा साधनीयमेव, विशेष्यदलविरुद्धञ्च, तत्त्यागे चोक्तो दोषः। यदि तु तद्विषयकप्रतीतिविषयत्वं वा तत्प्रतियोगिकभेदप्रतियोगितावच्छेदकत्वं वा तदन्तर्गतत्वं तदा घटीयरूपादेर्घटादौ प्रतिबिम्बत्वव्यव-

नवजातशिशावतिव्याप्तिनिरासार्थमिदमिति बोध्यम्। घटरूपादावतिव्याप्त्या तन्निराचष्टे—घटीयरूपादेरिति। ननु तद्विभागानर्हत्वे सति तत्पारतन्त्र्यमित्यत्र तद्विभागानर्हत्वं न तस्मादशक्यपार्थक्यरूपम्, अपि तु तदन्तर्गतत्वरूपम्, तच्च तादात्म्यरूपम्, तेन न घटरूपादावतिव्याप्तिप्रसङ्ग इत्याह—तदन्तर्गतत्वं सत्यन्तार्थ इति। तार्किकाणामत्यन्ताभेदे तादात्म्यात्तन्मते तद्व्युदासः। वेदान्तमतमादाय भेदसहिष्णु तादात्म्यस्वीकारे त्वाह—तदा साधनीयमेवेति। ननु तादृशतादात्म्यं वैदान्तिकैः साधितमेव, अन्यथाऽत्यन्ताभेदे घटरूपमिव कदाचिद् रूपं घट इत्यपि स्यादित्यत आह—विशेष्यदलविरुद्धञ्चेति। न हि तादात्म्यापन्ने तत्पारतन्त्र्यं भवितुमर्हति। तत्पारतन्त्र्यस्य तत्पराधीनत्वरूपस्यात्यन्तभेदघटितत्वात्। न च तत्त्यागोऽपि शक्यः कर्तुमित्याह—तत्त्यागे चोक्तदोष इति। घटीयरूपेऽतिव्याप्तिरूप इत्यर्थः। अत एव तद्विषयकप्रतीतिविषयत्वं तत्प्रतियोगिकभेदप्रतियोगितावच्छेदकत्वं वेत्यपि तदन्तर्गतत्वं न सम्भवतीत्याह—यदि तु तद्विषयकेति। तद्विषयकप्रतीतिः—दर्पणे प्रतिबिम्बः, दर्पणस्तद्वान् वा, तद्विषयत्वं प्रतिबिम्बे। अत्र पक्षे दर्पणेऽपि तदन्तर्गतत्वव्यवहारापत्तिः, तादृशप्रतीतिविषयत्वस्य तत्रापि सत्त्वादित्यरूचेराह—तत्प्रतियोगिकभेदेति। दर्पणीयप्रतिबिम्बवान्नेत्यात्मकस्तत्प्रतियोगितावच्छेदकत्वं प्रतिबिम्बे। एवञ्च घटे रूपम्,

आश्रय से विभागानर्ह होते हुये तत्परतन्त्र ही प्रतिबिम्ब है।

तद्घट भी तद्घट से विभागानर्ह है अतः तद्घट में अतिव्याप्तिवारणार्थ विशेष्यदल ( तत्पारतन्त्र्य ) दिया गया है किन्तु यह लक्षण भी समीचीन नहीं है क्योंकि इस लक्षण के अनुसार घटरूप में भी घट के प्रतिबिम्बत्व का व्यवहार होना चाहिए। अतः यह लक्षण घटरूप में अतिव्याप्त है। यदि कहें कि विभागानर्हत्व का अर्थ तदन्तर्गतत्व है, अतः तदन्तर्गतत्वे सति तत्पारतन्त्र्यम् यह लक्षण है, तो विचार करें—यहाँ अन्तर्गतत्व क्या है। यदि तादात्म्य कहें तो उसे सिद्ध करना होगा। तथा वह विशेष्यदल ( तत्पारतन्त्र्य ) के विरुद्ध भी है और उसका त्याग भी नहीं कर सकते अन्यथा घटरूप में अतिव्याप्ति हो जायेगी। यदि तद्विषयक प्रतीतिविषयत्व या तत्प्रतियोगिकभेदप्रतियोगितावच्छेदकत्व ही तदन्तर्गतत्व ( दर्पण प्रतियोगिक जो भेद—दर्पणीयप्रतिबिम्बवान्नेत्याकारक, उसका प्रतियोगितावच्छेदकत्व ही तदन्तर्गतत्व है ) कहें तो घटीरूप में घट

हारापत्तिस्तदवस्थैव, यदि तु तदविषयकप्रतीत्यविषयत्वम्, तदा प्रतिबिम्बादिशब्दाधीनप्रतीतेर्दर्पणाविषयिकाया अपि सम्भवेनासम्भवोऽव्याप्तिर्वा, यदि तु तदविषयकप्रत्यक्षाविषयत्वम्, तदापि चिदविषयकप्रतीतिमात्राप्रसिद्धिरेव, शरीरादावेवोत्पन्नविनष्टयूकादावतिप्रसङ्गश्चेत्यादिकमूहनीयम्। यदि तु रूपादिव्यावृत्तं प्रतीतिसाक्षिकमेव किञ्चित्तदन्तर्गतत्वमुच्यते, तदापि घटाद्यन्तर्गतजलेऽतिव्याप्तिः, तस्य घटनिष्ठतया घटपरतन्त्रताया अपि सम्भवात्। नन्वेव-

तदवस्थैवेति। घटीयरूपादिमान्नेति घटप्रतियोगिकभेदग्रहणसम्भवादिति भावः।

अप्रसिद्धिरेवेति। स्वीयप्रत्यक्षविषयिताव्यापकतद्विषयिताकत्वविवक्षायां त्वाह शरीरादावेवेति।

घटीयरूपवान्नेत्यादिप्रतीतिमादाय घटरूपेऽतिप्रसक्तिरिति भावः। तदविषयकप्रतीत्यविषयत्वम्, दर्पणाविषयकप्रतीत्यविषयत्वमित्यर्थः। नैतदपि विचारपद्धतिमध्यास्ते, प्रतिबिम्ब इति दर्पणाविषयिण्याः प्रतीतेर्विषयत्वात्प्रतिबिम्बस्येत्याशयेनाह—तदा प्रतिबिम्बादिशब्दाधीनेति। यदि तु दर्पणे प्रतिबिम्ब इति शब्दाधीनप्रतीतिमादाय समन्वये नासम्भवस्तदाप्याह—अव्याप्तिर्वेति। ननु न प्रतीतिर्ज्ञानमात्रमपितु प्रत्यक्षम्, तेन दर्पणाविषयकशाब्दप्रतीतेर्विषयत्वेऽपि प्रतिबिम्बस्य न क्षतिरितिचेत्तत्राह—तदापीति। तथा च लक्षणासिद्धिरिति भावः। टीकोक्तदिशा परिष्कारेत्वतिव्याप्तिरित्याह शरीरादावेवेति। तद्घटाविषयकप्रत्यक्षाविषत्वात्तद्घटेऽपि प्रतिबिम्बत्वव्यवहारप्रसङ्ग आदिना ग्राह्यः। स्वविशिष्टत्वं यदि रूपादिव्यावृत्तं तदन्तर्गतत्वम्, वै० स्ववृत्तित्वं स्वेतरावृत्तित्वञ्चेति, तदापि घटीयरूपे दोषः, घटीयरूपस्यापि तथात्वात्, स्ववृत्तित्वस्य परं तद्घटातिप्रसंगवारकत्वम्, यदि स्वेतरबिम्बप्रयोज्यत्वमुच्यते तदा प्रतिबिम्बलक्षणमन्तरा बिम्ब

प्रतिबिम्बत्व व्यवहारापत्ति तदवस्थ है। यदि तदविषयकप्रतीत्यविषयत्व कहें तो प्रतिबिम्बादिशब्दाधीन "प्रतिबिम्बः' इत्याकारकप्रतीति के दर्पणादि अविषयक होने से असम्भव या अव्याप्ति हो जायेगी। यदि तदविषयकप्रत्यक्षाविषयत्व कहें तो प्रकृत में दर्पणस्थानापन्नचित् के होने से चिदविषयकप्रतीति ही अप्रसिद्ध है, अतः असम्भव हो जायेगा। एवं शरीर में उत्पन्न होकर नष्ट होनेवाली यूका ( जूं ) में अतिव्याप्ति भी होती है।

इसी प्रकार अन्यदोष भी यहाँ स्वयं ऊहनीय है। यदि रूपादिव्यावृत्त प्रतीति साक्षिक ही कुछ तदन्तर्गतत्व कहें तो घटान्तर्गत जल में अतिव्याप्ति हो जायेगी क्योंकि वह घटनिष्ठ होते हुये घट के परतन्त्र भी है।

**मारोपितमेवान्तर्गतत्वं वक्तव्यम्, उक्तजले तु न तत्तादृशम्, एवञ्च घटोपहिताकाशेऽतिव्याप्तिवारणायौपाधिकपरिच्छेदशून्यत्वं विशेष्यदलस्थानीयमस्तु, घटोपहिताकाशस्य घटसमानपरिमाणतया तथात्वाभावात्। मैवम् रिक्तघटादौ जलवत्ताभ्रमसादायातिव्याप्तेः, न चौपाधिकपरिच्छेदोऽपि तत्रारोपितः, तत्सामान्याभावश्च विवक्षित इति वाच्यम्, प्रतिबिम्बमात्रे औपाधिकपरिच्छेदारोपेणासम्भवप्रसङ्गात्। ननूपाधिसमानपरिमाणशून्यत्वविवक्षायां नैष दोषः, प्रतिबिम्बस्याव्याप्यवृत्तित्वेन तथात्वात्, अतएव—स्फटिके लौहित्यस्य धर्मस्यैव व्याप्यवृत्तिः प्रतिबिम्बः, धर्मारोपस्य धर्म्यारोपव्याप्यत्वेऽपि धर्मप्रति-**

स्याप्यतत्वम्, स्वनिष्ठाधिकरणतानिरूपिताव्याप्यवृत्तितावच्छेदकरूपावच्छिन्नाधेयतावत्त्वसम्बधेन स्वविशिष्ठत्वं तदिति कथञ्चिचेत्तदाप्याह्-घटाद्यन्तर्गतजल इति।

आरोपितत्वमन्तर्गतत्वमभ्युपेत्यारपितत्वेसत्यौपाधिकपरिच्छेदशून्यत्वं प्रतिविम्बत्वमिति परिष्कारान्तरमाशङ्कते—नन्वेवमारोपितमेवेति। घटाद्यन्तर्गतजलेचारोपितत्वाभावान्नातिप्रसङ्गः, नापि च घटोपहिताकाशे, औपाधिकपरिच्छेदशून्यत्वाभावात्। दूषयति—रिक्तघटादाविति। शङ्कते—ननूपाधिसमानपरिमाणशून्यत्वविवक्षायां नैष दोष इति। नासम्भव, इत्यर्थः। तत्र हेतुः—प्रतिविम्बस्येति। तथात्वादिति। उपाधि परिमाणशून्यत्वादित्यर्थः। अत एवेति। प्रतिविम्बस्याव्याप्यवृत्तित्वस्वोकारादेव। भामतीकृन्मतमसङ्गतमित्यन्वयः। धर्मस्यैवेति। एवकारेण धर्मिप्रतिबिम्बस्य व्यावृत्तिः। ननु धर्मप्रतिबिम्बस्य धर्मिप्रतिविम्बव्याप्यत्वात्तदभावे कथं धर्मप्रतिविम्ब इति चेत्तत्राह—धर्मारोपस्येति। अत्रेदमवधेयम्—अधिष्ठानतत्त्वसाक्षात्कार निवर्त्य, यौक्तिकज्ञानेनाप्रामाणिकतयैव ज्ञापितश्चेति लक्षणवैलक्षण्यान्निरूपाधिकः सोपाधिकश्चेति द्विविधोऽध्यासः। तत्राद्योऽधिष्ठानाध्यस्यमानयोर्भेदाग्रहे सादृश्यग्रहादौ च विद्यमाने सति भवति। रज्जुसर्पादिविभ्रमे तथा दर्शनात्। द्वितीयश्च द्विविधो धर्माध्यासः

यदि कहा जाय कि—आरोपितत्व ही अन्तर्गतत्व हैं। घटान्तर्गत जल में आरोपितत्वरूप अन्तर्गतत्त्व नहीं हैं। अतः उसमें अतिव्याप्ति नहीं है। एवं घटोपहित आकाश में अतिव्याप्तिवारणार्थ औपाधिक परिच्छेदशून्यत्व भी विशेष्यदलस्थानापन्न मान लेगें। घटोपहित आकाश के घट समान परिमाणवाला होने से उसमें औपाधिक परिच्छेदशून्यत्व नहीं है। अतः उसमें भी अतिव्याप्ती नहीं है। किन्तु यह कथन भी उचित नहीं हैं क्योंकि रिक्त घट में जलवत्ताभ्रम को लेकर आतिव्याप्ति हो जायेगी। यदि कहें कि उस जल में औपाधिक परिच्छेद भी आरोपित हैं। और औपाधिक परिच्छेदका सामान्याभाव ही लक्षण में विवक्षित है तो यह भी नहीं कह सकते, क्योंकि सभी प्रतिबिम्बों में औपाधिक परिच्छेद का आरोप होने से सर्वत्र असम्भव हो जायेगा।

प्रश्न—यदि कहा जाय कि उपाधि समान परिमाण शून्यत्व की विवक्षा करने से यह दोष ( असम्भव ) न होगा, क्योंकि प्रतिबिम्ब के अव्याप्यवृत्ति होने से उसमें

**बिम्बस्य धर्मिप्रतिबिम्बव्याप्यत्वानङ्गीकारादिति—भामतीकृन्मतमसङ्गतम्, मुखाद्यपेक्षयाऽल्पपरिमाणेऽपि दर्पणादौ मुखादेः प्रतिबिम्बस्याव्याप्यवृत्तेरेव दर्शनेन स्फटिके प्रतिबिम्बेऽपि व्याप्यवृत्तित्वमित्यत्र नियामकस्य दुर्भणत्वात्। न च धर्ममात्रबिम्बकत्वमेव नियामकम्; धर्मिणं विहाय धर्म एव केवलः प्रतिबिम्बित इति कः श्रद्दधीत, न चानुभवबलादेवैवम्, अनुभवबलस्यैव निरूप्यमाणत्वात्। न च स्फटिकस्य सर्वतः स्वच्छत्वमेव नियामकम्, दर्पणादेस्तु**

प्रतिविम्बाध्यासश्च। तत्राद्ये धर्मिणोः परस्परतादात्म्याध्यासो हेतुतयाऽपेक्षते, अहमध्यासे कर्तृत्वाध्यासदर्शनात्। प्रतिबिम्बाध्यासे तु धर्मिणोरन्यतरास्यान्यत्र प्रतिबिम्ब उपाधिबिम्बयोः पृथग्देशं सान्निध्यं चाक्षुषत्वञ्चापेक्षते। दर्पणे मुखमित्यादौ तथा दर्शनात्। अरुणः स्फटिक इत्यत्र त्वारुण्यधर्मस्यैव प्रतिबिम्बः। "कुसुमाद्भेदेन गृह्यमाणेऽपि स्फटिकमणावतिस्वच्छतया जपाकुसुमप्रतिबिम्बोद्ग्राहिण्यरुणः स्फटिक इत्यारुण्यविभ्रमः" इत्यपि तेषामेवोक्तिः। तथा च तस्यारुण्यप्रतिबिम्बस्य व्याप्यवृत्तित्वमिति तन्मताशयः। अनुभावानुरोधिदृष्टान्तोक्त्या तन्मतस्यासाङ्गत्यमुपपादयति—मुखाद्यपेक्षयेति। धर्ममात्रस्य प्रतिबिम्बोऽपि युक्तिविरुद्ध इति दर्शयति—धर्मिणं विहायेति। अत एवारूणः स्फटिक इत्यत्रापि प्रतिबिम्बितस्यैव जपाकुसुमस्यारूण्यं प्रतिबिम्बते स्फटिकमणावित्यभाणि विवरणे—"न च धर्मिणं विहाय धर्माणां स्वातन्त्र्येणाध्यासासम्भवः; जपाकुसुमसंनिधौ "लोहितः स्फटिक" इत्यादौ धर्ममात्राध्यासदर्शनादित्याशङ्क्य नैतत्सारम्, धर्माणां स्वातन्त्र्यायोगात्। स्फटिकेऽपि प्रतिबिम्बितजपाकुसुमाश्रितमेव लौहित्यं प्रतीयते न तु स्वातन्त्र्येण" इति। स्फटिकगतस्वच्छत्वस्य तन्नियामकत्वं शङ्कते—न च स्फटिकस्य सर्वत इति। स्वच्छेऽपीति। दर्पणादौ

उपाधिसमानपरिमाणशून्यत्व रह जायेगा। इसीलिए भामतीकार का यह मत कि—"स्फटिक में लौहित्य धर्म का ही व्याप्यवृत्ति प्रतिबिम्ब पड़ता है, धर्म के आरोप को धर्मी के आरोप का व्याप्य होने पर भी धर्म के प्रतिबिम्ब को धर्मी के प्रतिबिम्ब का व्याप्य नहीं माना जाता" असङ्गत है, क्योंकि मुख की अपेक्षा अल्प परिमाणवाले दर्पण में मुखका प्रतिबिम्ब अव्याप्यवृत्ति ही देखा जाता है, अतः स्फटिक गत प्रतिबिम्ब के व्याप्यवृत्तिता में कोई नियामक नहीं है। धर्ममात्रबिम्बकत्व को नियामक नहीं मान सकते, क्योंकि धर्मी को छोड़कर धर्ममात्र के प्रतिबिम्बित होने में किसे विश्वास होगा। अनुभवबलात् वैसा मानना होगा, यह भी नहीं कह सकते, क्योंकि अनुभव बल ही तो निरूप्यमाण (विचारणीय) है। [ अर्थात् अनुभव के प्रति व्यक्ति विश्रान्त होने से किस अनुभव को प्रमाण माना जाय एवं किसको नहीं, यह विचारणीय है। ]

यदि कहें कि स्फटिक का सर्वतः स्वच्छत्व ही स्फटिकगत प्रतिबिम्ब के व्याप्य-

**पाश्चात्यभागो न स्वच्छ इति वाच्यम्, स्वच्छेऽपि सर्वस्मिन्नंशे प्रतिबिम्बानुदया-दिति चेन्न, दर्पणाद्यपेक्षया विलक्षणस्वच्छताशालितया स्फटिके सर्वांशे एव प्रसरत्प्रतिबिम्बस्य शक्यसमर्थनतयोपाधिसमानपरिमाणशून्यत्वाभावेन तत्राव्याप्तेः, महति कलसे आरोपिते स्वल्पजले उपाधिसमानपरिमाणशून्यतयाऽतिव्याप्तेश्च । तस्मात्प्रतिबिम्बत्वमनुभवविशेषसाक्षिकतयैव निरूप्यम्, अनुभवश्च सार्वजनीनो दर्पणादिस्थले एवेति चित्प्रतिबिम्बत्वं घटादौ कथं मुख्यम्, आगमादौ तथाभिधानस्याभिप्रायान्तरालम्बितया वक्ष्यमाणरीत्या सम्भवात् ।**

तथा दर्शनात् । दर्पणगतस्वच्छत्वापेक्षया स्फटिकगतस्वच्छत्वस्य विलक्षणत्वात् तत्र सर्वांशेऽपि व्याप्यवृत्तिप्रतिबिम्बस्यानुभवसिद्धत्वादारूण्यप्रतिबिम्बेऽव्याप्तं निरुक्तलक्षणम्, अतिव्याप्तञ्च घटादौसमारोपित स्वल्पजले इत्याशयेन प्रतिवादी समाधत्ते—दर्पणाद्यपेक्षयेति । एतेन प्रतिबिम्बस्य व्याप्यवृत्तित्वांशे भामतीमतस्यासाङ्गत्यमपि निरस्तम् । प्रकृतार्थमुपसंहरति—तस्मादिति । प्रकारान्तरेण प्रतिबिम्बस्य निर्वक्तुमशक्यत्वादित्यर्थः ।

नन्वस्तु तावदनुभवविशेषसाक्षिकतयैव प्रतिबिम्बत्वनिर्वचनम्, तेनैव दर्पणे मुखप्रतिबिम्ब इव चिति प्रपञ्चप्रतिबिम्बोऽपि सेत्स्यति इति चेत्तत्राह—अनुभवश्चेति । दर्पणादिस्थले एवेत्येवकारेण चित्प्रतिबिम्बस्थलं वारयति । तथा च नानुभवबलादपि चिति घटादिप्रतिबिम्बो वक्तुं शक्य इतिभावः । ननु माभूच्चिति घटादिप्रतिबिम्बसद्भावे सार्वजनीनोऽनुभवःप्रमाणम्, आगमस्तु तत्र स्यात् । स च "निर्मले मकुरे यद्वत्"–"कस्मिश्चिद् दर्पणे स्फारे" इत्याद्युक्तरूप इतिचेत्तत्राह–आगमादाविति । वासिष्ठादिवचनमादिना ग्राह्यम् । विश्वस्य चित्प्रतिबिम्बत्वाभिधानस्य । वक्ष्यमाणरीत्येति । तदविषयकप्रतीतिविषयत्वायोग्यत्वस्येत्यादि

वृत्तिता का नियामक है, और दर्पण में तो सर्वतः स्वच्छत्व नहीं है चूंकि उसका पृष्ठ-भाग स्वच्छ नहीं होता । तो यह कथन भी उचित नहीं है कारण कि—स्वच्छ में भी सर्वांश में प्रतिबिम्ब नहीं पड़ता ।

उत्तर—दर्पणादिकी अपेक्षा स्फटिक के विचक्षण स्वच्छ होने से स्फटिक के सर्वांश में ही प्रतिबिम्ब होनेका समर्थन किया जा सकता है । अतः स्फटिकगत प्रतिबिम्ब में उपाधि समान परिमाणशून्यत्व के न होने से उसमें उक्तलक्षण ( आरोपितत्वे सति उपाधिसमानपरिमाणशून्यत्व ) अव्याप्त है, तथा बृहत् कलश में स्वल्प जलका भ्रम होने पर उसमें उपाधिसमानपरिमाणशून्यत्व होने से अतिव्याप्त भी है । तस्मात् अनुभव विशेष साक्षिक रूप से ही प्रतिबिम्बत्व का निरूपण करना उचित है किन्तु सार्वजनीन अनुभव दर्पणादिस्थल में ही देखा जाता है, अतः चैतन्य में घटादि के प्रतिबिम्ब को मुख्य कैसे माना जाय, अर्थात् घटादि के चित्प्रतिम्बत्व में अनुभव प्रमाण नहीं हो सकता । "निर्मले मकुरे यदवत्" इत्यादि आगमोक्त घटादि में चित्प्रतिबिम्बत्व

**प्रतिबिम्बसमानसंस्थानकबिम्बाभावाच्च। लोकसिद्धबिम्बाभावेऽपि प्रतिबिम्बलक्षणयोगादेव जगतश्चिति प्रतिबिम्बत्वम्, बिम्बस्य निमित्तविधयैवापेक्षणीयतया स्वातन्त्र्यशक्त्यैव निर्वाहादित्येव ह्यभिनवगुप्तपादादिभिरुदितम्, न च प्रतिबिम्बलक्षणासम्भवे तथा वदितुं शक्यमिति चेत्,**

सत्यमेतत्, तदविषयकप्रतीतिविषयत्वायोग्यत्वस्य तदभेदव्याप्यत्वे एव

**सत्यमेतत् तदविषयकप्रतीतीति। वेदान्तिमतेऽलीकविषयकप्रतीतिश्चिदविषयिका प्रसिद्धा, परमते तु साऽपि स्फुरणप्राणालीकविषयिकेत्यन्यत्, उपहितचितां भेदेन च तत्तच्चिदविषयकप्रतीतिः प्रसिद्धा, अथवा स्वाविषयकप्रतीतिविषयत्वयोग्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्तदभावस्तदभेदव्याप्य इति वक्तव्यम्, चिदविषयकप्रतीत्यप्रसिद्ध्या चितः स्वपदेनोपादातुमशक्यतया तेन सम्बन्धेन चिदभावस्य केवलान्वयित्वात्।**

वक्ष्यमाणरीत्येत्यर्थः। बाधकान्तरमप्याह—प्रतिबिम्बसमानेति। प्रतिबिम्बस्य स्वसमानसंस्थानकबिम्बपूर्वकत्वनियमात्, प्रकृते च तदभावात्, कथं चित्प्रतिविम्बत्वं प्रपञ्चस्य। न हि प्रतिबिम्बभूतदृश्यमानप्रपञ्चमतिरिक्तं प्रपञ्चान्तरं किञ्चिदस्तीतिभावः। अभिनवगुप्तपादोक्त्यनुसारेण स्वातन्त्र्यशक्तिबलादपि न प्रतिबिम्बसम्भव इत्यभिप्रायेण तदुक्तिं दर्शयति—"लोकसिद्धविम्बाभावेऽपीति। प्रत्यक्षतयाऽनुभूयमानस्य जगतः सर्वथाऽपह्नोतुमशक्यत्वादस्ति तावज्जगत्प्रतिविम्बं बिम्बं विनापि, प्रतिबिम्बं प्रति बिम्बस्य निमित्तकारणत्वोपगमात्। दृश्यते ह्यसत्यपि दण्डे निमित्ताकारणे स्वकराहत्यैव चक्रं भ्रामयन् कुम्भं कुर्वन् कुम्भकारः। तथा प्रकृतेऽपि स्वातन्त्र्यशक्तिबलादेव जगत्प्रतिविम्बं भासते इत्याशयेनाह—विम्बस्य निमित्तविधयैवापेक्षणीयतयेति। स्वातन्त्र्यशक्त्यैवेति। अत एव जयरथोऽपि—विश्वमिदं संविदि दर्पणप्रतिविम्बन्यायेनावस्थितं न तु तदतिरिक्ततया बही रूपत्वेन वस्तुसदिति न तत्राभिनिवेष्टव्यम्" इति। "परमेश्वर एव स्वस्वातन्त्र्यमाहात्म्यात् तत्तद्बिम्बप्रतिविम्बाभासवैचित्र्येणावभासते" इति च। तथावदितुम् = प्रतिबिम्बलक्षणयोगादेवेति वदितुमित्यर्थः। "अथ किमेतत्प्रतिविम्बत्व-

के कथन का अभिप्रायान्तर वक्ष्यमाण रीति से सम्भव है। एवं जगत्प्रतिबिम्ब के समान संस्थानवाले बिम्ब के न होने से भी जगत् प्रतिविम्ब नहीं हो सकता। यद्यपि "लोकसिद्ध विम्बाभावेऽपि........" लोक प्रसिद्ध विम्ब के न होने पर भी प्रतिबिम्बलक्षण के सम्बन्ध (लक्षणघटने) से ही जगत् चित्कोप्रतिविम्ब में माना जाता है। क्योंकि बिम्ब तो केवल निमित्तरूप से ही प्रतिबिम्ब के लिए अपेक्षित होता है, अतः उस (बिम्ब) के न रहने पर भी स्वातन्त्र्यशक्ति के द्वारा ही प्रतिबिम्ब का निर्वाह हो जायेगा" इस प्रकार अभिनवगुप्तपादने कहा है किन्तु प्रतिबिम्ब लक्षण के न बनने पर उक्त कथन भी सम्भव नहीं है।

**तात्पर्यात्। व्युत्पादितञ्चैतद्विज्ञानवादे। तथा च दर्पणप्रतिबिम्बयोरैक्यमिव स्फुरणप्रपञ्चयोरप्यैक्यमितिस्थितौ भेदोऽस्तु मिथ्यैवेत्युच्यते।**

**तदा प्रकाशविषयत्वं सत्यत्वव्याप्यमिति प्रस्थितमेवेति भेदिनामपि मिथ्यात्वं न्यायानीतम्, तथाहि—दर्पणे प्रतिबिम्ब इव चितौ प्रतीयमानोऽयं प्रपञ्चो यथोक्तरीत्या न तद्भिन्नः, तथा न तदभिन्नोऽपि, दर्पणस्य सर्वदा प्रतिबिम्बवत्त्वस्येव चितेरपि सर्वदैकाकारप्रपञ्चवत्त्वस्यापत्तौ वस्तूनां निमेषोन्मेषयोरनुभूयमानयोरपलापापत्तेरित्यहो दुर्गतिरस्य प्रपञ्चस्य दीनस्य।**

मित्याक्षेपं परिहरति सिद्धान्ती—सत्यमेतदिति। पूर्वपक्षस्य सर्वथा निराकरणीयतायां हि नकारादिप्रयोगः समुचितः। उच्यत इतित्वीषदङ्गीकारे, सत्यमित्यादेश्चेषन्निराकार्यत्वे प्रयोगः। तथा च प्रकृते इषन्निराकार्यत्वस्येष्टत्वात्तथोक्तम्। तच्च प्रतिबिम्बानिर्वचनरूपम्। आगमोक्ततदभिधानस्य तात्पर्यमुपवर्णयति-तदविषयकेत्यादिना। परिष्कृतमेतट्टीकायाम्। तदा दृष्टान्ते दर्पणस्य प्रकृते च स्फुरणस्य परामर्शः। तथा च जगत्प्रतिबिम्बं स्फुरणाभिन्नं तदविषयकप्रतीतिविषयत्वायोग्यत्वाद्, दर्पणगतमुखादिप्रतिबिम्बवदिति युक्त्याऽभेदसिद्धौ प्रतीयमानो भेदः प्रातीतिक एव, भिद्यमानतन्त्रत्वात्तस्य, भिद्यमानस्य च जगतो वस्तुतोऽभिन्नत्वात्तदभावेऽनाश्रयस्य भेदस्य वास्तविकस्यायोगादित्यभिप्रायणाह—तथा च दर्पणप्रतिबिम्बयोरैक्यमिवेति।

नन्वेवं तर्हि प्रकृते किमायातमिति तत्राह—तदेति। प्रस्थितम्, गतम्, निरस्तमितियावत्। भेदे निरुक्तव्याप्तिभङ्गात्। इति शब्दो हेत्वर्थः। भेदिनाम् भेदाश्रयाणाम् ( भिन्नतयाप्रतीयमानानाम् ) प्रपञ्चानाम्। न्यायानतीम् तुल्ययुक्त्याऽऽपतितम्। न्यायानीतत्वमेव दर्शयति—तथाहीति। ननु माभूच्चिद्भिन्नत्वं प्रपञ्चस्य, तथापि नेष्टसिद्धिः चिदभिन्नत्वेन तस्य सत्यत्वापत्तेरिति चेत्तत्राह–तथा न तदभिन्नोऽपीति। चितेस्तादृशप्रयञ्चवत्त्वे नेष्टापत्तिः कर्तुं शक्येत्याह—वस्तूनामिति। चिद्भिन्नतया प्रपञ्चस्य नित्यत्वेनेति शेषः। दुर्गतिः स्वरूपाव्यवस्थितिः। दीनस्य स्वस्वरूपरक्षणासमर्थस्य।

ससाधान—यह सत्य है कि वस्तुतः प्रतिबिम्ब का लक्षण नहीं बनता है तथापि उक्त आगम वचनों का—तदविषयकप्रतीतिबिषयत्वायोग्यत्व को तदभेद का व्याप्य बतलाने में ही तात्पर्य है। इसका व्युत्पादन विज्ञानवाद में कर चुके है। तथा च जगत्प्रतिबम्बं स्फुरणभिन्नं तदविषयकप्रतीतिविषयत्वायोग्यत्वाद् दर्पणगत मुखादिप्रतिबिम्बवत् इत्याकारक अनुमान से दर्पण प्रतिविम्ब की एकता के समान स्फुरण और प्रपञ्च की भी एकता सिद्ध होने से प्रतीयमान भेद को मिथ्या मानना ही आवश्यक है।

यदि इस प्रकार विचार किया जाय, तब तो "प्रकाशविषयत्व सत्यत्व का व्याप्य

**यदि तु—एतद्दोषपरिजिहीर्षया दर्पणो न प्रतिबिम्बात्मकोऽपि तु प्रतिबिम्ब एव दर्पणात्मकः, ननु साङ्ख्येषु वेदान्तिषु च केषुचित्सत्सु कथमेतदपि,**

यदि त्विति। वेदान्तिनामपि सम्मतमेवेत्युच्यत इति दूरतरेणान्वयः। एतद्दोषपरिजिहीर्षयेति। चितेः सर्वदैकाकारप्रपञ्चवत्त्वे वस्तूनामुदयास्तमययोरनुभूयमानयोरपलापापत्तिरूपदोषपरिहातुमिच्छयेत्यर्थः। सांख्यादिमतमवलम्ब्य शङ्कते—नन्विति। कथमेतदपीति। दर्पणो न प्रतिबिम्बात्मकोऽपितु प्रतिबिम्ब एव दर्पणात्मक इत्युक्तमपि कथम्। तत्र हेतुः—तैर्बुद्ध्यादाविति। सांख्यपदं योगस्याप्युपलक्षणम्। सांख्ययोगमते प्रमा द्विविधा—बुद्धिवृत्तिः पौरूषेयबोधश्च तादृशप्रमाया करणमपि द्विविधम्, इन्द्रियादयो बुद्धिवृत्तिश्च। तत्र पौरुषेयबोधस्य प्रमात्वे बुद्धिवृत्तिः प्रमाणम्। बुद्धिवृत्तः प्रमात्वे चेन्द्रियादयः प्रमाणम्। बुद्धिर्हीन्द्रियप्रणालिकया विषयदेशं गत्वा विषयाकारेण परिणमते। बुद्धेर्विषयाकारपरिणाम एव च वृत्तिरित्युच्यते। तत्रानधिगताबाधितासंदिग्धार्थविषयत्वं प्रमात्वम्। तस्यां बुद्धिवृत्तौ प्रतिबिम्बितं यच्चैतन्यं तदेव पौरुषेयबोधशब्देनोच्यते। तदुक्तम् भाष्यकृद्भिः—"फलमविशिष्टः पौरुषेयश्चित्तवृत्ति बोध" (यो. द. १।७) इति। तत्र मिश्रपादैरपि—"नहि पुरूषगतो बोधो जन्यतेऽपितु चैतन्यमेव बुद्धिदर्पणप्रतिबिम्बितं बुद्धिवृत्याऽर्थाकारया तदाकारतामापद्यमानं फलम्" इति। द्रष्टा दृशिमात्रे" त्यादिसूत्रभाष्यव्याख्यानावसरे—"बुद्धिदर्पणे पुरुषप्रतिबिम्बसंक्रान्तिरेव बुद्धिप्रतिसंवेदित्वं पुंसः" इत्युक्तम्। तत्रैव च "अपरिणामिनी" इत्यादिपञ्चशिखपंक्तिव्याख्यानावसरे "यथा निर्मले जलेऽसंक्रान्तोऽपि चन्द्रमाः संक्रान्तप्रतिविम्बतया संक्रान्त इव, एवमत्राप्यसंक्रान्तापि संक्रान्तप्रतिविम्बा चितिशक्तिः संक्रान्तेव" इत्युक्तम्। एवं कौमुद्यामपि तैः—असंदिग्धाविपरीतानधिगतविषया चित्तवृत्तिः बोधश्च पौरूषेयः फलम्, तत्साधनं प्रमाणम्" इति। तथा च तन्मते बुद्धौ चैतन्यप्रतिबिम्बं स्वीकृतमिति सिद्धम्।

है" यह कथन समाप्त हो गया। क्योंकि भेद में यह व्याप्ति व्यभिचरित है—भेद के प्रकाश विषय होने पर भी सत्य नहीं है। ऐसी स्थिति में भेद के आश्रय प्रपञ्च का मिथ्यात्व भी न्यायतः प्राप्त है। क्योंकि विचार करें—दर्पण में प्रतिबिम्ब के समान चैतन्य में प्रतीयमान यह प्रपञ्च यथोक्तरीति से उस (चैतन्य) से भिन्न तो हो नहीं सकता। और इसे चैतन्य से अभिन्न भी नहीं कह सकते, क्योंकि जैसे प्रतिबिम्ब के दर्पणाभिन्न होने पर दर्पण सदा प्रतिबिम्ब वाला हो जाता है उसी प्रकार चैतन्य के सर्वदा एकाकार प्रपञ्चवान् होने पर पदार्थों में अनुभूयमान उत्पाद-विनाश का अपलाप हो जायेगा। ऐसी स्थिति में इस दीन (स्वस्वरूपरक्षा में असमर्थ) प्रपञ्च की दुर्गति (स्वरूप की दुर्व्यवस्था) ही है।

उक्त अनुभूयमान निमेषोन्मेष की अपलापापत्ति की परिजिहीर्षा (परिहारेच्छा)

**तैर्बुद्ध्यादौ चैतन्यस्यैव प्रतिबिम्बाभ्युपगमात् । अथ कोऽत्रातिभारः, प्रतिबिम्बस्य बिम्बात्मकत्वे हि तस्य दर्पणस्थानीयबुद्ध्याद्यात्मकत्वमसम्भवद्युक्तिकं स्यात्, तस्य बिम्बातिरिक्तत्वे तु बुद्ध्याद्यनधिकसत्ताकत्वस्यैव सम्भवेन बुद्ध्याद्यभिन्नत्वेऽपि क्षत्यभावात्, एवञ्च बिम्बातिरिक्ततायाः प्रतिबिम्बे समर्थनेनैव निर्वृतिरस्तु, किञ्च चैतन्ये बुद्ध्यादेरेव प्रतिबिम्ब इत्यस्तु, जीवेश्वरविषये**

एवं वेदान्तिनोऽपि बुद्ध्यादौ चैतन्यप्रतिबिम्बमङ्गीकृत्य चिति जीवत्वं परिकल्पयन्ति । विशेषन्त्वत्रानुपदं वक्ष्यामः । बुद्ध्यादावित्यादिनाऽविद्याग्राह्या । वैदान्तिकैरविद्यायामपि चित्प्रतिबिम्बाभ्युपगमात् । बुद्ध्यादौ चैतन्यप्रतिबिम्बस्वीकारे दोषाभावमालोचयितुं शङ्कते—अथ कोऽत्रातिभार इति । अस्य समाधाने कोऽतिभार इत्यर्थः । किमाक्षेपे । आलोचनप्रकारं प्रकटयति—प्रतिबिम्बस्येति । मदीयमिदं मुखमिति प्रत्यभिज्ञाबलात्प्रतिबिम्बस्य बिम्बात्मकत्वस्वीकारे चैतन्यप्रतिबिम्बो बुद्ध्यात्मेति कथनं युक्तिविरुद्धमित्याह—प्रतिबिम्बस्य बिम्बात्मकत्वे इति । ननु ग्रीवास्थदर्पणस्थमुखयोरन्योन्याभिमुखत्वेन भेदस्यानुभूयमानत्वान्न प्रतिबिम्बस्य बिम्बात्मकत्वमिति चेत्तत्राह—तस्य बिम्बातिरिक्तत्वेत्विति । क्षत्यभावादिति । बुद्धेर्मिथ्यात्वेन तदात्मकतया प्रतिबिम्बस्यापि मिथ्यात्वसिद्धेः । निर्वृत्तिरानन्दः । बुद्ध्यादेरेव प्रतिबिम्बस्वीकारेऽपि वेदान्तमते न काचिद्धानिरित्याह—किञ्चेति ।

नन्वेवं जीवेश्वरविभागो न स्यात्, बुद्ध्यादौ चित्प्रतिबिम्बस्यैव तथात्वेनावधारितत्वादितिचेत्तत्राह—जीवेश्वरविषय इति । अत्रेदमवधेयम्—अस्ति-

से "दर्पण प्रतिबिम्बात्मक नहीं है, अपि तु प्रतिबिम्ब ही दर्पणात्मक है" यह कहेङ्गे ।

शंका—सांख्य एवं वेदान्ती के उपस्थित रहते हुए यह कैसे मान लिया जाय कि प्रतिबिम्ब ही दर्पणात्मक है । क्योंकि वे लोग बुद्धयादि में ही चैतन्य का प्रतिबिम्ब मानते हैं । प्रश्न—इसके समाधान में क्या कठिनाई है, क्योंकि प्रतिबिम्ब के बिम्बात्मकत्वपक्ष में चैतन्य के प्रतिबिम्ब को दर्पणस्थानीय बुद्धयादिरूप कहना सम्भव नहीं है । तथा प्रतिबिम्ब को बिम्बातिरिक्त मानने पर चैतन्य के प्रतिबिम्ब में बुद्धयाद्यनधिकसत्ताकत्व ही सिद्ध होगा, ऐसी स्थिति में चित्प्रतिबिम्ब को बुद्धयादि से अभिन्न मानने पर भी क्षति नहीं है । [ तात्पर्य यह है कि वेदान्त सिद्धान्तानुसार औपाधिकविनाशित्वादि स्वाभाविक नित्यत्वादि का विरोध नहीं करता है, अतः बुद्धयादि के मिथ्या एवं विनाशी होने से तदात्माचैतन्य-प्रतिबिम्ब को मिथ्या मानने पर भी स्वतः चैतन्यके सत्य होने में कोई विरोध नहीं है । ] एवञ्च प्रतिबिम्ब में बिम्बातिरिक्तता के समर्थन से ही व्यवस्था बन जायेगी । किञ्च चैतन्य में बुद्धयादि का ही प्रतिबिम्ब मान लिया जाय ।

चैतन्य में बुद्धयादि का प्रतिबिम्ब मानने पर जीवेश्वर की स्वरूप-व्यवस्था कैसे

तावदत्र जीवेश्वरस्वरूपविषये तिस्रो विधाऽऽचार्यमतस्य। प्रतिबिम्बवाद आभासवादोऽवच्छेदवादश्च। तत्र प्रतिबिम्बवादेऽपि मतद्वयम्—जीवेश्वरावुभावपि प्रतिबिम्बावित्येकम्, जीव एव प्रतिविम्ब, ईश्वरस्तु बिम्ब इति द्वितीयम्।

तत्र जीवेश्वरप्रतिबिम्बवादे—मायायां प्रतिबिम्बितं चैतन्यमीश्वरस्तस्या एवानन्तप्रदेशेषु अविद्याख्येषु चैतन्यप्रतिबिम्बो जीव इत्येकः पक्षः।

मूलप्रकृतेरेव मायाऽविद्येति रूपभेदौ। शुद्धसत्त्वप्रधानायां मायायां चित्प्रतिबिम्ब ईश्वरः, मलिनसत्त्वप्रधानायामविद्यायां चित्प्रतिबिम्बो जीव इति द्वितीयः।

विक्षेपशक्तिप्राधान्येन माया, आवरणशक्तिप्राधान्येनाविद्येति तयोर्भेदमादाय तत्र प्रतिबिम्बौ जीवेश्वरौ। अतएव जीवस्यैव "अज्ञोऽहमि"त्यनुभव इति तृतीयः।

"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति वचनमनुसृत्यान्तःकरणप्रतिविम्बो जीवोऽविद्याप्रतिविम्बश्चेश्वर इति चतुर्थः पक्षः, एवं पक्षचतुष्टयम्।

विवरणकृतस्तु—"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति" इति वचनेनैकस्यैवाज्ञानस्यैव जीवेश्वरभेदकत्वबोधनात्, अविद्याप्रतिबिम्बो जीवः, बिम्बभूतश्चेश्वरः।

न च रूपवत एव दर्पणादेरूपाधित्वं रूपवत एव च मुखादेर्विम्बत्वं दृष्टमिति नाविद्यायां नीरूपायां नीरूपस्य चैतन्यस्य प्रतिबिम्बसम्भव इति वाच्यम्, नीरूपस्यापि रूपपरिमाणादेः प्रतिबिम्बदर्शनात्। न च द्रव्यप्रतिबिम्बे एव रूपवत्त्वं प्रयोजकमिति न रूपशून्यस्य रूपादेः प्रतिबिम्बानुपपत्तिः, ब्रह्मणस्तु द्रव्यस्य रूपशून्यतया प्रतिविम्बासम्भव इति वाच्यम् समवायिकारणत्वादेर्द्रव्यलक्षणस्य ब्रह्मण्यभावाद् ब्रह्मणो द्रव्यत्वासिद्धेः। न च वाय्वादिप्रतिबिम्बवारणाय रूपादिप्रतिबिम्बोत्पादनाय च चाक्षुषत्वमेवानुगतं बिम्बत्वप्रयोजकमभ्युपेयम्, ब्रह्मणश्चाचाक्षुषत्वान्न प्रतिबिम्बसम्भव इति वाच्यम्, अचाक्षुषस्यापि नभसोऽभ्रनक्षत्रसध्रीचीनस्य जलादौ प्रतिबिम्बदर्शनात्। तथा च नीरूपेऽप्यज्ञानेऽचाक्षुषस्यापि ब्रह्मणः प्रतिबिम्बः सम्भवति। समर्थितश्चायं वादः "रूपं रूपं प्रतिरूपो बभूव" 'अतएव चोपमासूर्यकादिवत्' इति श्रुतिसूत्राभ्यामिति वर्णयन्ति।

तद्विशेषास्त्वाभासवादिनो वार्तिककारादयः "आभास एव चेति" सूत्रेणाभासवादं समर्थयन्तः ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया च मुच्यते, बृहदारण्यकभाष्यादौ राजकुमारस्याज्ञानेनात्मानं व्याधं मन्यमानस्य ज्ञानेन

व्याधभावनिवृत्त्या राजकुमारत्वप्राप्तिरिति दृष्टान्तेन तथा प्रतिपादनादिति विवेचयन्ति।

प्रतिबिम्बवादे बिम्बत्वप्रतिबिम्बत्वयोः कल्पितत्वेऽपि बिम्बप्रतिबिम्बौ स्वरूपतः सत्यौ। आभासवादे तु तावपि मिथ्यैवेति तयोर्विवेकः।

वाचस्पतिमिश्रास्तु—निरूक्तवादे भूयांसि दूषणान्युद्भावन्तः श्रुतिसूत्राभ्यामवच्छेदवादं समर्थयन्ति। अचाक्षुषस्य ब्रह्मणोऽचाक्षुषेऽज्ञाने प्रतिबिम्बासम्भवात्। वाय्वादिप्रतिबिम्बनिरासाय बिम्बत्वे चाक्षुषत्वस्यैव प्रयोजकत्वात्। न च साभ्रनक्षत्रस्य गगनस्य जलादौ प्रतिबिम्बः; येनोक्तप्रयोजकत्वं बाध्येतापि त्वभ्रनक्षत्रादेरेव, गगनाभोगव्यापिनः सवितृरश्मिमण्डलस्यैव वा। न च नीरूपे ध्वनौ नीरूपस्य वर्णस्य प्रतिबिम्बदर्शनेन न बिम्बप्रतिबिम्बभावे चाक्षुषत्वं प्रयोजकमिति वाच्यम् ध्वनिधर्माणामुदात्तत्वादीनां सन्निहितानां विवेकाग्रहाद् वर्णेष्वध्यासोपपत्त्या ध्वनौ वर्णप्रतिबिम्बकल्पनाया अप्रामाणिकत्वात्। नापि नीरूपेऽविद्यादौ नीरूपस्य ब्रह्मणः प्रतिबिम्बसम्भवः, रूपवति रूपवत एव प्रतिबिम्बदर्शनात्। न च निरूपस्य रूपस्य प्रतिबिम्बो दृष्टान्तः, तत्र रूपाश्रयस्य द्रव्यस्यैव प्रतिबिम्बो, न तु केवलरूपस्येत्यनुदाहरणम्।

प्रतिध्वनिरपि न पूर्वशब्दप्रतिबिम्बः, पञ्चीकरणप्रक्रियया दुन्दुभिसमुद्रदावानलझंझावातादिध्वनीनां पृथिव्यप्तेजोऽनिलादिशब्दत्वेनानुभूयमानस्य प्रतिध्वनेरप्याकाशशब्दतया प्रतिबिम्बकल्पनाया अन्याय्यत्वात्।

एवं गुहादौ समुपलभ्यमानो वर्णप्रतिशब्दोऽपि न पूर्ववर्णप्रतिबिम्बः। तत्र कण्ठताल्वाद्यभिघातजन्यमूलध्वनिर्यथा वर्णाभिव्यञ्जकस्तथैव तज्जन्यप्रतिध्वनेरपि वर्णाभिव्यञ्जकत्वेनोपपत्तेः।

नाप्यत्र "रूपं रूपं प्रतिरूपो बभूव" "यथाह्ययं ज्योतिरात्मा विवस्वानपोभिन्ना" "एकएव तु भूतात्मा" इत्यादिश्रुतिवाक्यानाम् "अतएव चोपमासूर्यकादिवत्" "आभास एव चे" त्यादिसूत्राणाञ्च विरोधः; तेषामात्मनि प्रतिबिम्बकल्पत्वप्रतिपादनपरत्वेन प्रतिबिम्बत्वप्रतिपादने तात्पर्याभावात्। व्यक्तञ्चैतत्'' अम्बुवदग्रहणात्तु न तथात्वम्'' इति सूत्रभाष्ये—सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं जलं गृह्यते। तत्र युक्तः सूर्यादिप्रतिबिम्बोदयः, न त्वात्माऽमूर्तः" इत्यादिना प्रतिबिम्बमाक्षिप्य तदग्रिमे "वृद्धिह्रासभाक्त्वे" त्यादिसूत्रभाष्ये "जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते, जलह्रासे ह्रसति, जलचलने चलति, जलभेदे भिद्यते इत्येवं जलधर्मानुविधायि भवति, न तु परमार्थतः सूर्यस्य तथात्वमस्ति, एवं परमार्थतोऽविकृतमेकरूपमपि सद् ब्रह्मदेहाद्युपाध्यन्तर्भावात् भजत इवोपाधिधर्मान् वृद्धिह्रासादीन्'' इत्यादिना

**प्रतिबिम्बवादमनादृत्यावच्छेदवादोपगमेऽपि क्षत्यभावात्, प्रक्रियाग्रहिलता हि न तत्त्वविदामिति चेत्तथापि प्रतिबिम्बस्य बिम्बात्मकत्वे प्रतिबिम्ब एव**

भाष्यकृद्भिः। न हि दृष्टान्तदार्ष्टान्तिकयोर्भवत्यैक्यम्, सादृश्यस्य भेदघटितत्वात्। एवं "यथाह्ययं ज्योतिरात्मा विवस्वान्" "रूपं रूपं प्रतिरूपो बभूव" "दृश्यते जलचन्द्रवत्" इत्यादिश्रुतिष्वपि दृष्टान्तत्वमुपवर्णित मतो न प्रतिबिम्बरूपो जीवः श्रुतिभाष्याद्यनुमतः। तथा च घटाद्यवच्छिन्नाकाशवद् अन्तःकरणावच्छिन्नं चैयन्यं जीवः। मायावच्छिन्नं चैतन्यमीश्वर इत्यवच्छेदपक्ष एव साधीयान्। समर्थितश्चायम्—

घटसंवृतमाकाशं नीयमाने घटे यथा।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः॥

"अंशो नानाव्यपदेशादि"ति श्रुतिसूत्राभ्याम्। अत एवाहुराचार्यपादाः प्रतिबिम्बवादमनादृत्यावच्छेदवादोपगमे क्षत्यभावादिति।

प्रक्रियाग्रहिलता = प्रक्रियाविषयकहठवादिता। न तत्त्वविदामिति। ते तु तत्त्व एव घूर्णन्ति। तदाह—

अनात्मवेत्ता ह्यल्पज्ञो सिद्धिजालानि वांच्छति।
नात्मज्ञस्यैष विषय आत्मज्ञस्त्वात्ममात्रदृक्॥ इति।

तत्त्वविविदिषयैव प्रक्रिया उपादीयते, विदिते च तत्त्वे प्रक्षिप्यते साऽपि हेयकोटौ। तदाह वार्तिककारः—

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रियेह स्यात्साध्वी सा चानवस्थिता॥

( बृ० वा० ४०२ ) इति

इहेति श्रोतमार्गोक्तिः। साध्वीति फलवत्त्वकथनम्। व्यवस्थिता तर्हि सेत्याशङ्क्याधिकारितारतम्यान्नैवमित्याह—सा चेति। सर्वस्यापि प्रक्रियाजातस्य खण्डनोक्तदिशा किञ्चिद्दूषणदूषितत्वमेव। अत एव—

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते।
समारम्भस्तु भावानामनादिब्रह्म शाश्वतम्॥

इत्यभियुक्तोक्तिः। अत एव च खण्डनकृतापि "अभीष्टसिद्धावपि खण्डनानामि"त्यादिना स्वीयप्रक्रियाया अपि दोषग्रस्तत्वमुपेत्य हेयता व्यक्तीकृता।

प्रतिबिम्बस्य विम्बानात्मकत्वं व्यवस्थापयितुं प्रथमं तस्य विम्बात्मकत्वं

होगी, क्योंकि अविद्या में प्रतिबिम्बत चैतन्य ईश्वर तथा बुद्ध्यादि में प्रतिबिम्बित चैतन्य जीव माना गया है। इसके समाधानार्थ कहते हैं कि जीवेश्वर के विषय में प्रतिबिम्बवाद छोड़कर अवच्छेदवाद मान लेने पर भी कोई हानि नहीं है। तत्त्ववेत्ताओं का

दर्पणात्मक इत्यशक्यवचनमेवेति चेन्न, प्रतिबिम्बत्वेन रूपेण प्रतिबिम्बस्य बिम्बात्मकतायाः केनापि वक्तुमशक्यत्वात्,

तथाहि "दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम् । व्याप्नुवत्याभि-

शंकासमाधानव्याजेन विमृशति—प्रतिबिम्बत्वेनेति । कथं तर्हि तद्रूपतेति चेत्, तदतिरिक्ततया तत्स्वरूपानिरुक्त्येति ब्रूमः । तथाहि—दर्पणान्तःप्रतीयमानः प्रतिबिम्बः किं बिम्बभूतमुखस्य प्रतिमुद्राविशेषः उत दर्पणावयवस्यैव बिम्बसान्निध्यवशात्तादृशपरिणामविशेषः, नाद्यः लोकप्रसिद्धप्रतिमुद्रावैलक्षण्यात् । यादृक् परिणामा मुद्रा तादृशी प्रतिमुद्रा लोके लक्ष्यते, प्रकृते च वैपरीत्यात्, बिम्बापेक्षया प्रतिबिम्बस्य लघुत्वात् । दर्पणेन सह बिम्बभूतमुखमुद्रासंश्लेशाभावाच्च । दूरादपि दर्पणे प्रतिबिम्बदर्शनात् । न द्वितीयः, बिम्बापगमेऽपि प्रतिबिम्बदर्शनप्रसङ्गात् । न च निमित्तापायेऽपि क्वचिन्नैमित्तिकस्याप्यपायो दृश्यते, हस्तसंयोगापगमे कटविवरणापायदर्शनादिति वाच्यम्, तत्र न निमित्तापायात् कार्यापायः, किन्तु चिरकालसंवेष्टनाहितेन संस्कारेण संवेष्टनलक्षणविरुद्धकार्योत्पादात् । तथा च बिम्बातिरिक्तप्रतिबिम्बोत्पत्त्युपायाभावाद् बिम्बरूपतैवोपेयेत्याशयेनाह—तथा हीति । दर्पणाभिहतेति । स्वच्छे दर्पणे आहता नायनरश्मिः प्रातिलोम्येन प्रवर्तिता स्वग्रीवास्थमेव मुखमभिव्याप्य विपरीतदिगस्थं तमाभिमुख्येन दर्शयतीत्यर्थः । अत एव जगदुर्भामतीकाराः—"विज्ञातृपुरूषाभिमुखेष्वादर्शोदकादिषु स्वच्छेषु चाक्षुषं तेजो लग्नमपि बलीयसा सौर्येण तेजसा प्रतिश्रोतः प्रवर्तितं मुखसंयुक्तं मुखं ग्राहयद् दोषवशात्तद्देशतामनभिमुखताञ्च मुखस्याग्राहयत् पूर्वदृष्टाभिमुखादर्शोदकदेशतामाभिमुख्यञ्च मुखस्यारोपयतीति ।"

अत्राभासवादिनः प्रतिबिम्बस्यानिर्वचनीयत्वाद् दर्पणमेवाधिष्ठानमित्यङ्गीकुर्वन्ति । विवरणोक्तप्रतिबिम्बवादिनस्तु दर्पणस्थत्वविपरीतदेशाभिमुखत्वादीनामनिर्वचनीयत्वात् मुखादिमेव तदधिष्ठानामिति ब्रुवन्ति ।

तथा च मुखस्य सान्निध्यात् दर्पणाद्यधिष्ठाने प्रतिबिम्बस्य समारोपः । दर्पणसान्निध्याद्वा मुखाद्यधिष्ठाने प्रतिबिम्बत्वाद्यारोप इति विवेकः ।

अत एव कल्पतरुकारः-"आदर्शादिष्वारोप्यमुखस्य स्वचक्षुषा पूर्वदृष्टत्वाभावादव्याप्तिमाशङ्क्याह—एवमिति ।" इति भामतीग्रन्थमवतारयत् । तत्र च परिमलकारैः "आदर्शादिकमधिष्ठानमिति पूर्वपक्षिशङ्कामात्रम् । सिद्धान्ते

प्रक्रियाविशेष के मानने में आग्रह नहीं होता । उत्तर—तथापि प्रतिबिम्ब को बिम्बरूप मानने पर "प्रतिबिम्ब ही दर्पणात्मक है" यह कहना सम्भव नहीं है ।

समाधान–प्रतिबिम्बत्वेन रूपेण प्रतिबिम्ब को बिम्बात्मक कोई नहीं कह सकता । तात्पर्य यह है कि दर्पणाभिहिता दृष्टि•••••' दर्पण से आहत नयनदृष्टि लौटकर

**मुख्येन व्यत्यस्तं दर्शयेन्मुखम्" इति नयेन दर्पणादौ न मुखव्यक्त्यन्तरमस्ति तज्जनकशून्यत्वात्, शशशिरसि विषाणवत्, उपाध्यन्वयव्यतिरेकयोरुपाधिसम्बन्धोत्पत्तिमात्रोपक्षीणत्वान्न प्रतिबिम्बोत्पत्तिसाधकता, न च दर्पणेन प्रतिफलनस्य वृत्तत्वादिदानीं दर्पणं विनापि स्वमुखग्रहणं स्यादिति तन्त्रालोकटीकाकृदुक्तं युक्तम्, दर्पणसद्भावदशायामेव प्रतिफलनस्याभ्युपगमेन दर्पणनिवृत्तौ तस्यापि निवृत्तेः। न च "विपर्यस्तैस्तु तेजोभिर्ग्राहकत्वसमागतैः। रूपं दृश्येत** तु मुखमेवाधिष्ठानमिति वक्ष्यते" इत्युक्तम्। तथा च तन्मते ग्रीवास्थे मुखे दर्पणादिवृत्तित्वमध्यस्यते।

प्रतिबिम्बस्य बिम्बात्मकत्वं साधयितुमनुमानमुपन्यस्यति—दर्पणादौ न मुखव्यक्त्यन्तरमस्तीति। तथा चानुमानम्—विमत आदर्शो मुखव्यन्तररहितः, तज्जन्मकारणशून्यत्वाद्, यथा विषाणजन्मकारणशून्यं विषाणरहितं शशमस्तकमिति।

ननु दर्पणाद्युपाधौ सति प्रतिबिम्बो भासते, न तु तदभावे इति दर्पणादावेव बिम्बातिरिक्तः प्रतिबिम्बः सिध्यतीति चेन्नेत्याह—उपाध्यन्वयव्यतिरेकयोरिति। उपाधिसम्बन्धोत्पत्तिरिति। ग्रीवास्थमुखे इत्यादिः। तथा च प्रतिबिम्बोत्पत्तिं प्रति अन्यथासिद्धत्वमुपाधेरिति भावः। जयरथोक्तां शङ्कां परिहरति–न चेति। युक्तमित्यन्वयः। वृत्तत्वात् = सम्पन्नत्वात्। अयुक्तत्वे हेतुः – दर्पणसद्भावेति। अभिनवगुप्तपादोक्तमप्यपहस्तयति—न चेति। साम्प्रतम् युक्तमित्यर्थः। विपर्यस्तैस्त्विति। विपर्यस्तैरादर्शादितः परावृत्तैरतएव ग्राहकात्मसम्बद्धैर्नायनरश्मिभिर्निजे वदने स्वग्रीवास्थे मुखे एव रूपं दृश्यते न तु आदर्शान्तर इत्यर्थः।

अपने मुख को व्याप्त करती है और विपरीत-दिशावाले मुख को अभिमुखरूप से दिखा देती है। तन्त्रालोकोक्त इस कथन के अनुसार दर्पणादि में अन्य मुख नहीं है।

क्योंकि जैसे शशशृङ्ग का कोई जनक नहीं होता, उसी प्रकार यहाँ अन्य मुख का जनक नहीं है। "दर्पणादि के साथ प्रतिबिम्ब का अन्वयव्यतिरेक होने से दर्पण ही मुखप्रतिबिम्ब का जनक है" यह नहीं कह सकते, क्योंकि वह अन्वयव्यतिरेक तो उपाधिसम्बन्धोत्पत्तिमात्र के प्रति ही निमित्त है, न कि प्रतिबिम्बोत्पत्ति के प्रति। "दर्पणेन……………" दर्पण से आहत नयनरश्मि का प्रतिस्रोत सम्पन्न हो जाने पर दर्पण के बिना भी अपने मुख का ग्रहण होना चाहिए" तन्त्रालोक के टीकाकार श्रीजयरथ का यह आक्षेप भी उचित नहीं है क्योंकि दर्पण के सद्भावकाल में ही प्रतिफलन ( प्रतिस्रोत ) माना गया है, अतः दर्पण के निवृत्त होने पर प्रतिफलन भी निवृत्त हो जाता है।

"विपर्यस्तैस्तु……………" प्रतिफलनबलात् नयनरश्मि यदि अपने ही मुख को ग्रहण करती है तो ग्राहकभाव को प्राप्त अर्थात् गृहीता से सम्बद्ध प्रत्यावृत्त

**वदने निजे न मकुरान्तरे" इत्यभिनवगुप्तपादोक्तं साम्प्रतम्, स्वमुखे एव दर्पणस्थत्वादिप्रकारकभ्रमोदयात् । न च शिलादिसंयोगादपि नायनरश्मिप्रतिघातसम्भवेन दर्पणोपयोगो न शक्यसमर्थन इति युक्तम्, स्वच्छस्यैव प्रतिबिम्बप्रत्यक्षप्रयोजकताया भवतोऽप्यनुमतत्वेन स्वच्छसंयोगत्वेनैव प्रतिघातं प्रति हेतुताया वदितुं शक्यत्वात् । न चालोकस्य स्वच्छत्वात्तस्मिन् सति नभसि न कस्याप्यवकाशः स्यादिति वाच्यम्, नायनतेजसि वदनसंयोगजनकप्रतिघातविशेषं प्रत्येव तथाहेतुत्वाभ्युपगमात् । एवं सत्यालोकेऽपि प्रतिबिम्बोऽवलोक्येतेति तु तत्र प्रतिबिम्बोत्पत्तिपर्यनुयोगेन समानसमाधनम्, स्वच्छत्वं तु प्रतिबिम्बप्रत्यक्षताप्रयोजको धर्मविशेष एव, एवं च प्रतिबिम्बस्य बिम्बाभेदे प्रमाण-**

स्वच्छस्यैवेति । तत्त्वञ्च प्रतिबिम्बग्रहणयोग्यतावच्छेदकधर्मत्वम् । न कस्याप्यवकाशः स्यादिति । प्रतिघातः स्यादित्यर्थः, स्वच्छसंयोगस्य विद्यमानत्वात् । तथा हेतुत्वाभ्युपगमादिति । स्वच्छसंयोगत्वेन हेतुत्वाभ्युपगमादित्यर्थः ।

उपाधिगतस्वच्छत्वस्य प्रतिबिम्बदर्शनं प्रति कारणत्वोपगमे आलोकेऽपि तत्सत्त्वात्तत्रापि प्रतिबिम्बो दृश्येत इत्याशङ्कां प्रतिबन्द्या निरस्यति—एवं सत्यालोक इति । भवन्मतेऽपि आलोके प्रतिबिम्बोत्पत्तिः स्यात्, न चैवं, तदा मन्मते तथेति भावः । स्वच्छत्वन्न प्रतिबिम्बोत्पत्तिं प्रति प्रयोजकमपितु तत्सत्त्वे तत्प्रत्यक्ष' प्रतीत्याह—स्वच्छत्वं त्विति । धर्मविशेष इति । अवयवानामसान्तरत्वमिति केचित् ।

नायन तेज के द्वारा अपने वदन ( ग्रीवा ) देश में ही मुख का ग्रहण होना चाहिए, न कि तद्भिन्न दर्पण में" यह अभिनव गुप्तपादोक्त कथन भो युक्तियुक्त नहीं है, क्योंकि अपने मुख में ही दर्पणस्थत्वादि का भ्रम होता है । यदि कहें कि—यदि प्रतिहत नयन ही ग्रहण करता है तो नयन का प्रतिघात शिलादिसंयोग से भी सम्भव है, अतः दर्पण का क्या प्रयोजन है तो यह नहीं कह सकते, क्योंकि प्रतिबिम्ब प्रत्यक्ष के प्रति स्वच्छता को प्रयोजक आप ( आगमिक ) भी मानते हैं । अतः प्रतिघात के प्रति स्वच्छसंयोगत्वेन ही कारणता है, पाषाण में तादृश स्वच्छता के न होने से प्रतिघात होना सम्भव नहीं है । यदि कहें कि आलोक के स्वच्छ होने से आलोक के रहते आकाश में किसी को भी अवकाश प्राप्त नहीं होना चाहिए, अर्थात् आलोक के स्वच्छ होने से प्रतिघात होना चाहिए, किन्तु होता नहीं है । अतः आघात के प्रति स्वच्छ संयोग कारण नहीं है तो यह कहना उचित नहीं है, क्योंकि नायनरश्मि में वदनसंयोगजनकप्रतिघातविशेष के प्रति ही स्वच्छसंयोगत्वेन कारणता मानते हैं । ऐसी स्थिति में आलोक में प्रतिबिम्ब दिखाई देना चाहिए, इस आपेक्ष का समाधान—आलोक में प्रतिबिम्बोत्पत्ति के आक्षेप—समाधान के समान है । स्वच्छत्व तो प्रतिबिम्ब के प्रत्यक्षता का प्रयोजक धर्मविशेष ही है । एवञ्च प्रतिबिम्ब के बिम्बाभिन्नत्व में क्या प्रमाण है । इस प्रकार प्रमाण प्रश्न होने पर—यद्यपि प्रत्यभिज्ञा [ स एवायम् = बिम्ब

प्रश्ने यद्यपि प्रत्यभिज्ञासद्भावे विवाद एव, तत्सत्त्वेऽपि तस्या अत्र प्रामाण्ये विप्रतिपत्तिरेव, यत्किञ्चित्साम्यविषयकतयैवोपपत्तेः, भिन्नदेशस्थत्वादिप्रतीतेर्जागरूकत्वात्, तथापि प्रतिबिम्बो बिम्बाभिन्नो बिम्बाजनकाजन्यत्वादिति मानं नावमाननीयमिति बिम्बप्रतिबिम्बैक्यमतमाश्रित्य वक्तव्यम्।

परन्त्वसारमेतत्, बिम्बाभेदसिद्धिं विना बिम्बाजनकाजन्यत्वासिद्धेः, न च जनकान्तरानिरूपणेन तत्सिद्धिः, मुखसन्निहितदर्पणादेः कारणताया वक्तुं

ननु मदीयमिदं मुखमिति प्रत्यभिज्ञायाः सर्वसम्मतत्वात्कथं तत्र "विवाद एवे"त्युच्यते इति तत्राह—तत्सत्त्वेपीति। अत्र प्रामाण्ये इति। बिम्बप्रतिबिम्बयोरैक्यविषयकत्वावच्छेदेन प्रत्यभिज्ञायाः प्रामाण्ये विप्रतिपत्तिरित्यर्थः। "दर्पणे मुखम्" इति भेदप्रतीतेः प्रामाणिकत्वपक्षे तया उक्तप्रत्यभिज्ञाया बाधः, अन्यथा तु प्रत्यभिज्ञयैवोक्तप्रतीतेर्बाधः, विरुद्धार्थविषयकत्वादुभयोः प्रामाण्यानुपपत्तेरित्यन्यतरस्याप्रामाण्यमुपेयम्; अत आह—विप्रतिपत्तिरेवेति। अप्रामाण्येऽप्युक्तप्रत्यभिज्ञाया उपपत्तिमाह—यत्किञ्चित्साम्येति। ज्वालैक्यप्रत्यभिज्ञावदित्यादि। तदप्रामाण्ये हेतुः—भिन्नदेशस्थत्वेति। नावमाननीयमिति। न तिरस्करणीयमित्यर्थः।

तदेतन्निरस्यति—परन्त्वसारमेतदिति। बिम्बाभेदसिद्धिं विनेति। तथा च स्वरूपासिद्धत्वान्नेदमनुमानं बिम्बाभेदसाधकमिति भावः। ननु प्रतिबिम्बो बिम्बाजनकाजन्यो जनकान्तरशून्यत्वादित्यनुमानेन निरुक्तहेतुसिद्धिरिति चेन्न, मुखसन्निहितदर्पणाद्यात्मकजनकसत्त्वेनोक्तहेतोरपि स्वरूपासिद्धेरित्याह—न चेति। नन्वेवमपि कथं प्रतिबिम्बोत्पत्तिः, दर्पणावयवपरिणतेरसम्भवस्योक्तत्वादिति चेन्मैवम् प्रातिभासिकतदुत्पत्तेः स्वीकारात्। तत्र च मायैवोपादानं प्रातिभासिकरजतोत्पत्तिमिव। न च तस्या अनादित्वेन सर्वदैव तत्प्रतीतिः स्यादिति

एव प्रतिबिम्बरूपेण भासते ] के अस्तित्व में ही विवाद है और यदि उसका अस्तित्व मान भी लें, तो भी उसका बिम्बाभेदविषयकप्रामाण्य विवादग्रस्त ही है, क्योंकि उक्तप्रत्यभिज्ञा यत्किञ्चित् साम्य ( सादृश्य ) को लेकर भी उपपन्न हो सकती है, और भिन्न देशस्थत्वादिप्रतीति [ प्रतिबिम्बः बिम्बभिन्नदेशस्थः ] भी उपस्थित है। तथापि प्रतिबिम्बो बिम्बाभिन्नो बिम्बाजनकाजन्यत्वात् [ प्रतिबिम्ब बिम्ब से अभिन्न है, बिम्ब के अजनक से अजन्य होने से ] यह अनुमानप्रमाण तिरस्करणीय नहीं है अतः बिम्ब प्रतिबिम्ब का ऐक्य ( अभेद ) मानकर ही बिम्बप्रतिबिम्बभाव कहना होगा। [ इस प्रघट्टक से बिम्बप्रतिबिम्ब का अभेद सिद्ध होता है। ]

परन्तु यह कथन असारभूत है, क्योंकि उक्तानुमान में बिम्बाभेदरूपसाध्यसिद्धि के बिना बिम्बाजनकाजन्यत्वरूप हेतु ही असिद्ध है। यदि कहा जाय कि प्रतिबिम्ब के जनकान्तर का निरूपण न होने से उस हेतु की सिद्धि हो जायेगी, तो यह नहीं कह

शवप्रत्वात्, माया चेदानीं भवतां क्व गता येन साऽपि प्रातिभासिकस्य तस्य प्रसवायोपाधिसान्निध्यरूपदोषान्तराविष्टा न कल्पेत, न चोपाधिसम्बन्धमात्रोत्पत्त्यैवान्यथासिद्धिरिति वाच्यम्, धर्मिणोऽपि प्रत्यङ्मुखत्वादिविशिष्टस्यान्यस्यैवोपलम्भात्, न च—प्रत्यङ्मुखत्वादिकमौपाधिकम्, एवञ्च स्वाभाविकविरुद्धधर्मानधिकरणत्वेन बिम्बाभेदः साधनीय इति—वाच्यम्, यतः प्रतिबिम्बत्वविशिष्टस्य कश्चित्स्वाभाविको धर्मोऽस्ति न वा, न चेत्, न परं बिम्बेनैवापि तु सर्वेणैव प्रतिबिम्बस्यैक्यमेवेति दर्पणात्मकत्वोक्तौ कथं प्रद्वेषः' आद्ये तु कोऽसौ

वाच्यम्, आगन्तुकदोषविशिष्टाया एव तस्याः कारणत्वाभ्युपगमादित्याशयेनाह—माया चेति। भवताम् वेदान्तिनाम्। ननु मायाऽप्युपाधिसम्बन्धमात्रोत्पत्तिं प्रतिकारणमिति तस्याः प्रतिबिम्बोत्पत्तिं प्रत्यन्यथासिद्धिरित्याशङ्कते—न चेति। परिहरति–धर्मिणोऽपीति।

ननु प्रतिबिम्बो बिम्बाभिन्नः स्वाभाविकविरुद्धधर्मानधिकरणत्वादित्यनुमानेन बिम्बाभेदसिद्धिः। न च प्रत्यङ्मुखत्वादिकमादाय स्वरूपासिद्धिः; तस्यौपाधिकत्वेन स्वाभाविकत्वाभावादित्याशङ्कते—न च प्रत्यङ्मुखत्वेति। स्वाभाविको विरुद्धश्च यो धर्मः। स्वाभाविकोऽनौपाधिकः, विरुद्धो बिम्बधर्मविरुद्ध इत्यर्थः। तादृशधर्मस्यैवासिद्धत्वान्न स तत्साधक इत्यभिप्रायेण समाधत्ते—यतः प्रतिबिम्बत्वविशिष्टस्येति।

सूचीकटाहन्यायेनान्त्यमादौ दूषयति—न परमिति। कथं प्रद्वेष इति। तथा च दर्पणात्मकत्वमेव प्रतिबिम्बस्य स्वीक्रियतामिति भावः। आद्यं निरस्यति–

सकते, क्योंकि मुखसन्निहित दर्पण को प्रतिबिम्ब का कारण कह सकते हैं। दूसरी बात यह है कि आप ( वेदान्ती ) की माया कहाँ चली गई, जिसे कि उपाधि ( दर्पण ) सान्निध्यरूपदोषान्तराविष्ट मान कर प्रातिभासिक प्रतिबिम्ब की जनक नहीं कह सकते। अर्थात् उपाधि सान्निध्यरूपदोषान्तराविष्ट माया को ही प्रतिबिम्ब के प्रति कारण मान सकते हैं। अतः बिम्बाजनकाजन्यत्वरूप हेतु असिद्ध ही है, उसके द्वारा बिम्बाभेद सिद्ध नहीं हो सकता।

यदि कहा जाय कि माया केवल उपाधिसम्बन्धमात्रोत्पत्ति के प्रति ही कारण है न कि प्रतिबिम्बोत्पत्ति के प्रति, अतः अन्यथासिद्ध है, तो यह नहीं कह सकते, क्योंकि प्रत्यङ्मुखत्वादिविशिष्ट धर्मी भी अन्य ही उपलब्ध होता है न कि केवल सम्बन्ध ही। अतः प्रतिबिम्बोत्पत्ति के प्रति भी माया कारण है। यदि कहें कि—प्रत्यङ्मुखत्वादि तो प्रतिबिम्ब में औपाधिक है, इसलिए स्वाभाविकविरूद्धधर्मानधिकरणत्व के द्वारा बिम्बाभेद सिद्ध करेङ्गे तो यह कथन उचित नहीं है, क्योंकि प्रतिबिम्बत्वविशिष्ट ( प्रतिबिम्ब ) में कोई स्वाभाविक धर्म है या नहीं, यदि नहीं है, तो न केवल बिम्ब के ही साथ अपि तु सभी पदार्थों के साथ प्रतिबिम्ब की एकता हो जायेगी, ऐसी स्थिति में आप प्रतिबिम्ब

**धर्मः ? बिम्बगत इति चेन्न, अभेदसिद्धिं विनाऽसिद्धेः, अन्यश्चेत्, बिम्बधर्मविरुद्धो न वा, आद्ये कथमभेदः, द्वितीयस्तु बिम्बगत एव स्यादिति कथमभेदसिद्धिं विना निरधारि, एवञ्च प्रतिबिम्बत्वं यदि स्वाभाविकं तर्हि बिम्बत्वविरुद्धमेवेति स्वरूपासिद्धिः, यदि त्वौपाधिकम्, तर्हि कस्यादः स्वाभाविकमिति वक्तव्यम्, कस्यचित्स्वाभाविक एव हि धर्मोऽन्यस्यौपाधिको लोके व्यवह्रियते। सर्वथापि बिम्बाभेदे विप्रतिपन्नः स्वाभाविकविरुद्धधर्मानधिकरणतां न मन्तुमर्हति। न च तद्गतासाधारणधर्मवत्त्वं तदभेदसाधकमत्र; देवदत्तीयचित्रादेरपि देवदत्तेन कुतो नैक्यमित्यनेन समानयोगक्षेमत्वात्। तस्माद्दर्पणस्थ-**

आद्ये त्विति। बिम्बगत इति। बिम्बत्वमित्यर्थः। प्रतिबिम्बत्वमपि नासौ धर्मः। तस्य स्वाभाविकत्वस्वीकारेऽपि बिम्बत्वविरुद्धत्वेन तदनधिकरणत्वस्याभावादित्याह—एवञ्चेति। तस्यौपाधिकत्वस्वीकारे चोक्तप्रश्नस्तदवस्थ एव, तथापि तदपि न वक्तुं शक्यमित्याह—यदित्वौपाधिकमिति। परिशेषं दर्शयति—सर्वथापीति। प्रतिबिम्बो बिम्बाभिन्नस्तद्गतासाधारणधर्मवत्त्वादित्यनुमानं निराचष्टे—न चेति। न हीत्यर्थः। तत्र हेतुः—देवदत्तीयचित्रादेरपीति। देवदत्तीयचित्रादौ देवदत्ताभिन्नत्वं यथा प्रत्यक्षबाधितं तथा प्रकृतेऽपीत्याह–समानयोगक्षेमत्वादिति। प्रकृतार्थमुपसंहरन् स्वाभिप्रायं प्रकटयति—तस्माद्दर्पणस्थत्व-

को दर्पणात्मक कहने में प्रद्वेष ( विरोध ) क्यों करते है। और यदि स्वाभाविक धर्म है, तो वह धर्म कौन है, यदि वह बिम्बगत ( बिम्बत्व ) है तो यह नहीं कह सकते, क्योंकि बिम्ब के साथ प्रतिबिम्ब का अभेदसिद्धि के बिना प्रतिबिम्ब में वह धर्म ही असिद्ध है। यदि अन्य ही वह धर्म है, तो वह बिम्बधर्म ( बिम्बत्व ) से विरुद्ध है या नहीं, यदि है, तो बिम्ब के साथ प्रतिबिम्ब का अभेद कैसे सिद्ध होगा। [ तात्पर्य यह है कि उस धर्म के विरुद्ध होने से प्रतिबिम्बरूप पक्ष में स्वाभाविकविरुद्धधर्मानधिकरणत्वरूप हेतु ही नहीं है ऐसी स्थिति बिम्बाभेदसिद्ध कैसे करेगा। ] और यदि विरुद्ध नहीं है तो वह बिम्बगत ( बिम्बत्व ) ही होगा। किन्तु वह बिम्बाभेद सिद्धि के बिना निर्धारित कैसे हुआ। एवं प्रतिबिम्बित्व यदि स्वाभाविक धर्म है तो वह बिम्बत्व से विरुद्ध ही है, अतः पूर्वोक्त हेतु में स्वरूपासिद्धि दोष है और यदि वह ( प्रतिबिम्बत्व ) औपाधिक है, तो वह स्वाभाविक किस का धर्म है ? यह निर्णेतव्य है, क्योंकि किसी एक का स्वाभाविक धर्म ही अन्य का औपाधिक कहा जाता है। किसी भी प्रकार से बिम्बाभेद में विप्रतिपन्न व्यक्ति प्रतिबिम्ब में स्वाभाविकविरुद्धधर्मानधिकरणता को नहीं मान सकता।

यह भी कहना सम्भव नहीं है कि यहाँ प्रतिबिम्ब में तद्गत असाधारणधर्मवत्त्व ही बिम्बाभेद का साधक हो जायेगा; क्योंकि इस प्रकार तो देवदत्त के साथ देवदत्तीय चित्र की भी एकता क्यों न हो जाय। [ तात्पर्य यह है कि जैसे देवदत्तचित्रं

**त्वस्य बिम्बेऽलीकस्यासम्भवेन सम्बन्धं विना च विशिष्टबुद्ध्यसम्भवेन तस्यासत्यत्वे सम्बन्धिनोऽपि तथात्वमावश्यकमनुभवाद्यनुरोधाच्च न बिम्बात्मकत्वमित्येव युक्तम् । नायनतेजसि वदनसंयोगजनकप्रतिघातं प्रति स्वच्छसंयोगत्वेन हेतुतेत्यपि नातीव मनोज्ञम्, अस्वच्छमूर्तसंयोगस्यापि तादृशप्रतिघातजनकताया औचित्यावर्जितत्वात् ।**

स्येति । अलीकस्यासम्भवेनेति । दर्पणे मुखमिति प्रत्यक्षतया प्रतीयमानत्वात् । दर्पणे मे मुखमिति विशिष्टबुद्धिः । तस्य सम्बन्धस्याधाराधेयभावात्मकस्य, असत्यत्वे = आरोपितत्वे, सत्यासम्भवस्योक्तत्वात् । सम्बन्धिनोऽपि प्रतिबिम्बत्वेनाभिमतस्यापि । तथात्वमसत्यत्वं मिथ्यात्वमिति यावत् । अनुभवानुरोधाच्चेति । अनुभूयते हि प्रत्यङ्मुखत्वं प्रतिबिम्बस्य, तद्वैपरीत्यञ्च बिम्बस्येति, दर्पणे मे मुखं पश्यामीति च ।

किञ्च दर्पण प्रतिस्फालिताभिः परावृत्ताभिर्नायनरश्मिभिर्बिम्बस्यैव ग्रहणमुपेत्य बिम्बाभेदस्वीकारे प्रत्यङ्मुखत्वाद्यनुभवो विरुद्धेत, तिर्यङ्ङवलोकने प्रतिबिम्बो न गृह्येत, आदर्शादौ मुखादेरनुत्पत्तौ चित्राकर्षणयन्त्रादिनाऽऽदर्शादिवर्तिनो मुखादेश्चित्राकर्षणं नोपपद्येत । तस्मादादर्शादावधिष्ठाने आधाराधेयभावमापन्नं मुखादिकं प्रतिबिम्बात्मकं प्रातीतकमुत्पद्यते इत्येव मन्तव्यमिति श्लिष्टतरम् ।

निरुक्तप्रतिघातं प्रति स्वच्छसंयोगत्वेन हेतुतापि नास्तीत्याह—नायनतेजसीति । नातीवेति । इदमभ्युच्चयमात्रमिति द्योत्यते, अतीवेति पदोपादानेनावयवानामसान्तरत्वस्य स्वच्छतापदार्थतापक्षे सान्तरवस्तुनि नायनरश्मिप्रतिघातानुपपत्तेः । वस्तुतस्तु दर्पणस्य पृष्ठभागलग्नरक्तद्रव्यविशेषस्यैव प्रतिघातकत्वम्, तदभावे तु दीपादिरश्मीनामिव नेत्ररश्मीनामपि दर्पणान्निस्सरणमनुभवसिद्धमेव ।

देवदत्ताभिन्नं स्वगतासाधारणधर्मवत्त्वात् यह अनुमान बाधित होने से देवदत्ताभिन्नत्व का साधक नहीं है, उसी प्रकार प्रकृतानुमान भी बिम्बाभेद का साधक नहीं है ] तस्मात् बिम्ब में प्रतीयमान दर्पणस्थत्व को अलीक तो मान नहीं सकते और सम्बन्ध के बिना "दर्पणे मे मुखम्" इस प्रकार विशिष्टबुद्धि भी हो नहीं सकती, उसमें सम्बन्ध को मिथ्या मानने पर सम्बन्धियों को भी मिथ्या मानना आवश्यक है" इत्यादि युक्तियों से तथा दर्पणे मुखम् इस अनुभव के अनुरोध से प्रतिबिम्ब को बिम्बात्मक न मानना ही उचित है और यह जो कहा है कि "नायनरश्मि वदन संयोगजनकप्रतिघात के प्रति स्वच्छसंयोगत्वेन हेतुता है" यह भी अतीव मनोरम नहीं है । क्योंकि अस्वच्छमूर्तद्रव्यसंयोग को भी तादृशप्रतिघात का जनक मानना औचित्य प्राप्त है ।

तस्मात्प्रतिबिम्बप्रयोजकत्वमपि स्वच्छे बिम्बातिरिक्तप्रतिबिम्बाधिकरणतयैव शक्यमुपपादयितुमिति युक्तमेवैतद्—यद्दर्पणो न प्रतिबिम्बात्मकोऽपि तु प्रतिबिम्ब एव दर्पणात्मकः, उक्तयुक्तेः, एवं स्फुरणं न प्रपञ्चात्मकम्, प्रपञ्च एव तु स्फुरणात्मकः, एवमेव च "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतीनां "चितिश्चेत्यं चितिरहं चितिः सर्वं चराचरम्" इत्याद्यागमिकवचसाञ्च सामञ्जस्यम्।

प्रतिबिम्ब एव दर्पणात्मकः, उक्तयुक्तेरिति। दर्पणे सर्वदा प्रतिबिम्बवत्त्वप्रत्ययप्रसङ्गः प्रागुक्तः।

निरुक्तपर्यालोचनफलं स्वाभिप्रेतं स्मारयति—युक्तमेवैतदिति। एतदर्थमाह—यद्दर्पणविति। दृष्टान्तं विमृश्य दार्ष्टान्तिकमुपस्थापयति—एवं स्फुरणं न प्रपञ्चात्मकमित्यादिना। निगमान्तागमवचनानां प्रपञ्चस्य स्फुरणात्मकत्वप्रतिपादनपरतयैवयमत्यं स्फोरयति—एवमेव चेति। "सर्वं खल्विदं ब्रह्म" अत्र "तज्जलानिति" इति वाक्यशेषः। तथा च यतस्तस्माद् ब्रह्मणो जायत इति तज्जं, तस्मिल्लीयत इति तल्लं, तस्मिश्चानिति स्थितिकाले चेष्टते इति तदनं जगत्, तस्मात्सर्वं खल्विदं जगद् ब्रह्म। अवयवलोपश्छान्दसः।

चतुर्धा हि सामानाधिकरण्यं भवति। अध्यासे, यथा इदं रजतमित्यादौ। बाधायां यथा स्थाणुः पुमान् इत्यादौ। विशेषणविशेष्यभावे यथा नीलमुत्पलम्, अभेदे च यथा सोऽयं देवदत्त इत्यादौ। प्रकृते च "सर्वं खल्विदं ब्रह्म" इत्यत्र तत्त्वसाक्षात्कारात्प्रागध्यासे, जाते च तत्त्वसाक्षात्कारे बाधायामित्यन्यत्र विस्तरः।

अत एवावादीदत्र भाष्ये युक्तिसिद्धमर्थं निगमयन् भाष्यकारः—"एवं ब्रह्मात्मतया त्रिषु कालेष्वविशिष्टं तद्व्यतिरेकेणाग्रहणाद्, अतस्तदेवेदं जगत् ( छा० ३।१४।१ ) इति। ब्रह्मव्यतिरेकेण त्रिष्वपि काले जगतोऽग्रहणात् तदात्मत्वेनाविशिष्टं जगत् तदेव स्यादिति योजनेति तत्रैवानन्दगिरिः। चितिश्चेत्यमिति।

"यतः सर्वं चितिमनुभाति सा तु स्वतन्त्रतः" (त्रि० र०) इत्युत्तरार्द्धम्। चेत्यम् दृश्यम्।

यथा दर्पणमनुगतं गृहीत्वैव सर्वेप्रतिबिम्बाः प्रकाशन्त इति प्रतिबिम्बा

तस्मात् स्वच्छ दर्पणादि में प्रतिबिम्ब प्रत्यक्षता की प्रयोजकता भी बिम्बातिरिक्त प्रतिबिम्ब का अधिकरण मानकर ही कही जा सकती है। अतः पूर्वोक्त युक्ति से यह कथन उचित ही है कि—"दर्पण प्रतिबिम्बात्मक नहीं है अपितु प्रतिबिम्ब ही दर्पणात्मक है"। एवं प्रकृत में भी स्फुरण प्रपञ्चात्मक नहीं है अपितु प्रपञ्च ही स्फुरणात्मक है, और इसी प्रकार "सर्वं खल्विदं ब्रह्म" इत्यादि श्रुतियों का तथा "चितिश्चेत्यं चितिरहं चितिः सर्वं चराचरम्" इत्यादि आगम वचनों का सामञ्जस्य

**अतएव "न हि शिवो घटादिरूपोऽपि तु घटादिः शिवरूपः" इति शिवदृष्टिव्याख्यायामुत्पलदेवैरुक्तम्। ब्रह्मसिद्धौ मण्डनमिश्रैश्च ब्रह्मणः सर्वात्मत्वे सर्वस्योच्छेदासम्भवेन नित्यसंसारिताप्रसङ्गमाशङ्क्य सर्वं ब्रह्मैव, न तु ब्रह्म सर्वमेव,**

दर्पणात्मकाः। एवं सर्वमिदं चेत्यमपि चितिमनुगतां गृहीत्वैव भातीति चित्यात्मकमेव सर्वमिति भावः। अत्रापि बाधसामानाधिकरण्यम्। चितिरेवात्मतत्त्वं ब्रह्मेत्यवोचामः। प्रपञ्चस्य ब्रह्मात्मकत्वं न तु ब्रह्मणः प्रपञ्चात्मकत्वमित्यत्रोत्पलदेवोक्तिं दर्शयति—अत एवेति। प्रपञ्चस्य स्फुरणात्मकत्वादेव। शिवदृष्टिव्याख्यायामिति। तत्र—

"एकस्मिन्नेव देहे तु विभेदात्परमाणुगात्।
एकत्वाच्छिवरूपस्य दोषोऽयं भेदवादिनाम्"॥

इति कारिकां व्याख्यापयन्नुत्पलदेवः—"एकस्मिन् देहे यावन्तः परमाणवस्तावन्तः शिवा इत्येवं परमाणुगादपि विभेदाद्विभेदः स्यादित्यानन्त्यप्रतिपादनमित्याशंक्य यतः बहवः परमाण्वादिपदार्थास्त एकशिवरूपा इति कथं बहुत्वमिति समादधन् "न हि शिवो घटादिरूपोऽपि तु घटादिः शिवरूप" इत्युक्तवान्। निगदव्याख्यातम्।

प्रपञ्चस्य स्फुरणात्मकत्वं न केवलमागमिन एव प्राहुरपि तु वेदान्तिनोऽपीत्याह—ब्रह्मसिद्धौ मण्डनमिश्रैश्चेति। इत्युक्तमिति योजना।

"आनन्दमेकममृतमजं विज्ञानमक्षरम्।
असर्वं सर्वमभयं नमस्यामः प्रजापतिम्॥"

इत्यात्मकपद्यघटकसर्वपदव्याख्यानावसरे इति शेषः। "भेदप्रपञ्चप्रबन्धस्यानुच्छेदाद्वियोगाभावान्नित्यसंसारिता स्यादित्याशङ्क्य "ब्रह्मणो न सर्वात्मता; सर्वं तु ब्रह्मात्मकम्, ब्रह्मरूपेण रूपवत्" इति ग्रन्थेन। यथा रजतं शुक्तेर्न भिद्यते, तदात्मनैव दृष्टत्वात्, शुक्तिश्च रजताद्भिद्यते, प्रागूर्ध्वं दर्शनात्तथैव ब्रह्मण्यधिष्ठाने घटादेः कल्पितत्वात्तद्रूपेणैव तस्य सत्त्वं न तु स्वातन्त्र्येणेति भावः।

हो जाता है। अत एव शिवदृष्टि की व्याख्या में उत्पल देव ने कहा है—"न हि शिवो घटादिरूपोऽपितु घटादिः शिवरूपः" ( शिव घटादिरूप नहीं है अपितु घटादि ही शिवरूप है। )

ब्रह्मसिद्धि में—"ब्रह्मणः सर्वात्मकत्वे सर्वस्योच्छेदासम्भवेन नित्यसंसारिताप्रसङ्गः" [ ब्रह्म को सर्वात्मक मानने पर सब का उच्छेद न हो सकेगा, ऐसी स्थिति में ब्रह्म नित्य संसारी हो जायेगा ] ऐसी आशङ्का कर समाधान करते हुये मण्डनमिश्र ने कहा है—"सर्वं ब्रह्मैव न तु ब्रह्म सर्वमेव ब्रह्मैव च घटादीनां परमार्थं स्वरूपम्"

**ब्रह्मैव च घटादीनां परमार्थं स्वरूपमित्युक्तम्। ईदृशाभेदवादित्वादेव च तैस्तर्ककाण्डे "आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः" इत्यादिना भेदखण्डनायैव पराक्रान्तम्, तदनुसारिभिर्वाचस्पतिमिश्रैरपि समन्वयसूत्रभामत्यां "अभेदोपादानैव भेदकल्पना" इत्यभेदस्य पारमार्थिकत्वं सङ्गिरमाणैस्तथैव सूचितम्, एवं खण्डनकारैरपि "पारमार्थिकमभेदमिच्छन्तोऽपि" इति भणद्भि-**

**विधातृ प्रत्यक्षमित्यादि। भावविषयकं प्रत्यक्षं न तु भेदविषयकमित्यर्थः। एतदुपपादनं तु ब्रह्मसिद्धयादौ।**

आहुर्विधातृ इति। विधातृ = अनवगतगन्तृ, अनवगतभावपदार्थस्य प्रकाशकं प्रत्यक्षम्, न तु निषेद्धृ निषेधो भेदः, तस्य प्रकाशकं प्रत्यक्षं न भवतीत्याहुः।

"अभेदोपादानैव भेदकल्पनेति। युक्तमेवैतत्। भेदस्याभेदापेक्षत्वात्। अभेदस्य च भेदनिरपेक्षत्वात्। अभेदो हि न भेदाभावः किन्त्वेकत्वम्। भेदो हि भवन् केनचित्कस्यचिद्भवतीति सार्वजनीनम्। अतस्तत्रानुयोगिप्रतियोगिनावपेक्ष्येते। पटादिभेदो न पटादिनिरपेक्षो भवितुमर्हतीति निश्चप्रचम्। भिद्यमानश्च पटादिः प्रत्येकमेकमेव [ अभेद एव ]। तत्र च न भेदो न वा तत्प्रतियोग्यादिरपेक्ष्यते। एकस्य पटादेरभावे तु न तन्निष्ठस्य तत्प्रतियोगिनो वा भेदस्य स्वरूपलाभः। तदुक्तं खण्डनकृद्भिः—

अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा।
तथा चाद्ये प्रमा सा स्यान्नान्त्ये स्वापेक्ष्यवैशसात्॥ इति।

आद्येऽभेदविषयकत्वावच्छेदेन सा धी प्रमा। अन्त्ये भेदविषयकत्वावच्छेदेन तु न प्रमा, स्वापेक्ष्यः स्वप्रयोजको योऽभेदस्तस्य वैशसात् हिंसनाद् विरोधादिति यावदिति तद्ग्रन्थार्थः। अत्रैव खण्डनकारोक्तिमप्याह—खण्डनकारैरपीति। सर्वाभेदस्यापि = घटपटाद्यभेदस्यापि। निर्दलत्वापत्तेः = वैयर्थ्यापत्तेः। सर्वस्य ब्रह्मात्मकत्वाभावे ब्रह्मातिरिक्तस्य पारमार्थिकत्वेऽद्वैतव्याघातापत्तिश्चापि बोध्या। अत एव घटपटादीनामकल्पितस्वरूपमपि ब्रह्मैव। अन्यथा घटाद्यरूपत्वे ब्रह्मणो

[ समस्त जगत् ब्रह्मरूप है, किन्तु ब्रह्म जगद्रूप नहीं है, ब्रह्म ही घटादिपदार्थों का पारमार्थिक स्वरूप है। ] ईदृश अभेदवादि होने से ही उन्होंने तर्क काण्ड में भेदखण्डन करने के लिए "आहुर्विधातृ प्रत्यक्षं न निषेद्धृविपश्चितः" [ विद्वज्जन कहते हैं कि—प्रत्यक्ष भावविषयक होता है न कि भेदविषयक ] इत्यादि ग्रन्थ का आरम्भ किया है। तदनुसारी वाचस्पति मिश्र ने भी समन्वयसूत्रभामती में "अभेदोपादनैव भेद कल्पना" इत्यादिग्रन्थ से अभेद को पारमार्थिक बतलाते हुये यही सूचित किया है। एवं खण्डनकारने भी "पारमार्थिकम-

**स्तदेवानुसृतम्, अन्यथा सर्वस्य ब्रह्मात्मकत्वाभावे सर्वाभेदस्यापि ब्रह्मात्मकत्वासम्भवेन तस्य पारमार्थिकतोक्तेर्निर्दलत्वापत्तेः। एतेनानन्तशक्त्यैक्यरूपिणीति प्रागुक्तं—**

**"त्रिपुरा त्रिविधा देवी ब्रह्मविष्णवीशरूपिणी।**
**ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्त्यात्मिका प्रिये॥"**

**इति चितौ ज्ञानशक्त्याद्यभेदात्मकताभिप्रायकं वामकेश्वरतन्त्रोक्तञ्च व्याख्यातम्। अतएवैतेषां मण्डनमिश्रादीनां त्रयाणामपि मते "नेह नानास्ति" इत्यादिश्रुतेर्न प्रपञ्चमिथ्यात्वार्थकत्वम्, अपि तु सर्वं ब्रह्माभिन्नमित्यर्थकत्वमिति व्युत्पादितं प्रत्यक्षादिबाधोद्धारोपक्रमे शारदायाम्, बृहदारण्यके च "स यथा**

घटादिस्वरूपभूताभेदस्वरूपत्वोक्त्यसङ्गतेः।

एतेनेति। प्रपञ्चस्य स्फुरणात्मकत्वप्रतिपादनेन। त्रिपुरेति। पुरशब्दः शरीरार्थः। त्रीणि पुराणि यस्याः सेति विग्रहः। अधिकन्त्वत्रोक्तमधस्तात्। सा च त्रिविधा सृष्टिस्थिति संहराद्यात्मिका। अथवा किन्तत् त्रैविध्यम्, तत्राह–ब्रह्मविष्णवीशरूपिणी इति। वामाजेष्टारौद्रय एव पुंवेषेणाविष्टा ब्रह्मविष्णुरूद्रा भवन्ति, तच्छक्तिभूता भारतीपृथिवीरूद्राण्य एव ज्ञानेच्छाक्रिया इत्युच्यन्ते इति भावार्थः। ततश्च सर्वमेतत् चिदात्मकम्। शारदायामिति। प्रादर्शि तत्र मतद्वयम्, "नेह नाने"ति श्रुति"रेकमेवाद्वितीयमिति" श्रुतिश्च प्रपञ्चमिथ्यात्वं प्रतिपादयत इत्येकम्। "नेह नानेति" भेदसामान्याभावं बोधयति, "विनञ्भ्यां नानाञौ" इत्यादिसूत्रेण निष्पन्नस्य नानापदस्य भेदार्थकत्वात्। अद्वितीयामितिश्रुतिरपि भावप्रधानतया द्वितीयत्वस्य भेदव्यापकस्याभावबोधनद्वारा भेदसामान्याभाववद्ब्रह्मेत्यर्थे पर्यवस्यति। अभावस्याधिकरणस्वरूपत्वात्तु भेदाभावत्वमपि ब्रह्मणि, अतएव घटादीनामभेदोऽपि ब्रह्मैव। भेदाभावत्वविशिष्टं तदपि मिथ्या, तदुपलक्षितं तु तत् सत्यमिति च द्वितीयम्।

भेदमिच्छन्तोऽपि" इत्यादि कहते हुये उसीका अनुसरण किया है। अन्यथा यदि समस्त जगत् को ब्रह्मात्मक न माना जाय तो सर्वाभेद भी ब्रह्मरूप न हो सकेगा, ऐसी स्थिति में अभेद को पारमार्थिक कहना भी असङ्गत हो जायेगा। इससे—"अनन्तशक्त्यैक्यरूपिणी" यह पूर्वोक्त कथन तथा "त्रिपुरा त्रिविधा........." [ हे प्रिये त्रिपुरा सृष्टिस्थितिसंहाररूप से त्रिविधा है ब्रह्म-विष्णु-शिवरूपिणी है तथा ज्ञान-इच्छा-क्रिया शक्तित्रयरूपिणी है ] यह चित में ज्ञानशक्त्यादि के अभेदाभिप्रायक वामकेश्वरतन्त्रोक्तवचन भी सङ्गत हो जाता हैं। अत एव मण्डनमिश्र वाचस्पतिमिश्र तथा श्रीहर्ष मिश्र इन तीनों के मत में—"नेह नानास्ति किञ्चन" इत्यादिश्रुतिवाक्य प्रपञ्चमिथ्यात्वपरक नहीं है अपितु "सर्वं ब्रह्माभिन्नम्" एतदर्थपरक है। यह खण्डनशारदा के प्रत्यक्षादिबाधोद्धार प्रकरण के उपक्रम में वर्णित है। और बृहदारण्यक में "स यथा दुन्दुभेर्हन्यमानस्य"

दुन्दुभेर्हन्यमानस्य" इत्यत्र भाष्ये श्रीभगवत्पादैरपि "चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैव, यत्स्वरूपव्यतिरेकेणाग्रहणं यस्य तस्य तदात्मत्वमेव लोके दृष्टम्' इत्युक्तम्। एवञ्च ज्ञेयस्य ज्ञानाभिन्नत्वं न केवलं योगाचाराणां शैवाणां शाक्तानां वाऽपि तु वेदान्तिनामपि सम्मतमेवेत्युच्यते,

तदा—ईदृशाभेदो विश्वस्य पारमार्थिकत्वमव्युदस्य न शक्याभ्युपगम इति विवर्तवादमशरणीकृत्य न निस्तार इति सिद्धमद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वम्।

तथाहि—प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वादिरूपं मिथ्यात्व-

तत्र द्वितीयमतमेव खण्डनकृदभिमतम्, तत्र तथैवोल्लेखात्। अत्र श्रीमद्भगवत्पादानामपि सम्मतिरित्याह—बृहदारण्यके चेति। चिन्मात्रानुगमादिति। घटः स्फुरति, पटः स्फुरति इत्यादिरूपेण स्फुरणमात्रस्य सर्वज्ञस्य सर्वत्रानुगमात् सर्वस्य घटपटादेः स्फुरणात्मकत्वमित्यर्थः। विवक्षितार्थे व्याप्तिं दर्शयति—यत्स्वरूपेणेति। लोके दृष्टमिति। यथा महाकाशस्वरूपव्यतिरेकेणाग्रहणं यस्य घटाद्याकाशस्य तस्य महाकाशात्मत्वम्। यथा वा उषरादिव्यतिरेकेण मृगतृष्णिकोदकादीनामग्रहणमतस्तेषामुषराद्यात्मकत्वम् प्रसिद्धमेव, तथा प्रकृतेऽपि चित् व्यतिरेकेण प्रपञ्चस्याग्रहणात्तस्य चिदात्मकत्वमिति भावः तदात्मत्वञ्चात्र तत्सत्ताऽतिरिक्तसत्ताशून्यत्वमित्यनुपदं वक्ष्यते। प्रपञ्चस्य चिद्रूपतायाः सर्वसम्मतत्वे च। तदा=पूर्वोक्तरीत्या प्रवञ्चस्य चिदात्मकत्वे। ईदृशाभेदः=प्रपञ्चस्य ब्रह्मात्मकाभेदः।

द्वैतमिथ्यात्वसिद्धिप्रकारं प्रकटयति—तथाहीति। प्रतिपन्नोपाधाविति। प्रतिपन्नः स्वप्रकारकधीविशेष्यो य उपाधिरधिकरणं, तन्निष्ठो यस्त्रैकालिकनिषेधोऽत्यन्ताभावस्तत्प्रतियोगितत्वमित्यर्थः। स्वं मिथ्यात्वेनाभिमतम्।

इत्यादि मन्त्र के भाष्य में श्रीमद्भगवत्पाद ने भी कहा है—चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैव,..........' चैतन्यमान का सर्वत्र अनुगम होने से सर्वत्र चित्स्वरूपता ही है, क्योंकि जिसके स्वरूप ग्रहण के बिना जिसका ग्रहण न हो सके, वह तद्रूप ही होता है, यह लोक में प्रसिद्ध है।] एवञ्च ज्ञेय में ज्ञानाभेद केवल योगाचार शैव तथा शाक्तों के मत में ही नहीं है अपितु वेदान्तियों ने भी इसे स्वीकार किया है।

इस प्रकार विचारपरिपाटी अपनाने पर तो प्रपञ्च के परमार्थिकत्व का परित्याग किये बिना ईदृश अभेद स्वीकर्तुंशक्य नही है, अतः विवर्तवाद के अङ्गीकार के अतिरिक्त अन्य मार्ग नहीं है, ऐसी स्थिति में अद्वैतसिद्धि में द्वैतमिथ्यात्वसिद्धि पूर्वकत्व सिद्ध हो गया।

कैसे ? तो सुनिये, मिथ्यात्ववेत्ताओंने मिथ्यात्वको 'प्रतिपन्नोपाधौ त्रैकालिकनिषेध प्रतियोगित्वरूप कहा है। उसमें यद्यपि प्रतीतिका प्रमात्वेन प्रवेश करें तो प्रमाविषयतया

**माचक्षते तद्विदः। तत्र प्रतीतिर्यद्यपि लक्षणे सामान्यरूपेण प्रविष्टा, अन्यथा दलान्तरासङ्गत्यापत्तेः, तथापि वस्तुगत्या प्रपञ्चे प्रतीयमानत्वं वृत्तिविषयत्वं वा चिदविषयकप्रतीत्यविषयत्वं वा, आध्यासिकसम्बन्धावच्छिन्नप्रतियोगित्व-सम्बन्धेन चिद्विशिष्टत्वरूपं चिन्न्यूनसत्ताकत्वनियतं चिद्विवर्तत्वं वा, तत्र प्रथमे**

**चिद्विवर्तत्वं वेति। यद्यपि स्वविषयकाज्ञानप्रयोज्यत्वसम्बन्धेन चिद्विशिष्टत्वमपि सम्भवति लक्षणम्, तथापि स्वरूपगोपनकारिशक्तिरूपाज्ञानप्रयोज्यत्वस्य जगति परेण सत्यतामुपेतवताऽपि स्वीकृतत्वेन मिथ्यात्वपक्षे एव तत्स्वीकारसम्भवस्याध्यासिकसम्बन्धसिद्धिसापेक्षतया न पृथक् तादृशलक्षणमत्र वक्तुमपेक्ष्यत इति भावः।**

उप समीपवर्तिनि स्वधर्ममादधाति संक्रामयति इति व्युत्पत्त्योपाधिपदस्य स्वसमीपवर्तिनि स्वधर्मसंक्रामकार्थकत्वात् - स्वसमीपवृत्तिदृश्यत्वावच्छेदेन स्वगतसत्त्वादिधर्मभ्रमजनकत्वस्य प्रकृते तात्पर्यविषयत्वात् सर्वाधिष्ठानमेव प्रकृते प्रतिपन्नोपाधिपदार्थः।

प्रतिपन्नपदघटकप्रतिपत्तिर्ज्ञानमित्यभिप्रेत्याह—तत्र प्रतीतिरिति। दलान्तरासङ्गत्यापत्तेरिति। प्रमात्वेन तद्वत्तया प्रमिते तदभावो विरुध्यते, भ्रमत्वेन प्रवेशे तु त्रैकालिकेत्यादि निष्प्रयोजनम्। भ्रमविषयत्वस्यैव पर्याप्तत्वात्। न च ब्रह्मणोऽपि भ्रमविषयत्वात्तस्यापि मिथ्यात्वापत्तिरिति वाच्यम्, ब्रह्मणोऽपि तेन रूपेण मिथ्यात्वेष्टेरितिभावः।

शशविषाणाद्यसद्व्यावृत्यर्थं प्रतिपन्नत्वमुपाधिविशेषणम्। तत्र किमिदं प्रतीयमानत्वं विवक्षितमिति तद्विकल्पयति—प्रपञ्चे प्रतीयमानत्वमिति।

अधिष्ठानस्य न्यूनसत्ताककार्यभावप्राप्तिर्विवर्त इत्यत्रानादिविवर्तसाधारण्याय कार्यत्वं तावत्त्याज्यमेव, चिन्न्यूनसत्ताकत्वन्तु व्यावहारिकप्रातिभाषिकान्यतरत्वं नानुगतम्। अन्यतरत्वस्याखण्डस्याभावात्, चिदध्यस्तत्वमेव परिशिष्यतेऽनुगतम्। अधिष्ठानांशोऽपि सामान्यतो ज्ञातत्वे सति विशिष्याज्ञातत्वरूपो विफल इत्याशयेन परिष्करोति—आध्यासिकेति। प्रतियोगित्वमत्र चिन्निष्ठाधारतानिरूपितनिरूपकत्वम्। आध्यासिकसम्बन्धीयप्रतियोगित्वसम्बन्धेन चिद्विशिष्टत्वमिति तु लक्षणान्तरम्।

सामान्यरूप से प्रविष्ट है। अन्यथा अर्थात् यदि प्रतीतिका प्रमात्वेन प्रवेश करें तो प्रमाविषयतया ज्ञात का अभाव मानना विरुद्ध है और यदि भ्रमत्वेन निवेश करें तो त्रैकालिकत्वादि दल व्यर्थ हो जायेगा। तथापि वस्तुगत्या प्रपञ्चमें प्रतीयमानत्व क्या वृत्तिविषत्व है या चिदविषयकप्रतीत्यविषयत्व है या आध्यासिकसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धेन चिद्-विशिष्टस्वरूप चिन्न्यूनसत्ताकत्वनियत चिद्विवर्तत्व है? उन में प्रथम कल्प में किसी का विवाद नहीं है, और द्वितीय कल्प तो हम दोनों (स्वातन्त्र्यवादी-विवर्तवादी) का समान

**न कस्यापि विप्रतिपत्तिः, द्वितीयस्तु समान आवयोरित्युपपादितम्, "सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते" इति चाहुर्वेदान्तिनः, अन्यथाऽधिष्ठानानुवेधस्यानुपपत्तेः। तृतीये तु विवादः, परन्तु घटादौ चिदविषयकप्रतीत्यविषयत्वेऽपि**

न कस्यापि विप्रतिपत्तिरिति। प्रपञ्चे वृत्तिविषत्वस्य सर्वैरपि स्वीकरात्। आवयोः = स्वातन्त्र्यवादिविवर्तवादिनोः। उपपादितमिति। अत्रैवाचार्योक्तिं संवादयति—सर्वप्रत्ययेति। जीवन्मुक्तिपरमिदं वचनम्। जीवन्मुक्तो हि व्युत्थानकाले देहयात्रानिर्वाहकमावश्यकं लौकिकं वैदिकञ्च कर्म मिथ्यात्वेन पश्यन् करोति। समाधिकाले ब्रह्मरूपेऽवतिष्ठते। अतत्त्वविदपि ब्रह्मरूपे एव व्यवतिष्ठते, सर्वस्यापि जीवस्य सोपाधिकब्रह्मरूपत्वात्। सोपाधिकं तत्तज्जीवरूपं तत्तज्जीवेनैव वेधते, यद्वा—

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥

इत्यभियुक्तोक्तेः घटादिसकलजगति तादात्म्येन सच्चिदानन्दब्रह्म सर्वेषां सर्वाधिष्ठानतया घटोऽस्तीत्यादौ भासते। किञ्च—

अतोऽनुभव एवैकोविषयोऽज्ञातलक्षणः।
अक्षादीनां स्वतः सिद्धो यत्र तेषां प्रमाणता॥

इत्याचार्योक्तेरनुभवान्यस्य जड़स्याज्ञातत्वाभावेनाज्ञातताशून्यघटादिविषयकत्वस्य प्रामाण्याप्रयोजकत्वात्, अनुभवः सद्रूप आत्मैवैक एवाक्षादीनामज्ञातलक्षणो विषयः, तद्विषयत्वेनैव च तेषां प्रामाण्यम्। अत एव सद्रूपस्य ब्रह्मणः सर्वेन्द्रियग्राह्यत्वमद्वैतसिद्धयादौ समर्थितम्।

तृतीये तु विवाद इति। आगमिकनिगमान्तिनोरितिशेषः। स्वातन्त्र्यवादिभिः सर्वस्य सत्यत्वस्वीकारात् निरुक्तविवर्तवादस्य तैरनङ्गीकारात्। नन्वेवमद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वभङ्गः स्वातन्त्र्यवाद्यभिमताद्वैतसिद्धेस्तथात्वाभावादिति चेन्न तन्मतसिद्धस्य चिदविषयकप्रतीत्यविषयत्वस्य सूक्ष्मपर्यालोचनया तत्रैव पर्यवासनादित्याह—परन्त्विति। चितो घटाद्यविषयकप्रतीतिविषयत्वदर्शनेनेति। ज्ञानादिपदजन्यप्रतीतिविषयत्वस्य घटादावभावात्। एतेन घटादेश्चिदात्मकत्वन्न तु चितो घटाद्यात्मत्वमिति ध्वनितम्।

है। स्वातन्त्र्यवादि की दृष्टि से उपपादन कर चुके है और वेदान्तीयों ने "सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते" (समस्तज्ञानों में विषयरूप से ब्रह्मस्वरूप व्यवस्थित है।) इत्यादि कहा है। अन्यथा अर्थात् यदि ब्रह्म को सर्वप्रत्ययवेद्य न मानें तो सन् घट इत्यादि में अधिष्ठान ब्रह्मसत्ता का अनुवेध (सम्बन्ध) अनुपपन्न हो जायेगा। तृतीयकल्प में वादियों का विवाद अवश्य है किन्तु घटादि में चिदविषक प्रतीतिविषयता का

**चितो घटाद्यविषयकप्रतीतिविषयत्वदर्शनेन घटादेश्चिदभिन्नत्वं चित्सत्ताऽतिरिक्तसत्ताशून्यत्वमेवायाति, एतच्चाप्रसिद्धप्रतियोगिकाभावाभ्युपगमेन, अन्यथा तु सिद्धयसिद्धिव्याघातवारणाय भेदसम्बन्धावच्छिन्नप्रतियोगिताकचिदभाववत्त्वमिति यथाश्रुतमेव, मिथ्याभेदस्योक्तरीत्या प्रसिद्धत्वात्, तत्राद्ये सम्प्रतिपत्तिरेव। द्वितीये तु यदि भेदसम्बन्धेन घटादौ चिन्नास्ति, तर्हि केन**

नन्वप्रसिद्धप्रतियोगिकस्याभावस्यास्वीकारात् चित्सत्तातिरिक्तसत्ताया अप्रसिद्धया तच्छून्यत्वं वक्तुमशक्यमिति चेत्तत्राह—एतच्चेति। चित्सत्ताऽतिरिक्तसत्ताशून्यत्वमित्यर्थः। अन्यथेति। अप्रसिद्धप्रतियोगिकाभावानभ्युपगमे। सिद्धयसिद्धीति। चित्सत्ताऽतिरिक्तसत्तायाः सिद्धौ तच्छून्यत्वं न सम्भवति। असिद्धौ च तस्याः प्रतियोगिनोऽप्रसिद्धत्वादेव तच्छून्यत्वं न सम्भवतीत्युभयथा व्यघातः। यथाश्रुतमेवेति। अभिधाबोध्यमेव। नन्वेवमपि भेदसम्बन्धस्याप्रसिद्धत्वादेतदप्यप्रसिद्धमिति चेन्नेत्याह—मिथ्याभेदस्येति। तथा च दर्पणप्रतिबिम्बयोरैक्यमिव स्फुरणप्रपञ्चयोरप्यैक्यमिति स्थितौ भेदोऽस्तु मिथ्यैवे"ति पूर्वोक्तरीत्येत्यर्थः। तत्राद्ये—चित्सत्ताऽतिरिक्तसत्ताशून्यत्वे। सम्प्रतिपत्तिरेवेति। स्वा-

अभाव रहने पर भी चित् में घटादि अविषयक प्रतीति को विषयता देखो जाती है, अतः घटादि में चिदभिन्नत्व चित्सत्ताऽतिरिक्तसत्त शून्यत्वरूप ही सिद्ध होता है। यह चित्सत्ताऽतिरिक्तासत्ताशून्य अप्रसिद्धप्रतियोगिक अभाव मान कर कहा गया हैं। [ भाव यह है कि यहाँ पर चित्सत्तातिरिक्तसत्ताशून्यत्व चिदभिन्नत्व का अर्थ किया गया है। किन्तु चित्सत्ता से अतिरिक्त सत्ता ही अप्रसिद्ध है क्योंकि एक ब्रह्मसत्ता से सर्वत्र सत्प्रतोति (सद्व्यवहार) हो जाता है, तद्भिन्नसत्ता में कोई प्रमाण नहीं है, ऐसी स्थिति में चित्सत्ताऽतिरिक्तसत्ता का शून्यत्व (अत्यन्ताभाव) नहीं हो सकता। इस आशंका का उत्तर देते हुये कहा है कि अप्रसिद्धप्रतियोगिक अभाव भी माना जाता है, अतः चित्सत्ताऽतिरिक्तसत्ता के अप्रसिद्ध होने पर भो तच्छून्यत्व कहा जा सकता है। ] अन्यथा अर्थात् अप्रसिद्ध प्रतियोगिक अभाव स्वोकार न करें तो सिद्धयसिद्धिव्याघात [ यदि चैतन्यसत्तातिरिक्तसत्ता सिद्ध है तो उस का अभाव कह नहीं सकते, और यदि उक्त सत्ता सिद्ध नहीं है तब भो प्रतियोगिक के अप्रसिद्ध होने से अभाव नहीं कह सकते, दोनों हो पक्षों में अभाव मानना व्याघत (विरुद्धोक्ति) से युक्त है ] का वारण करने हेतु भेदसम्बन्धावच्छिन्नप्रतियोगिताकचिदभाववत्त्वरूप चिदभिन्नत्व का यथाश्रुत अर्थ ही करना चाहिए। मिथ्याभूत पूर्ववर्णित "स्फुरणप्रपञ्चयोरैक्यमितिस्थितौ भेदोऽस्तु मिथ्यैव" इत्यादि रीति से प्रसिद्ध ही है। इन दोनों पक्षों में प्रथम पक्ष तो निर्विवाद है। द्वितीय में विचारणीय यह है कि-यदि भेद सम्बन्ध से घटादि में चैतन्य नहीं है, तो किस सम्बन्ध से है? "किसी भी सम्बन्ध से नहीं है", यह तो कह नहीं सकते, क्योंकि चैतन्य न होने

सम्बन्धेनास्तीति वक्तव्यम्, न तावन्न केनापि सम्बन्धेन, घटादेरलीकत्व-प्रसङ्गात्, नाप्यभेदसम्बन्धेन, चिति घटाद्यविषयकप्रतीतिविषयत्वाभाव-प्रसङ्गात्, नापि विषयतासम्बन्धेन, तस्य चतुर्थे शारदायां निरस्तत्वात्, न च चिदात्मको विषयतासम्बन्ध इति न निरासभाजनम्; सम्बन्धस्य सम्बन्ध्यात्मकताया अप्रामाणिकत्वात्, तस्मात्परिशेषादाध्यासिकसम्बन्धावच्छिन्न-प्रतियोगित्वसबन्धेनैव घटादौ चिदस्तीति वक्तव्यमिति विजयते विवर्त-वादः। एवं च त्रैकालिकनिषेधप्रतियोगित्वमप्यागतमेव, तथाहि—चिद्भिन्नत्वेन

## अत्यन्ताभावविजयः

त्रैकालिकनिषेधप्रतियोगित्वमप्यागतमेवेति। अत्रेदमपि बोध्यम्, घटादेरुत्पत्तेः पूर्वं न प्रागभावः, तस्याप्रमाणिकतायाश्चतुर्थे शारदायां दर्शितत्वात्, नव्यतार्किकैरपि च त्यक्त एवासौ, एवं च समयविशेषावच्छिन्नतयाऽत्यन्ताभाव एवोत्पत्तेः पूर्वम् 'अत्रेदानीं घटो नास्ती'ति प्रतीत्या विषयीक्रियते, न चात्यन्ताभावः शक्यो निवर्तयितुम्, अत्यन्ताभाव-तन्त्र्यवादिविवर्तवादिनोरित्यर्थः। द्वितीयेत्विति। निगदव्याख्यातम्। शारदा-यामिति। खण्डनशारदायाम्।

ननु सर्वस्य चिद्विषयस्य चिदात्मकत्वेन विषयतासम्बन्धस्यापि चिद्रू-पत्वात् तन्निरासोऽनुचित इत्याशङ्कां निराचष्टे—न चेति। न हीत्यर्थः। सम्बन्ध-स्येति। सम्बन्धत्वेन सम्बन्धस्य। विषयताख्यसम्बन्धे ज्ञानीयत्वव्यवहारेण ज्ञानात्मकत्वासम्भवः। स्वं न स्वीयमित्यनुभवात्। उपसंहारव्याजेन स्वाभिप्रेतं प्रकटयति—तस्मादिति। विजयते विवर्तवाद इति। आध्यासिकतादात्म्येन घटादेश्चिदध्यस्तत्वेन तन्मिथ्यात्वस्य ध्रौव्येण चित एव पारमार्थिकत्वं तदति-रिक्तस्य सर्वस्य मिथ्यात्वमिति विवर्तवादसिद्धान्तः पर्यवस्यतीति भावः।

मिथ्यात्वलक्षणसमन्वयं दर्शयति—एवञ्च त्रैकालिकेति। प्रतिपन्नोपाधौ

से घटादि में अलीकत्वापत्ति हो जायेगी।

अभेद सम्बन्ध से भी नहीं कह सकते, क्योंकि चित् में घटाद्यविषयकप्रतीति-विषयत्व का अभाव प्रसक्त होने लगेगा। विषयता सम्बन्ध से घटादि में चित् रहता है, यह कहना भी सम्भव नहीं है क्योंकि विषयत्वसम्बन्ध का खण्डन शारदा के चतुर्थ-परिच्छेद में कर चुके हैं। यदि कहें कि विषयता सम्बन्ध भी चिदात्मक होने से निरास का पात्र नहीं है, तो यह नहीं कह सकते, क्योंकि सम्बन्ध को सम्बन्धीरूप मानना अप्रामाणिक है। तथा च पारिशेष्यात् आध्यासिकसम्बन्धावच्छिन्नप्रतियोगित्व-सम्बन्धेन घटादि में चैतन्य है यही मानना होगा। ऐसी स्थिति में विवर्तवाद का ही विजय हुआ।

एवञ्च त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्व भी सिद्ध हो गया। प्रकार यह है कि "चिद्भिन्नत्वेन प्रपञ्च नहीं है" यह आप (स्वातन्त्र्यवादी) को भी स्वीकृत है।

त्वादेव, समयविशेषावच्छिन्नस्य तस्य निवृत्तिस्तु 'विशिष्टे विधिनिषेधौ विशेषणमुपसङ्क्रामत.' इति नयेन समयविशेषस्य निवृत्तावेव पर्यवस्यति, समयविशेषस्य सत्त्वे हि तदवच्छिन्नत्वमप्यत्यन्ताभावे स्यादेव । समयगतविशेषस्तु न प्रागभावाधिकरणत्वम्, अपि तु प्रतियोगिनस्तदुत्तरावस्थायाश्चानधिकरणत्वमित्यन्यत् । एवं च प्रतियोग्यसहिष्णोरत्यन्ताभावस्य पूर्वमेव कपाले प्रसारितपादत्वे कथं प्रतियोगी वराकस्तत्रावकाशलेशमपि शक्नुयाल्लब्धुम् । तस्मात्तस्य स्वाप्निकपदार्थवत् प्रतिभासमात्रप्राणत्वमेव मध्ये इति सुविचार्यैवाचार्यैरवाचि 'आदावन्ते च यत्राऽस्ति वर्तमानेऽपि तस्मिन् प्रतिभासमात्रजीवातुपदार्थसार्थस्योल्लासः शक्तिविशेषमहिम्ना, यदाहुः—

न दृश्यते त्वत्प्रतिभासशक्तेः स्वप्नेऽर्थवैचित्र्यनिमित्तमन्यत् ।
तद्दृष्टसामर्थ्यतया सदैव विश्वप्रपञ्चप्रथनैकहेतुः ॥' इति

प्रतिभासशक्तिरित्यस्य चितेस्तत्तदाकारतया प्रथनानुकूला शक्तिरित्यर्थः । एवं च तत्तदाकाराणां चितिगर्भान्तर्भावे निर्वर्णितदर्पणप्रतिबिम्बन्यायावतार इति । न च वाच्यम् अत्यन्ताभावतत्प्रतियोगिनोर्द्वयोरेव प्रतीतिपथगामित्वतौल्येऽपि किमित्यत्यन्ताभावे एव पक्षपात इति, अत्यन्ताभावस्य त्रैकालिकस्य पूर्वमेव प्रसारितपादत्वोक्त्यैव दत्तोत्तरत्वात् ।

## अत्यन्ताभावविजये

### ( क ) प्रसिद्धदृष्टिसृष्टिवादेऽनौचित्यम् ।

ननु प्रतियोगिनोऽत्यन्ताभावापेक्षया न्यूनसत्ताकं किञ्चिद्रूपं बाह्यमस्ति न वा, नाद्यः, यस्यात्यन्ताभावस्य बलेन सर्वजनानुभवमवधीर्य प्रतियोगिनः प्रतिभासकालमात्रवृत्तित्वमुच्यते, तस्यैव बलेन प्रतिभासमात्रस्वरूपत्वमेव तस्य किमिति नोच्यते । अथोक्तमेव मया विज्ञानवादप्रकरणे दृष्टिसृष्टिपक्षे बाह्याभ्युपगमस्य निष्प्रयोजनत्वमेवेतीति चेत्, त्यज्यतां तर्हि तस्यैवात्यन्ताभावस्य बलेन प्रतिभासमात्ररूपत्वमपि, एतेन द्वितीयः कल्पोऽपि निरस्तः, बाह्यरूपानभ्युपगमे प्रतिभासमात्ररूपताया एवाभ्युपेतव्यत्वात्, तस्याश्चात्यन्ताभावबलाननुरूपत्वात् । अथ सत्येवात्यन्ताभावे दोषवशाज्जातस्य प्रतिभासस्य भ्रमत्वमित्येतावतैवात्यन्ताभावस्य बलमक्षुण्णमिति चेन्न, एवं हि मृदादेर्घटाद्युपादानत्वं न स्यात्, बुद्धिपूर्वकं हि यदुपादीयते तदेवोपादानम्, अत एवोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वेनेश्वरमनुमिमते । न च भ्रमाधिष्ठानं बुद्धिपूर्वकमुपादियमानम्, अतएव तत्र वेदान्तिनामुपादानशब्दप्रयोगोऽनुचित एव, अबुद्धिपूर्वकं प्राप्ते ह्यधिष्ठाने दोषवशाद्भ्रान्तिरुज्जृम्भते, मृदादिकं तु कुलालेन बुद्धिपूर्वकमुपादीयमानं पश्यामः । अथ कार्यमात्रस्यात्यन्ताभाव उक्तरीत्या प्राप्त एवेति मृदादेः कुलालस्य तत्कर्तृकोपादानक्रियायाश्चाप्यत्यन्ताभावे सति नोक्तप्रत्यवस्थानं शोभते, मृदाद्युपादानताप्रतिभासस्य स्वप्नन्यायेन भ्रमत्वस्यैव वाच्यत्वादिति चेत्साधूक्तम्, कुलालस्य केनचिददृश्यमानत्वे तद्विषयकः कस्य भ्रम इति तु वक्तव्यम्, न तावत्तस्यैव, भ्रान्तस्य भ्रमात्पूर्वं सद्भावस्यापेक्षणीयत्वात्, कदाचिच्च स्वं सर्वथैव विस्मृत्यापि कार्यविशेषे व्यासक्तता सम्भाव्यते, ईश्वरस्तु तं पश्यन्नपि न भ्रान्तः ।

न च त्वमपि तादृशं तं कथं वेत्सि, वेत्सि चेद्भ्रान्तं किमित्यन्यं गवेषस इति वाच्यम्, मया पश्चात्तस्य ज्ञातत्वसम्भवात् । न च मध्ये विलोप एवासीत्तस्य पश्चातु तज्जातीयोऽन्य एवोत्थितः संस्कारादिसामर्थ्यसमुत्थप्रतिभासात्मा स्वप्नवत्, संस्काराणां तु स्वप्नेऽप्यज्ञातसत्तामेव कार्यार्जकत्वदर्शनेन न तेषु दृष्टिसृष्टित्वम्, एवं च दृष्टिं विना तेषां कथं सद्भाव इति मा शङ्किष्ठा इति वाच्यम्, यतः स्वप्नमधिकृत्येदृशाभिधानस्य श्रद्धेयत्वेऽपि जागरां प्रकृत्य प्रवृत्तस्य तस्योन्मत्तप्रलापायमानत्वेनोत्तरानर्हत्वात् । अतएवानौचित्यतर्कं निरूपयन् खण्डनकारः 'अत्र सहृदयानां मूकतैवोचिता' इति धृष्टोक्तावनुमेने इति चेत्—

सत्यमेवैतत्, यत्तु केनचिदुक्तं सादृश्यात्प्रत्यभिज्ञेति, तत्राहर्निशमाहारादिनोपचयापचयप्राप्त्या शरीरादौ तावत्केन प्रत्यवस्थीयेत, सर्वथैव पूर्वापरकालीनशरीरभेदस्तु कुतः, परिमाणविशेषाक्रान्तद्रव्यसमवायिषु न परिमाणान्तराक्रान्तद्रव्यसमवायित्वसम्भव इति ह्यारम्भवादभङ्गे सति न भणितुमर्हम् । विरुद्धपरिमाणाननुभवस्थले च घटादौ तु न भेदशङ्कैव । अथ स्वप्नादौ मिथ्याभूते दृष्टिसृष्टिनिर्णयेन नेह नानास्तीत्यादिश्रुत्या मिथ्यात्वेन जाग्रत्कालीनेष्वपि दृष्टिसृष्टिराक्षिप्यत इति सिद्धे भेदे सादृश्यात्प्रत्यभिज्ञेति चेत्, सादृश्ये दृष्टिसृष्टिरस्ति न वा, आद्ये न तेन प्रत्यभिज्ञोपपादनसम्भवः, उभयानुगतधर्माभावात् । नास्ति चेत्, तस्य सत्यत्वप्रसङ्गः, दृष्टिसृष्टिताया मिथ्यात्वव्यापकतोपगमात् । अथ स्वप्ने यथा सादृश्यं विनैव तत्सदृशमिदं तदेवेदमिति वा बोधः, तथा जागरायामपि विचित्रशक्तिकमायामहिम्ना सादृश्यं विनैव तथा बोध इति चेत्तथापि स्वप्ने यथा संस्कारधर्माधर्मैरज्ञातैरेव तथा तथा प्रतिभासस्तथा जागरायामपि तैरज्ञातैरेवेति तेषां मिथ्यात्वं न स्यात्, दृष्टिसृष्ट्यभावात् । अथ तेष्वपि निर्विकल्पाविद्यावृत्तिः स्वीक्रियते तदुत्पत्तिसहभाविनीति चेत्तथापि सुषुप्तौ जीवेशविभागादेरप्रतीतत्वेन मुक्त्यापत्त्या पुनर्जागरायां मुक्तस्यैव पुनरावृत्तिस्वीकारप्रसङ्ग इति तत्र दृष्टिसृष्टिमत्त्वाभावेन कथं मिथ्यात्वम् ।

अथ सुषुप्त्यन्यकाले एव प्रतीयमानतयेश्वरस्य जीवविभागादेश्च दृष्टिसृष्टिरिष्टैव, सुषुप्तौ मुक्तिप्रसङ्गस्तु नास्ति, अविद्यायाः सूक्ष्मावस्थारूपसंस्कारादिविषयकतद्वृत्तेश्च सत्त्वादिति चेत्तथापि मिथ्यात्वमविद्याया न स्यात्तत्र दृष्टिसृष्ट्यभावात् । अथ तद्विषयिण्यपि निर्विकल्पाऽविद्यावृत्तिनिरन्तरमनुवर्तमानोपेयते, निर्विकल्पत्वादेव च सा विशिष्टव्यवहारं जनयन्ती नानुभूयते, दोषप्रयुक्तत्वनिबन्धनं ज्ञातैकसत्त्वमाश्रित्य हि दृष्टिसृष्टिव्यवहारो न तु तत्र सृज्यमानत्वस्यापि प्रवेशो येनाविद्यायां न दृष्टिसृष्टिः सम्भाव्येत, अविद्यायां च स्वात्मकदोषप्रयुक्तत्वमनुमन्यत एव, सुखादेः सत्यत्ववादिनापि केनचित्तस्य ज्ञातैकसत्त्वस्वीकारेणार्थान्तरवारणाय च निबन्धनान्तमिति चेदेवं तर्हि यथाऽविद्यायाः स्थायित्वेऽपि निर्विकल्पां तद्विषयिकां वृत्तिं स्वीकृत्य तस्या दृष्टिसृष्टी रक्ष्यते, एवं घटाद्यनन्तप्रपञ्चविषयकनिर्विकल्पवृत्तिनिचयं स्वीकृत्य तस्यापि दृष्टिसृष्टिता रक्ष्यताम्, स्थायित्वत्यागस्तु कुतः, एवं सूक्ष्मावस्थारूपसंस्कारधर्माधर्मजीवेशविभागादेरपि निर्विकल्पकाविद्यावृत्तिभिरेव दृष्टिसृष्टिरसमास्वादयतः स्थायिताऽपि पुष्यत्विति सर्वत्र प्रतिबन्दिरेव । अविद्याया अनादित्वे प्रमाणसद्भावात्तथा तत्र कल्पितमिति चेद्घटादेरपि त्रिकालाबाध्यत्वेऽनादित्वे वाऽप्रास-

प्रसरस्यापि प्रत्यक्षादेः कतिपयकालावस्थायित्वे प्रगल्भमानतैवेति तुल्यम् । स्वरूपभूत-चैतन्यमादाय मायादेर्ज्ञातैकसत्त्वसमर्थनं तु घटादावपि समानम्, सर्वस्यापि चिद्विषयत्वात्, परन्तु न तावता दृष्टिदृष्टिः क्वचित्प्रसज्यते, एवं हि प्रपञ्चस्य सदातनत्वं स्यात् । यदि तु कश्चिद्ब्रूयादविद्याया अपि स्वरूपतो नानादित्वम्, किन्तु प्रवाहानादिसंस्काररूपत्वमेव, तदापि तेषां स्थायित्वमौचित्यप्राप्तमेव, कथञ्चिद्वैयात्यात्तेषां क्षणिकानामेव सन्तन्यमान-तोपगमेऽपि तद्विषयकानन्तनिर्विकल्पकवृत्तिकल्पनया तेषु मिथ्यात्वं रक्ष्यताम्, अथवा दृष्टिसृष्टेर्मिथ्यात्वव्यापकतापक्षं परित्यज्य स्थायिष्वपि दृश्यत्वादिना मिथ्यात्वमनुमन्यता-मिति कृतधियो विदाङ्कुर्वन्तु ।

वयन्तु प्रतीमः—कुशकाशावलम्बनमनुहरन्ती स्वपक्षशैथिल्यप्रतिबिम्बस्य दर्प-णायमाना तादृशकल्पना कुकल्पनैव, निर्विकल्पवृत्तीनामपि सङ्ख्यश्लेषस्यात्तदा नित्यस्य साक्षिणस्तत्र मौनिता कुतः स्यात्, तादृशवृत्तीनामपि च स्मरणजनकत्वं सुषुप्तिसमाध्युत्थि-तस्य स्मरणोपपत्तयेऽनुमतम्, न च तादृशवृत्त्यधीना कदाचिदपि संस्कारराशिगोचरा स्मृतिरनुभूता फलविशेषानुमिताऽपि वा, संस्कारविषयकानुमितिशाब्दान्यतराधीना तु भवन्ती तेषां स्मृति र्न सततमनुवर्तमानतया स्वीकृतनिर्विकल्पवृत्तिपरम्परां पारयति समर्थयितुम्, तस्माद् दृष्टिसृष्टिपक्षेऽपि मिथ्याभूतेष्वपि संस्कारधर्माधर्मादिषु दृष्टिसृष्टिर्नैव स्वीकर्तुमुचितेति घटादौ मिथ्यात्वान्यथानुपपत्त्या तस्याः समर्थनमनर्थनीयमेवेति ।

'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' इति सुप्तोत्थितजीवमधिकृत्य प्रवृत्ता श्रुतिस्तु यदा कदाचिदपि प्राणादयो जायन्ते तदैश्वरीं दशामनुवानाज्जीवादेव जायन्ते, आत्मनोऽद्वैतादित्येवम्परा । न तु चैत्रमैत्रादिजागराद्यक्षण एव जायन्त इति तदर्थ इति भ्रमितव्यम् । एवं 'पुरत्रये क्रीडति यस्तु जीवस्ततस्तु जातं सकलं विचित्रम्,' इत्यादि-कमपि योजनीयम् । 'असतोऽधि मनोऽसृजत मनः प्रजापतिमसृजत तच्चेदं मनस्येव प्रतिष्ठितम्' इत्यादौ तु मनः पदं पारमेश्वरकलनाशक्तिपरम्, अवस्थातद्वतोरैक्यविवक्ष-णात्, प्रसिद्धमनसस्तादृशकलनाशक्तेरवस्थाविशेषत्वात्, तस्याः सृष्टिस्तु प्रकाशान्तर्लीन-तादशात्यागः, कार्योन्मुखतेति यावत् । सुषुप्तौ सकलकार्यप्रपञ्चलयप्रतिपादकत्वेनाभिमता 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इतिश्रुतिस्तु यदि द्वितीयं पारमार्थिकं स्यात्तदाऽऽत्मवत्सुषुप्तावपि स्फुरेत्, न तु स्फुरति तस्मान्न द्वितीयं परमार्थतोऽस्ति, किन्तु सदा स्वतःस्फुरज्ज्योतिरात्मैवेत्येव प्रतिपिपादयिषति न तु प्रलयकाल इव चैत्रादिसुषुप्तिकाले लयम् । यदि चैत्रम्परेयं नेष्यते तदा सुषुप्तौ तावद् यथा तथाऽस्तु जागरायामपि तु 'सर्वे प्राणाः सर्वे लोकाः' इति श्रुतिदर्शितमनन्तमस्ति द्वितीयं भवन्मते प्रातिभासिकमिति तत्सर्वं कुतो न पश्यति । एकशरीरावच्छेदेनापश्यन्नपि शरीरान्तरावच्छेदेन स एव पश्यति जीवैक्यादिति चेद्धन्तैवं चैत्रादेर्दृष्ट्या व्यावहारिकमपि शरीरविशेषावच्छेदेनापश्यन्नपि शरीरान्तरावच्छेदेन पश्य-त्विति चैत्रमैत्रादिसुषुप्तौ द्वितीयलयः कथमुक्तश्रुत्या प्राप्येतेत्यलम् । सुषुप्तिकाले सकले

विलीने' इत्यत्रापि पूर्वानुभूतसकलविषयकसंस्काराणामेव परिशेषो न त्वयं घटोऽयं पट इत्यादिविज्ञानानामितीदृश एव चैत्रादिसुषुप्तौ लयोऽवगन्तुमुचितः। एतेन—'यदाः सुप्तः स्वप्नं न कञ्चन पश्यति तदैनं वाक् सर्वैर्नामभिः सहाप्येति' ( कौ० ३.३ ) इत्यादिकमपि व्याख्यातम्।

( ख ) उचितदृष्टिसृष्टिवादस्य सृष्टिदृष्टिवादेन समुच्चयः।

तस्माद्यथा यथा कलयति परमेश्वरो मायाविवत्, तथा तथा प्रतिभासो वस्तुतोऽसत्यपि प्रपञ्चे इत्येवैश्वरो दृष्टिसृष्टिवादः कलनाशक्तिं समाश्रितः। ईदृशदृष्टिसृष्टिरेव मिथ्यात्वस्य समव्यापिका इयं चास्ति चैत्रादेः स्वप्नादावागन्तुकदोषप्रयुक्तदृष्टिसृष्टिस्थलेऽपि, चैत्रादिदृष्टिसृष्टिस्तु तिथ्यात्वव्याप्यैव, तद्दृष्ट्याऽज्ञातसतामनपलपनीयत्वात्। एवं च व्यावहारिकतया प्रसिद्धे जगति चैत्रादिशब्देन विवक्षिततत्तन्मनोदृष्ट्या सृष्टिदृष्टिरेव, ईश्वरस्य कतिपयसृष्ट्यनन्तरमेव तत्तद्दृष्टेरुन्मेषादिति समुच्चय एव दृष्टिभेदेन दृष्टिसृष्टिसृष्टिदृष्ट्योर्न तु मतभेदेनोपन्यसनीयता, जीवत्वोपजीव्योपाधिमवधूय परं सर्वोऽयं प्रपञ्चो ममैव स्फार इत्यैश्वरमावेशमाश्रयेत् कश्चित्, अपरः पुनः 'अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति' इतिनयेन विलुप्तसकलकलने चिन्मात्रे निमग्नमनाः स्यादिति त्वन्यत्। ईश्वरस्य चैकक्षणप्रसरेऽपि कलनाशक्तिमाहात्म्येन चैत्रादेश्चिरस्थिरतानुरूपपूर्वापरताप्रतीत्युत्पत्त्या सत्यप्यत्यन्ताभावे कलसादिकृते मृत्स्नादौ समीहापुरस्सरमुपादीयमानतोपपद्यत एव। एवं चेश्वरसृज्यान्तर्गतचैत्रादिमनसो भ्रान्तत्वसम्पादनेऽत्यन्ताभावः पाटवं प्राप्नोत्येव, प्रतियोगिविरोधिस्वभावत्वाच्च सत्यतां प्रपञ्चस्य पिनष्ट्येव, प्रपञ्चप्रतिभासाऽपासने तु नैव निपुणः, कलनाशक्तेरपर्यनुयोज्यत्वात्। अत एवैतयैव स्वयमुपकल्पिताङ्कुशवशीकृतस्य सकलोऽप्ययं प्रपञ्चः। कल्पनयैव पालित इति निश्चिन्वतोऽपि चैत्रादेरुपदेदृष्टृत्वादिकम्। ईश्वरे तु भ्रान्तत्वं न प्रसज्यत इत्युक्तप्रायमेव, तदीयदृष्टिसृष्टेर्विचित्रशक्तिमत्त्वप्रयुक्तत्वादिति।

( ग ) मायातत्सम्बन्धादेर्मिथ्यात्वचिन्ता।

नन्वेवं जन्यानामत्यन्ताभावस्य प्रागेव प्रसक्ततया तेषां तदपेक्षया न्यूनसत्ताकत्वस्यैव वाच्यत्वेन पर्यवस्यतु मिथ्यात्वम्, अनादिमायास्तद्व्याप्यतत्सम्बन्धादेश्च त्वप्रशक्तात्यन्ताभावतया 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इति नयेन न मिथ्यात्वसिद्धिः, जन्यभावाना च ध्वंसस्य सद्भावेऽपि 'अन्ते च यन्नास्ति' इति स्वरूपोत्कीर्तनमात्रं व्यर्थप्रायमेव, आदावसत्तामादायैव मिथ्यात्वस्य लब्धत्वात्। न च मायादेरेव मिथ्यात्वलाभार्थं तत्, तस्यानादेरपि ध्वंसाभ्युपगमादिति वाच्यम्, प्रागभावस्याप्रामाणिकत्वेनोत्पत्तेः पूर्वं घटाद्यभावप्रतीतेरत्यन्ताभावविषयकत्वमादाय वर्तमानेऽपि तत्तथेति वक्तुं शक्यत्वेऽपि ध्वंसस्यातिरिक्तस्य त्यक्तुमनौचित्येन मायादेरत्यन्ताभावस्याप्राप्तेरिति चेन्न, ध्वंसकालेऽप्यत्यन्ताभावप्रतीतेः प्रामाणिकत्वात्, न च वाच्यम्—नव्यैस्तावत्पूर्वापररक्तिमध्वंसप्रागभाववतीदानीं श्यामे कलसे 'समवायेन रक्तं रूपं

नास्ति' इति प्रतीतेः प्रमात्वानुरोधादेव ध्वंसप्रागभावकालेऽपि स्वीकृतोऽत्यन्ताभावः, तयोः प्रतियोगितायाः सम्बन्धानवच्छिन्नतया समवायसम्बन्धावच्छिन्नप्रतियोगिताका-भावावगाहितादृशप्रतीतिविषयत्वानुपपत्तेः, मायायास्त्वभावो न सम्बन्धविशेषावच्छिन्न-प्रतियोगिताकोऽनुभूयते येन तस्या ध्वंससमयेऽपि स्यादत्यन्ताभाव इति; येन सम्बन्धेन प्रसक्ताऽऽसीत्सा परमात्मनि, तेन सम्बन्धेन सा नास्तीत्यभावानुभवे बाधकाभावात्, ब्रह्मावगमानन्तरम् 'अविद्या सह कार्येण नासीदस्ति भविष्यति' इति त्रैकालिकसंसर्गाऽ-भावापरपर्यायात्यन्ताभावविषयकानुभवस्यैवौपनिषदैरुपन्यस्तत्वाच्च । प्रतियोगिनः पूर्व-मनन्तरं वा प्रमितस्यात्यन्ताभावस्यान्वर्थनाम्नः स्वसमसत्ताकप्रतियोगिनं स्वावच्छेदक-देशकालावच्छेदेन सोढुमक्षमत्वादेव च तदीयमिथ्यात्वपर्यवसायित्वस्य दुर्वारत्वात् ।

( घ ) मायातत्सम्बन्धादेर्नाशासम्भवः ।

वस्तुतस्तु नाशस्य निरन्वयत्वमप्रामाणिकमेव, तप्तोपलतलपतितोदबिन्दोरप्यन्वय-मम्बुदरूपेणानुमितसन्त एव, स्वीकृतं चैतद्भाष्यादौ । ( ब्र० सू० अ० २ पा० २ सू० २२ ) । एवं च विदेहकैवल्ये मायादेरन्वयस्य सर्वथैवानभ्युपगमेन कथं नाशात्मकोऽ-भावः सम्भाव्येतापीत्यत्यन्ताभाव एव तत्त्वसाक्षात्कारानन्तरमनुभूतस्तस्येति सूपपन्नं मिथ्यात्वम् ।

इदम्पुनरिह वक्तव्यम्—अत्यन्ताभावोऽयं स्वन्यूनसत्ताकस्यापि प्रतियोगिनो व्यधिकरणो वा तत्समानाधिकरणो वा, आद्ये प्रपञ्चप्रतिभासोऽनुभूयमानो नोपपादयितुं पार्यते । द्वितीये तु विदेहकैवल्यस्य प्रतियोगिव्यधिकरणदृश्यसामान्याभावत्वोपलक्षिततया प्रसिद्धं स्वरूपं त्यक्तव्यमेवापद्यत इति प्रपञ्चयिष्यामोऽन्ते ।

यदि च मायायाः सर्वकार्योपादानतोपगमेन न स्वोपादेयवृत्तिविशेषनाश्यत्व-सम्भावना भव्येति सत्यम्, नाशकान्तरस्याशङ्कनीयतया तदा सुतरां न नाशपक्षः सङ्गतः, नापि च नाशं विनैव प्रतियोगिव्यधिकरणात्यन्ताभावपक्षः ।

ननु यद्यपि पटाग्निसंयोगस्य स्वोपादानपटनाशकत्वं दृष्टचरमेवेत्येवं नात्र प्रत्यवस्थातुं शक्यते, गुणगुणिपरिभाषाया अयौक्तिकतया वेदान्तदर्शने स्पष्टं बहिष्कृतत्वेन पटस्य संयोगं प्रत्यनुपादानत्वात्, संयुक्ताग्नेरेव तत्रानुभवानुसारेण पटनाशकत्वाच्च, संयोगस्य धर्मिपारतन्त्र्येणैवावस्थितेरौचित्यात् । अथ संयोगस्य पटनाशं प्रति कारणत्वा-भावेऽपि प्रयोजकत्वं त्वस्त्येवेति वृत्त्यारूढचितोऽज्ञाननिवर्तकत्वे वृत्तेरज्ञाननिवृत्तिप्रयोजक-तोक्तदृष्टान्तेन सम्भाव्यतामिति चेद्द्रव्यस्य स्वोपादाननाशकतायास्तथाप्यदृष्टतयाऽ-सम्भाव्यत्वात् । न च दध्यादेः स्वपरिणामिदुग्धादिनाशकत्वं दृष्टम्; न हि दध्यादिक-मुत्पद्य पश्चाद्दुग्धादिकं नाशयति । अथ स्वपरिणामिदुग्धसजातीयं दुग्धं दधिसम्पर्केण नश्यतीत्याशयः, प्रकृतेऽपि च वृत्तिरूपेण परिणताज्ञानसजातीयमज्ञानमेव वृत्त्या नश्यति, वृत्तिरूपतां गतस्य तु कथञ्चित्स्वयमेव नाशोऽनुमन्यतामिति चेन्न, दधिसम्बन्धेन हि दुग्धस्य रूपान्तरप्राप्तिरूपो नाशो न तु सर्वथा, प्रकृते तु मायाया निरन्वय एव नाश

**नास्ति प्रपञ्च इति भवद्भिः स्वीकृतमेव, चिद्भिन्नस्वरूपत्वं च जड़त्वम् दृश्य-** इष्टः। अतएव गोमयोद्भूतवृश्चिकस्य गोमयाभिभावकस्य प्रकृतोदाहरणतामादायात्र प्रत्यवस्थानमस्थाने, आरम्भवादानभ्युपगमेन गोमयावयवानामनुपादानत्वेन गोमयस्यैवोपादानजातीयस्य वृश्चिकेनाभिभवमात्रदर्शनेऽपि निरन्वयनाशादर्शनात्। एवं कदल्या व्रीह्यादेश्च फलपाके सति प्रकृत्यैव जायमानो नाशोऽपि रूपान्तरप्राप्तिरूप एव। अथ प्रमामात्रस्य स्वप्रागभावनिवर्तकत्वं दृष्टमेव, प्रमाप्रागभावत्वं च भावरूपाज्ञाने एव स्वीक्रियते, आत्मरूपाधिष्ठानप्रमाप्रागभावत्ववतश्चाज्ञानस्य कार्यमात्रोपादानतयाऽऽत्मप्रमां प्रत्यप्युपादानत्वमिति चेन्न, यादृशाज्ञानस्य प्रमानाश्यता लोकेऽनुभूयते तस्य प्रमां प्रत्युपादानताया अनिश्चयात्, यस्य चोपादानतानिश्चयस्तस्य केनचिद्रूपेणान्वयस्यापि परिशेषात्। प्रागभावत्वेन रूपेण निरन्वयनाश एवेति चेत्तर्हि तेन रूपेण नोपादानतापि, अतिरिक्तप्रागभावाभावेन पूर्वकालावच्छिन्नात्यन्ताभाववत्वं हि तत्, तद्रूपावच्छिन्नस्य नाशश्च पूर्वकालनाश एव पर्यवस्यति। पूर्वकालश्चोपाधिरूपो न लोके निरन्वयं विनश्येत्। तस्मान्नात्रोदाहरणोपन्यासः शक्यः।—

तथापि पञ्चमप्रकारतयाऽऽलौकिकोऽयमविद्यानाशो न लौकिकोदाहरणमपेक्षत एव, अथवा न वृत्तिजन्योऽयम्, अपि तु वृत्तिरूप एव, वृत्तिनाशस्तु ब्रह्मरूपोऽतिरिक्तो वा, 'अत्र कियन्ति वस्तूनि ?' इति पृष्टेऽभावेष्वनन्तेषु सत्स्वपि भावगणनयैवोत्तरदर्शनेन श्रुत्याऽपिताननादृत्यैवाद्वैतबोधनसम्भवेन भावाद्वैतपक्षाश्रयणात्। यद्वा, आनुमानिकेऽर्थे व्याप्तिग्रहार्थमुदाहरणान्वेषणा, न तु श्रौते प्रत्यक्षसिद्धे वाऽज्ञानापगमे इत्येवं नाशपक्षः सम्भाव्यताम्। यद्वा नाशो न स्वीक्रियत एव, तस्य जन्यतया ब्रह्मभिन्नस्य 'अतोऽन्यदार्तम्' इति श्रुतिमनुसृत्य नाशोपगमेऽनवस्थानात्। किन्तु चरमतत्त्वज्ञाने दृश्याश्रयकालपूर्वत्वाभावनियम एवान्यत्रादृष्टचरोऽपि 'विद्वान् नामरूपाद्विमुक्तः' इत्यादिश्रुतिसमुत्थतयात्र स्वीकर्तुमुचितः। चरमतत्त्वज्ञानोत्तरं दृश्यसामान्याभावनियम इत्येवं तु नोक्तम्, उत्तरत्वं हि नाशकालवृत्तित्वम्, न चास्मन्मते परममुक्तौ नाशकालौ, तस्मादुक्तनियममहिम्नैव नाशं विनैव प्रतियोगिव्यधिकरणात्यन्ताभावपक्षोऽपि शक्यः सम्भावयितुमिति चेन्न,

एतेषां सर्वेषामपि पक्षाणां सविस्तरं निरसिष्यमाणत्वात्। तस्मान्मायायाश्चिद्दर्पणप्रतिबिम्बतां प्राप्तै रूपैरैव दृश्यत्वादिबलान्मिथ्यात्वम्, प्रतियोगिव्यधिकरणस्तु तदत्यन्ताभावो नैवास्तीति शिवम्।

त्रैकालिकनिषेधप्रतियोगित्वमित्यर्थः। भवद्भिरिति। स्वातन्त्र्यवादिभिः। चिद्भिन्नस्वरूपत्वं च जडत्वमिति। चिच्छब्दोऽत्रशुद्धचितः प्रत्यायकः, न तु वृत्याद्यवच्छिन्नचैतन्यस्य। तेन न शुद्धचिति जड़त्वापत्तिः।

चिदभिन्नस्वरूपत्व ही जड़त्व है। दृश्यत्व भी उक्तरीति से चिदभिन्नत्व नियत ही है।

**त्वमप्युक्तरीत्या तन्नियतमेव, तथाच जडत्वदृश्यत्वाद्यवच्छिन्नप्रतियोगिताका-**

ननु अभावे सप्रतियोगिकत्ववत् चितौ सविषयकत्वं स्वाभाविकं तत्कथं चितः शुद्धत्वमिति चेन्मैवम् स्वाभाविकशब्दस्य योगवृत्या—स्वं चैतन्यं तस्य भावो धर्मोऽज्ञानमिति स्वभावोऽविद्या, तस्येदं तत्कृतमित्यर्थश्चेत्तर्हीष्टापत्तिः। चिति विषयसम्बन्ध आध्यासिक इति वेदान्तसिद्धान्तात्। यदि च रूढ्या स्वाभाविकं तात्त्विकमित्युच्यते तर्हि तस्य निरूपयितुमशक्यत्वादनङ्गीकारपराहतम्। तथाहि—न ह्यसम्बद्धेन चिता किञ्चित्प्रकाश्यते, घटज्ञानेन पटस्यापि प्रकाशापत्तेः नापि सम्बद्धेन, सम्बन्धो हि न संयोगः। ज्ञानस्य गुणत्वे नात्मनापि स सम्भवति। द्रव्यत्वेऽपि तस्यातीतादिकाले उत्पत्तिकाले वा घटादीनां न स सम्भवति। त्रुट्यादेर्निरवयवत्वेन तत्र तद्गुणादौ च तदसम्भवात्, सावयव एव संयोगस्य स्वीकारात्। निरवयवेऽवच्छेदकासम्भवात्, दिक्कालविशेषाणान्तु त्रुट्यादौ सम्बन्धस्य दैशिकव्याप्यवृत्तितया दैशिकाव्याप्यवृत्तिस्वभावसंयोगादाववच्छेदकत्वासम्भवात्। नापि समवायः, गुणत्वपक्षे घटादीनां प्रकाशाभावप्रसङ्गात्। न चात्मगुणत्वमपि ज्ञानस्य सम्भवति, तत्र मनस एवोपादानत्वात्, अन्यथाऽऽत्मनस्तत्रोपादानत्वं मनसो निमित्तत्वमितिगौरवप्रसङ्गात्। द्रव्यत्वपक्षे चात्मरूपज्ञानस्य जगदुपादानस्य समवायो नातीतादौ सम्भवति न वाऽनादौ। समवायसमालोचनयाऽप्यसम्भवदुक्तिक एवायं पक्षः।

न च विषयविषयिभावः सः। तस्य विषयत्वविषयित्वरूपस्यैकैकमात्रनिष्ठत्वेन द्विनिष्ठसम्बन्धात्मकत्वासम्भवात्। निरूपकत्वादिना द्विष्ठत्वसम्पादने चानवस्थापत्तेः, विषयविषयिभावस्य दुर्निरूपत्वाच्चेत्यन्यत्र विस्तरः। तस्मादाध्यासिकतादात्म्यमेव स इति न तात्त्विकं सविषयकत्वं चितौ। तथा च शुद्धचिद्भिन्नत्वमेव प्रकृते विवक्षितम्। वस्तुतो विशिष्टघटकतया तत्सिध्दिरिति वोध्यम्। चित एवात्मत्वादात्मभिन्नत्वमपि वक्तुं शक्यम्।

अतएव—

परिच्छिन्नप्रकाशत्वं जडस्य किल लक्षणम्।
जड़ाद्विलक्षणो बोधो यतो न परिमीयते॥

( मालि० वा० १-८०।बो० पं० ८ )

इत्यादिनोक्तं परिच्छिन्नप्रकाशत्वमपि तल्लक्षणं संगच्छते। दृश्यत्वमिति। दृश्यत्वं दृग्विषयत्वम्। तच्च वृत्तिव्याप्यत्वं वृत्तिव्याप्यत्वफलव्याप्यत्वयोः साधारणं कदाचित्कथंचिच्चिद्विषयत्वं स्वसम्बद्धव्यवहारे स्वातिरिक्तसापेक्षत्वमस्वप्रकाशत्वमित्यादिलक्षणलक्ष्यमिति व्यक्तमद्वैतसिद्ध्यादौ। तन्नियतमेवेति।

ऐसी स्थिति में उपनिषद्प्रतिपादित जडत्वदृश्यत्वाद्यवच्छिन्नप्रतियोगिताकाभाव मानने

**भावेनौपनिषदोक्तेन किमपराद्धम्, जडत्वादेश्च घटत्वादिव्यापकत्वेन व्यापकधर्मावच्छिन्नप्रतियोगिताकाभावे च व्याप्यधर्मावच्छिन्नप्रतियोगिताकाभावस्यावश्यकत्वेन घटवति घटत्वाद्यवच्छिन्नप्रतियोगिताकाभावोऽपि दुर्वार एव। न च विशेषस्य सद्भावेऽपि सामान्यरूपेण विशेषाभावेन सिद्धसाधनम्; तस्याप्रामाणिकत्वात्, द्रव्यत्वेन घटो नास्तीत्यादौ प्रतियोगितायां घटत्वाद्यवच्छिन्न-**

तत्समनियतमेवेत्यर्थः। समनियतत्वञ्च व्याप्यत्वे सति व्यापकत्वमित्यन्यत्। औपनिषदोक्तेनेति। "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्।" (मु० १।६) "अशब्दमस्पर्शमरूपमव्यं तथाऽरसं नित्यमगन्धवच्च यत्, अनाद्यनन्तम्।" (कठ० १।२।१५) "नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्, अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारम्" (माण्डू० ७) इत्यादिश्रुत्युक्तेनेत्यर्थः। "अस्थूलमनणुमह्लस्वमदीर्घम्"। (बृ० ३।८।८) इति चतुर्विधपरिमाणनिषेधेन जड़त्वप्रतिषेधः। व्यापकाभावाद्व्याप्याभाव इति नियमात् मिथ्यात्वं सिध्यतीत्याह—व्यापकधर्मावच्छिन्नेति। घटवतीति। घटाद्यवच्छिन्नचितावित्यर्थः। सिद्धसाधनमुद्भाव्य निषेधति—विशेषस्येति। घटत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतावत्यपि जडत्वदृश्यत्वाद्यवच्छिन्नप्रतियोगिताकघटाद्यभावस्वीकारेण। निषेधे हेतुः—तस्याप्रामाणिकत्वात्। तस्य विशेषरूपेण तद्वति सामान्यरूपेण विशेषाभावस्य।

ननु द्रव्यत्वेन घटो नास्तीति प्रतीतिबलात्सामान्यधर्मेणापि विशेषाभावोऽभ्युपेयः। न च तत्र घटत्वस्यैव प्रतियोगितावच्छेदकत्वं भासते द्रव्यत्वस्य तु वैशिष्ट्यमात्रं विषय इति वाच्यम्, घटवदिदमितिनिश्चयसत्वेऽपि द्रव्यत्वेन घटो नास्तीति प्रत्ययाद् द्रव्यत्वस्यैवावाच्छेदकतया भानात्। अन्यथा घटत्वावच्छिन्नघटनिष्ठप्रकारताकत्वप्रकारेण घटाभावबुद्धौ घटत्वेन घटवत्तानिश्चयस्य प्रतिबन्धकत्वात्तादृशप्रतीत्यसम्भवापत्तेः। मन्मते तु द्रव्यत्वावच्छिन्नघटनिष्ठप्रतियोगिताकत्वेन घटाभावबुद्धिं प्रति द्रव्यत्वेन घटत्वविशिष्टनिश्चयस्यैव प्रतिबन्धकत्वात्तदसत्वात्तादृशाभावप्रतीतिसम्भवादितिचेत्तत्राह—द्रव्यत्वेनेति। तदसम्भ-

में क्या हानि है। जडत्वादि के घटत्वादि का व्यापक होने से, और व्यापकधर्मावच्छिन्न प्रतियोगिताक अभाव के रहने पर व्याप्यधर्मावच्छिन्नप्रतियोगिताक अभाव का रहना आवश्यक होने से घटवत् चैतन्य में घटत्वाद्यवच्छिन्नप्रतियोगिताक अभाव भी मानना ही होगा।

यदि कहा जाय कि विशेष अर्थात् घटत्वेन घट के रहते हुये भी सामान्यरूपेण (द्रव्यत्वेन रूपेण) विशेषाभाव (घटाभाव)के रहने से सिद्धसाधन दोष हो जायेगा, तो

त्वस्यापि भानेन घटवति तदसम्भवात्, आध्यासिकसम्बन्धसिद्धौ साक्षादपि दृश्यत्वादिना विशेषधर्मावच्छिन्नप्रतियोगिताघटितमिथ्यात्वसाधने उपद्रवाभावाच्चेति ।

एवं स्थिते प्रपञ्चं गर्भीकृत्य वर्तमानतया तत्र स्वनिष्ठधर्मविशेषसङ्क्रामकतया स्वच्छतया च चितेर्दर्पणत्वं चिदन्तर्गततयाऽनिर्वाच्यतया सङ्क्रान्तचिद्गतधर्मविशेषतया च प्रपञ्चस्य प्रतिबिम्बत्वमित्येवागमेषु दर्पणप्रतिबिम्बन्यायतात्पर्यम् । यच्च प्रतिबिम्बमधिकृत्योक्तमभिनवगुप्तपादैस्तन्त्रालोके—

"न देशो नो रूपं न च समययोगो न परिमा,

प्रतिबिम्बस्येव तत्स्थानीयप्रपञ्चस्यापि देशादि दुर्निरूपमित्याह—न देश इत्यादि । दर्पणान्न पृथग्देशः । मूर्तत्वानिरूपणेन च न रूपसम्भवः । मूर्तत्वे हि प्रतिबिम्बस्य

वादिति । तादृशप्रतीत्यसम्भवात् । द्रव्यत्वस्यातिरिक्तवृत्तित्वेन प्रतियोगितानवच्छेदकत्वाच्च । वस्तुतस्तु तादृशाभावस्वीकारेऽपि नो न क्षतिरित्याह— आध्यासिकेति ।

तत्र स्वनिष्ठधर्मेति । तत्र प्रपञ्चे । स्वं चैतन्यम् । धर्मविशेषः = अस्ति भाति प्रियत्वादिरूपम् । तस्य संक्रामकं यत् स्वं तस्य भावस्तयेत्यर्थः । सङ्क्रान्तश्चिद्गतधर्मविशेषतयेति । सङ्क्रान्तश्चिद्गतो धर्मविशेषोऽस्तित्वादिर्यस्मिन् तादृशः प्रपञ्चस्तस्य भावस्तयेत्यर्थः ।

प्रतिबिम्बस्य दर्पणात्मकत्वमिव प्रपञ्चस्य चिदात्मकत्वमिति चित्सत्तैव प्रपञ्चसत्ता न तु तदतिरिक्तेत्युपपादितम् । ततश्च नास्त्यस्य चितः पृथग्देशादिकमपीत्यभिप्रायकं तन्त्रालोकवचनं दर्शयति—न देश इति । समययोगः

यह नहीं कह सकते, क्योंकि सामान्यरूपेण विशेषाभाव अप्रामाणिक है । द्रव्यत्वेन घटो नास्ति इत्यादि में प्रतियोगिता में घटत्वाद्यवच्छिन्नत्व का भी भान होता है, अतः घटाधिकरण में घटत्वाद्यवच्छिन्न प्रतियोगिताक अभाव का रहना असम्भव है और आध्यासिक सम्बन्ध के सिद्ध होने पर तो दृश्यत्वादि हेतु के द्वारा विशेषधर्मावच्छिन्नप्रतियोगिताघटितमिथ्यात्व (प्रतिपन्नोपाधौ घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगित्व) के साक्षात् सिद्ध करने में भी कोई क्षति नहीं है ।

ऐसी स्थिति में प्रपञ्च को स्वगर्भस्थ कर वर्तमान होने से, उस में स्वकीय अस्ति भाति प्रियत्वादिधर्मविशेष का संक्रामक होने से तथा स्वच्छ होने से चैतन्यदर्पण है । एवं चित् के अन्तर्गत होने से अनिर्वचनीय होने से तथा स्व में संक्रान्त जो चैतन्य गत धर्म, तद्विशेषवान् होने से प्रपञ्च प्रतिबिम्ब है । यही आगम प्रतिपादित दर्पणप्रतिबिम्बन्याय का तात्पर्य है ।

प्रतिबिम्ब को लक्ष्य कर अभिनवगुप्तपाद ने तन्त्रालोक में कहा है—"न देशो

न चान्योन्यासङ्गो न च तदपहानिर्न घनता।
न चावस्तुत्वं स्यान्न च किमपि सारं निजमिति,
ध्रुवं मोहः शाम्येदिति निरदिशद्दर्पणविधिः" । इति ।

तदनिर्वाच्यतोद्गारभूतमपि प्रकाशविषयत्वस्य सत्यताव्याप्यताऽभिमानेन प्रतिबिम्बस्य सत्यतोक्तिसहितमनुपादेयमेव, तादृशाभिमानस्य निराकृतत्वात् । प्रतिबिम्बस्य बिम्बरूपतावादिनापि सूर्यकस्य सूर्यवद्दुर्दर्शत्वापत्तिवारणाय

मूर्तदर्पणप्रवेशानुपपत्तेः, अत एवोक्तम्—न घनतेति । न मूर्ततेत्यर्थः । न च समययोग इति । दर्पणात्पृथक् किञ्चिद्वस्तुसिद्धौ हि तस्य कालसम्बन्धोऽपि स्यात्, न त्वन्यथा, उपादानस्य मायादेर्दुर्निरूपतयोत्पत्तेर्दुर्निरूपत्वाच्चेतिभावः । न परिमेति । अल्पेऽपि दर्पणे पर्वतादिप्रतिबिम्बोदयादितिभावः । प्रतिबिम्बानां परस्परं दर्पणेन च साकं सम्बन्धोऽपि दुर्निरूप इत्याह—न चान्योन्याऽऽसङ्ग इति । नापि च तादृशसम्बन्धाभाव एव, तथासति विशिष्टसङ्घातप्रत्ययानुपपत्तेरित्याह—न च तदपहानिरिति ।

कालसम्बन्धः । परिमा परिमाणम् । न चावस्तुत्वं स्यादिति । सर्वेषामेवार्थानां प्रतिभासान्न सर्वथाऽलीकत्वमपीत्यर्थः । ननु तर्हि तथ्यमेव स्यान्नेत्याह—किमपि सारं निजमिति । वस्तुत्वसाधकं किमपि तथ्यं स्वकीयं रूपमपि नास्ति । ननु तर्हि किमर्थं प्रतिबिम्बन्यायोपन्यास इति तत्राह—ध्रुवं मोहः शाम्येदिति । मोहः द्वैतप्रथात्मकं संकुचितं ज्ञानमेतदेवाज्ञानपदवाच्यम् । शाम्येत् = शाम्यतामित्येतदर्थं तदुपन्यास इति भावः । शिष्टांशो विवृतष्टीकायाम् । ग्रन्थकृत्स्वाभिप्रायमुद्घाटयति—तदनिर्वाच्यतोद्गारभूतमपीति ।

प्रतिबिम्बस्य बिम्बात्मकत्वपक्षेऽपि प्रतिबिम्बस्य मिथ्यात्वमेव पर्यवस्यतीत्याह—प्रतिबिम्बस्येति । सूर्यकस्य = सूर्यप्रतिबिम्ब । उक्तापत्तिरिति । दुर्दर्शत्वा-

नो रूपम्'''' ''''" [ जैसे प्रतिबिम्ब का दर्पण से पृथक् कोई देशादि नहीं है उसी प्रकार प्रतिबिम्ब स्थानीय प्रपञ्च का दर्पण स्थानीय चित् से पृथक् न कोई देश है, न रूप है, न समय सम्बन्ध है, न परिमाण है, न परस्पर सम्बन्ध है न सम्बन्धाभाव है, न वह कुछ अवस्तु है और न उसका कोई स्वकीय यथार्थस्वरूप ही है। निश्चित ही केवल मोह ( अज्ञान ) के अपसारण हेतु दर्पण विधि का निर्देश दिया गया है ] यद्यपि उनका यह कथन अनिर्वचनीयता का ही उद्गारमात्र है तथापि प्रकाशविषयत्व में सत्यता की व्याप्यता के अभिमान से कहा गया है, अतः प्रतिबिम्ब में सत्यतोक्तिसहित यह समस्त कथन अनुपादेय ही है। क्योंकि प्रकाश विषयत्व में उक्तव्याप्यता का भ्रम निरस्त कर दिया गया है। प्रतिबिम्ब में बिम्बरूपतावादि को भी सूर्यप्रतिबिम्ब में सूर्य के सदृश दुर्दर्शत्वापत्ति के वारणार्थ सूर्य की सम्मुखता को ही दुर्दर्शता का

सूर्यसाम्मुख्यमेव दुर्दर्शताप्रयोजकमित्यभिदधता प्रतिबिम्ब एव बिम्बात्मको न तु बिम्बोऽपि प्रतिबिम्बात्मक इत्यवश्यं स्वीकर्तव्यम्, अन्यथा सूर्यकसाम्मुख्ये सूर्यसाम्मुख्यमप्यस्तीत्युक्तापत्तिस्तदवस्थैवेति प्रतिबिम्बस्य मिथ्यात्वं तन्मतेऽप्यावश्यकमेवेति।

एतेन—"अस्यां परिणतायां तु........" इतियोगिनीहृदयचतुश्शत्युक्त्या तान्त्रिकाणां शक्तिपरिणाम एव जगत्, 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्'

पत्तिरित्यर्थः । तन्मते = आगममते ।

श्रीभास्कररायोक्तं चित्परिणामवादं दूषयितुमुपक्रमते—एतेनेति। वक्ष्यमाणदूषणगणग्रस्तत्वेन। परास्तमितिदूरस्थेनान्वयः। तन्मतं दर्शयति—अस्यामिति। योगिनीहृदयचतुश्शत्युक्त्येति। वामकेश्वरतन्त्रान्तर्गतचतुःशत्या अभिन्नत्वं योगिनीहृदयस्याभिप्रेत्येदम्। शक्तिपरिणाम एवेति। विवर्तत्वव्यावृत्त्यर्थमेवकारः। अत एवान्यत्रापि तैरेव "तादृशवृत्त्याश्रयभूता देव्यपि वृत्तिं प्रति परिणाम्युपादानत्वात् परिणामपरिणामिनोरभेदाच्छान्तादिपदैर्व्यवह्रियते" (यो० हृ० से० १।३६) इति। "विश्वाकारप्रथाधारनिजरूपशिवाश्रयमि" (यो० हृ० १।५२) त्यस्य व्याख्यानावसरे "विश्वात्मना प्रथा परिणामस्तस्याधारः परिणाम्युपादानं निजं स्वीयमेव परिणामितावच्छेदकं रूपं तदात्मको यः शिवः स एवाश्रयो यस्ये" ति चोक्तम्। वक्ष्यमाणेन तत्र तत्रेति शब्देनाप्येतदेव ग्राह्यमिति बोध्यम्।

वेदान्तिनाऽपि परिणामवाद एवाभ्युपगन्तव्यस्तदीयाचार्याणामत्रैव तात्पर्यादित्याशयवता भास्कररायेण समुपस्थापितानि बादरायणसूत्राण्यादर्शयति—प्रकृतिश्चेति। ब्रह्म जगतः प्रकृतिः परिणाम्युपादानम्, "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति हि प्रतिज्ञा, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव

प्रयोजक कहना होगा। ऐसी स्थिति में प्रतिबिम्ब ही बिम्बरूप है न कि बिम्ब भी प्रतिबिम्बरूप यह भी अवश्य मानना होगा, अन्यथा सूर्यप्रतिबिम्ब के सन्मुख होने पर सूर्यरूप बिम्ब भी सन्मुख हो ही गया। इसलिए उक्त दुर्दर्शत्वापत्ति तदवस्थ हो जायेगी। अतः उनके मत में भी प्रतिबिम्ब को मिथ्या मानना आवश्यक है।

"अस्यां परिणतायां तु .... .... .... ...." [ चितिशक्ति के परिणत होने पर ] इत्यादि योगिनीहृदय चतुश्शती के कथन से तान्त्रिकों के मत में शक्तिका परिणाम जगत् है। "प्रकृतिश्च .... .... ...." [ ब्रह्म ही इस जगत् का निमित्त तथा उपादान कारण है, "येनाश्रुतं श्रुतं भवति" इत्यादि प्रतिज्ञा से, तथा "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्" इत्यादि दृष्टान्त से सिद्ध होता है ] "आत्मकृते .... .... ....''

**'आत्मकृतेः परिणामात्," 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यादिवैयासिक-सूत्राणां च परिणामवादे एव स्वरसात्। शक्तिश्चौपनिषदसम्मतं चैतन्यमेव, सैवानन्तरूपत्वान्मायेत्युच्यते, 'पराऽस्य शक्तिर्विविधैव श्रूयते' 'माया चाविद्या च स्वयमेव भवति' इतिश्रुतेः, एकस्यैव तत्त्वस्य धर्मधर्मित्वकल्पनया 'अस्ये'ति व्यपदेशः, वस्तुतस्तु शक्तिशक्तिमतोरैक्यमेव, एवञ्च चित्परिणामत्वाच्चिद्रूप एव प्रपञ्चः सत्यश्च, मृद्घटयोरिव च ब्रह्मजगतोरपि वस्तुतोऽत्यन्ताभेद एवेति**

सत्यमिति" दृष्टान्त इत्येतयोरनुरोधात् तथा स्वीकार्यमिति। 'आत्मकृतेः परिणामात्" ब्रह्म आत्मानमेव जगद्रूपेण परिणयामास "तदात्मानं स्वयमकुरुत" इति श्रुतेः। "तदनन्यत्वमारम्भणशब्दादिभ्यः" तस्य जगतो ब्रह्मात्मककारणादनन्यत्वमभिन्नत्वमुपेयम्, आरम्भणशब्दादिभ्यः "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिभ्यः। दृष्टान्ते चात्र मृत्तिकाया परिणामिकारणस्यैवोपादानमिति ब्रह्मणोऽपि परिणामिकारणत्वं सिध्यतीति तदनुसारिणी व्याख्या।

ननु शक्तिपरिणामो जगत्, शक्तिश्च मायाख्या, सा च जड़ैव, सैव जगतः परिणाम्युपादानं न तु ब्रह्म, तस्य विवर्तोपादानत्वादिति चेन्न शक्तेरेव ब्रह्मत्वात्। चिन्निष्ठा चिच्छक्तिरेव वेदान्तिनामभिप्रेताऽनन्तत्वान्मायेत्युच्यत इत्याशयेनाह—शक्तिश्चेति। तत्र प्रमाणमुपन्यस्यति—परास्य शक्तिरित्यादिना।

नन्वेवमस्येति सम्बन्धार्थिका षष्ठी नोपपद्येत इति तत्राह—एकस्यैवेति। परिणामपरिणामिनोरत्यन्ताभिन्नत्वात्प्रपञ्चस्यापि चिद्रूपत्व सत्यत्वञ्चेति भास्कराभिप्रायं स्फुटयति—एवञ्चेति। नन्वेवमेकमेवाद्वितीयमित्यद्वैतश्रुति-

[ "तदात्मानं स्वयमकुरुत" इस श्रुतिवाक्य में आत्मा को कर्म तथा स्वयं शब्द से उसीको कर्ता कहा गया है, अतः वह उपादान कारण है, विकारात्मा उसी परिणाम है ] "तदनन्यत्व ...... ......" (कार्य जगत् कारण ब्रह्म से अभिन्न है "वाचारम्भणम्" इत्यादि श्रुतिघटक आरम्भणशब्द से सिद्ध होता है ) इत्यादि व्याससूत्रों का भी परिणामवाद में ही स्वारस्य है। वेदान्तसम्मत चैतन्य ही शक्ति है, वही अनन्तरूप होने से माया कही जाती है। "पराऽस्य शक्तिर्विविधैव श्रूयते" [ इसकी नानाविध-शक्ति सुनी जाती है ] इत्यादि श्रुतियाँ इसी का प्रतिपादन करती है। एक ही चित्तत्त्व में धर्मधर्मिभाव की कल्पना कर श्रुति में "अस्य" यह व्यपदेश ( कथन ) किया गया है। वस्तुतस्तु शक्ति शक्तिमान् की एकता ( अभेद ) ही होती है। एवञ्च चित्परिणाम होने से समस्त जगत् चिद्रूप एवं सत्य ही है, मृत्तिका और घट के समान ब्रह्म और जगत् का भी वस्तुतः अत्यन्ताभेद ही है, ऐसीलिए "सर्वं खल्विदं ब्रह्म" श्रुति में सामाना-

**'सर्वं खल्विदं ब्रह्म' इति सामानाधिकरण्यं यथाश्रुतमेव न तु बाधायाम्, अद्वैतश्रुतिसामञ्जस्यमपि भेदमात्रस्य मिथ्यात्वोपगमात्, एवञ्च सर्वस्य जगतो मिथ्यात्वकल्पनं वेदान्तिनामनर्थकमेवेति शाम्भवानन्दकल्पलतानुसारिणा श्रीभास्कररायेण सेतुबन्धादौ तत्र तत्रोक्तं परास्तम् ।**

**तथाहि—चितिजगतोः परिणामपरिणामिभावो मृद्घटादिसाधारणो लौकिको वाऽलौकिको वा, आद्येऽप्येकदेशेन वा, सर्वात्मना वा, आद्येऽनित्यत्वस्य द्वितीये च स्वरूपोपमर्दस्यापि प्रसङ्गः, एकरसस्य ब्रह्मणो नानारसप्रपञ्चपरिणामित्वासम्भवश्च, न च शक्तिबलात्स्यात्, तस्या ब्रह्मातिरिक्ताया भवद्भिस्त्यागात् । सदसत्कार्यवादयोः कार्यकारणभावमात्रस्य च शारदायां निरस्तत्वाच्च । द्वितीये त्वलौकिकत्वं तन्नियामकञ्च केनचिज्जन्मसहस्रैरपि न**

विरोध इति चेन्नेत्याह—अद्वैतश्रुतिसामञ्जस्यमिति । भेदमात्रस्येति । मात्रपदेन प्रपञ्चान्तरमिथ्यात्वं निराचिकीर्षति । उपसंहारव्याजेन वेदान्तमतमाक्षिपति—एवञ्च सर्वस्य जगत इति ।

चित्परिणामवादमाश्रित्य प्रत्यवतिष्ठमानस्य भास्कररायस्याक्षेपमधिक्षिपति—परास्तमिति । तत्प्रकारं दर्शयति—तथाहीत्यादिना । ब्रह्मैकदेशस्य परिणामाङ्गीकारे ब्रह्मणः सावयवत्वापत्त्याऽनित्यत्वप्रसङ्गः । सर्वात्मना परिणामे च ब्रह्मस्वरूपस्यैवाभावप्रसङ्गः । ब्रह्मात्मककारणस्यैकरूपत्वेन तत्कार्ये प्रपञ्चे नानाविधरूपवत्त्वाभावप्रसङ्गश्च । न हि शुक्लेभ्यस्तन्तुभ्यश्चित्ररूपपटोत्पत्तिः । न हि मायामादाय तदुपपत्तिः, अनिर्वाच्यायास्तस्याः स्वातन्त्र्यवादिभिरनङ्गीकारात् ।

धिकरण्य यथाश्रुतार्थ में ही है, न कि बाधा में । भेदमात्र को मिथ्या मानने से ही अद्वैत श्रुति ( एकमेवाद्वितीयम् ) का सामञ्जस्य होता है । ऐसी स्थिति में वेदान्तियों का समस्त जगत् में मिथ्यात्व की कल्पना करना अनर्थक ( व्यर्थ ) ही है ।

शाम्भवानन्दकल्पलतानुसारी श्रीभास्करराय के द्वारा सेतुबन्धादिके तत्तत्स्थलों में किया गया यह [ "अस्यां परिणतायां" से "अनर्थकमेव" तक के ग्रन्थ से प्रदर्शित ] आक्षेप भी निरस्त हो गया, प्रकार उसका यह है—चित् और जगत् का परिणाम-परिणामिभाव क्या मृत्तिका एवं घट के समान लौकिक है, या अलौकिक । प्रथम कल्प में भी जगत् क्या चित् के एक देश का परिणाम है या चित् सर्वात्मना ही जगद्रूप से परिणत होता है ? यदि एक देश का परिणाम मानें तो चित् में अनित्यत्व प्राप्त हो जायेगा । [ तात्पर्य यह है कि एक देश का परिणाम मानने में उस एक देश को चैतन्य का अवयव मानना होगा और अवयव मानने पर चित् के सावयव होने से चित् में अनित्यत्वापत्ति होगी, क्योंकि सभी सावयवपदार्थ अनित्य ही होते हैं । यदि सर्वात्मना परिणाम मानें तो चित् के स्वरूप का ही उपमर्द ( हानि ) हो जायेगा । किञ्च एक-

**निर्वक्तुं शक्यते। तस्मादन्यानपेक्षया तेन तेन रूपेण भासमानत्वरूपं स्वातन्त्र्यमेव सकलागमसिद्धं स्वीकर्तव्यम्। इदमेव चाविकृतपरिणामशब्देनाप्युच्यताम्।**

**"स्वाभाविकी स्फुरत्ता विमर्शरूपाऽस्य विद्यते शक्तिः।**
**सैव चराचरमखिलं जनयति जगदेतपि च संहरति॥"**

**इति सौभाग्यसुधोदयोदितमपीममेवार्थमुपोद्बलयति। 'स्वाभाविकीति'। अन्यानपेक्षेत्यर्थः। एतच्चालोचयिष्यते। जनयति = उत्पन्नतया भासयति।**

न चैतत्पक्षे सत्त्वमसत्त्वं वा प्रपञ्चस्य प्रागुत्पत्तेः। नापि च कार्यकारणभावोऽपि चितिजगतोरित्यस्य खण्डनशारदायां प्रदर्शितत्वात्। न चालौकिकोऽयं परिणामपरिणामिभावः अतो नोक्तविकल्पावसर इति वाच्यम्। तन्निष्ठालौकिकत्वस्य च वक्तुमशक्यत्वादित्यगत्या विवर्तवाद एवाङ्गीकार्य इति प्रघट्टकार्थः।

सौभाग्यसुधोदयोक्त्या द्रढ़यति—स्वाभाविकीति। स्फुरत्ता = प्रकाशमानता, अस्य शिवस्य, स्पष्टमन्यत्। सौभाग्यसुधोदयोऽमृतानन्दविरचितो ग्रन्थः। उत्पन्नतया भासयति, संहृततया भासयति इत्येताभ्यामुत्पत्तेः संहृतेश्च तात्त्विकत्वं व्यवाच्छिदत्। तेन प्रपञ्चस्याप्यतात्त्विकत्वं ध्वनितम्। असतो भासमानत्वस्यैव तत्त्वात्। तदुक्तम्—

भातीति चेद् भातुनाम भूषणं मायिकस्य तत्।
यदसद्भासमानं तन्मिथ्यास्वप्नगजादिवत्॥ इति।

रस ब्रह्म का नानारसात्मक प्रपञ्चरूप से परिणाम होना भी सम्भव नहीं है। शक्तिबलात् तादृश परिणाम मानना भी सम्भव नहीं है, क्योंकि ब्रह्मातिरिक्त शक्ति को आप ने स्वीकार नहीं किया। और सत्कार्यवाद असत्कार्यवाद तथा कार्यकारणभावमात्र का खण्डनशारदा में निरास भी कर दिया गया है।

यदि उक्त परिणामपरिणामिभाव को अलौकिक मानें, तो उसके अलौकिकत्व तथा अलौकिकत्व के नियामक का निरूपण अनन्त जन्मों द्वारा भी करना सम्भव नहीं है।

तस्मात् अन्य निरपेक्ष तेन तेन रूपेण भासमानत्वरूप सकलागमसिद्ध स्वातन्त्र्य ही स्वीकर्तव्य है, इसे ही अविकृत परिणाम शब्द से भी कहते हैं। "स्वाभाविकी……" [ इस चित्तत्त्व की स्वाभाविक प्रकाशात्मा विमर्शरूपा शक्ति है, वही चराचरात्मक अखिल जगत् को उत्पन्न करती है एवं वही संहार करती है।] यह सौभाग्यसुधोदय का कथन भी इसी ( एतादृशस्वातन्त्र्यशक्ति ) का उपोद्बलन करता है। यहाँ स्वाभाविकी का अन्यानपेक्षा अर्थ है। आगे इसका आलोचना करेंगे। "जनयति" का उत्पन्नतया भासयति तथा "संहरति" का संहृततया भासयति अर्थ है। कामकलाविलास—

**संहरति = संहृततया भासयति। कामकलाविलासटोका—योगिनीहृदयदीपिकाकृदादीनामपीहैव निर्भरः। "चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" "स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति" इति शक्तिसूत्रयोरप्यत्रैव स्वरसः। न ह्यत्र परिणामवादगन्धोऽपि, परिणामीच्छया घटादिकमुत्पद्यत इति हि कोऽनुमनुते। अत "अस्यां परिणतायां तु……" इति वाक्यस्याप्यत्रैव तात्पर्यमूहनीयम्,**

कामकलेति। कामकलाविलासटीकायाम्,

सकलभुवनोदयस्थितिलयमयलीलाविनोदनोद्युक्तः।
अन्तर्लीनविमर्शः पातु महेशः प्रकाशमात्रतनुः॥

इति पद्यव्याख्यानावसरे नटनानन्देन प्रयुक्तानां "ब्रह्मैव तत्तदाकारेण परिणम्य विहरतीति सिद्धम्" विमर्शो नाम विश्वाकारेण वा विश्वप्रकाशेन वा विश्वोपसंहारेण वाऽकृत्रिमोऽहमिति स्फुरणम्" इत्यादिवचसाम्, योगिनीहृदयदीपिकायां श्रीचक्रस्य चक्रावतारप्रतिपादनावसरेऽमृतानन्दयोगिना प्रयुक्तानाम् "अत्र तु विश्वोत्तरत्वात् प्रकाशात्मनः परमशिवात्तत्त्वक्रमेण प्रसरः" इत्यादिवचसाञ्चानेकेषामिहाविकृतपरिणाम एव तात्पर्यमितिभाव। शिवसूत्रस्यात्रैव तात्पर्यमित्याह—चितिरिति। चितिः स्वतन्त्रा अन्यनिरपेक्षा विश्वसिद्धिहेतुर्विश्वोद्भासने हेतुरित्यर्थः। स्वेच्छयेति। स्वभित्तौ = स्वात्मकेऽधिष्ठाने। उन्मीलयति = भासयति। घटादिकं हि मृत्तिकादेः परिणामः। न च तत्रेच्छा भवितुमर्हति, जड़त्वात्, यत्र त्विछा कुलालादौ, न तत्परिणामो घट इति सर्वेषां नः प्रत्यक्षम् तद्वद् यदिच्छाया जगदुत्पत्यादिकं न तस्य परिणामो जगद्, अपि तु विवर्त एवेत्याशयेनाह—नह्यत्रेति। गन्धः सम्बन्धः। अस्यां परिणतायां त्विति।

कवलीकृतनिश्शेषतत्त्वग्रामस्वरूपिणी ।
अस्यां परिणतायां तु न कश्चित्पर इष्यते॥ (नि० षो० ४-५)

इति पूर्णं पद्यम्।

कवलीकृतो ग्रासीकृतोयो निश्शेषः समस्तस्तत्त्वग्रामः षट्त्रिंशत्तत्त्वसंदोहस्तत्स्वरूपिणी चितिः। अस्यां विमर्शाख्यायां चिच्छक्तौ परिणतायां परमप्रका-

योगिनीहृदय दीपिका के रचयिताओं का इसी में तात्पर्य है। "चितिः स्वतन्त्रा विश्वसिद्धि हेतुः" [ चिति स्वतन्त्र एवं विश्वोल्लास में हेतु है ] "स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति" [ चिति स्वेच्छा से ही स्वात्मा में ही विश्व को भासित करती है ] इन शक्तिसूत्रों का भी स्वारस्य इसी में है। यहाँ इन वाक्यों में परिणामवाद का गन्ध ( लेश ) भी नहीं है। परिणामी को इच्छा से घटादि उत्पन्न होते हैं, यह कौन कह सकता है। अतः 'अस्यां परिणतायां तु……" इत्यादि वाक्य का तात्पर्य भी इसी अविकृत परिणाम ( विवर्त ) में ही मानना उचित है। अन्यथा अर्थात् प्रपञ्च के सत्यत्व

**अन्यथा प्रागुपदर्शितागमयुक्तिनिकरविरोधात्। एवञ्च दर्पणप्रतिबिम्बन्याय एव पर्यवसानम्, स च विवर्ततामनालिङ्ग्य न प्राणान् धारयितुं पारयतीत्युक्तमेव, तथा च भेदस्येव प्रपञ्चान्तरस्यापि मिथ्यात्वं दुर्वारम्, उक्तन्यायसाम्यात्, भेदस्य मिथ्यात्वे तत्संसृष्टस्य सत्यत्वोक्तेर्व्याहतत्वाच्च। तस्मा-**

व्याहतत्वाच्चेति। न चापाततो वाच्यम्—उच्यतां भेदविशिष्टस्य मिथ्यात्वम्, तथापि तद्भेदस्यैव मिथ्यात्वे पर्यवसाययति विशिष्टे विधिनिषेधयोर्विशेषणसङ्क्रमनयेनेति; विशेष्यस्य सत्यतानिर्णये सति हि शक्यैतैवं वक्तुम्, तस्यापि प्रतिबिम्बालोचनया विलूनतायां तु कथमेवमित्याशयात्।

शभावमागतायां सत्याम्। तदुक्तं संकेतपद्धत्याम्—

"संकोचः परमा शक्तिर्विकाशः परमः शिवः" इति। अत्र विकाशपदार्थः परमप्रकाश एव। परमप्रकाशरूपा हि चिच्छक्तिर्वाच्यवाचकभेदरूपेणाधितिष्ठति तदा वर्णतत्त्वरूपेण विभक्तासती संकुचिता इव स्थिता। सैव वर्णतत्त्वादिभेदनद्वारेण षडध्वं प्रविलापयति यदा, तदा सर्वातीतपरमप्रकाशभूमिकां प्राप्नोति, बिकाशगता परिणता इति चोच्यते। तथा च सति न कश्चित्परस्तदतिरिक्तः परमेश्वरः। विमर्शशक्त्यात्मक एव परमेश्वरो न कदाचिदपि व्यभिचरति, शक्तिशक्तिमतोरभेदात्। तदाह—

शक्तिश्च शक्तिमद्रूपाद्व्यतिरेकं न गच्छति।
तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव॥

( बो. प. ३ ) इति।

परिणामवादं निरस्य स्वाभिप्रेतार्थं प्रकटयति—एवञ्च दर्पणप्रतिबिम्बन्याय एवेति। न्यायस्वरूपं निगदितं प्राक्। उक्तन्यायसाम्यादिति। दर्पणप्रतिबिम्बन्यायसाम्यादित्यर्थः।

स चेति। दर्पणप्रतिबिम्बन्यायश्च। विवर्ततामनालिङ्ग्येति। अत एव स्वातन्त्र्यवादिनः श्रीशितिकण्ठाचार्यादयः "विश्वप्रपञ्चः समस्तोऽपि चिद्विवर्तः" ( महा० प्र० २ ) इत्यादिना प्रपञ्चस्य चिद्विवर्तत्वं स्फुटमङ्गीचक्रुः। यदुक्तं भेदमात्रस्यैव मिथ्यात्वं न तु प्रपञ्चान्तरस्येति तत्राह—भेदमिथ्यात्व इति। उपसंहारव्याजेन स्वाभिप्रेतं दर्शयति—तस्मात्प्राप्ताप्राप्तविवेकन्यायेनेति। 'विशिष्टे

में तात्पर्य मानने पर उपदर्शित आगमयुक्तियों का विरोध हो जायेगा। एवञ्च दर्पण प्रतिबिम्बन्याय में ही इन सबका पर्यवसान है और वह ( उक्तन्याय ) विवर्तवाद के बिना जीवित नहीं रह सकता। तथा च उक्तन्याय ( दर्पण प्रतिबिम्ब ) के समान होने से भेद के समान प्रपञ्चान्तर को भी मिथ्या ही मानना होगा। एवं भेद के मिथ्या होने पर भेदविशिष्ट पदार्थ को सत्य कहना व्याहत ( विरुद्ध ) भी है। तस्मात्

**त्प्राप्ताप्राप्तविवेकन्यायेनासंसृष्टचिन्मात्रमेव सत्यं वक्तव्यमिति कृतं घटत्वाद्यवच्छिन्नस्य सत्यताप्रतिज्ञानदुराग्रहेण। ब्रह्मण एवैकस्य सर्वधर्मधर्मित्वेऽपि घटत्वपटत्वादेः सत्यत्वे समावेशासम्भवेन तत्कल्पितत्वस्यावश्योपेयत्वेन कथं भेदस्यैव कल्पितत्वम्। विश्वसत्यत्वाभिनिविष्टचेतसस्तु झगित्येव विवर्तवादे**

**समावेशासम्भवेनेति। एकस्मिन्नेव ब्रह्मणि सत्यघटत्वपटत्वाद्युपगमे यत्र घट इति व्यवहारस्तत्र पट इत्यपि व्यवहारः कुतो न स्यात्, तत्तदुपाधिनिष्ठतया व्यवह्रियमाणधर्माणामपि ब्रह्मगततया तत्तदुपाध्यवच्छिन्नब्रह्मणो भिन्नतामादाय प्रत्यवस्थानानुपपत्तेरित्यपर्यनुयोज्यमायोत्थकल्पनामूलकत्वमेव सर्वेषां धर्माणां वक्तुमुचितमिति भावः।**

हि प्रवर्तमानौ विधिनिषेधौ विशेषणमात्रमुपसंक्रामतः सति विशेष्यबाधे' इति नियमाद् यथा शिखिध्वस्त इत्यत्र ध्वंसस्य शिखिन्यप्राप्तत्वात् शिखायाञ्च प्राप्तत्वात्, तथा कथनेऽपि शिखायामेव तस्य पर्यवसानम्, यथा वा दण्डी विद्वान् इत्युक्तौ वैदुष्यस्य दण्डेऽप्राप्तत्वात्, पुरूषे च प्राप्तत्वात्पुरूष एव वैदुष्यस्य पर्यवसानं तथा प्रकृतेऽपि चिन्मात्र एव सत्यत्वपर्यवसानमिति भावः।

ननु प्रागुपदर्शितसूत्रेषु परिणामवादोक्तेः का गतिरित्यत आह—विश्वसत्यत्वेति। तत्र परिणामवादस्य पूर्वभूमितयोपनिबद्धत्वे प्रमाणं व्यनक्ति—

प्राप्ताप्राप्तविवेकन्यायेन असंसृष्ट चैतन्यमात्र को ही सत्य मानना चाहिए। ऐसी स्थिति घटादि प्रपञ्च में सत्यता की प्रतिज्ञा का दुराग्रह करना व्यर्थ है। [ प्राप्ताप्राप्तविवेकन्याय का तात्पर्य यह है कि—'विशिष्टे प्रवर्तमानौ विधिनिषेधौ विशेषणमात्रमुपसंक्रामतः सतिविशेष्ये बाधे" इस नियम के अनुसार जैसे "शिखी ध्वस्त" यहाँ पर ध्वंस शिखाविशिष्ट देवदत्त में प्रवर्तमान हैं किन्तु विशेष्यदेवदत्त में ध्वंस के बाधित होने से केवल विशेषण शिखा में ध्वंस का पर्यवसान मान लिया जाता है।

एवं जैसे दण्डी विद्वान् कहने पर वैदुष्य दण्डविशिष्ट में प्रवर्तमान है, किन्तु विशेषण दण्ड में बाधित होने से विशेष्य पुरुषमात्र में पर्यवसित मान लिया जाता है, उसी प्रकार घटाद्यवच्छिन्न चैतन्य में सत्यत्वविधान उपस्थित होने पर वह सत्यत्व घटादि में बाधित होने से अप्राप्त है और चैतन्य में बाधित न होने से प्राप्त है, इस प्रकार प्राप्ताप्राप्त का विवेक करने पर चैतन्यमात्र में ही सत्यत्व का पर्यवसान माना जाता है। ] एक ब्रह्म ही सर्वधर्मधर्मिरूप होने पर भी घटत्वपटत्वादि धर्मों को सत्य मानने पर उनका उस ( एक ब्रह्म ) में समावेश होना सम्भव नहीं है, अतः घटत्वादिधर्मों को कल्पित ही मानना आवश्यक है ऐसी स्थिति में केवल भेद को ही कल्पित कैसे कहेङ्गें।

विश्वसत्यत्व में जिनका अभिनिवेश ( आग्रह ) चिरकाल से दृढ़ है, उनका विवर्तवाद में झटिति विश्वास होना सम्भव नहीं है, अतः उनके अनुग्रह हेतु वैयासिक

**प्रवेशो न सम्भवतीति तदनुग्रहाय परिणामवादो वैयासिकसूत्रेषु पूर्वभूमितयोपनिबद्ध इति व्यक्तं संक्षेपशारीरकादौ। अनया च रीत्यान्यत्रापि परिणामोक्तिः समन्वीयमाना न विरोधमावहति।**

पूर्वभूमितयेति। अतएव भगवता श्रीकृष्णद्वैपायनेन महाभारते—

'स्वप्नलब्धा यथा लाभा वितथाः प्रतिबोधने।
एवं ते क्षत्रिया राजन् ये व्यतीता महारणे॥' (शा० अ० २९)

इति वस्तुतोऽसत्त्वे एव, भासमानत्वं वदता विवर्तवाद एव मान्यतां गमितः। अत्र च तदीया

'आत्मा क्षेत्रज्ञ इत्युक्तः संयुक्तः प्रकृतैर्गुणैः।
तैरेव तु विनिर्मुक्तः परमात्मेत्युदाहृतः॥
( म० भा० शा० अ० १८७ )

इत्युक्तिरप्यनुकूला। भेदमात्रस्य मिथ्यात्वे हि प्राकृतगुणसम्बन्धस्यात्मनि प्रसक्तस्य सत्यताया वाच्यत्वेऽद्यत्वे परमात्मताया विलोप एवापद्येतेति सुसमर्थितोऽद्वैतवादः। उक्तसम्बन्धस्य मिथ्यात्वे तु सर्वदैव प्राकृतगुणविनिर्मुक्तता परमात्मनीत्यदोषः।

संक्षेपशारीरकादाविति। तदाह तत्र—

आरम्भसंहतिविकारविवर्तवादा-
नाश्रित्य वादिजनता खलु वावदीति।
आरम्भसंहतिमते परिहृत्यवादौ
द्वावत्र संग्रहपदं नयते मुनीन्द्रः॥
तत्रापि पूर्वमुपगम्य विकारवादं
भोक्त्रादिसूत्रमवतार्य विरोधनुत्यै।
प्रावर्तत व्यवहृतेः पररक्षणाय
कर्मादिगोचर विधावुपयोगहेतोः॥
साक्षादिहाभिमतमेव विवर्तवाद-
माहत्य सूचयति पूर्वमपेक्षमाणः।
आरम्भणादि वचनेन विवर्तवादं
शक्नोति वक्तुमुदिते परिणामवादे॥
आरुह्य भूमिमधरामितराधिरोढुं शक्येति शास्त्रमपि करणकार्यभावम्।

सूत्रों में पूर्वपक्षरूपेण परिणामवाद का कथन किया गया है, यह संक्षेपशारीरकादिग्रन्थों में व्यक्त हैं। इस प्रकार अन्यत्र भी परिणामवादोक्ति का समन्वय होने से कोई विरोध नहीं है।

**अत्र चायं निर्गलितोऽर्थः। विश्वं चिदभिन्नमित्येका दृष्टिः, चिन्न विश्वाभिन्नेति द्वितीया, तत्राद्योन्मीलने जगति सत्यत्वबुद्धिः प्ररोहति, द्वितीयोन्मीलने तु मिथ्यात्वमतिः, द्वयोरेवोन्मीलने तु चिदेवैका परमार्थसती तदन्यदसत्यमिति निर्मला मतिरिति। एवञ्च स्वरूपेण मिथ्याभूतोऽपि प्रपञ्चश्चिदात्मना सत्य एवेत्यभिप्रायेण प्रामाणिकग्रन्थेषु क्वचित् प्रपञ्चे सत्यत्वमभ्युच्यमानं न नः किञ्चिद्विरुणद्धि, एतेन—"एवं जगच्चिदात्मैकरूपं सत्यमुदीरितम्" इति प्रागुद्धृतं त्रिपुरारहस्यवाक्यं व्याख्यातम्। परन्तु चिदात्मना सत्यत्वोक्तिः प्राप्ताप्राप्तविवेकन्यायेन चित एव सत्यत्वे पर्यवस्यतीति न विस्मर्तव्यम्।**

**पूर्णाहन्तेत्यादिशब्दस्तु चैतन्यदीपनेन जडत्वरूपेदन्ताव्यावृत्तिमात्र-**

निर्मला मतिरिति। प्रथमया दृष्ट्या स्वमूलस्य चिदनुगमस्य द्वितीयया च चैत्यव्यभिचारस्यार्पणीयत्वात्, रज्जौ भूच्छिद्रधारादीनां व्यभिचारिणां मिथ्यात्वदर्शनात्। चितो विश्वभिन्नत्वे आध्यासिकसम्बन्धेनैव तस्यां विश्वस्य लग्नताया उक्तत्वाच्चेति भावः। स्वातन्त्र्यवादिना ब्रह्मणि पूर्णाहन्ता स्वीकृता न तु वेदान्तिनेति

उक्त्वा पुरा परिणतिप्रतिपादनेन संप्रत्यरोहति विकारमृषात्वसिद्ध्यै॥
विवर्तवादस्य हि पूर्वभूमिर्वेदान्तवादे परिणामवादः।
व्यवस्थितेऽस्मिन् परिणामवादे स्वयं समायाति विवर्तवादः॥ इति।

विवृतञ्चैतत्तत्रैव मधुसूदनस्वामिभिः। निश्च्योतितार्थमाह—अत्र चायमिति। सुगममितरत्। स्वातन्त्र्यवाद्यभितपूर्णाहन्तामादाय वेदान्तवैषम्यभ्रमं परिजिहीर्षुस्तदनुगुणं तदर्थमाह—पूर्णाहन्तेत्यादिना। अकारादिक्षकारान्तमातृकामयशक्तिचक्रात्मकविश्वसमावेशात्मा पूर्णाहन्ताशब्देनोच्यते। अत एव शिवामणावभाणि—"अहं शिवो गुरुश्चाहमहं विश्वं चराचरम्।
यथा विज्ञापनेसम्यक् पूर्णाहन्तेति सा स्मृता"। इति।

अत एव तत्र पूर्णत्वमपि "सा चितिः सर्वतः पूर्णा" इत्युक्तेः। पूर्णत्वञ्च

यहाँ निश्च्योतितार्थ यह है कि—"विश्व चैतन्य से अभिन्न है" यह एक दृष्टि है। "चैतन्य विश्व से अभिन्न नहीं है" यह द्वितीय दृष्टि है। इनमें प्रथमदृष्टि का अनुसरण करने पर जगत में सत्यत्वबुद्धि होती है। द्वितीय दृष्टि से विचार करने पर मिथ्यात्वनिश्चय होता है। तथा दोनों दृष्टियों से अवलोकन करने पर चित् ही एक परमार्थसत्य है, तदतिरिक्त सभी असत्य ( मिथ्या ) है" इस निर्मल ज्ञान का उदय होता है। एवञ्च कुछ प्रामाणिक ग्रन्थों में स्वरूपतः मिथ्याभूत प्रपञ्च को भी चिदात्मना सत्य कहना हानिकर नहीं है। इससे "एवं जगच्चिदात्मैकरूपं सत्यमुदीरितम्" यह प्राक् उद्धृत त्रिपुरारहस्य का वाक्य भी सङ्गत हो जाता है। किन्तु यहाँ यह अवश्य स्मर्तव्य है कि प्रपञ्च के लिए चिदात्मना सत्यत्वकथन प्राप्ताप्राप्तविवेकन्यायेन चित् मात्र के सत्यत्व में ही पर्यवसित होता है।

पूर्णाहन्ता इत्यादिशब्दों का प्रयोग चैतन्य के उद्दीपन से जड़त्वरूप इदन्तामात्र

**प्रदर्शनाय प्रयुज्यते; न तु तत्राहङ्क्रियापि विवक्षितेति भ्रमितव्यम्, अन्यथाऽपरिच्छिन्नत्वार्थकपूर्णपदवैयर्थ्यापत्तेः, तद्धि देहादिगताहन्ताव्यावर्तनाय। एवमकृत्रिमाहमितिचमत्कारसतत्त्वो महेश्वर इत्याद्यपि द्रष्टुमुचितम्। अकृत्रिमत्वं चैतन्ये स्वाभाविकत्वम्। सततोदिताहमितिप्रत्ययविवक्षा त्वालयविज्ञानधाराबद्धबुद्धेरेव शोभते।**

**यस्तु सर्वदैव चिदात्मनः सृष्ट्यादिपञ्चविधकृत्यकारित्वं विश्वमवैषम्यमिति भ्रमं निराकर्तुमाह पूर्णाहन्तेत्यादीति।**

परिच्छेदत्रयशून्यत्वम्। तच्च चित्येव, तदतिरिक्तस्य सर्वस्यापि परिच्छिन्नत्वात्। अतोऽपरिच्छिन्नचिद्भावनया पूर्णाऽहंताभिव्यक्त्या परिच्छिन्नत्वं बाध्यते। परिच्छिन्नत्वमेव जड़त्वम्। अनात्मन्यात्माभिमानोऽहङ्कारः तं व्यावर्त्य सर्वस्मिन् चराचरात्मके विश्वेऽहंता बुद्धिः पूर्णताबुद्धिः, सा च परिपूर्णचिदभेदानुभवेनैव साध्येत्याशयेनाह—न तु तत्राहङ्क्रियापीति न तु भ्रमितव्यमिति योजना। पूर्णपदवैयर्थ्यापत्तेरिति।

त्रिपुरानन्तशक्त्यैक्यरूपिणि सर्वसाक्षिणी।
सा चितिः सर्वतः पूर्णा परिच्छेदविवर्जनात्।

इत्यादावित्यादिः। अत एवोक्तम्—"सर्वत्रात्र अहं शब्दः चिन्मात्रस्य बोधकः" इति। अत एव श्रुतिरपि भगवती—"ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् तद् यो यो देवानां प्रत्यबुध्यत स एव तदभवत्, तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषि वमिदेव प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति" ( बृ० १।४।१० ) इति ब्रह्मदर्शनफलं सर्वात्मभावं दर्शयति। नन्वहमिति प्रत्ययस्य नैरन्तर्यमेव किमिति नाकृत्रिमत्वं गृह्यत इति चेत्तत्राह—सततोदितेति।

स्वातन्त्र्यवादिना ब्रह्मणि पञ्चविधकृत्यकारित्वं स्वीकृतं न तु वेदान्तिनेति वैषम्यमिति भ्रान्ति निराकर्तुमाह—यस्तु सर्वदैवेति। ईश्वराद्वयदर्शनस्य

की व्यावृत्तिके लिए ही किया गया है। अतः उसमें अहंकार की विवक्षा का भ्रम नहीं करना चाहिए। अन्यथा "सा चितिः सर्वतः पूर्णा" इत्यादि वाक्यों में अपरिच्छिन्नत्वार्थक पूर्ण पद का प्रयोग व्यर्थ हो जायेगा। क्योंकि वह देहादिगत अहन्ता की व्यावृत्ति के लिए ही प्रयुक्त है। एवं यहाँ "अकृत्रिमाहमितिचमत्कारसतत्त्वो महेश्वरः" [ अकृत्रिम अहम्" इत्याकारक चमत्कारस्वरूप महेश्वर है ] इत्यादि वाक्य भी स्मर्तव्य है। अर्थात् इन वाक्यों में भी अहंकार विवक्षित नहीं है। यहाँ चैतन्य में अकृत्रिमत्व स्वाभाविकत्वरूप है, न कि निरन्तर प्रवाहित अहमित्याकारकप्रत्ययरूप क्योंकि वह केवल आलयविज्ञानधारावादि बौद्धों को ही शोभा देता है।

जो सज्जन चिदात्मा को सर्वदैव सृष्टि, स्थिति, संहार, निग्रह तथा अनुग्रहरूप

**यत्वञ्चाभिधाय ब्रह्मवादात्स्वमतस्य विशेषं व्युत्पादयति स स्ववचनार्थमेव नावबुध्यते, तथाहि सर्वदैवेत्यस्य सर्वकालावच्छेदेनेत्यर्थः, कालश्चात्र बाह्य एव,**

ब्रह्मवादिभ्योऽयमेव विशेष इत्युद्घोषयन्तः स्वातन्त्र्यवादिनः सृष्टिः स्थितिः संहृतिर्निग्रहोऽनुग्रहश्चेति पञ्चविधकृत्यं परमेश्वरस्योररीकुर्वन्ति। तदुक्तम्—

पञ्चविधं तत्कृत्यं सृष्टिस्थितिसंहारतिरोभावः।
तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य॥
सृष्टिसंहारकर्तारं विलयस्थितिकारकम्।
अनुग्रहकरं देवं प्रणतार्तिविनाशनम्॥

तत्राद्यत्रयन्तूभयसम्मतं प्रसिद्धञ्च, द्वयञ्चातिरिक्तम्। तत्र परिपूर्णानन्दस्वरूपस्यासंकुचितस्य चिदात्मनः संकोचभावमन्तरा जीवभावानुपपत्त्या देहसम्बन्धासम्भवेन सृष्ट्याद्युपपत्तिरप्यनुपपन्नैवातस्तदर्थं जगत्सिसृक्षुः परमेश्वरः स्वस्वातन्त्र्यवशात्सृष्ट्यादौ स्वेच्छया स्वात्मानमेव संकोचभावमापन्नतया भासयति। स चास्यात्मसंकोचोऽभेदे भेदोत्थापनेन स्वपूर्णानन्दस्वरूपतिरोधानात्मको निग्रहपदव्यवहार्यः। स एवानुजिघृक्षुः स्वोद्भासितभिद्यमानभेदयोः स्वसंकोचभावानुप्राणितयोः स्वात्मसात्कारेणाविच्छिन्नमखण्डपरमप्रकाशात्मनाऽभेदमुद्भावयति। ईदृशञ्चास्योद्भावनमनुग्रहपदव्यपदेश्यम्। न च संहारादेव तत्कार्यनिर्वाहः, जातेऽपि तस्मिन्नभिनवसृष्टेर्बीजसद्भावात्।

विश्वमयत्वमप्यस्यागमे निरूक्तम्, तद्यथा—

तदासौ सकलः प्रोक्तो निष्कलः शिवयोगतः।
ग्राह्यग्राहकविच्छित्ति, सम्पूर्णग्रहणात्मकः॥ ( तन्त्रा ३।२१८ ) इत्यभिनवगुप्तपादोक्तव्याख्याने जयरथः—"यतोऽसौ शाक्तो विसर्गो ग्राह्यग्राहकभेदावभासे सकलो विश्वमयः प्रोक्तः। परनिःश्रेयसात्मश्रेयस्करस्वात्मसंविदेकीभावे पुनर्निष्कलो विश्वोत्तीर्णः" इति। ब्रह्मवादात् = निर्विशेषब्रह्मवादात्। स्वमतस्य = स्वातन्त्र्यवादिमतस्य। विशेषम् = वैषम्यम्। स्ववचनार्थं प्रकटयति—तथाहीति। सर्वदैवेत्यस्येति। "सर्वदैव चिदात्मनः सृष्ट्यादिपञ्चविधकृत्यकारित्वं विश्वमयत्वञ्चेति वाक्यघटकस्येत्यादिः। बाह्यः = चिदतिरिक्तः। अन्यथा = कालस्य चिदात्मकत्वे। अवच्छेद्यावच्छेदकभावानुपपत्तेरिति। अभेदे भेदनान्तरीयकस्य तस्यासम्भवात्। बाह्यस्य तस्य स्वीकारे त्वविद्यादशाधि-

पञ्चविधकृत्यकारी तथा विश्वमय मान कर ब्रह्मवाद से अपने मत ( स्वातन्त्र्यवादिमत ) की विशेषता का ख्यापन करते हैं, उन्हें स्ववचनार्थ ही अवगत नहीं है। क्योंकि "सर्वदैव" इसका सर्वकालावच्छेदेन अर्थ है। और कालशब्द से यहाँ बाह्यकाल ही विवक्षित है। अन्यथा अर्थात् चिद्रूप काल लेने पर अवच्छेद्यावच्छेदकभाव ही

**अन्यथाऽवच्छेद्यावच्छेदकभावानुपपत्तेः, तथा चाविद्यापदे एवेदमिति को विरोधः, चिन्मात्रे त्वष्टात्रिंशतत्त्वात्मना भवद्भिरपि स्वीकृते 'सर्वदा' इत्यस्यैवाभावेन कथं तादृशविधेयोद्देश्यत्वम् । एवञ्च परमार्थतो विश्वोत्तीर्णत्वेऽप्यविद्यातो विश्वमयत्वमित्यकामेनाप्यालम्बनीयमिति ।**

अविद्यापदे एवेदमिति । एतावता कालानवच्छिन्नत्वरूपनित्यत्वस्यैश्वर्येऽसम्भवेऽपि कालत्वव्यापकत्वरूपं नित्यत्वमुररीकृतम् ।

ननु मायायाः कालानवच्छिन्नत्वेन तत्प्रयुक्तैश्वर्यस्यापि तथात्वं न्यायानीतम्, सूर्यसञ्चारादिरूपकालस्य मायाजन्यतया तद्ध्वंसप्रयोजकत्वानुपपत्तेः; मायाचित्सम्बन्धरूपस्य कालस्य मायारूपस्यापि वा मायावच्छेदकताऽसम्भाव्यैव, ब्रह्मणि तु कालत्वं कलयितृत्वात्मकं मायासम्बन्धं विना नैवास्तीति प्रकाशमात्रस्य तस्य न कस्यापि परिच्छेदकत्वसम्भव इति चेत्सत्यम्, तथापि यैरौपनिषदैर्ब्रह्मसाक्षात्काररूपकालेन कवलितत्वं मायायां स्वीकृतम्, तन्मतानुसारेणात्रैवमुक्तम् । प्रकरणान्ते तु ध्वंसाप्रतियोगित्वं मायायां तत्प्रयुक्तैश्वर्ये चोपपादितमेव । नन्वेवं देशानवच्छिन्नत्वमपि तत्र स्वीक्रियताम्, मायात्मकस्य तज्जन्यस्य च देशस्य मायासङ्कोचकत्वानुपपत्तेः, ब्रह्मणि त्वसङ्गे तां विना नाधिकरणत्वविशेषरूपं देशत्वमिति चेत्, तुच्छमेतत्, स्वोपहिततयैव देशतामापादिते ब्रह्मणि मायायाः सद्भावात्, अत्यन्ताभावप्रतियोगित्वं च देशावच्छिन्नत्वम्, तच्च ब्रह्मभिन्नत्वेन रूपेण कल्पिततया तस्यां दुर्वारमेव, ब्रह्माभिन्नत्वेन रूपेण तु तस्यां न तदपीत्यन्यत् । नच व्यापके ब्रह्मणि व्याप्यवृत्तितया क्वचिद्देश एव विद्यमानत्वं तु न मायायामिति वाच्यम्, तस्या व्यापकत्वेऽपि ब्रह्मातिरिक्तेऽवृत्तेः । विश्वोत्तीर्णत्व इति । इदं दिक्कालानवच्छिन्नत्वे पर्यवस्यति । स्वसमानसत्ताकभेदप्रतियोगि यद्यत्तदन्यत्वरूपे वस्तुपरिच्छेदकशून्यत्वे तु विश्वमयत्वमिति विवेक्तव्यम् ।

शायिनी त्वदुक्तव्यवस्था न नो विरुणद्धि इत्याह—तथा चाविद्यापद इति । अविद्यादशायामित्यर्थः । चिन्मात्र इति ।

अष्टात्रिंशत्तत्त्वात्मकस्य भवद्भिः स्वीकृतस्य चितः कालानवच्छिन्नत्वात्, तादृशकालावच्छिन्नचित एवाभावेन कथं तदुद्दिश्य सृष्ट्यादिपञ्चकृत्यकारित्वं विधातुं शक्यमिति भावः । आगमसिद्धयोर्विश्वमयत्वविश्वोत्तीर्णत्वयोरविद्यामद्वारीकृत्यैकस्यां चित्येककालावच्छेदेन विरुद्धत्वात्तच्छमनार्थमुपेया साऽनिच्छतापि भवतेत्याशयेनाह-एवञ्चेति ।

अनुपपन्न हो जायेगा । तथा च अविद्यादशामें ही यह व्यवहार मानना होगा, जिसमें हमारा ( वेदान्तियों का ) भी कोई विरोध नहीं हैं । [ अविद्यादशामें सृष्ट्यादिकर्तृत्व ब्रह्म में वेदान्ती भी मानते हैं निग्रह अनुग्रह कर्तृत्व मानने में भी कोई आपत्ति नहीं है ]। और आप ( स्वातन्त्र्यवादी ) के द्वारा अष्टात्रिंशत्तत्त्वरूप से स्वीकृत चिन्मात्र में तो आप के मत में भी "सर्वदा" यह व्यवहार असम्भव है । [ क्योंकि तादृशचिन्मात्र के कालाद्यतीत होने से काल का संस्पर्श भी उसमें नहीं है ] ऐसी स्थिति में वह पञ्चविधकृत्यकारित्व के विधान का उद्देश्य कैसे होगा । तथा च इच्छा न होते हुए भी आपको यह मानना होगा कि—परमार्थतः चिदात्मा विश्वोत्तीर्ण होने पर भी अविद्यावशात् विश्वमय होता है ।"

## मूलशक्त्यालोचनम्

**एवं सति केवलस्वव्यवहारे स्वात्मकविश्वात्मना व्यवहारे चेतरानपेक्षत्वरूपं स्वातन्त्र्यमपि न वैषम्यमातनोति, मिथ्याभूतस्यापि प्रपञ्चस्योक्तरीत्या चिदात्मकताया वक्तुं शक्यत्वात्, वस्तुत इतराभावेन चेतरानपेक्षताया अप्रनिवार्यत्वात्। परन्त्वेतदविद्यादशायामेवेति परमार्थतश्चैतन्यं वेदान्तिसम्मतमेवायाति, अन्यथा तु विमर्शे वेद्यांशनिवेशे विमर्शस्यैव प्रकाशात्मकत्वं न तु**

## मूलशक्त्यालोचनम्

ननु स्वातन्त्र्यवादिना स्वातन्त्र्यं ब्रह्मणोऽङ्गीकृतम्, तच्च न निगमान्तिनाऽङ्गीकर्तुमुचितन्निर्विशेषभङ्गप्रसङ्गादिति तदादायैव वैषम्यं स्वातन्त्र्यवादिनो ब्रह्मवादादित्याशङ्कां निराचष्टे--एवं सतीति। अविद्यातो विश्वमयत्वाभिधाने सति। स्वव्यवहारे स्वेतरानपेक्षत्वांशस्तु वेदान्तिनाऽङ्गीकृत एव अतस्तदुपेक्ष्य स्वात्मकविश्वात्मना व्यवहारेस्वेतरानपेक्षत्वांशेऽविरोधमाधत्ते—मिथ्याभूतस्यापीति। उक्तरीत्या = चित्सत्तातिरिक्तसत्ताशून्यत्वरूपया। वेदान्तदृष्ट्या चिद्विवर्तस्यावश्याभ्युपेयस्योक्तत्वात् प्रपञ्चस्य चित्सत्तातिरिक्तसत्ताशून्यत्वात् चिद्रूपतयैव प्रपञ्चस्यास्तित्वमुररीकरणीयम्। तादृशप्रपञ्चात्मना भासने च स्वस्यैवापेक्षा, न त्वन्यस्य, अन्यस्याभावादित्याह--वस्तुत इति।

नन्वेतादृशस्वातन्त्र्यस्य ब्रह्मणि सत्त्वे निर्विशेषत्वहानिः स्यादिति तत्राह—परन्त्वेतदविद्यादशायामेवेति। एतत् = स्वात्मकविश्वात्मना व्यवहरणम्। सर्वस्यापि धर्मस्य ब्रह्मण्यविद्यादशायामारोपितत्वादविद्यानिवृत्तौ सर्वस्यापि निवृत्तिस्त्वान्निर्धर्मकचैतन्यमेवावशिष्यते वेदान्तसम्मतमिति न विस्मर्तव्यम्।

अन्यथेति। अविद्यादशायामेवेदमित्यनङ्गीकारे। पर्यवसानमिति।

## मूलशक्तिका आलोचन

अविद्यावशात् चिदात्मा के विश्वमय होने से केवल स्वव्यवहार तथा स्वात्मकविश्वात्मना व्यवहार में इतरानपेक्षत्व ही स्वातन्त्र्य है, और इस प्रकार के स्वातन्त्र्य की दृष्टि से भी ब्रह्मवाद एवं स्वातन्त्र्यवाद का वैषम्य नहीं है। क्योंकि वेदान्तसिद्धान्त में भी मिथ्याभूत प्रपञ्च को उक्तरीति से चिदात्मक कहना सम्भव है। और वस्तुतः ब्रह्मातिरिक्त के अभाव होने से ब्रह्म में इतरानपेक्षत्व मानना अनिवार्य है। परन्तु यह स्वात्मकप्रपञ्चात्मना व्यवहार अविद्यादशा में ही होता है, अतः परमार्थतः चैतन्य वेदान्तसम्मत ही सिद्ध होता है। अन्यथा विमर्श में वेद्यांश का प्रवेश मानने पर

प्रकाशस्य विमर्शात्मकत्वमित्युक्तरीत्यैव द्रष्टव्यम् । सति चैवं वेदान्तिसम्मतमायायामेव पर्यवसानम्, सा हि यदि सत्या तर्हि चिदात्मनैव, यदि तु मिथ्या तर्हि स्वरूपेणैवेत्यत्र नेदानीं भवद्भिर्विप्रतिपत्तव्यम्, उक्तञ्चेच्छाज्ञानक्रियाशक्तीनां चितिशक्तिविवर्तत्वमिति तास्वेव मायात्वम्, यदि तु तासां जन्य-

स्वरूपेणेति । मायात्वदृश्यत्वादिनेत्यर्थः । आत्माश्रय एव लाघवादिति । अनादिमूलकारणानभ्युपगमेऽनवस्था, तदभ्युपगमे तु यथाऽन्याध्यासे ब्रह्मण्यपेक्ष्या माया, तथा स्वाध्यासेऽपीति भवत्यात्माश्रय एव ।

## मूलशक्त्यालोचने

(क) संस्काराणां मूलशक्तित्वाभावः ।

(ख) मूलशक्तेरनाद्यनन्तत्वम् ।

अत्रेदमपि बोध्यम्—अधिष्ठानस्य ब्रह्मणः स्वरूपावरणं तावदावश्यकम्, अन्यथा परिच्छेदानुभवानुपपत्तेः, न च संस्काराणां विक्षेपमात्रपटूनामावारकत्वं सम्भवति । स्वप्ने निद्रादोषेण जागरायामपि च दोषविशेषान्तरेण सहकृतानां संस्काराणां विक्षेपकत्वदर्शनेन दोषविधया ह्याक्षेप्या स्वरूपावारिका शक्तिः । 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' (माण्डू० का०) इति वचसा चाचार्यैः सूचितमेतत् । एवं च ब्रह्मसमकक्ष्यतया चिद्दर्पणप्रतिबिम्बताक्रान्तरूपैरेवाविद्यमानत्वाभिप्रायेण 'सा च माया न विद्यते' (माण्डू० का०) इति तेषां 'मायेत्यविद्यमानस्याख्या' इति तत्र भाष्यकृताञ्चोक्ती प्रववृताते । स्वरूपानावरणेऽपि विक्षेपाभ्युपगमे च कर्तृत्वभोक्तृत्वाद्यध्यासात्मकविक्षेपेऽपि परिपूर्णानन्दपरिस्फुरणापत्तेः । संस्कारेष्वेव स्वरूपावारकत्वस्यापि कल्पनं तु दुराग्रहं मन्यामहे । एवं संसारदशायां संस्काराणां स्वोपादानान्तःकरणवृत्तित्वेऽपि प्रलये स्वोपादानमन्तरेण कथं क्वचन सम्भवः, अतिरिक्तमायापक्षे तु ससंस्कारान्तःकरणस्य मायात्मतापत्तिरित्युपपद्यते, नहि माया विरहे चिन्मात्रात्मना ससंस्कारसत्त्वं सम्भवति, विरोधात्, ब्रह्मण एवावशेषे च पुनः संसारानुपपत्तेः । नच माया यथा ब्रह्मणि केवले,

वेद्यांशाविष्टविमर्शस्येति शेषः । भवद्भिः = स्वातन्त्र्यवादिभिः । स्वातन्त्र्यवाद्यभिमतेच्छाज्ञानक्रियाशक्तीनामपि मायायामेव पर्यवसानमुक्तं स्मारयति—उक्तञ्चेति । तास्वेवेति । विमर्शस्य शक्तित्रितयनान्तरीयकत्वात् । ननु न तासां मायात्वम्, सादित्वात्तासां मायायाश्चानादित्वस्वीकारादन्यथाऽनवस्थापत्तेरिति विमृशति—यदित्विति । इत्यालोच्यते इत्यन्वयः । तासां सादित्वं

उक्तरीति से विमर्श ही प्रकाशात्मक है न कि प्रकाश विमर्शात्मा यही मानना होगा । ऐसी स्थिति में उस विमर्श का वेदान्तिसम्मत माया में पर्यवसान हो जायेगा । यदि वह (माया) सत्य है तो चिदात्मना ही है और मिथ्या है तो स्वरूपेण है अतः इसमें

वृत्तिविशेषावच्छिन्नचिद्रूपत्वं वा जन्यवृत्तिविशेषरूपत्वमेव वेत्याग्रहः, बाह्या-

तथा संस्कारराशिरपि कुतो न स्यादिति कृतं मायया; ब्रह्मस्वभावतया श्रुतौ व्यपदिष्टा-यास्तस्या आदिवर्जितायाः केवलब्रह्मगतत्वोपगमेऽपि संस्कारराशेर्न तथात्वोपगमसम्भवः।

ननु ब्रह्मस्वभावपदाभिषिक्तायास्तस्या नाशोऽपि नोपगन्तुमुचितः, यदाहुः—'न हि स्वभावो भावनां व्यावर्ततौष्ण्यवद्रवे'रिति। न ह्येवम् 'अतोऽन्यदार्तम्' इति श्रुतिरपि पीड्यते, ब्रह्मस्वभावभूतशक्तेर्ब्रह्मान्यत्वव्यपदेशानर्हत्वात्, अत एव 'नेह नानास्ति किञ्चन' इत्यपि ब्रह्मस्वभावान्यस्यैव निषेधं बोधयन्ती नेह बाधिका। 'देवस्यैव स्वभावोऽयमाप्तकामस्य का स्पृहा' (माण्डू० का०) इत्यादौ च साम्प्रदायिकैरपि स्वभावपदेन मायोपात्तैव, 'ब्रह्मणो हि प्रतिष्ठाऽहम्' इति (१४ अ०) गीताश्लोकभाष्ये च श्रीमद्भगवत्पादैः 'शक्तिर्ब्रह्मैव' शक्तिशक्तिमतोरनन्यत्वाद्' इति स्पष्टमवाचि, 'क्षेत्रज्ञं चापि मां विद्धि' (१३ अ०) इति श्लोकभाष्ये च तैरेवानादेरन्तवत्त्वमप्रामाणिक-मुक्तम्, एवम् 'अनादेरन्तवत्त्वं च संसारस्य न सेत्स्यति' (माण्डू० का०) इत्यत्रापि। यद्यपि तत्सत्यत्ववादिनां निराकरणम्, तथापि ब्रह्मभिन्नत्वेन रूपेण मिथ्याभूतस्याप्यर्थ-क्रियाक्षमस्यानादेर्भावस्य सान्तत्वं नास्मादृशां मानससिंहासनमध्यासितुमीष्टे इति चेदत्रोत्तरमेतत्प्रकरणान्ते द्रष्टव्यम्।

चितावेव तत्तद्विषयसम्बन्धानां संस्कारत्वमिति पूर्वप्रकरणोपदर्शितपक्षेऽपि चिन्मात्रेऽसङ्गे तादृशसम्बन्धाः, तदौपयिकप्रमाणप्रक्रियासम्पत्तिश्च कथमित्यत्रानुपपन्नार्थ-प्रदर्शकशक्तिप्रभावं विना चेतो न नस्तुष्यति। एवमनुग्राहकतयाऽपि शक्तिविशेषः स्वीकर्तुमुचित एव, यदाह 'ईश्वरानुग्रहादेषा पुंसामद्वैतवासना'इति। 'तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्' इति। 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति च। चिन्मात्रे संस्कारेषु चानुग्राहकत्वं ह्यसम्भाव्यमेव, एवमेषु 'एकोऽहं बहु स्याम्' इत्यादीच्छा तन्मूलककृतिश्चापि नोपपद्येते, न च संस्कार-मात्रविशिष्टे चिदेकरसेऽपि ते सम्भाव्येते, एतदनुरूपतयैव चैत्रादिमनःस्थानीया तु कल्पिता ब्रह्मणि माया किन्नैते उपपादयेत्। बाह्याभाससम्भिन्नज्ञानौपयिकतया तु पृथक् शक्तिर्न निरूप्यते, ज्ञानस्य चिद्रूपत्वादेव, बाह्याभाससम्भेदौपयिकतया च तस्या उपगन्तव्यताया विषयसम्बन्धात्मकसंस्कारपक्षमाश्रित्योक्तत्वादेव। किञ्च दृष्टिसृष्टिवाद-

दर्शयितुं तल्लक्षणान्याचष्टे—जन्यवृत्तिविशेषेति। अत्रैवेति। जन्यवृत्तिविशेषा-

आप (स्वातन्त्र्यवादी) की भी विप्रतिपत्ति नहीं होनी चाहिए। इच्छा, ज्ञान एवं क्रिया शक्तियों को आपने चितिशक्ति का विवर्त कहा है अतः उनमें ही मायात्व व्यवहार हो जायेगा।

यदि उन शक्तियों को जन्यवृत्तिविशेषावच्छिन्न चिद्रूप या जन्यवृत्तिविशेषरूप ही मानेङ्गे तो, बाह्याभास सम्भिन्नचिद्रूपता कथन का भी इसी (जन्यवृत्तिविशेषाव-

भाससम्भिन्नचिद्रूपतादेरप्यत्रैव पर्यवसानात्, मायायास्तु मूलकारणतयाऽनादित्वमेवोचितम्, अजामेकाम्, 'स्वाभाविकी ज्ञानबलक्रिया' इत्यादिश्रुतिस्वारस्यात्, अतएव संस्काराणामेव मायात्वमित्यसङ्गतम्, जन्यस्यागन्तुकत्वेनास्वाभाविकत्वात्। अनिर्वाच्यत्वपोषकत्वसाम्येऽप्यनवस्थाद्यपेक्षयाऽऽत्माश्रये एव

स्तावदीश्वरदृष्ट्या, अस्मदादिदृष्ट्या तु सृष्टिदृष्टिवाद एवेत्युक्तमनुपदम्, एवं चास्मदादिसम्बन्धिसंस्काराणामीश्वरत्वप्रयुक्तदृष्टिसृष्टौ सहकारितोपपत्तावपि ब्रह्मनिष्ठेश्वरत्वप्रयोजकत्वं तन्निष्ठशक्तिविशेषे एव वक्तुमुचितम्, न तु जीवत्वप्रयोजकसंस्कारविशेषेषु, न चानीश्वरस्य दृष्टिसृष्टिरमूदृशोच्चावचाचिन्त्यरचनाचयात्मिका स्यादिति विशदधिषणैर्धर्षणीयः संस्काराणामेव मायात्ववादः।

यत्तु मूलशक्त्यवच्छिन्नं समष्ट्यभिमानि ब्रह्मैत्र मुख्यो जीवः, स च सार्वज्ञ्यादिगुणः, 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप' इत्यादिकश्च तस्यैवानुभव इति तस्यैव दृष्टिसृष्टिः, अन्तःकरणावच्छिन्नं तु ब्रह्म जीवाभास इति; तत्र सार्वज्ञ्यादिमत एवेश्वरपदार्थत्वान्नाम्नि विवादः स्यात्, न चासावद्वैतवादे युज्यते। न च सर्वस्य दृश्यस्य बाधिततया तद्विषयकभ्रममादायैव सर्वज्ञत्वं तस्येति वाच्यम्; 'वेदान्तकृद्वेदविदेव-चाहम्' इत्यादिना तत्त्वज्ञताया अपि तस्मिन्नवगमात्। अधिकं चात्र विषये वक्ष्याम इत्यलम्।

वच्छिन्नचिद्रूपत्व एवेत्यर्थः। मूलकारणतयेति। अनादित्वस्यौचित्ये हेतुः। अन्यथाकारणान्तरापेक्षत्वेऽनवस्थापत्तेः। युक्त्याऽनादित्वं प्रदर्श्य श्रुत्याऽपि तत्साधयति—अजामेकामिति। अत एवेति। मायाया अनादित्वादेव। प्रकृतिं परित्यज्य तत्पदे मायेवाभिषिच्यताम्, तयैव प्रकृतिकार्यनिर्वाहादित्याह—षट्त्रिंशत्तत्वान्तर्गतेति। प्रकृतिशब्दश्च मायायामेव प्रयुज्यमानो बहुत्रोपलभ्यते।

च्छिन्नचिद्रूपता ) में पर्यवसान है। मूलकारण होने से माया को अनादि मानना ही उचित है। "अजामेकाम" "स्वाभाविकी ज्ञानबलक्रिया च" इत्यादि श्रुतियों का इसी ( माया के अनादित्व ) में स्वारस्य है। अत एव संस्कारों को माया मानना असङ्गत है, क्योंकि संस्कार जन्य होने से आगन्तुक एवं अस्वाभाविक है। संस्कार एवं माया में अनिर्वाच्यत्व-पोषकत्व के समान होने पर भी अनवस्था दोष को मानने की अपेक्षा आत्माश्रय को मानने में लाघव है। [ तात्पर्य यह है कि अनादि माया को मूलकारण न मानकर सादि संस्कारों को कारण मानने में अनवस्था दोष प्रसक्त होता है क्यों कि उसके लिए भी कारणान्तर मानना होगा और अनादिमाया को कारण मानने में आत्माश्रय दोष प्राप्त होता है, क्यों कि जैसे ब्रह्म में अन्य पदार्थों के अध्यास के लिए माया की अपेक्षा होती है वैसे ही माया के अध्यास में भी स्वयं माया अपेक्षित होने से आत्माश्रय होगा ]। यदि इस प्रकार पर्यालोचन किया जाय तो स्वरूपा-

**लाघवादित्यालोच्यते, तदा षट्त्रिंशत्तत्त्वान्तर्गता प्रकृतिरेव स्वरूपावारक-मायातिरेकिणी नोपगन्तव्या, क्रमविपर्यासः परमतिरिच्यताम्। उपगम्यतां वा सा, सत्त्वरजस्तमसामनपलपनीयत्वात्, तथापि प्रोक्तमायाया आवश्यकत्वमेव, भेदप्रथायां तु मायाशब्दप्रयोगोऽविद्याकार्येऽप्यध्यासे "तमेतमध्यासं पण्डिता अविद्येति मन्यन्ते" इत्यादावविद्याशब्दप्रयोगवत्। एवञ्च मायासमर्पकप्राग्-**

क्रमविपर्यास इति। तत्त्वानां क्रमव्यत्यास इत्यर्थः। स्वातन्त्र्यवादशेषे षड्विंशतितत्त्वपक्षोऽप्युपक्षिप्त एवेति स्मर्तव्यम्। प्रागुदीरितेति। स्वातन्त्र्यवादे भावरूपाज्ञाने उपन्यस्तप्रमाणेषु केषाञ्चिदेव यथासंभवं स्वरूपतिरोधायकशक्तिपरता दर्शितैवाऽऽसीत्,

स्वरूपावारकेति। स्वरूपावारकत्वम्—अस्तिभातीतिव्यवहाराभाव-प्रयोजकत्वम्। न च रजतादिसंस्कारेषु तद्दृष्टम्, तेषु सत्सु इयं शुक्तिरिति व्यवहारोदयात्। न च प्रबुद्धेष्वपि तेषु तद्रजतम्, शुक्तिरिति धीर्नोदेति। तस्मादन्य एव कश्चिद्दोषस्स्वरूपावारकः, तत्स्थानीया च प्रकृते माया। भ्रमसंशयायत्तसंस्कारसाधारणश्चायं निराकरणप्रकारः। तदायत्तस्मृतिस्थलेऽपि विशेषदर्शनमहिम्ना इदानीमियं शुक्तिः स्फुटंचकास्तीति प्रतीतेः। भ्रमसंशययोर्निरूक्तस्वरूपावरकत्वपक्षस्तु अतितुच्छः। तयोरभावेऽपि शुक्तित्वविशिष्टेऽस्ति-भातीतिव्यवहारप्रतिबन्धस्यान्धकारादिना दर्शनात्।

ननु जगति सत्त्वरजस्तमसामनुभूयमानत्वात्तद्विशिष्टस्य जगतस्तादृशेन कारणेन भाव्यम्, कार्यकारणयोः समानस्वभावकत्वनियमादिति चेत्त्राह—उपगम्यतां वेति। यद्यपि मायाया अपि तादृशगुणवत्त्वं समम्, "अजामेकां लोहितशुक्लकृष्णामित्यादिश्रुत्या समर्थितम्। अतएव "तमो रजः सत्त्वगुणा प्रकृतिर्द्विविधा च सेत्यादिरूपेण क्वचिद् मायायामेव प्रकृतिशब्दोऽपि प्रयुक्तस्तथापि भेदप्रथासिद्ध्यर्थं प्रोक्तमायाऽवश्यमभ्युपेयेत्याह—तथापीति भेदप्रथाया मायाकार्यत्वेऽपि कार्यकारणयोरभेदमाश्रित्य तत्र तत्पदप्रयोगः। तत्र निदर्शनम्—अविद्याकार्येऽपीति। एवञ्चेति। मायायाः स्वीकारे च। "अजा-मेकामित्यादिश्रुतीनां षट्त्रिंशत्तत्त्वान्तर्गतप्रकृतिप्रतिपादकत्वमेव स्वरूपतिरो-

वारक माया के अतिरिक्त षट्त्रिंशत्तत्त्वान्तर्गत प्रकृति को नहीं मानना चाहिए। ऐसा करने से तत्त्वों के क्रम में ही केवल व्यत्यास होगा।

अथवा अनुभूयमान सत्त्वरजतम के अनपलपनीय [ अपलाप के अयोग्य ] होने से प्रकृति को मान भी लें, तथापि पूर्वोक्त आवरक माया को मानना आवश्यक है। "तमेतमध्यासं पण्डिता अविद्येति मन्यन्ते" [ इस आत्मानात्मा के अध्यास को पण्डित-जन अविद्या कहते हैं ] यहाँ अविद्या के कार्य अध्यास में अविद्या शब्द प्रयोग के समान भेदप्रथा में भी माया शब्द का प्रयोग किया गया है। एवञ्च माया के प्रति-

**दीरितश्रुत्यादीनामन्यथाकरणनिराकरणमकारि। निष्पक्षपाततया तु व्यपदेशिवद्भावेन भावुकानां स्फुरत्तायामपि शक्तिव्यवहारं न वारयामः। प्रपञ्चस्य सोपादानत्वे तु नास्माकमप्याग्रहः, परन्तु निरुपादानत्वेऽपि नासाविति विशेषः, अनिर्वाच्यवादित्वात्। कस्यापि पक्षस्योपपादनसम्भवेऽनिर्वाच्यत्वभङ्ग-**

तस्यास्त्विदानीं केनचिद्रूपेण मिथ्यात्वं वर्णितमिति विशेषः। स्वरूपतिरोधायकतामादाय तूक्तशक्त्यावज्ञानादिशब्दप्रयोगोऽपि सम्भवति, ज्ञाननाश्यतया तु तस्याः स्वीकारोऽनुचित एवेति तत्रैवोक्तम्, वक्ष्यामश्च प्रकरणशेषे।

धायकशक्तिप्रतिपादकत्वं वा, न तु मायाप्रतिपादकत्वमित्यात्मकं श्रुतीनामन्यथाकरणं निरस्तमित्यर्थः। स्फुरत्तायामपीति। पूर्ववर्णिता योग्यतारूपाशक्तिः स्फुरत्ता भिन्ना चेत् तदेदं द्रष्टव्यम्, वस्तुतः सा स्फुरत्तारूपैवेति तु राजहंसेऽनुपदं स्पष्टं करिष्यते।

ननु प्रपञ्चस्य निरुपादानत्वं स्वातन्त्र्यवाद्यभिमतम्,

निरुपादान एवादौ सृष्टवानखिलं जगत्।
यस्मादमहेश्वरः पूर्णः स्वच्छस्वातन्त्र्यसंयुतः॥

( त्रि. र. ज्ञा. ११।३७ )

"एवमिच्छामात्रमेव जगन्निर्माणे परिकरः न बाह्यार्थवादिवन्महाभूतप्रकृतिः, एवमिच्छोपकरणं विश्वकर्तुर्विश्वनिर्माणञ्च। अतश्च महाभूतानि इच्छाकाले स्वयं तत्कालमुद्यन्ति न संभृतसंभारगत्या यथोपयोगं ब्राह्मसृष्टिवत्प्रयुज्यन्ते, यतो निरूपादाना इयमैश्वरी सृष्टिः" ( महान० प्र० २।४ ) इत्यादिना तैरेव प्रतिपादनात्। वेदान्ते तु सोपादानत्वमित्यस्ति वैषम्यं तयोरिति तत्राह—प्रपञ्चस्येति। अस्माकम् = वेदान्तिनाम्। असौ = आग्रहः। उभयत्राप्याग्रहाभावे हेतुः—अनिर्वाच्यवादित्वादिति।

पादक प्रागुक्त श्रुत्यादिवाक्यों का अन्यथाकरण भी निरस्त कर दिया गया। निष्पक्षपात होकर हम भावुकों के द्वारा स्फुरत्ता में व्यपदेशिवद् भावेन प्रयुक्त शक्तिव्यवहार का भी वारण नहीं करते। [ व्यपदेशिवद् भाव का तात्पर्य यह है कि जैसे देवदत्त के एक ही पुत्र में जेष्ठत्व और कनिष्ठत्व व्यवहार होता है। उसी प्रकार प्रकाशविमर्श दोनों के अभिन्न होने पर भी विमर्शरूप स्फुरत्ता में शक्तित्व तथा प्रकाश में शक्तिमत्त्व तथा तथा भासमानत्वात्मकयोग्यतारूपशक्ति से स्फुरत्ता को भिन्न होने पर भी शक्तिरूप कारण से उक्त कार्य में शक्तित्वव्यवहार व्यपदेशिवद्भावेन है। वस्तुतस्तु वह शक्ति स्फुरत्तारूप ही है तथा शक्ति प्रकाशात्मक है अतः व्यवहार भावुक भक्तों की विवक्षा के अधीन है ] प्रपञ्च की सोपादानता में हमें [ वेदान्ती ] आग्रह नहीं है परन्तु साथ ही उसके निरूपादानत्व में भी आग्रह नहीं है, क्योंकि हम अनिर्वचनीयवादी है। किसी

प्रसङ्गात् । योगिनिर्मितघटादेरिव मृदादिना कुलालादिनिर्मितघटादेरपि दर्शनेन सर्गाद्यकालिककार्याणां सोपादानत्वानुपादानत्वसन्देहेनैकशेषस्य कर्तुमशक्यत्वात् । न च परमाणुवादस्य निरस्तत्वेन मायायाश्चैकजातीयायाः स्थूलसूक्ष्मादिकार्योपादानत्वासम्भवेनानुपादानत्वनिश्चय इति वाच्यम्; मायाया एकजातीयत्वस्यैव निर्णेतुमशक्यत्वात् । न च नानाजातीयत्वे तस्या विरुद्धधर्माध्यासेन नानात्वप्रसङ्ग इति वाच्यम्, तस्या नानाजातीयताया अप्यनुपगमात् । तर्हि

नानाजातीयताया अप्यनुपगमादिति । नानाजातीयत्वे हि तत्तज्जातीयपरमाणुपक्ष एव पर्यवसानेन तेषां च मूर्ततया सावयवत्वसकारणकत्वयोरावश्यकत्वेन कारणान्वेषणे तद्दौर्भिक्ष्यमेव, पञ्चतन्मात्राविद्वारा पुनः प्रकृतेरेव शरणीकरणे च तस्या नानाजातीयत्वं विचार्यमाणमुक्तरीत्यैव विशीर्यते, एवं मायाया ब्रह्मणि वृत्तौ न किञ्चिदवच्छेदकम्, ब्रह्मणो निरवयवत्वात्, जन्यवर्गस्य च मायायाः पश्चाद्भावित्वेन तद्वृत्तावच्छेदकतानुपपत्तेरिति ब्रह्मणि व्याप्यवृत्तितया व्यापकत्वेन मायायाः पृथिव्यादिकं द्रव्यं प्रति परिणाम्युपादानत्वमसम्भाव्यमेव, यदि च कथञ्चिदात्माश्रयभयं परित्यज्य माया स्वावच्छेदेनैव ब्रह्मणि वर्तत इत्यनुमत्य तस्या अव्यापक-

ननु सोपादानत्वनिरुपादानत्वसंदेहे सोपादानत्वस्योपपादनासम्भवान्निरुपादानत्वपक्ष एवाङ्गीकरणीय इत्याशङ्कते—न च परमाणुवादस्येति । पूर्वपक्षबीजं निराचष्टे—मायाया एक जातीयत्वस्यैवेति । नानाजातीयत्वे बाधकमुपन्यस्यति—न च नानाजातीयत्व इति । अनिर्वाच्यत्ववादित्वादेव नानाजातीयत्वमपि नाङ्गीकुर्म इत्याशयेन परिहरति—तस्या इति । सिद्धान्तरहस्यं जिज्ञासते—तर्हीति । कथं जीवति, तस्याः किं प्रयोजनम् । किञ्च भुङ्क्ते,

भी पक्ष के उपपादन शक्य होने पर अनिर्वचनीयत्व ही भङ्ग हो जायेगा । योगी के योगसामर्थ्यनिर्मित घटादि जैसे निरुपादान देखे जाते हैं, वैसे ही कुलालादि निर्मित घटादि सोपादान भी देखे जाते हैं, अतः सर्गाद्यकालीन कार्यों में सोपादानत्व निरुपादानत्व का संदेह होना स्वाभाविक है । ऐसी स्थिति में एक निर्णय करना सम्भव नहीं है ।

यदि कहें कि परमाणुवाद का निरास हो चुका है और एकजातीय माया स्थूल-सूक्ष्म नानाविध कार्यों का उपादान हो नहीं सकती, अतः निरुपादानत्व मानना ही उचित है तो यह कहना उचित नहीं है क्यों कि माया के एकजातीयता का ही निर्णय अशक्य है ।

यदि कहें कि माया को नानाजातीय मानने पर उस [ माया ] में विरुद्ध धर्मों का अध्यास होने से उसे [ माया ] भी नाना मानना होगा, तो यह कथन समुचित नहीं है क्योंकि उसे नानाजातीय भी तो नहीं मानते हैं । तो बतावें वह

कीदृशी सा ? कथं च जीवति ? किञ्च भुङ्क्ते ? स्वरूपतो दुर्निरूपाऽपि चितिचरणार्चनरततया तयैवानुप्राणिता निराहारैव जीवतीति जानीहि। एतेन 'कार्यं

त्वमाद्रियते, तदा मध्यमपरिमाणत्वे तस्या जन्यत्वप्रसङ्गेन तदीयं कारणमुदीरणीयमापद्यते, परमाणुपरिमाणत्वेऽपि मूर्तस्य निरवयवताया अनुभूतियुक्तिनिरस्ततया जन्यत्वसकारणत्वे प्रसज्येते एवेति प्रपञ्चोपादानकारणदुर्निरूपत्वमेवेति, तदाह—स्वरूपतो दुर्निरूपापीति। अर्चनं तु विषयोपदर्शनम्, एतदेव प्रयोजनम्। 'कथं च जीवती'ति हि कालयापनप्रकारप्रश्नः प्रयोजनप्रश्ने पर्यवसन्न आसीत्। तयैवानुप्राणिता निराहारैवेति। एतावता चित्सम्बन्धातिरिक्तोपष्टम्भकानपेक्षत्वं दर्शितम्, इदमेव मायाया स्वातन्त्र्यम्, अदृष्टादेस्तत्कार्यान्तःपातितयाऽन्यापेक्षोपष्टम्भकविधयाऽगणनीयत्वात्। एतेन 'किञ्च भुङ्क्ते' इत्युपष्टम्भकप्रश्नः स्वातन्त्र्यपारतन्त्र्यसादित्वानादित्वप्रश्नयोः पर्यवसन्न उत्तीर्णः।

## ( ग ) प्रपञ्चस्य निरुपादानत्वम्।

एतावता चेदं व्यञ्जितम्—अन्ततोऽनिर्वाच्यत्वेऽपि सोपादानत्वपक्षापेक्षया निरुपादानत्वपक्षः श्रेयानिति। मायाया अव्यापकत्वपक्षे दोषाधिक्येन व्यापकताया एवानुमन्तुमौचित्येन लोकप्रसिद्धोपादनतानुपपत्तेः। एवमुपादानोपादेयक्रमातिक्रान्तस्वातन्त्र्यापरपर्यायपरमैश्वर्यदृष्टिपुरस्कारे योगिदृष्टान्तस्यैव मनसि स्थित्या निरुपादानमेव

विमाधारा इत्यर्थः। समाधत्ते—स्वरूपतो दुर्निरूपापीति। दुर्निरूपत्वञ्चास्या व्यक्तं टीकायाम्। एतेनेति। दुर्निरूपाया अपि मायाया उपगमेन। न्यायानुकूल्यमाकलितमित्यन्वयः। न च कार्यमकारणं भवितुमर्हति कार्यत्वस्यानुपपत्तेरिति कार्यस्य सत्त्वे भवितव्यमेव तत्र।

माया कैसी है ? कैसे जीवित है ? क्या खाती है ? उत्तर सुनो—स्वरूपत दुर्निरूपा होने पर भी वह ( माया )। चिति के चरणार्चन में तत्पर होने से उसी [ चिति ] से अनुप्राणित होकर निराहार ही जीवित रहती है। [ तात्पर्य यह है कि माया चैतन्य के आश्रित रहती है और अपने उस आश्रय में ही वह घटपटभेदरूप समस्त प्रपञ्चरूप विषयों का उत्थापन ( प्रदर्शन ) करती रहती है, यही माया के द्वारा चिति चरणों का अर्चन है, यही माया के मानने का प्रयोजन भी है। चैतन्यरूप अधिष्ठान में आश्रित होने से उस चैतन्य के द्वारा ही प्रकाशित है। चैतन्य की सत्ता से ही सत्तावती भी है। यही माया का चिति से अनुप्राणित होना है। चैतन्य के अतिरिक्त किसी आधार आश्रय की अपेक्षा माया नहीं करती, यही उस माया का निराहार होना यानी स्वातन्त्र्य है। ] इससे निम्नाङ्कित न्यायमञ्जरीकार के कथन का आनुकूल्य भी प्राप्त हो जाता है। "कार्यञ्चेत्........" [ घटादिरूप कार्य यदि अवगत है तो उसके कारण की

चेदवगम्येत किं कारणपरीक्षया। कार्यं चेन्नावगम्येत किं कारणपरीक्षया' इति न्यायानुकूल्यमाकलितम्। अन्यथा तस्या अभावे ब्रह्मण एव स्वभावतो द्वैत-स्पृष्टस्य पूतिकूष्माण्डायितत्वप्रसङ्गादिति स्वयं मलिनापि सा ब्रह्मणो नैर्मल्य-

परमेश्वरस्य विश्वोल्लासकता पर्यवस्यति। न हि योगिसृष्टावपि सङ्कल्पमात्रप्रसूतायां न घनीभूतपृथिव्याद्यनुभवः। न च कदाचिद्योगिनापि स्वसंकल्पबलेनैवोपादानोपादेयक्रम-माश्रित्यापि सृष्टिप्रदर्शनसम्भवेनेश्वरस्यापि स्वातन्त्र्यवशादेव शक्तावुपादानतां परिकल्प्य विश्वोल्लासकता कुतो न स्यादिति वाच्यम्, उक्तरीत्या लोकप्रसिद्धोपादानताया असम्भाव्यत्वे स्वातन्त्र्यमात्रे एव प्रपञ्चप्रथानिमित्ततापर्यवसानात्। अनुपादानेऽप्यु-पादानतासम्पादनार्थं चान्ततः स्वातन्त्र्यस्यैव शरणीकरणीयत्वात्। सांव्यवहारिकक्रम-प्रतिभासो हि तत्तन्मनोऽवच्छेदेनेति प्रागुक्तम्, चितौ शरीरविशेषावच्छेदपरित्यागे-नैश्वर्योन्मेषनिमित्तस्य कलनाशक्तेः शरीरविशेषावच्छेदेन जीवत्वोपपादिका कापि दर्शव च मनः, तथा चैतदुक्तं भवति—व्यष्टिकार्यक्षेत्रे कलनाशक्तिः क्रममाश्रयत्येव, किन्तु प्रायेण, अन्यथा योगिनिर्मिते व्यभिचारात्, समष्टिकार्यक्षेत्रे तु क्रममतिक्रामत्येव, परन्त्वेतदपि प्रायेण, 'आकाशाद्वायुः, वायोरग्निः' इत्यादिश्रुतिदर्शितक्रमस्यापि कस्याञ्चित्सृष्टावीप्सितात्वसम्भवात्। वस्तुतस्तूक्तश्रुतिरपि कामपि जीवदृष्टिमेव पुरस्कृत्य प्रवृत्ता स्यात्, इत्थमेव हि पूर्वं क्रमिकषट्त्रिंशत्तत्त्वसमर्थनं कृतम्। सर्वथापि लौकिक्यु-पादानता न कलनाशक्तौ। इयं चावितर्क्यतया मायेतिव्यपदेश्या स्वस्वातन्त्र्योद्भासितानि समष्टिकार्यक्षेत्रीयकल्पनामात्रप्राणानि चिद्भिन्नत्वपराश्रितत्वशक्यप्रतियोगिकत्वान्युपादाय जडशक्तिरित्युच्यते, जडत्वस्य चिद्भिन्नत्वरूपत्वात्। कल्पिततयैव तान्यनादृत्य तु ब्रह्म-स्वभावतयेयं व्यपदिश्यते। स्वभावत इति। कलनाशक्त्यात्मकस्वभावविशेषमादाय

कारणेन। कार्यस्यासत्त्वे च निष्प्रयोजनं कारणस्वीकरणमितिभावः। अन्यथेति। तस्याः = मायायाः। पूतिकूष्माण्डायितत्वप्रसङ्गादिति। दुर्गन्धकूष्माण्डफल-मिवानुपादेयत्वप्रसङ्गादित्यर्थः। द्वैतप्रपञ्चस्य तादृशत्वात् स्वभावतस्तद्विशिष्टस्य ब्रह्मणोऽपि तथात्वं स्यादितिभावः। अङ्गीकारे तु मायाया मायाकल्पितत्वात्प्रप-ञ्चस्य, न तद्दोषेणाधिष्ठानस्य ब्रह्मणो दूषितत्वप्रसङ्गः। आरोपितगुणदोषा-भ्यामधिष्ठानस्यासंस्पृष्टत्वनियमात्। तदाह भगवान् भाष्यकारः—"तत्रैवं

परीक्षा करना अनावश्यक है। अर्थात् यदि कार्य ही अवगत नहीं है तो कारण की परीक्षा करना अनावश्यक है। और यदि कार्य ही अवगत नहीं है तो कारण की परीक्षा से क्या लाभ है।] अन्यथा यदि माया को सर्वथा ही न माना जाय तो ब्रह्म में साक्षात् ही द्वैत का सम्बन्ध मानना होगा, ऐसी स्थिति में स्वभावतः द्वैतसम्बद्ध ब्रह्म भी दुर्गन्ध युक्त सड़े कूष्माण्ड के समान अनुपादेय हो जायेगा। अतः माया स्वयं मलिन होते हुये

संविधात्रीति सर्वमवदातम् ।

द्वैतस्पृष्टताया एष्टव्यत्वेऽपि न चिन्मात्रस्वभावेन परमार्थतस्तस्या इष्टतोचितेति भावः । शक्तित्वेन चिद्रूपत्वेन च ब्रह्मणो भेदविवक्षामाश्रित्याह स्वयं मलिनेत्यादि ।

( घ ) मूलशक्तेर्ब्रह्मस्वभावत्वम् ।

नन्वेवं शक्तेः परिणाम्युपादानतापक्षं परित्यज्य स्वभावविशेषरूपताऽऽश्रयणे चितेरेव तथा तथा भाने इतरानपेक्षत्वमित्येवाभिधाय किमिति न सन्तुष्यते, तथा पदार्थ-घटके प्रकृतिपरमाण्वादिप्रपञ्चे मिथ्यात्वं परं मूलोक्तरीत्यैव न त्यज्यताम्, तत्र वेद्यता-सत्त्वादिति चेत्स्यादेवं यदि लोके 'इतरानपेक्षोऽसौ तस्मिन् कार्ये' इतिव्यवहारस्तस्मिन् कार्ये शक्तमेव जनं नालम्बेत, एवमिहापि चितौ द्वैतात्मना प्रथनशक्ति हठादापतन्तीं कस्तिरस्कुर्यात् । यदि च चिन्मात्रेणैव द्वैतप्रथानिर्वाहः स्यात्तदा का नो हानिः, तेन तन्निर्वाहसम्भवमपश्यद्भिरेव तु तादृशशक्त्याख्यस्वभावविशेषस्यानिर्वाच्यकोटौ निक्षेप आश्रियते । यदि च स्फुरत्तापरपर्यायचैतन्यमेव केवलचिद्रूपेण तत्तद्द्वैतरूपेण च भासन-योग्यत्वं ब्रह्मणि निरुच्यते, तदा नामान्तरकरणमेव, परन्तु तादृशयोग्यतात्वेन रूपेण तादृशयोग्यत्वस्य चिदात्मकत्वे तद्वदेव सर्वदा सर्वत्र स्फुरणप्रसङ्गः, चिद्भिन्नत्वे तु चिति तत्सम्बन्धस्य वाच्यतया सम्बन्धस्यासम्बद्धस्य सम्बन्धत्वाभावेन सम्बन्धान्तरापेक्षाया-मनवस्था स्यात्, न चानन्ताः सम्बन्धाः कदाचित्केनचिदप्यनभूयन्ते, तेषां सद्भाव-समर्थनमन्तरेण तान् परमेश्वर एव सर्वज्ञतया पश्यतीत्यस्य वक्तुमशक त्वात्, क्वचिद्-गत्वा स्वरूपस्य सम्बन्धता तु स्वं न स्वीयमित्यनुभवबाधेन वक्तुमशक्येति शक्तौ चिद्भेदः कल्पित एव पर्यवस्यति, भेदखण्डनशारदा चात्रानुसन्धेया, अभेदस्तु चितौ शक्तेः पारमार्थिक एव, चिद्रूपत्वात्, अन्यथा तस्यापि चिद्भिन्नत्वे चित्सम्बन्धापेक्षाया-मुक्तयैव रीत्याऽनवस्थानात्, रीतिश्चैषा घटादेरपि चितौ भेदाभेदसमालोचने योजनीया । एतेन वक्ष्यमाणरीत्या शक्त्याख्यस्वभावविशेषस्य नित्यत्वेन ब्रह्मवदेव सत्यत्वप्रसङ्ग इति नाशङ्कनीयम्, ब्रह्मरूपतया सत्यतायाः इष्टत्वात्, ब्रह्मभिन्नत्वादिना रूपेण सत्यताऽऽपाद-नस्य चापादकाभावेनानुपपत्तेरिति महाशून्ये चितिरेव स्वतन्त्रा विलसतीति सिद्धान्तो विशुद्ध एव सिद्धयति, स्वातन्त्र्येण सकलवेद्यनिवहस्य तदुत्थापकोक्तयोग्यताविशेषस्य च

सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते" इति । तत्रैवं सति = एवं भूतवस्तुतत्त्वावधारणे सति । सच्चिदात्मा ।

भी ब्रह्म में निर्मलता की आधायिका है । [ तात्पर्य यह है कि माया के मानने से माया ही ब्रह्म में आश्रित होकर जगद्रूप से परिणत होती है, ब्रह्म उसका अधिष्ठान है, अधिष्ठान अध्यस्त वस्तु के गुण-दोष से लेश भी संपृक्त नहीं होता है, अतः ब्रह्म नित्य-शुद्धमुक्तस्वभाव होने से निर्मल ही रहता है । ]

क्रोडीकारेऽपि चिद्भिन्नत्वादिना कल्पितत्वेनागणनीयत्वात्, अत एव ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिपादिका श्रुतिरपि नानुपपन्ना ।

( ङ ) जडोपाधेर्मूलशक्तित्वाभावेनैश्वर्याप्रयोजकत्वम् ।

इदम्पुनरिहावधेयम्—उक्तरीत्या शक्तेर्ब्रह्मस्वभावतापर्यवसाने ऐश्वर्यस्य स्वभाविकत्वमेव नत्वौपाधिकत्वमितीश्वरविषयेऽवच्छेदप्रतिबिम्बाभासवादानामनवकाश एव, न खलु हुताशनादिशक्तिताव्यवहारस्ततो व्यतिरिक्ते द्रव्ये स्वरससिद्धः क्वचित्, उपपाद्यश्च 'पराऽस्य शक्तिर्विविधैव श्रूयते' इत्यादिशक्तिताव्यवहारः क्वचिदिति जडोपाधिः कश्चिद्ब्रह्मणः मूलशक्तिरिति पक्षो न क्षोदक्षमः । यद्यपि स्वातन्त्र्येण द्रव्यस्यैव प्रतिबिम्बो रूपादेस्तु तत्पारतन्त्र्येणेति स्थित्या ब्रह्मणो न प्रतिबिम्बो नाप्याभासः, चिन्मात्रवपुषा रूपाद्यनाश्रयत्वात्, रूपाद्यनात्मकत्वाच्चेति रीत्या प्रतिबिम्बाभासपक्षयोः क्षयोऽतिप्रसिद्ध एव, तथापि शक्तेर्दर्पणवदुपाधिरूपद्रव्यत्वाभावेन तयोरपनयोऽत्रोच्यते, एवमवच्छेदोऽपि घटेनाकाशस्येव न ब्रह्मणः शक्त्या, तत्स्वभावत्वात् । स्वभावस्यैव शक्तित्वेन रूपेण ब्रह्मपार्थक्यविवक्षामाश्रित्य तु तद्विशिष्टतयेश्वरव्यवहारे नेश्वरत्वस्य स्वाभाविकत्वमपाकृतं स्यात् ।

यदि च जडोपाधिरपि 'अनन्तशक्त्यैक्यरूपिणी'इति प्राग्विवेचितरीत्या शक्तिताव्यवहारभाग् भवेत्, अनादित्वाच्च 'स्वाभाविका ज्ञानबलक्रिया' इत्यादौ स्वाभाविकतयाऽपि व्यपदेशं प्राप्नुयात्, अनादेः सान्ततायाः अप्रामाणिकत्वे तु तस्यानन्तस्याप्युपाधेर्ब्रह्मणि भेदस्य कल्पिततयैवाद्वैतरक्षापि कृतैव, एवं चैश्वर्यस्यौपाधिकत्वं स्वभावतस्तु निर्विशेषतेति सुप्रतीता रीतिरपि न त्यक्ता स्यात्, सत्त्वादिगुणाभिव्यक्तिवैचित्र्याच्च चित्सम्पृक्तस्य जडोपाधेरिच्छादिशक्तिरूपतां प्राप्तवत ऐश्वर्यप्रयोजकता न नोपपद्येत, यदाहुः सङ्क्षेपशारीरकाचार्याः—

'चितिगतजडशक्तेराद्य इष्टो विवर्त-
श्चितिनिकटनिवासाल्लब्धदीप्तिर्जडोऽपि ।
श्रुतिशिरसि निषण्णैरीक्षणं कथ्यते त-
त्र तु परमपदस्यापीक्षणं बुद्धिवृत्तिः ॥' इति

एवं जडोपाधेर्वैश्वरूप्याद्विश्वपरिणामिता कथञ्चित्सम्भाव्यतामित्यपि निराकार्यम्, तथाहि—तस्य चिन्नियम्यत्वमस्ति न वा, द्वितीये चेतनानधिष्ठितस्य जडस्य नेदृशविश्वोल्लासननैपुणोत्युपपादननिरपेक्ष एवार्थ इति 'रचनानुपपत्तेश्च नानुमानम्' ( ब्र० सू० २-२-१ ) इति सूत्रभाष्यादौ प्रसिद्धमेव । आद्ये तु चितौ नियमनानुरूपयोग्यतां विना न निस्तारः, स्वयमयोग्यस्यापि जडविशेषेणैवावच्छिन्नस्य सतस्तन्नियामकता या अप्रामाणिकत्वादिति तादृशयोग्यतोपगमस्यावश्यकत्वम्, न खलूपाधिरेव कस्यचिद् योग्यतारूपा शक्तिः, न चैवं तस्य स्वतन्त्रताया एव पर्यवसानेन न द्वितीयकल्पोक्तदोषोऽपीति जडोपाधि निरुपादानं मूलशक्तिसमुत्थैव स्यान्न तु स मूलशक्तिरेवेति । अन्यच्च किञ्चिदैश्वर्यं चिन्तयन्तोऽनुपदमुदीरयिष्यामः ।

एतेन—विमर्शमधिकृत्याजडप्रमातृतासिद्धौ "एतेन शान्तब्रह्मवादः कटाक्षितः" इति वदन्त उत्पलदेवाः, परात्रिंशिकायां "अन्तर्गतविश्ववीर्यसमुच्छलत्तात्मकविसर्गविश्लेषानन्दशक्त्यैक्यघनं ब्रह्म न तु वेदान्तपाठकाङ्गीकृतकेवलशून्यवादाविदूरवर्तिब्रह्मदर्शने इवे"ति भणन्तोऽभिनवगुप्तपादाः, प्रत्यभिज्ञाहृदय-स्पन्दनिर्णय—स्पन्दसंदोहेषु "ईश्वराद्वयदर्शनस्य ब्रह्मवादिभ्योऽयमेव विशेषो यत् सदा सृष्टयादिपञ्चविधकृत्यकारित्वं चिदात्मनो भगवतः" "विश्वोत्तीर्णो विश्वमयश्च स्वस्वभाव एव शङ्करो न तु वेदान्तवादिवत् विश्वं यत्र तदेव ब्रह्मेत्येवम्प्रायः" "न च भासमानोऽसावसत्यः, ब्रह्मतत्त्वस्यापि

विमर्शं = पूर्णाहन्ताम् । एतेनेति । प्रकाशस्य तादृशविमर्शात्मकतास्वीकारेणेत्यर्थः । अत्राधिकं स्वातन्त्र्यवादोदितं स्मर्तव्यम् । अन्तर्गतविश्वेत्यादि । अन्तर्गतं विश्वं यत्र, एवम्भूतं यद्वीर्यं तत्समुच्छलत्तात्मको विसर्गविश्लेषो यत्रेति समासः । समुच्छलत्ता = बहिर्मुखता । क्रोडीकृताशेषविश्वो ह्यन्तस्तावच्छिवात्मना बहिस्तु विश्वात्मना विश्रान्तिप्रदर्शनपरतया बिन्दुद्वयात्मा भवन् विसर्ग एव नरशक्तिशिवात्मकसकलतत्त्वात्मना परिस्फुरति ।

विश्वं यत्र तदेवेति । एवेन विश्वमयत्वं व्यावर्तयति, परिशिष्टेन तु विश्वोत्तीर्ण-

एतेनेति । मायास्वीकारपक्षेऽपीदृशनिर्मलब्रह्मस्वीकारेणेत्यर्थः । पराकृता" इति दूरतरेणान्वयः । शिष्टं स्पष्टं टीकायाम् ।

उक्त प्रकारेण माया मानना आवश्यक होने से—"अजड़प्रमातृतासिद्धि [९] में विमर्शनिरूपण प्रसङ्ग में—"एतेन........" [ प्रकाश को तादृश विमर्शात्मक मानने से शान्तब्रह्मवाद ( ऐश्वर्यशून्य निर्विशेष ब्रह्मवाद ) निरस्त हो गया ] यह उत्पलदेव का कथन, परात्रिंशिका ( १८ का ) में "अन्तर्गत........" [ अन्तर्गत है समस्त विश्व जिसमें ऐसे वीर्य अर्थात् सामर्थ्य [ शक्ति ] की समुच्छलता—उच्छलन अर्थात् बहिर्मुखता, तद्रूप विसर्ग विश्लेष अर्थात् बिन्दुद्वयात्मा आनन्दशक्ति के साथ समरसीभूत ही ब्रह्म त्रिकसम्प्रदाय में है न कि वेदान्त पाठकों के द्वारा अङ्गीकृत शून्यवाद के समकक्ष ब्रह्मदर्शन ( वेदान्त दर्शन के समान ) ] यह अभिनव गुप्तपाद का कथन, प्रत्यभिज्ञा हृदय, स्पन्दनिर्णय, तथा स्पन्दसंदोह ग्रन्थों में—"ईश्वराद्वय........" (प्र. १० ) ब्रह्मवादि वेदान्तियों में ईश्वराद्वय दर्शन की यही विशेषता है कि ईश्वराद्वैतदर्शन में चिदात्मा परमेश्वर सदा ही सृष्टयादि पञ्चविधकृत्यकारी होता है। ) विश्वोत्तीर्णो........" ( स्पन्द सं. पृ. २४ ) ( विश्वोत्तीर्ण और विश्वमय स्वभाववाला ही भगवान् शङ्कर है न कि वेदान्तवादियों के सदृश विश्व से सर्वथा भिन्न ब्रह्म ) "न च भासमान" ( स्पन्दनि का. ३ ) [ भासमान यह जगत् असत्य ( मिथ्या

तथात्वापत्तेरित्यसत्यविभक्तान्यरूपोपग्राहिता विवर्त इत्यपि न सङ्गतम्" "मूढ़भाव ऐश्वर्यात्मकविमर्शशून्यप्रकाशमात्रतत्त्वो ब्रह्मरूपोऽपि यत्र नास्ति यच्छ्रुत्यन्तविदः प्रतिपन्ना विज्ञानं ब्रह्मेति, तस्या स्वातन्त्र्यात्मकस्पन्दशक्तिं विना जडत्वात्" "श्रुत्यन्तविदक्षपादमाध्यमिकादयः क्षोभप्रलये विश्वोच्छेदरूपमभावात्मकमेव तत्त्वमुपादिक्षन्" इति वदन्तः क्षेमराजाश्च—पराकृताः।

त्वमाह। असत्यविभक्तेत्यादि। अत्र विभक्तान्यशब्दयोः पौनरुक्त्यपरिहाराय विभक्तत्वमसत्यरूपाणां पारस्परिकं द्रष्टव्यम् अन्यत्वं त्वधिष्ठानात्। व्यभिचारित्वापरपर्यायविभक्तत्वोक्त्या चानुगतेऽधिष्ठाने तेषां कल्पितत्वमुपोद्बल्यते। तदतादात्म्येन भानयोग्यत्वाभाववतस्तत्र कल्पितत्वनियमो हि पूर्वमुपवर्णितः। असत्याविभक्तेत्यपि पठन्ति, तत्राविभक्तत्वमधिष्ठानात्पृथक् प्रतीत्ययोग्यत्वम्। रूपोपग्राहिता = रूपसम्बन्धितया प्रतीतिविषयता। विवर्तस्य निष्कृष्टं लक्षणं तु प्रागुदीरितम्। क्षोभप्रलये = प्रपञ्चप्रथाप्रलये, निर्वाणे इति यावत्। विश्वोच्छेदरूपमभावात्मकमेवेति। विश्वोच्छेदरूपाभावनादायासत्कल्पमिति श्रुत्यन्तविदक्षपादपक्षयोरर्थः। विश्वोच्छेदोपलक्षितचिद्रूमप्यैश्वर्यशून्यतयाऽसत्कल्पं तत्त्वं वेदान्तिनामित्यभिप्रायः। एवं मोक्षे तार्किकाणामप्यशेषविशेषगुणोच्छेदवानात्मना सन्नप्यसत्सम एव, चिद्रूपतैश्वर्यद्वयेनापि शून्यत्वात्। एवं माध्यमिकादीत्यादिपदग्राह्यदर्शनान्तरेष्वपि यथासम्भवं योजनीयम्। माध्यमिकानां तु निर्वाणदशायामुक्तद्वयेनेव स्वरूपसत्तयापि शून्यत्वाद्विश्वोच्छेदरूपमभावात्मकमेवेति तथाश्रुतमेव साधु। तत्त्वमित्यस्य तु मोक्षमार्गप्रवृत्युद्देश्यतयोपादेयमित्यर्थः। तेन शून्यवादे 'निर्वाणमप्यायुष्मन् सुभूते ! मायोपमं स्वप्नोपमम्' इत्यादिप्रागुपदर्शितवचोनिचयानुसारेणासांवृतत्वरूपतात्त्विकत्वस्य क्वचित्तन्मतेऽनभ्युपगमेऽपि न क्षतिः। अतद्व्यावृत्तिरूपापोहस्यासत्यताया धर्मकीर्तिप्रणीतप्रमाणवार्तिकटीकादावुक्ततयाऽभावमात्रस्य तात्त्विकतायास्तैरननुमोदनीयत्वाच्च, अलीकतापर्यन्तं चाभावस्य बौद्धानामभ्युपगमः क्व न प्रतीतः। एवं चालिकेऽभावे उपादेयत्वमनलीकसांवृतपदार्थानुपादाने परं पर्यवस्येदित्यन्यत्।

नहीं हो सकता, अन्यथा ब्रह्मतत्त्व भी असत्य ( मिथ्या ) होने लगेगा। अतः अधिष्ठान से भिन्न परस्पर विभिन्नरूप से प्रतीत जगद्रूप से भासित होना ही उस ब्रह्म का विवर्त है। यह भी युक्तिसङ्गत नहीं है।] "मूढ़ भाव ......" ( स्पन्दनि. का. ५ ) मूढभाव यानो ऐश्वर्यात्मक विमर्श से शून्य प्रकाशमात्र—स्वरूप ब्रह्मरूप भी जहाँ नहीं है। जिसे वेदान्ती लोग विज्ञानं ब्रह्म के द्वारा विज्ञान के रूप से जानते हैं किन्तु वह भी स्वातन्त्र्यात्मक स्पन्द शक्ति के बिना जड़ ही है। ( जहाँ नहीं है वही परमार्थतत्त्व है। ) श्रुत्यन्त...." ( स्पन्द नि० का० १२ ) [ वेदान्ती, अक्षपाद (गौतम) तथा माध्यमिकादि लोग मोक्ष में विश्वोच्छेदरूप अभावात्मक तत्त्व का हो उपदेश देते हैं। ] ये क्षेमराज के कथन निरस्त हो गये। क्यों कि इन विशिष्ट बुद्धिमानों का भी यह कथन, न

**एतेषां धीधनानामपीदृशमभिानं न केवलं वेदान्तादिदर्शनामननमूलकम्, अपि तु स्वसिद्धान्तस्याप्यनिष्पीडनमूलकम्, तन्निष्पीडने ह्युक्तरीत्या विवर्तवादे पर्यवसानस्य गीर्वाणगुरुणाऽपि दुर्वारत्वादिति कृतं परदोषाविष्करणेन ।**

एतावता च—'इमामेव पङ्क्तिमाश्रित्याभावस्य तात्त्विकत्वं माध्यमिकमते व्युत्पाद्यताम्, बौद्धान्तराणामेव च मतेऽभावस्यालीकताऽऽस्ता'मिति शङ्का—निरवसरैव सम्पद्यते, निर्वाणस्य मायिकत्वप्रतिपादकबौद्धवचोविरुद्धत्वाद्, श्रुत्यन्तविदादिमतनिरूपणायामपि कथञ्चिदेव सङ्क्रमिताया अस्या अविश्वासपात्रतामिव प्राप्तायाः स्वसिद्धान्तोत्कर्षप्रदर्शनमात्रप्रवृत्तायाः परसिद्धान्तनिष्कर्षनिरूपणे भृशमसमर्थत्वाच्च । अभावपदस्य अविद्यमाना भावाः सांवृतापदार्था यस्मिन्निति व्युत्पत्त्या तात्त्विकाधिकरणविशेषपरत्वसम्भवेऽपि विश्वोच्छेदरूपमिति समभिव्याहारादत्र तद्ग्रहणासम्भवात् । न च विश्वस्योच्छेदो यत्र तत्स्वरूपमित्यर्थोऽस्त्विति वाच्यम्, एवं सत्यभावपदस्योक्तार्थकत्वं न स्यात्, अन्यथा पौनरुक्त्यप्रसङ्गात् । तस्य यथाश्रुतार्थकत्वेऽपि विश्वोच्छेदरूपमित्यस्य नोक्तार्थकत्वम्, अभावस्य विश्वोच्छेदानधिकरणत्वात् । अथ विश्वस्योच्छेदो यत्र, तादृशभावरूपाधिकरणस्वरूपमित्यर्थोऽस्तु, अभावेऽधिकरणात्मकतया तात्त्विकताया अपि सुवचत्वादिति चेन्न, एवं हि विश्वोच्छेदाधिकरणमेव तत्त्वमित्यस्यैव वक्तुमुचितत्वेन परापेक्षतात्त्विकताकस्याभावस्य प्राधान्येनोपन्यासासङ्गतेः । अथाऽभावात्मकमित्यस्यासत्कल्पमित्येतत्परत्वमनुमन्यताम्, विश्वोच्छेदतात्त्विकाधिकरणस्यापि चिद्रूपतैश्वर्याभ्याम् शून्यत्वादिति चेत्, तात्त्विकाधिकरणविशेषस्य स्वीकारार्हत्वेऽपि तन्मते तस्य स्वीकारोऽस्त्येवेत्यत्र प्रमाणाभावात्, 'अशून्यं शून्यमित्युक्तम्' इति प्रागुद्धृतस्वच्छन्दतन्त्रवचसो निष्प्रपञ्चचिदानन्दरूपशिवात्मकत्वाभिमतसिद्धान्तवर्णनपरत्वात् । बौद्धानामेव परस्परविरुद्धवचनान्युपादाय तु विचारितं पुरा शून्यवादे, प्रस्थानबाहुल्येन कस्यचिद्बौद्धस्य तात्त्विकाधिकरणविशेषाभ्युपगमः सम्भवन्नपि वैकदेशिन एवासौ व्यवस्थापयितुमुचितः, मुख्यसिद्धान्तत्वे हि तस्याऽऽस्तिकनास्तिकदर्शनेषु भूरिप्रसिद्धिः स्यादिति दर्शितमनिर्वाच्यत्वनिरुक्तिशारदायां शून्यवादराजहंसे चेत्यलं विस्तरेण ।

कृतं परदोषाविष्करणेनेति । अद्यत्वे प्रवृद्धविचारधारासंघर्षस्य तदानीमभावेनैव तेषां तादृशाभिधानसम्भवेन परोपकृतिकृतिषु शिवशक्तिपातपावितचित्तेषु तेषु दोषदृष्टिर्न मनागप्युन्मीलनीया, मा भूत् सा क्वचित्क्लेशलेशस्यापि सवित्रीत्याशयः ।

केवल उनके वेदान्तादिदर्शन विषयक मननाभाव प्रयुक्त ही है, अपितु स्वकीय सिद्धान्त के अनिष्पीड़न ( विशेष परिशीलनाभाव ) मूलक भी है। क्यों कि निष्पीड़न करने पर उक्तरीति से उनका विवर्तवाद में पर्यवसान गीर्वाणगुरू ( वृहस्पति ) के द्वारा भी दुर्वार है, अतः परदोषाविष्करण करना व्यर्थ है ।

## शब्दब्रह्मवादनिष्पीडनम्

यत्तु—

"वाचकेन विमर्शेन विना किं वा प्रकाश्यते।
वाच्येनापि प्रकाशेन विना किं वा विमृश्यते॥
तस्माद्विमर्शो विस्फूर्तौ प्रकाशं समपेक्षते।
प्रकाशश्चात्मनो ज्ञाने विमर्शं समपेक्षते॥" इति वदन्ति,

तदपि निष्पीड्यमानमुक्तार्थं नातिक्रामति, तथाहि—परस्परसिद्धच्याधीनसिद्धिकत्वं तावन्न प्रकाशविमर्शयोर्वक्तुं शक्यम्, अन्योन्याश्रयेणोभयोरेवासिद्धिप्रसङ्गात्। यदि तु विषयितासम्बन्धेन विषयतासम्बन्धेन वा परस्परम-

## शब्दब्रह्मवादनिष्पीडनम्

शब्दब्रह्मवादस्यापि निष्पीड्यमानस्य निर्विशेषब्रह्मवाद एव पर्यवसानमिति मन्वानः प्रकाशविमर्शयोरविनाभावं तन्मतसिद्धं तद्वाचैव दर्शयति—यत्त्विति। इति वदन्ति" इति योजना। अतिरोहितार्थम्। तेन विमर्शेन प्रकाशेन वा विना न भावः सत्ता प्रकाशस्य विमर्शस्य वेति प्रकाशविमर्शयोः परस्परमविनाभावः। स च सम्बन्धान्तरसापेक्ष इति सम्बन्धमुद्भाव्य निषेधति—परस्परसिद्धच्यधीनसिद्धिकत्वमिति। विमर्शसिद्ध्यधीनसिद्धिकत्वं प्रकाशे, प्रकाशसिद्ध्यधीनसिद्धिकत्वं विमर्शे। तन्नसम्भवतीत्यत्र हेतुः—अन्योन्याश्रयेति।

सम्बन्धान्तरेणाविनाभावमाशङ्कते—यदि त्विति। स्थिरैवेत्युच्यते इति

## शब्दब्रह्मवादनिष्पीडन

"वाचकेन····" [ विमर्शरूप वाचक के विना प्रकाश कैसे होगा, एवं प्रकाशरूप वाच्य के विना विमर्श भी कैसे होगा, अतः विमर्श को अपने स्फुरण में प्रकाश की अपेक्षा है और प्रकाश को अपने ज्ञान में विमर्श की अपेक्षा है। ] किसी का यह कथन भी विशेष पर्यालोचित होने पर उक्तार्थ ( विवर्तवादपर्यवसान ) का अतिक्रमण नहीं करता। कैसे ? तो सुनिये, उक्तकथन से प्रकाशविमर्श का अविनाभाव सिद्ध होता है किन्तु वह सम्बन्धान्तरसापेक्ष है अतः सम्बन्धान्तर का विचार करें, प्रकाशविमर्श का परस्परसिद्धचधीनसिद्धिकत्व सम्बन्ध हो नहीं सकता, क्योंकि अन्योन्याश्रयापत्ति होने से प्रकाशविमर्श दोनों ही असिद्ध हो जायेंगे।

यदि कहा जाय कि—विषयितासम्बन्ध या विषयतासम्बन्ध से उन दोनों का

**विनाभावस्तयोः, तथा च द्वयोरावश्यकत्वे तात्पर्यम्, उक्तञ्च ज्ञानमात्रस्य स्वरूपतो वा स्फुरणत्वादिना वा स्फुरणविषयकत्वम्, निर्विकल्पकानुपगमेन वा तदुपगमेऽपि तस्यापि सूक्ष्मवाग्विषयकत्वोपगमेन वा ज्ञानमात्रस्य शब्द-विषयकत्वमपि निर्बाधम्, 'न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते'**

सम्बन्धः। प्रकाशविषयको हि विमर्शोऽतः प्रकाशनिरूपिता विषयिता विमर्शे इति दृष्ट्या विषयिता सम्बन्धेन, विमर्शनिरूपिता विषयता प्रकाशे इति दृष्ट्या विषयतासम्बन्धेनेत्युक्तम् । द्विष्ठत्वञ्चानयोर्न्यायदर्शनवदुन्नेयम् । तयोः प्रकाशविमर्शयोः। तात्पर्यमिति। वाचकेन विमर्शेनेत्याद्युक्तेरित्यादिः। उक्तञ्चेति। भर्तृहरिणेतिशेषः। स्वरूपतः स्फुरणत्वात्मकधर्ममनन्तभाव्य। जात्यखण्डोपाध्य-तिरिक्तानां किञ्चिद्धर्मपुरस्कारेणैव भानमिति नियमादरे त्वाह—स्फुरणत्वादि-नेति।

ननु न ज्ञानमात्रस्य शब्दविषयकत्वसम्भवः, निर्विकल्पके ज्ञाने घट-घटत्वयोरेव भानस्वीकरेण शब्दस्याभानादिति चेत्तत्राह निर्विकल्पकानुपग-मेनेति। तथा च सविकल्पकमेव ज्ञानम्, तच्च सर्वमपि शब्दविषयकमेव।

ननु तदनुपगमे विशेषणज्ञानाभावाद् विशिष्टज्ञानं न स्यादिति तदुपगम आवश्यक इत्यत आह--तदुपगमेऽपीति। वैयाकरणा अपि निर्विकल्पके ज्ञाने घटघट-त्वयोर्भानेन घटादितादात्म्यापन्नः घटशब्दोऽपि भासत इति मन्यन्ते। ज्ञान मात्रस्य शब्दविषयकत्वं वैयाकरणोक्त्या संवादयति—न सोऽस्तीति।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥

इति भर्तृहरिपादानामुक्तिः। सः प्रत्ययः ज्ञानं लोके नास्ति यः शब्दा-नुगमादृते शब्दानुगमं विना स्यात्। सर्वमपि ज्ञानं—शब्दविषयकम् शब्दार्थयोर-भेदात्। अर्थस्य शब्दप्रकाश्यत्वनियमाद्वा। यतः सर्वं ज्ञानं शब्देनानुविद्धमिव भासते। यज्ज्ञानं यदाकारावग्रहं तत्तद्विषयकमिति व्याप्तेः। ज्ञानमात्रस्य शब्दाकारावग्रहतया शब्दविषयकत्वनियम इतिभावः। एकस्मिन्नर्थे विषयता-

अविनाभाव हो जायेगा, तथा च वाचकेन विमर्शेन इत्यादि उक्ति का दोनों ( प्रकाश-विमर्श ) के आवश्यकत्व में हो तात्पर्य है। कहा भी है कि—ज्ञानमात्र ही स्वरूपत या स्फुरणत्वादिरूपेण स्फुरण ( विमर्श = शब्द ) विषयक होता है। ( यदि कहा जाय कि निर्विकल्प ज्ञान शब्दविषयक नहीं होता तो यह उचित नहीं क्योंकि ) निर्विकल्प ज्ञानको न मानने से, अथवा उसे मान भी लें तो भी, उसमें सूक्ष्मवाक् विषयकत्व मानने से ज्ञानमात्र को शब्दविषयक मानने में कोई बाधक नहीं है। "न सोऽस्ति……" [ लोक में ऐसा कोई प्रत्यय ( ज्ञान ) नहीं है जिसमें शब्द न भासता

**इत्यभियुक्तोक्तेः, एवं विषयतासम्बन्धावच्छिन्नव्याप्यतापि तयोः परस्पर-निरूपिता स्थिरैवेत्युच्यते, तदापि विमर्शशब्देन घटादिशब्दो वा शब्दसामान्यं वा विवक्षितम्, शब्दसामान्यमपि प्रकाशभिन्नं वा, तदभिन्नं वा, तद्भिन्ना-भिन्न वा, प्रकाशशब्देनापि घटादिप्रकाशो वा प्रकाशसामान्यं वा, प्रकाश-सामान्यमपि विमर्शभिन्नं वा तदभिन्नं वा तद्भिन्नाभिन्नं वेति। तत्र घटादि-शब्दस्य घटादिप्रकाशस्य च साधनाय कः प्रयत्नः। चालनीन्यायेन व्याप्तौ व्यभिचारश्च। विमर्शसामान्यप्रकाशसामान्ये तु के इति विवेचनीयम्, न**

सम्बन्धेन प्रकाशविमर्शयोर्द्वयोरपि सत्त्वात्तयोस्तेन सम्बन्धेन व्याप्यव्यापकभावो-ऽपीत्याह—एवं विषयतेति।

निरुक्तशाब्दिकमतं निराचष्टे—तदापीति। विमर्शशब्देन घटादिशब्दस्य प्रकाशशब्देन घटादिप्रकाशस्य च ग्रहणे तयोः सर्वानुभवसिद्धत्वात्तत्साधनाय प्रयासवैफल्यमित्याह–तत्र घटादिशब्दस्येति। नापि निरुक्तव्याप्यव्यापकभावोऽपि तयोरित्याह—चालनीन्यायेनेति। चालनीभ्रामणेन यथैकस्य स्वस्थानादन्यत्र प्रच्यावोऽपरस्य च स्वस्थानादितरत्र, तथात्रापि घटशब्दात्मकविमर्शस्याश्रये घटे घटप्रकाशस्य सत्त्वेऽपि प्रकाशशब्दाभिधेयस्य पटप्रकाशस्याभावः, विमर्शशब्देन पटशब्दग्रहणे च तदाश्रये पटे घटप्रकाशस्याभावः। एवं प्रकाशशब्दाभिधेयस्य घटप्रकाशस्याश्रये घटे विमर्शशब्दाभिधेयस्य घटशब्दस्य सत्त्वेऽपि विमर्शशब्दाभि-धेयस्य पटशब्दस्याभावाद् भवति परस्परं व्यभिचार इति भावः। व्याप्तावित्यत्र व्याप्तिग्रहप्रतिबन्धकग्रहविषयत्वं सप्तम्यर्थः। विमर्शप्रकाशशब्दाभ्यां विमर्श-सामान्यप्रकाशसामान्यग्रहणपक्षं दूषयति—विमर्शसामान्यप्रकाशसामान्य इति।

हो ] यह आचार्योक्ति इसमें प्रमाण है। एवं प्रकाशविमर्श दोनों को परस्परनिरूपिता विषयतासम्बन्धावच्छिन्ना व्याप्ति भी सुप्रसिद्ध ही है।

तब प्रश्न होगा कि—विमर्शशब्द से घटादिशब्द विवक्षित है, या शब्द-सामान्य? शब्दसामान्य भी प्रकाश से भिन्न है या अभिन्न है तथा भिन्नाभिन्न? एवं प्रकाशशब्द से भी घटादिप्रकाश विवक्षित है या प्रकाशसामान्य? प्रकाशसामान्य भी विमर्श से भिन्न है? या अभिन्न है या भिन्नाभिन्न? उनमें घटादिशब्द और घटादि-प्रकाश को सिद्ध करने हेतु प्रयत्न की आवश्यकता ही नहीं है क्योंकि वे सर्वानुभव-सिद्ध है। चालनीन्याय से व्याप्ति में व्यभिचार भी है। [ तात्पर्य यह है कि घट-शब्दात्मकविमर्श के आश्रयघट में घटप्रकाश के रहने पर भी प्रकाशशब्दाभिधेय पट-प्रकाश नहीं है और पटशब्दात्मकविमर्श के आश्रय पट में पटप्रकाश के रहने पर भी घटप्रकाश का अभाव है। इसी प्रकार प्रकाशशब्दाभिधेय घटप्रकाश के आश्रयघट में विमर्शशब्दाभिधेय घटशब्द के रहने पर विमर्शशब्दाभिधेय पटशब्द का अभाव है इस

तावच्छब्दत्वज्ञानत्वरूपे तदवच्छिन्ने वा, ताभ्यां रूपाभ्यां ज्ञानमात्रे शब्दप्रकाशयोर्भानस्याप्रामाणिकत्वात् । अथ प्रकाशसामान्यं चिदित्येव विवक्षितम्, सा च ज्ञानमात्रगोचरः, तदीया स्फुरत्ता च शब्दसामान्यम्, इयमेव वाग्रूपतापदोदितापि, तस्याश्च स्वरूपतोऽपि भानाभ्युपगम इत्युच्यते, तदा न तावद्भेदपक्षः, एकस्यैव तत्त्वस्य पारमार्थिकतासम्भवस्य भणितत्वेनापरस्य मिथ्यात्वप्रसङ्गात्, नाप्यभेदपक्षः, एकस्मिन् ग्राह्यग्राहकभावस्यैवायौक्तिकत्वेन ग्राह्यग्राहकनिषेधमुखेन स्पन्दपरमानन्दतन्त्रादौ निषिद्धतया च वाच्यवाचक-

एकस्यैव तत्त्वस्य पारमार्थिकतेति । धर्मसंसृष्टस्य मिथ्यात्वान्निर्धर्मकस्य च भेदकशून्यतया सर्वैकीभूतत्वादितिभावः ।

ननु न प्रकाशसामान्यं शब्दसामान्यं वा जात्यादिरूपं विवक्षितमपितु चिद्रूपमेव, चितः प्रकाशमानतैव च शब्दसामान्यात्मको विमर्श इति शङ्कते—अथेति । यदीत्यर्थः उच्यतेऽन्वयी । प्रकाशविमर्शयोश्चित्तत्स्फुरत्तारूपतास्वीकारेऽपि तयोः परस्परम्भेदोऽभेदोभेदाभेदो वेति कल्पत्रये आद्यं निरस्यति—न तावद्भेदपक्ष इति । साधुरिति शेषः । तत्र हेतुः—एकस्यैवेति । द्वयोः पारमार्थिकत्वे द्वैतप्रसङ्गः । तत्र च निगमागमवचनयोर्विरोधो दर्शितः । मिथ्यात्वप्रसङ्ग इति भावः ।

द्वितीयं परिहरति—नाप्यभेदपक्षः इति । ग्राह्यग्राहकभावस्यैवेति । ग्राह्यग्राहकभावः ग्राह्यत्वं ग्राहकत्वञ्चेति विरुद्धं धर्मद्वयमेकत्रासम्भवस्थितिकम्—स्पन्दपरमानन्दतन्त्रदाविति । यथा स्पन्दे —

न दुःखं न सुखं यत्र
न ग्राह्यं ग्राहकं न च ।

प्रकार परस्पर व्यभिचार है । ] यदि उक्तशब्दो से विमर्शसामान्य और प्रकाशसामान्य का ग्रहण करेंगे तो वे विमर्शसामान्य और प्रकाशसामान्य क्या है, यह विवेचन करना होगा । इसमें शब्दसामान्य से शब्दत्वजाति एवं प्रकाशसामान्य से ज्ञानत्वजाति अथवा उन दोनों से अवच्छिन्न पदार्थ तो लिया नहीं जा सकता, क्योंकि उन दोनों रूपों से ज्ञानमात्र में शब्द और प्रकाश का भान होने में कोई प्रमाण नहीं है ।

यदि कहें कि प्रकाशसामान्य से चित् हो विवक्षित है और वह चिति ज्ञानमात्र ( वृत्तिरूप ) विषयिणी है, उसकी स्फुरत्ता ही शब्दसामान्य है और वही ( स्फुरत्ता ) वाग्रूपता भी कही जाती है उसका स्वरूपतः भी भान मानते है । तो ऐसा स्वीकार करने पर भी प्रकाशविमर्श दोनों का परस्पर भेद नहीं मान सकते, क्योंकि एक ही तत्त्व पारमार्थिक हो सकता है । अतः द्वितीय को मिथ्या मानना होगा । दोनों का अभेद भी नहीं मान सकते, क्योंकि एक में ग्राह्यग्राहकभाव के युक्तिविरुद्ध होने से, एवं स्पन्द-परमानन्दतन्त्रादि में ग्राह्यग्राहकभावनिषेधमुखेन निषिद्ध होने से वाच्य-

भावस्य दूरोत्सारितत्वात् । नापि भेदाभेदपक्षो विरोधात्, रूपभेदोपरामेऽन-

न चास्ति मूढभावोऽपि
तदस्ति परमार्थतः ॥ (स्प० नि० ५) इति ।

परमानन्दतन्त्रेऽपि—

न सुखं नापि दुःखं वा न ग्राह्यो ग्राहकोऽपि वा ।
न ज्ञानं ज्ञेयमपि वा सन्मात्रं तदिहोच्यते ॥
( २४।५१ ) इति ।

एवं स्वाव्यतिरेकेण जगज्ज्ञात्वा तु सुस्थितः ।
पूजादिकर्म नैवास्य यतः सर्वं हि तन्मयम् ॥
( परमा० २४।८० )

नैष ध्येयो ध्यानभावान्न ध्याता ध्येयवर्जनात् ।
न पूज्यः पूजकाभावात्पूज्याभावान्न पूजकः ॥ ( तन्त्रा० )
पूजापूजकपूज्यभेदसरणिः केयं कथाऽनुत्तरे ।
संक्रामः किल केन कस्य विदधे को वा प्रवेशक्रमः ॥
मायेयं न चिदद्वयात्परतया भिन्नाप्यहो वर्तते ।
सर्वं स्वानुभवस्वभावविमलं चिन्तां वृथा मा कृथाः ॥ ( अनु० )

"तत्र हि भावनादीनां न मुख्या कापि संगतिः"
इत्यादीनि वचांसि तत्रैव पर्यवसानभाञ्जि भवन्तीति विभावनीयम् ।

पूजाक्रमः स्वभावेन कथनात्रेशरूषितः ।
स्वरूपप्राप्तये हेतुः पारम्पर्योपचारतः ॥

इत्याद्युक्त्या स्वरूपप्राप्तये साधनमित्यन्यदेतत् । स्वरूपे तु न लेशतोऽपि ग्राह्यग्राहकभावः ।

तृतीयपक्षमपसारयति—नापि भेदाभेदपक्ष इति । ननु प्रकाशविमर्शयोश्चिद्रूपतयाऽभेदेऽपि प्रकाशत्वविमर्शत्वरूपाभ्यां तयोर्भेद इति भेदाभेदौ स्यातामिति चेन्न, तथा सति तादृशरूपयोरपि स्वाश्रयाभ्यां भेदो वाऽभेदो वा; नान्त्यः धर्मधर्मिभावानुपपत्तेः । नापि प्रथमः पटादिवत्पृथक्सिद्धिप्रसङ्गात् । तथा च प्रकाशेऽपि विमर्शत्वस्य विमर्शेऽपि प्रकाशत्वस्य सत्त्वप्रसङ्गादुभयोः पार्थक्य-

वाचकभाव नहीं मान सकते । भेदाभेद मानना भी सम्भव नहीं है क्योंकि भेदाभेद का परस्पर विरोध है । यदि कहें कि चिद्रूपतया अभेद और विमर्शत्वेन प्रकाशत्वेन भेद मानने से विरोध नहीं होगा, तो यह नहीं कह सकते, क्योंकि रूपभेद स्वीकार

वस्थानात्, रूपयोरपि स्वस्वाश्रयेण भेदाभेदस्य रूपभेदेनैव वाच्यत्वात्, भेदस्य मिथ्याभूतस्योपगमेनापि चैकत्र वाच्यवाचकभावसमर्थनेऽनुरागः किन्निमित्तः। यदि चोक्तरीत्या घटादेरपि प्रकाशात्मकत्वेन तेषु च वाच्यताया आनुभविकत्वेन तदभिप्रायेण प्रकाशे वाच्यत्वाभिधानम्, तदा विरोधमवधूय को न पाणिबन्धं विदध्यात्, परन्तु तदभिन्नाभिन्नस्य तदभिन्नत्वध्रौव्येण विमर्शस्यापि घटाद्यभेदे प्रकाशमपास्य विमर्श एव वाचकताया अनुग्रहः कथमनुग्रहीतव्यः।

स्याविशेषात्। तथा च तयोरपि ताभ्यां भेदाभेदावेवाभ्युपेयाविति तत्रापि विरोधपरिहार रूपभेदमादायैव, ततोऽग्रेऽपि तथैव रूपभेदः कल्पनीय इत्यनवस्था स्यादित्याशयेनाह—रूपभेदोपगम इति। भेदस्येति। मिथ्याभूतभेदमादायाप्येकत्रासम्भवस्य तस्य समर्थने भेदस्य मिथ्यात्वात्तस्यापि मिथ्यात्वं यक्षानुरूपो वलिरितिन्यायात्। तथा च तत्रानुरागो निष्प्रयोजनत्वाद् व्यर्थः।

यदि चोक्तरीत्येति। प्रकाशमानं न पृथक्प्रकाशादित्युक्तदिशा। तदविषयकप्रतीत्यविषयत्वहेतुना च घटादेरपि प्रकाशात्मकत्वम् प्रकाशसत्तातिरिक्तसत्ताशून्यत्वरूपम्, वाच्यताऽपि तत्र तादृश्येव तदा नास्त्यावयोर्विरोध इत्याशयेनाह—को न इति।

नन्वस्तु प्रकाशात्मकघटादौ वाच्यता यथा तथा वाचकस्तु विमर्श एव तदतिरिक्त इति शाब्दिकानां विजय इति चेन्नेत्याह—परन्त्विति। तदभिन्नेत्युभयत्रापि तदा विमर्शपरामर्शः। कथमनुग्रहीतव्यः कथं स्वीकर्तव्य इत्यर्थः। प्रकाशेऽपि वाचकतायाः प्रसक्त्या तस्याः वारणासम्भवाद् विमर्शस्यैव वाचकत्वं कथं मन्तुं शक्यमिति भावः।

करने पर अनवस्था प्रसक्त होगी। उन रूपों का भी अपने-अपने आश्रय के साथ भेदाभेद रूपभेद के द्वारा ही मानना होगा, अतः आगे-आगे रूपों की कल्पना करने में अनवस्था हो जायेगी। और मिथ्याभूत भेद को कल्पना कर एकत्र चैतन्य में वाच्यवाचकभाव के समर्थन करने में प्रयोजन भो क्या है। यदि कहें कि पूर्वोक्त रीति से घटादि भी प्रकाशात्मक है और उनमें वाच्यता भो अनुभव सिद्ध है अतः तदनुरोधेन प्रकाश में वाच्यत्व का कथन किया गया है, तो ऐसा मानने में हमारा भी विरोध नहीं है किन्तु तदभिन्नाभिन्न को तदभिन्नत्वनियमानुसार विमर्श का घटादि से अभेद होने पर प्रकाश का परित्याग कर केवल विमर्श में ही वाचकता कैसे कहेंगे। [ यहाँ तत् शब्द से विमर्श लेना है तथा च विमर्श से अभिन्न प्रकाश के साथ घट का अभेद होने पर विमर्श से घट का अभेद मानना उचित है। ]

यदि तु—प्रकाशस्तावत्क्लृप्त एवेति तत्रैव वाग्रूपता कल्पनीया, अन्यथाऽतिरिक्तधर्मिणोऽपि कल्पनप्रसङ्गेन गौरवात्, एवञ्च वाग्रूपत्वेनैव वाचकतामनुसन्धाय विमर्शो वाचक इत्युच्यते, तेन च घटादिशब्देनेव घटादिव्यक्तिश्चिच्चमत्कृता स्यात्, नो चेज्जडप्रायतामेवालम्बेत। अतएव—

"वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥"

इति भगवद्भर्तृहरिपादानुसारिमण्डनमिश्रैर्ब्रह्मसिद्धौ "शब्दसंस्पर्शेऽर्थे बोधोत्कर्ष-

यदि त्विति। ऊहनीयमित्युच्यते इति सम्बन्धः। प्रकाशो नाम यश्चायं सर्वत्रैव प्रकाशत इत्याद्युक्तरीत्या प्रकाशः सर्वसम्मतः। अतस्तत्रैव वाग्रूपताकल्पने लाघवम्, वाग्रूपतायाः पृथक् स्वीकारे तु तस्यास्तदाश्रयधर्मिणश्च कल्पने गौरवम्। प्रकाशस्य जड़त्वापत्तिश्चेत्याशङ्काशयः। वाग्रूपत्वेनैवेति। अवच्छेदकत्वं तृतीयार्थः। वाग्रूपत्वमवच्छेदकीकृत्येत्यर्थः। तथा च न प्रकाशे वाचकत्वव्यवहार इति भावः। चिच्चमत्कृता=प्रकाशात्मनि ब्रूडिता स्यात्, प्रकाशस्यास्वाद्यमानचिद्रूपता स्यादिति यावत्। नो चेत्—प्रकाशस्य वाग्रूपतानुपगमे। जडप्रायतामेवेति। प्रकाश इत्यादिः।

स्वोक्तिमाचार्योक्त्या द्रढयति—अत एवेति। इत्युक्तमित्यन्वयः। वाग्रूपतेति। यथाऽग्नेः प्रकाशकत्व स्वरूपं यथा वाऽन्तर्यामिणश्चैतन्यं स्वरूपं नित्यं तथाऽवबोधस्य प्रकाशस्य वाग्रूपता शाश्वती नित्या। यदि सा वाग्रूपता प्रकाशस्योत्क्रामेत् निर्गच्छेत्तदाऽसत्यां तस्यां सन्नपि प्रकाशो न प्रकाशेत वाग्रूपतानङ्गीकारेण प्रकाशक्रियासाधनं न स्यात्। हि यतः सा वाग्रूपता प्रत्यवमर्शिनी प्रकाशस्यापि प्रकाशिका, व्यवसायप्रकाशकानुव्यवसाय इवेत्यर्थः।

ब्रह्मसिद्धाविति। अक्षरपदविवरणप्रसङ्ग इति शेषः। शब्दसंस्पर्शेऽर्थे

यदि कहा जाय कि प्रकाश के सर्वानुभव सिद्ध होने से उसीमें वाग्रूपता की कल्पना करनी चाहिए। अन्यथा एतादृश कल्पना न करने पर वाग्रूपतारूप धर्म के लिए अतिरिक्त धर्मि की कल्पना करनी होगी, अतः गौरव होगा। एवञ्च उसी प्रकाश में वाग्रूपत्वेन वाचकता का अनुसन्धान करके ही विमर्श को वाचक कहते हैं। जैसे घटादिशब्द के द्वारा घटादिव्यक्ति चिच्चमत्कृत यानी प्रकाशित होता है, उसी प्रकार प्रकाशविमर्श से प्रकाशचिच्चमत्कृत अर्थात् आस्वाद्यमानचिद्रसरूप होता है। यदि प्रकाश में वाग्रूपता न मानी जाय तो प्रकाश भी जड़प्राय हो जायेगा।

अत एव—"वाग्रूपता..." [ प्रकाश को शाश्वती ( स्वाभाविक ) वाग्रूपता ( स्फुरत्ता ) यदि न मानी जाय तो प्रकाश प्रकाशित ही न हो पायेगा। क्योंकि वह वाग्रूपता ही प्रकाश की स्फुरणरूपा है। ] इस प्रकार कहते हुये श्रीभर्तृहरिपाद का

**दर्शनात्तत्प्रतिसंहारे च सञ्चेतितानामप्यसञ्चेतितकल्पत्वात्पथि गच्छतस्तृणादीनां बोधापकर्षाद्वाग्रूपाधीनमेव चितश्चितित्वम्, वाक्शक्तिरेव वा चितिरित्युक्तम् । अत्र च प्रथमकल्पे स्वभावतश्चितेर्जडत्वप्रसङ्गो द्वैतप्रसङ्गश्चेत्यादिकमरुचिबीजमूहनीयमित्युच्यते ।**

**तदापि तृणादौ शब्दसंस्पर्शविरहदशायां वृत्तिविशेषरूषितचित्सम्पर्कः सम्भवति न वेति वक्तव्यम्, द्वितीये 'तत्प्रतिसंहारे चे' त्यादिना व्यतिरेकनिरूप-**

इति । वाच्यतासम्बन्धेन शब्दविशिष्टेऽर्थे विषयतासम्बन्धेनोत्कृष्टबोधोऽनुभूयते । बोधगतोत्कृष्टत्वञ्च स्मृत्यौपयिकसंस्कारजनकत्वम् । एतेनान्वयं प्रदर्श्य व्यतिरेकं दर्शयति—तत्प्रतिसंहारे चेत्यादिना । तत्प्रतिसंहारे—शब्दसंस्पर्शोपरमे । व्यतिरेके हेतुमाह—पथीति । पथि पतितानां तृणादीनां सत्यपि बोधे शब्दसंस्पर्शविरहात् तादृशबोधो नैव जायते, तस्यानुसन्धानायोग्यत्वात् । चितश्चितित्वं वाग्रूपाधीनमेवेति सम्बन्धः ।

कल्पान्तरमाह—वाक्शक्तिरेवेति । कल्पान्तरोपन्यासे बीजं दर्शयति-अत्र चेति । जड़त्वप्रसङ्ग इति । शब्दसंस्पर्शमन्तरा चित्प्रकाशाभावादित्यादिः । तदधीनत्वं तद्भेदनान्तरीयकमिति तत्र वाग्रूपचित्योर्भेदस्य ध्रौव्येण द्वैतापत्तिरित्याशयेनाह—द्वैतप्रसङ्गश्चेति ।

समाधाता प्रथमकल्पीयं व्यतिरेकांशं विमृशति—तदापीति । व्यतिरेकनिरूपणासङ्गतिरिति । शब्दसंस्पर्शोपरमे संचेतितानामप्यसंचेतितकल्पत्वादिति व्यतिरेकनिरूपणस्यासङ्गतिः, वृत्तिविशेषविशिष्टचित्सम्बन्धाभावे संचेतितत्व-

अनुसरण करने वाले श्रीमण्डनमिश्र ने ब्रह्मसिद्धि में कहा है कि—"शब्दसंस्पर्शेऽर्थे⋯⋯" [ पदार्थ के साथ शब्द का सम्बन्ध होने पर अर्थात् शब्द से बोधित होने पर अर्थ विषयक ज्ञान का उत्कर्ष देखा जाता है । शब्द का सम्बन्ध न होने पर प्रकाशित भी अप्रकाशित सा ही रहता है । क्योंकि मार्ग में जाते हुये व्यक्ति का तृणादि से स्पर्श होने पर भी शब्द सम्बन्ध न होने से तृणविषयक ज्ञान का अपकर्ष ही होता है । ( तात्पर्य यह है वहाँ तृण का ज्ञान उपेक्षात्मक होने से वह कालान्तर में स्मरणात्मकज्ञान का जनक नहीं होता । ) अतः वाग्रूपाधीन ही चिति का चितित्व है अथवा वाक्शक्ति ही चिति है । ]

यहाँ प्रथमकल्प अर्थात् चिति के चितित्व को वाग्रूपाधीन मानने पर स्वभावतः चिति में जड़त्वापत्ति एवं द्वैतापत्ति हो जायेगी । अतः इस कल्प को छोड़कर द्वितीयकल्प का अनुसरण आचार्य मण्डनमिश्र ने किया है ।

इस प्रकार विचार करने पर भी यह बतावें कि—शब्दसम्बन्धाभाव दशा में तृणादि में वृत्तिविशेषविशिष्टचित् का सम्पर्क है या नहीं । यदि द्वितीयकल्प अर्थात् तादृशचित् सम्पर्क नहीं है, मानें तो "तत्प्रतिसंहारे च" इत्यादि से प्रदर्शित व्यतिरेक

**णासङ्गतिः स्यात् । आद्ये तु शब्दसंस्पर्शविरहोऽवान्तरशब्दसंस्पर्शविरहो वा शब्दसामान्यसंस्पर्शविरहो वा, द्वितीये भवन्मते तस्य ज्ञायमाने तृणादावप्रसिद्धिः, प्रसिद्धौ वा स्फुरत्तात्मकशब्दसामान्यस्यापि कादाचित्कत्वेनानिष्टप्रसङ्गः। आद्येऽप्यवान्तरशब्दस्य कादाचित्कत्वेन चितौ तद्रूपता न तात्त्विकी स्यात्, चैतन्यमागन्तुकं स्यादिति यावत्, तथा च भक्षितेऽपि लशुने न शान्तो व्याधिः। तस्माच्चित्सम्पर्क एव वाक्सम्पर्क इति वक्तव्यम्, तथाच वाग्रूपत्वमेव चितित्वं चितित्वमेव च वाग्रूपत्वमिति नामान्तरकरणमेव, अन्यथा**

स्यैवाभावान्नोक्तविधं निरूपणं सम्भवतीति भावः। अवान्तरशब्दः शब्दविशेषः। भवन्मत इति। आगमिकमते। तस्याप्रसिद्धिरिति सम्बन्धः। तस्य शब्दसामान्याभावस्य। प्रसिद्धौ बाधकमाह—स्फुरत्तेति। अनिष्टप्रसङ्गः जड़त्वापत्तिरित्यर्थः। शब्दविशेषविरहोऽपि न वक्तुं शक्य इत्याह—आद्येऽप्यवान्तरशब्दस्येति। चैतन्यस्यागन्तुकत्वे जड़प्रायतापत्तिः। उपसंहारव्याजेन स्वाभिप्रायं स्फोरयति—तस्माच्चित्सम्पर्क एवेति। ननु प्रकृते किमायातमिति चेत्तत्राह—तथाचेति। चित्सम्बन्धवाक्सम्बन्धयोरेकत्वे। नामान्तरकरणमेवेति। एतेन "वाक्शक्तिरेव चितिरि"ति मण्डनोक्तं समर्थितम्। तथा च शब्दाद्वैतवादस्य ब्रह्माद्वैतवाद एव पर्यवसानात् शब्दाद्वैतवादोऽपि ब्रह्माद्वैत एव। ब्रह्माद्वैतवाद

निरूपण असङ्गत हो जायेगा। [ तात्पर्य यह है कि "तत्प्रतिसंहारे च" इत्यादि के द्वारा शब्दसम्बन्धाभाव में बोध का अपकर्ष कहा गया है किन्तु यह सम्भव नहीं है क्योंकि शब्दसम्बन्धाभाव में तो चित् का सम्बन्ध ही नहीं है। ] और यदि प्रथमपक्ष [ चित्संपर्क है ] माने तो शब्दसंस्पर्शविरह शब्द से क्या शब्दविशेषाभाव विवक्षित हैं, या शब्दसामान्याभाव। इनमें द्वितीयपक्ष मानने पर—आप [ शब्दानुवेधवादी ) के मत में ज्ञायमान तृणादि में शब्दसामान्याभाव ही अप्रसिद्ध है। ( तात्पर्य यह है कि—तृण के ज्ञायमान होने से वहाँ पर ज्ञातता ( स्फुरता ) रूप शब्दसामान्य तो है ही, अतः उसका अभाव नहीं है। ] और यदि शब्दसामान्याभाव वहाँ प्रसिद्ध मान लें तो स्फुरत्तात्मकशब्दसामान्य के कादाचित्क होनेसे चित्तत्त्व में जड़त्वापत्ति हो जायेगी। यदि शब्दविशेषाभावरूप प्रथमपक्ष मानें तो शब्दविशेष के कादाचित्क होनेसे चित् में तद्रूपता [ शब्दविशेषात्मकवाग्रूपता ] तात्त्विक नहीं हो सकती, ऐसी स्थिति में चैतन्य ( चित् का स्फुरण ) भी आगन्तुक ( अनित्य ) हो जायेगा। तथा च "भक्षितेऽपि लशुने न शान्तो व्याधिः" ( लशुन के खा लेने पर भी वात व्याधि शान्त नहीं हुई ) यह उक्ति चरितार्थ हो जायेगी, तस्मात् चित्सम्पर्क ही वाक्सम्पर्क है यही मानना उचित है। तथा च वाग्रूपत्व ही चितित्व एवं चितित्व ही वाग्रूपत्व है यह नामान्तरकरणमात्र ही है। अन्यथा अर्थात् इन दोनों को पृथक् माना जाय तो घटादि के ब्रह्मरूप होने पर

घटादेर्ब्रह्मरूपत्वेऽपि ब्रह्मणो घटादित्वाभावेन यथा घटादेर्मिथ्यात्वमुक्तम्, तथा चितेर्वाग्रूपत्वेऽपि वाग्रूपस्य चितिरूपत्वाभावे चितेर्मिथ्यात्वं स्यात्। तदाह वाग्रूपताचिद्रूपतयोरैक्याभिप्रायेण शारदातिलककृत् "चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मति" रिति। अतएव च भावनोपनिषद्भाष्ये "गुरुराद्या भवेच्छक्तिः सा विमर्शमयी मते" ति तन्त्रराजवाक्यमुद्धृत्य "ईश्वरानुग्रहवशेन जायमानो विवेक एव सर्वसंशयभेदनेन मन्त्रवीर्यप्रकाशनेन तात्त्विकपदार्थानामवकाशप्रदानाद्विमर्शपदाभिधेयो गुरु"-

एव शब्दाद्वैतवाद इत्यत्रैव च मण्डनमिश्रस्यापि तात्पर्यम्। न चैवं भाष्यविरोधः, भगवत्पादानां स्फोटवादनिरासः, जड़ं स्फोटमभिप्रेत्यैव न तु चिदानन्दामृतस्वरूपं स्फोटम्, इत्येतादृशस्फोटसिद्धिश्च ब्रह्मसिद्धिरेव, तस्य शब्दात्मता त्वौपाधिकी। अत एव शब्दस्याप्यनुवेधः कार्येषु "न सोऽस्ति प्रत्ययः" इत्यादिना दर्शितः।

अन्यथेति। निरुक्तरीत्याऽभेदानङ्गीकारे। प्रकाशविमर्शयोरैक्यं शारदातिलककृदुक्त्या संवादयति—तदाहेति। चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतिरित्यस्य "न हि तेषां तयोः सिद्धिर्जड़त्वादुभयोरपि" इति पूर्वार्द्धम्। तेषां वादिनां मते तयोः शब्दार्थयोः सिद्धिः शब्दब्रह्मत्वसिद्धिर्न भवितुमर्हति, उभयोस्तयोर्जड़त्वात्। ब्रह्म हि सच्चिदानन्दरूपं, शब्दशब्दार्थौ च जडाविति न तयोर्ब्रह्मशब्दवाच्यता। सर्वभूतानां यच्चैतन्यं सच्चिदानन्दरूपं ब्रह्म, तदेव वाग्रूपतया शब्दब्रह्मेति मे मतिरिति भावार्थः। भास्कररायोक्तिरप्यत्र—अत एव चेति। आद्या शक्तिः श्रीमत्त्रिपुराम्बा सैव गुरुः, सा च विमर्शमयी विमर्शस्वरूपेत्यर्थः। मन्त्रवीर्यप्रकाशनेनेति। मन्त्रवीर्यम् = पूर्णाहन्ताविमर्शः। तदुक्तम्—

मन्त्रवीर्यमिति प्रोक्तं पूर्णाहन्ताविमर्शनम्।
तदीयोऽनुभवस्तस्य स्फुरणं स्वात्मनः स्फुटम्॥ इति

भी ब्रह्म के घटादिरूप न होने से जैसे घटादि मिथ्या होते हैं। उसी प्रकार चिति के वाग्रूप होने पर भी वाग्रूप के चितिरूप न होने पर चिति मिथ्या होने लगेगी। वाग्रूप तथा चिद्रूपता दोनों के एकता के अभिप्राय से ही शारदा-तिलककार ने यह कहा है कि—चैतन्यम्......" [ समस्त प्राणियों का चैतन्य ही शब्दब्रह्म है, यह मैं मानता हूँ। ] और इसीलिए भास्कर राय ने भावनोपनिषद् भाष्य में—"गुरुराद्या ..." [ आद्याशक्ति ही गुरु होती है और वह आद्याशक्ति विमर्शरूपा है, ) इस तन्त्रराज के वाक्य को उद्धृत करके कहा है कि "ईश्वरानुग्रहवशेन...." परमेश्वर के अनुग्रह से उत्पन्न तत्त्वज्ञान ही समस्त संशयों का भेदन करता हुआ पूर्णाहन्ता का आविर्भाव कर तात्त्विक पदार्थों का प्रकाशक होने से विमर्शशब्द व्यवहार्य तथा गुरु संज्ञक होता है। ] यहाँ विवेकाख्य वृत्यवच्छिन्नचैतन्य को विमर्शरूप बताने में भास्कर

रिति श्रीभास्कररायैरुदीरितम्, अत्र विवेकाख्यवृत्त्यवच्छिन्नचैतन्यस्य विमर्शतायां तात्पर्यम्, तादृशचैतन्योपाधित्वात्तु तत्र सुषुम्नाख्यनाड्यां विमर्शमयीत्वोक्तिः।

नन्वेवं शब्दब्रह्मवादस्य दर्शनान्तरत्वप्रसिद्धिर्निर्मूला स्यादिति चेन्न, आपातत एकस्मिन्नेव चैतन्ये धर्मधर्मिभावविकल्पनामादृत्य शब्दब्रह्मवादो विमर्शवादो वा, तादृशकल्पनामपास्य त्वौपनिषदब्रह्मवादः। अथवा उत्कट-

अवकाशप्रदानादिति। अवकाशः = स्फूर्तिः। विमर्शमयीत्वोक्तिरिति। भास्कररायस्येति शेषः।

शङ्कते—नन्वेवमिति। दर्शनान्तरत्वप्रसिद्धिः निर्विशेषब्रह्माद्वैतवादतः पार्थक्यप्रसिद्धिः। निर्मूला = निष्प्रामाणिकी। समाधत्ते—आपातत इति। तत्तत्सिद्धान्तनिष्पीडितविचारमन्तरेण। शब्दब्रह्मवादः शाब्दिकप्रभृतीनाम्। विमर्शवादः स्वातन्त्र्यवादिनाम्। औपनिषदब्रह्मवाद इति। उपनिषद्प्रतिपाद्यस्य तस्य धर्मधर्मिभावातीतत्वात्। तस्यौपनिषदैकगम्यत्वं स्फुटयितुमौपनिषदत्वविशेषणम्।

नन्वहमिति प्रत्यक्षेणापि गम्यते तदिति कथमुपनिषदैकगम्यत्वं तस्येति चेन्मैवमहमित्यनेन कर्तृत्वादिविशिष्टस्यैव तस्य बोधनात्। तदुपाधिमनादृत्य तदभिन्नस्य शुद्धस्य तूपनिषदैव बोधनात्। तद्भणितं श्रीमद्भाष्यकृद्भिः—"नन्वात्माऽहं प्रत्ययविषत्वादुपनिषत्स्वेव विज्ञायते इत्यनुपपन्नम्, न, तत्साक्षित्वेन प्रत्युक्तत्वात्। न हि अहंप्रत्ययविषय-कर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थः सम एक कूटस्थनित्यः पुरुष विधिकाण्डे तर्कसमये वा केनचिदधिगतः" (ब्र. सू. भा. १।१।४) इति। "तं त्वौपनिषदं पुरुषं पृच्छामि" इति चौपनिषदत्वविशेषणं पुरुषस्योपनिषत्सु प्राधान्येन प्रकाश्यमानत्वे उपपद्यते" इति च तत्रैव।

राय का तात्पर्य है। सुषुम्नाख्य नाडि में विमर्शरूपता का कथन तो उस नाड़ि के तादृश चैतन्योपाधि होने से किया गया है।

प्रश्न—यदि ऐसा मानेंगे तो शब्दब्रह्मवाद में दर्शनान्तरत्वप्रसिद्धि निर्मूल हो जायेगी।

समाधान—आपातत एक ही चैतन्य में धर्मधर्मिभाव की कल्पना कर शब्दब्रह्मवाद तथा विमर्शवाद कहा जाता है और तादृश कल्पना का परित्याग कर औपनिषदब्रह्मवाद कहा जाता है। अथवा चित्तत्त्व में प्रत्यवमर्श सतरङ्गत्वादि अपरपर्याय

त्वस्य विशिष्टस्फुरणस्य वा प्रत्यवमर्शसतरङ्गत्वाद्यपरपर्यायस्य चित्तत्त्वे प्रतिपिपादयिषया वाक्शक्तिरिति शब्दब्रह्मेति चाभिधाय शाब्दिकास्तुष्यन्ति। स्वभावतो निस्तरङ्गमेव चित्तत्त्वम्, उपाधिविशेषरूषणवशात्तु सतरङ्गमिति

## विमर्शाख्यस्य चिदब्धितरङ्गस्यैव मुख्यवेदत्वम्

प्रत्यवमर्शेति। अयमेव मुख्यो वेदपदार्थः, स च चिदब्धेरानन्त्यादनन्त एव, अतएवेश्वरबोधस्य निरवशेषसकलविषयकत्वमाहुः, अतएव च 'अनन्ता वै वेदाः' इति तैत्तिरीयश्रुतिरप्युपपद्यते, अंशांशिकया तु तादृशवेदस्य समये समये तत्तच्छरीरावच्छेदेन मध्यमावैखर्यात्मनाऽभिव्यक्तिः, कल्पादौ महात्मप्रतिभासु तपोविशेषेणाभिव्यक्ततया तु तदंशात्मकशब्दसन्दर्भविशेषे एव वेदशब्दस्य नियन्त्रणा, आदरातिशयात्, वैधतदध्ययनाध्यापनविधाऽवधीरणेन तु कुण्ठितवीर्यतां प्रापितोऽसावैदंयुगीनैरनादृत एवेति। निस्तरङ्गावस्थेति। व्यवहारपदे चित्तः सतरङ्गत्वेऽपि तरङ्गस्य चिद्भिन्नत्वादिना कल्पितत्वमु-

यद्यप्यनेन जीवेनात्मनेति जीवात्मपरमात्मनोः पारमार्थिकमैक्यं तथापि तस्योपहितं रूपं जीवः, शुद्धं तु रूपं तस्य साक्षी, तच्च मानान्तरानधिगतमुपनिषद्गोचर" इति च भामतीपतिः। "तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ० ३।८।२६) इति वाक्यव्याख्यानेऽपि भाष्यकारः—"य औपनिषदः पुरुषोऽशनायादिवर्जित उपनिषत्स्वेव विज्ञेयो नान्यप्रमाणगम्यस्तं त्वामि" त्याह। उपनिषच्छब्दार्थश्च ब्रह्मविद्या। उप-नि-पूर्वात्सदेर्विशरणाद्यर्थात् क्विपि व्युत्पादितस्योपनिषच्छब्दस्योपनीय ब्रह्म सवासनामविद्यां हिनस्तीत्यर्थकत्वात्। तद्धेतुत्वाद् वेदान्ता अप्युपनिषदः। तत्प्रतिपादितो ब्रह्मवादः।

नन्वौपनिषदब्रह्मवादेऽपि न सर्वथा धर्मधर्मिभावकल्पनानादरः, अन्यथा "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" (छा० ३।१४।२) "एष सर्वेश्वर एषभूताधिपतिरेष भूतपालः" (बृ० ४।४।२२) "आकाशवत्सर्वगतश्च नित्यः" इत्याद्याः श्रुतयो नित्यत्वाद्यवगाहमानाः सामञ्जस्येन नोपपद्येरन्। धर्मधर्मिभावकल्पनामादृत्यैव च "विकारधर्मैरपि कैश्चिद्विशिष्टः परमेश्वरः (ब्र० सू० भा० १।१।२०) "आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्माः" (पञ्चपादिका) इत्यादिवचनानि संगच्छन्ते। तथा च निरुक्तकल्पनाया उभयत्र समत्वात्कथं दर्शनान्तरत्वमित्यतः समाधानान्तरमाह—अथवेति। स्पष्टार्थः। स्वसिद्धान्तं दर्शयति—स्वभावत इति। उपाधिविशेषो माया, तत्सम्बन्धात्सतरङ्गम्,

उत्कटत्व या विशिष्ट स्फुरण के प्रतिपादन की इच्छा से वैयाकरण उसे वाक्शक्ति शब्दब्रह्म कह कर संतुष्ट हो जाते हैं, किन्तु "स्वभावतः चित्तत्त्व निस्तरङ्ग ही है, उपा-

मन्यमाना औपनिषदाः पुनस्तथाभिधानं नातोवाद्रियन्ते, प्रत्युत तथाभिधानस्य वाच्यवाचकभावकल्पनातोनत्वाभावभ्रमजनकत्वम्। दर्शिता चाधस्तान्निस्त-

पाश्रित्य निस्तरङ्गावस्थाया यथा पारमार्थिकता शक्यते वदितुम्, तथा चित्स्वभावभूतशक्तेर्बहिःप्रसरौन्मुख्यस्यागमापायितया तस्याभावदशां शक्तेश्चिद्रूपशिवात्मकतादशापर्यवसायिनीमाश्रित्यापि, दर्शितं चैतत्पूर्वं मातृकाद्यर्थसंक्षेपे विसर्गस्वरूपोपन्यासे। समष्टिप्रतिभासक्षेत्रे हि प्रपञ्चानामुदयः स्यादेकस्मिन् क्षणे निगीर्णगणनीययुगचतुष्कसहस्रे[1], द्वितीयस्मिंस्तु प्रविलय एव तेषामित्यनवरतमेव प्रवृत्तिर्बहिरुल्लासान्तर्विलययोरिति न दूरगा निस्तरङ्गावस्था। व्यष्टिप्रतिभासक्षेत्रे तु तयोः क्षणिकप्रतिभासानामेवाविर्भावतिरोभावाभ्यामनुभूतिरवधानघनस्येति न तत्रापि दुर्लभा साऽवस्था, तथा चाहुः—

'अर्थादर्थान्तरं चित्ते याति मध्ये तु या स्थितिः।
निरस्तमनना सेयं स्वरूपस्थितिरुच्यते॥' (योगवासिष्ठ)
'ग्राह्यग्राहकसम्बन्धे सामान्ये सर्वदेहिनाम्।
योगिनः सावधानत्वं यत्तदर्चनमात्मनः॥' इत्यपि योगवासिष्ठे विज्ञानभैरवे च किञ्चित्पाठभेदेन।

"एकोऽहं बहु स्यामि"ति श्रुतिसिद्धमायावृत्यात्मकसंकल्पविशिष्टम्। तेन प्रपञ्चविशिष्टमपि। एवञ्चैतन्मते धर्मधर्मिभावोऽपि कल्पित एव। अत एवोक्तं भाष्यकृता —"द्विरूपं हि ब्रह्मावगम्यते, नामरूपविकारभेदोपाधिविशिष्टम्, तद्विपरीतञ्च सर्वोपाधिविवर्जितम्। श्रुतिषु चोभयरूपं दर्शितम्—"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" (बृ० ४।५।१५) "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्" (छा० ७।२४।१) "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" (श्वे० ६।१९) इत्यादि।

अक्षमा भवतः केयं साधकत्वप्रकल्पने।
किन्न पश्यति संसारं तत्रैवाज्ञानकल्पितम्॥ (वा०)

इति वार्तिकस्याप्यत्रैव तात्पर्यम्। तथाभिधानम् = चित्तत्त्वे उत्कटत्वादिविवक्षया वाक्शक्तिरित्याद्यभिधानम्। शाब्दिककर्तृकतादृशाभिधानस्यातोवादराभावे हेतुं प्रकटयति—प्रत्युत तथाभिधानस्येति। निस्तरङ्गे चित्तत्त्वे इति

धिविशेष के सम्बन्ध से सतरङ्ग होता है" ऐसा मानते हुये वेदान्ती न केवल वैयाकरणों के कथन का विशेष आदर ही नहीं करते, प्रत्युत उनके कथन को वाच्यवाचक भाव-

१—निगीर्णानि अगणनीयानि कृतादियुगचतुष्काणां सहस्राणि येन, तादृशे इत्यर्थः।

रङ्गावस्थाऽभ्युपगतप्रायाऽभ्युपगमार्हा वाऽष्टत्रिंशतत्त्वस्वीक्रियया विमर्शवादिनामपि, कादाचित्कावस्थाया अप्यावश्यकत्वेन तु विमर्शं विना न संविदित्यप्यभिधीयमानं न नो दुनोति। अत एव वाक्यपदीयोक्तमनादिनिधनत्वं शबले शब्दब्रह्मणि यथाश्रुतमसङ्गतमसहमाना नव्याः शाब्दिका यावत्सृष्टिन नो दुनोतीति। विमर्शत्वप्रकाशत्वयोर्देशिकव्याप्तिरिव कालिकव्याप्तिरपि 'सर्वदा पञ्चकृत्यकारिकता' विवेचनन्यायेन पूर्वमुदितेन सम्भवति।

शब्दब्रह्मणीति। अत्राहुः—प्रलीनसकलकार्यमायालिङ्गितं ब्रह्म घनीभूतशब्दोदितं कालक्रमेण विचिकीर्षावस्थामासाद्य जगदङ्कुरकन्दरूपामधिदैवतमव्यक्तपदवाच्यामध्यात्मं च परापदव्यपदेश्यां दशां दर्शयत्परतो वर्णितपश्यन्तीमध्यमावैखर्यपरपर्यायां क्रमेण कार्यबिन्दु-नादबीजमयीमनुभवति दशाम्। अत्राव्यक्तदशैव कारणबिन्दुशब्देनोच्यते, मूलाधारे किञ्चिदिवाभिव्यज्यमाना च सा शब्दब्रह्मेति गीयते, यदाहुः—

'बिन्दोस्तस्माद्भिद्यमानादव्यक्तात्मा रवोऽभवत्।
स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते ॥' इति।

बिन्दोरिति। कारणबिन्दोरित्यर्थः।

शेषः। न केवलं चित्तत्त्वस्य निस्तरङ्गावस्था श्रुत्यन्तवादिभिरेवाङ्गीकृताऽपि त्वागमिकैरपीत्याह—दर्शितेति।

नन्वेवमष्टात्रिंशतत्त्वस्य निस्तरङ्गत्वेन ततो प्रपञ्चोर्म्यनुपपत्तिरिति तत्राह—कादाचित्कावस्थाया इति। अत एवेति।

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ (वाक्य० ब्र० १)

इति कारिकोक्तम्, अनादिनिधनत्वम्, आदि च निधनञ्चेत्यादिनिधनेऽविद्यमाने ते यस्य तदनादिनिधनम्; तस्य भावः, तत्त्वञ्चोत्पादविनाशराहित्यम्। तथा च—

क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम्।
प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माभवत् पुरा॥

इति शब्दब्रह्मण उत्पत्तिश्रवणात्, शुद्धस्य च तस्य तदसम्भवात्, शबलस्यैव ब्रह्मणः सम्भवदुक्तिकतया तस्य न यथाश्रुतं नित्यत्वं सम्भवतीतिधिया

कल्पनातीतत्वाभाव के भ्रम का जनक भी कहते हैं। विमर्शवादियोंके मत में भी अष्टात्रिंशत्तत्त्वस्वीकार करने से निस्तरङ्गावस्था स्वीकृत प्रायः एवं स्वीकारार्ह है, यह पूर्वप्रदर्शित है। कादाचित्क अवस्था के भी आवश्यक होने से विमर्श के विना संविद् नहीं रहती, यह कथन भी खेदकर नहीं है। अतएव शबल शब्दब्रह्म में वाक्यपदीयोक्त

कालावस्थित्यभिप्रायेण तद्व्याचक्षते। विशेष्यचैतन्यमात्राभिप्रायेण तु यथा-श्रुतमेवानादिनिधनत्वं सम्यक्, अतएव श्रीमद्भगवत्पादैरपि "मनोवृत्त्युपाधिपरिच्छिन्नं मनोवृत्तिनिष्ठमात्मचैतन्यमनादिनिधनं यजुःशब्दवाच्यमात्मविज्ञानं मन्त्राः, एवञ्च नित्यत्वोपपत्तिर्वेदानाम्, 'सर्वे वेदा यत्रैकं भवन्ति स

अनादिनिधनमिति शब्दब्रह्मणो नित्यतोक्तिर्यावत्सृष्टिस्थित्या व्यवहारनित्यतया वा नेयेति नागोजीभट्टप्रभृतयो वदन्ति।

विशेष्यचैतन्यमात्राभिप्रायेणेति। यथा विशेषणविशिष्टे प्रवर्तमानौ विधिनिषेधौ सति विशेष्यबाधे विशेषणमात्रमुपसङ्क्रामतः, तथैव प्रकृतेऽनादिनिधनत्व मायाशबलिते ब्रह्मणि विधीयमानमपि विशेषणे बाधित सद्विशेष्यं चैतन्यमात्रमुपसक्रामतीत्यभिप्रायेणेत्यर्थः। श्रीमद्भगवत्पादोक्त्या स्वोक्तं द्रढयति—अतएव श्रीमद्भगवत्पादैरपीति। यावत्सृष्टिकालावस्थानस्यापि नित्यशब्देन ग्रहणसंभवादेव। "आभूतसंप्लवस्थानं नित्यत्वं चेति भाष्यते" इत्युक्त्या प्रलयपर्यन्तस्थायिनाऽपि नित्यत्वव्यवहारः। अतएव—"आकाशवत्सर्वगतश्च नित्यः" इत्यत्रात्मनिदर्शनत्वं स्वसमानकालीनसर्वगतत्वेन आभूतसंप्लवस्थायित्वेन चेति द्रष्टव्यमित्यद्वैतसिद्धिकाराः। चिदात्मकतया वेदस्य नित्यत्वमाह श्रीमद्भाष्यकारः—मनोवृत्तोति। एवञ्चेति। चैतन्यरूपत्वे सति। वेदानां जडत्वे स्वप्रकाशेनात्मनैकत्वं न सम्भवति जड़ाजड़योर्विरोधात्, अतो मनोवृत्यवच्छिन्नचिद्रूपत्वं वेदानां सूचितम्। अतएव "वाचा विरूपनित्यया" इति श्रुतिरपि संगच्छते। अथवामनोवृत्युपाधीति। तत्र 'अन्योऽन्तर आत्मा मनोमय' इतिश्रुतिव्याख्यानावसरे "न केवला वर्णा वेदः किन्तु स्थानप्रयत्ननादस्वराद्यनुसंन्धानविशिष्टाः, तच्चानुसन्धानम् मनोवृत्यात्मकम्। तथा च यजुरादिस्वरूपं मनोवृत्तिघटितम्, एवं प्रमाजनकत्वमपि न स्वरूपेणैव वेदवाक्यानां किन्तु मानसवृत्तिरूपेणैवेति। अनेन मनोमयेन प्रमाणात्मकेनाविषयोऽप्यात्माऽऽवरणभङ्गद्वारा प्रकाश्यते" इत्यभिप्रायेण मन्त्राणां मनोवृत्तिरूपत्वमुक्त्वा मनोवृत्तोनां सदा चिद्व्याप्तत्वेन चिदात्मतां ब्रुवता भाष्यकृता विशेष्यचैतन्य-

अनादिनिधनत्व को यथाश्रुत असङ्गत मानकर नव्यवैयाकरणों ने उसकी यावत् सृष्टिकालावास्थितत्व की व्याख्या की है। विशेष्य चैतन्यमात्र की विवक्षा के अभिप्राय से तो वाक्यपदीयोक्त अनादिनिधनत्व भी यथाश्रुत मानना ही समीचीन है।

अतएव तैत्तिरीयोपनिषद् के भाष्य में श्रीमद्भगवत्पाद ने भी कहा है कि—"मनोवृत्त्युपाधि....." (मनोवृत्त्यवच्छिन्न मनोवृत्तिनिष्ठ यजुःशब्द से व्यवहार्य अनादिनिधन आत्मचैतन्यस्वरूप आत्मविज्ञान हो मन्त्र है। इससे वेदों का नित्यत्व भी उपपन्न हो जाता है। सभी वेद जिसमें एक हो जाते हैं, वह मनोवृत्त्यवच्छिन्न मन का भी

मानसीन आत्मे'ति श्रुतिर्नित्यात्मनैकत्वं ब्रुवत्यृगादीनां नित्यत्वे समञ्जसा स्या" दिति तैत्तिरीयभाष्ये भाषितम्। "वागेव विश्वाभुवनानि जज्ञे वागेवेद बुभुजे" इत्यादिश्रुतिरपीत्थमेव योजनीया। मध्यमावस्थतत्तद्रवाकारा मनोवृत्तिरत्र विवक्षितोपाधिः। समष्टौ तु तादृशी मायावृत्तिर्वक्तुं शक्या। मानसीनः—मनोवृत्त्यवच्छिन्नः। एवञ्च मन्त्रात्मकचैतन्येन बोध्यमपि चैतन्यमित्युपाधिमात्रभेदे सति वाच्यवाचकसामान्ययोरैक्यमुक्तप्रायमेव। वाच्यवाचकविशेषावपि त्वीरितरीत्या परा चितिशक्तिर्निर्वर्णितमायामहिम्ना विश्वमयोभविष्णुतया

भुवनानि जज्ञे = भुवनाद्यात्मना जाता। अन्तर्भावितण्यर्थतायां तु भुवनानि जनितवतीत्यर्थः। यदा कदाचिज्जनयतीत्येव वा। बुभुजे – कालस्याविवक्षितत्वात् पालयति संहरति च, भुज पालनाभ्यवहारयोरिति स्मरणात्। उपांशुजप्यमन्त्रसंग्रहाय मध्यमावस्थेति। उपाधिमात्रेति। स्थूलसूक्ष्मनादेत्यर्थः।

मात्रविवक्षयैवानादिनिधनत्वं प्रतिपादितम्। स मानसीन इति। साक्षितया मनसि भवो मानसीनः। वागेवेति। वाक्शब्देन परावाक् ग्राह्या। सा हि परब्रह्मस्वरूपा, तच्च स्वभावतो निस्तरङ्गमप्युपाधिवशात्सतरङ्गम्, अतस्तत एव सर्गः। तत्र कोऽसावुपाधिरिति जिज्ञासायामाह—मध्यमावस्थेति। व्यष्टिदृष्ट्येत्यादिः, अग्रे समष्टावित्युक्तत्वात्। एवञ्चेति। मन्त्राणां चिद्रूपत्वे।

ननु चिदात्मकमन्त्रस्य वाच्याभावः, चैतन्यस्यैकत्वात्, तस्य च मन्त्रात्मकतया वाचकत्वात्, यदि च चैतन्यस्यैव वाच्यत्वमुररीक्रियते, कथं तर्हि तस्यैव वाचकत्वं, तत्त्वस्य भेदघटितत्वात्। अन्यथा वाच्यवाचकभाव एव न स्यादिति चेन्न किं वाच्यवाचकसामान्ययोर्निषेध उत तद्विशेषयोः। नाद्य इत्याह—मन्त्रात्मक चैतन्येनेति। चैतन्यमिति। इति शब्दो हेत्वर्थः। न द्वितीय इत्याह—वाच्यवाचकविशेषाविति। अपिना तद्सामान्ययोरिव तद्विशेषयोरप्यैक्यमेवेतिध्वनितम्। न च तर्हि वाच्यवाचकभावाभावः, तस्य कल्पिततयैव निर्वाहादित्याह—ईरितरीत्येति। विश्वमयो भविष्णुतया =

साक्षी-चैतन्य ही आत्मा हैं। नित्यात्मरूप से वेदों के एकत्व का प्रतिपादन करती हुई यह श्रुति ऋगादि के नित्यत्व में भी सरलतया प्रमाण मानी जा सकती है) इसी प्रकार "वागेव·····" (वाग ही समस्त भुवनों को उत्पन्न करती है और वही पालन तथा संहार भी करती है) इत्यादि श्रुतिवाक्यों की भी योजना करनी चाहिए।

मध्यमावस्थ तत्तत्शब्दाकारा मनोवृत्ति ही यहाँ उपाधि विवक्षित है। समष्टि की दृष्टि से तो मायावृत्ति ही उपाधि कही जा सकती है। मानसीन शब्द का अर्थ मनोवृत्यवच्छिन्न है। एवञ्च मन्त्रात्मक चैतन्यरूपवाचक का वाच्य भी चैतन्य ही है। अतः उपाधिमात्र का ही भेद होने से वाच्यवाचक सामान्य का अभेद ही उक्तप्राय है।

विश्वमयीभवनशीलतया। वाच्यवाचकविशेषयोः स्वात्मसात्करणे हेतुः। तयोः स्वात्मसात्करणञ्च चिच्छक्त्यात्मनैवावस्थानम्, सर्वाभेदप्रधानायां परावस्थायां सर्वस्यापि चिदात्मनैवावस्थानात्। एषैव निस्तरङ्गा दशा। [ग्राह्यग्राहक-कल्लोलरहिता] शैवदिशा परमशिवावस्था, वेदान्तदिशा निर्विशेषावस्था। अत एव श्रुतिः "सदेव सोम्येदमग्र आसीत्" इति। तस्या एवापरावस्था पश्यन्त्यवस्था।

अत्रेदमवधेयम्—एकस्यैव चैतन्यस्यौपाधिकभेदमाश्रित्य चतस्रः खलु वाचः परा पश्यन्ती मध्यमा वैखरी इति। तत्र—

परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥

इत्युक्त्यनुसारेण मूलाधारस्थिता शब्दब्रह्मरूपा स्पन्दशून्या विन्दुरूपिणी परावागुच्यते। नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता मनोगोचरीभूता ज्ञानात्मकत्वात्पश्यन्ती वागुच्यते। ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्ये मा बुद्धिर्यस्या इति व्युत्पत्त्या मध्यमावागुच्यते। तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रमता च मूर्धानमाहत्य परावृत्य च तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या विशेषेण खरत्वाद् वैखरी वागुच्यते। शाब्दिकास्तु—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्॥

इति हर्युक्त्यनुसारेण पश्यन्ती मध्यमा वैखरीति त्रिविधत्वमेव वाचोऽङ्गीकृत्य पश्यन्तीमेव वाचं परावाक्शब्देन व्यवहरन्ति।

यद्यपि मञ्जूषायां नागेशभट्टेन परापश्यन्ती मध्यमावैखरीभेदेन वाचश्चतुष्ट्वमव्यधायि। तच्च चत्वारि वाक्परिमिता इति भाष्योदाहृतश्रुतिमूलकमपि। अत एव माधवेनापि ऋग्वेदभाष्ये चत्वारि वाक्परिमितापदानीत्यनेन वैखरीमध्यमापश्यन्तीपरारूपाणि दर्शितानि। व्याख्यातञ्चैवमेवोद्योते। परिहृतश्च तत्रैव "पश्यन्ती तु लोकव्यवहारातीता, योगिनां तत्रापि प्रकृतिप्रत्ययविभागावगतिरस्ति, परायां तु नेति त्रय्या इत्युक्तमि"त्युक्त्या हरिविरोधोऽपि नागेशेन। तथापि कैयटेनोक्तश्रुतेस्तत्र चतुर्णाम् नामाख्यातोपसर्गनिपाताख्यानां पदजातानामेकैकस्य चतुर्थभागं मनुष्या अवैयाकरणा वदन्ती"ति व्याख्यातत्वेनोक्तनागेशादिव्याख्यानानामागमवासनामूलकत्वात्त्रित्वमेव वाचः शब्दशास्त्रे। अत एव पराप्रतिपादनावसरे "विन्दोरित्यादिप्रपञ्चसारतन्त्रोक्तिः

स्वात्मसात्कुर्वती तयोर्भेदाविकल्पतद्विकल्पात्मकपश्यन्तीमध्यमादशाम-
समुत्थापिता। अत एव च श्रीसोमानन्दपादैः शिवदृष्टौ शाब्दिकमत-
त्वेन—

इत्याहुस्ते परं ब्रह्म यदनादि तथाक्षरम्।
तदक्षरं शब्दरूपं सा पश्यन्ती परा हि वाक्॥

(शिव दृ० २।२) इत्युक्तम्।

हरिवृषभेन स्वोपज्ञवृत्तौ च पश्यन्त्या एव वाचश्चलाचलशब्देन परापर-विभागः कृतः, परन्तु नासावतिरिक्ता वाक्। एवमुक्तहर्युक्तेरपि वाचस्त्रित्वे एव तात्पर्यमिति सुधीभिर्विभावनीयम्।

श्रीमन्महेश्वरानन्दाचार्यस्तु ज्ञानेच्छाक्रियात्मनाप्येताः प्रत्यपादि। तथा हि—

वैखरी नाम क्रिया
ज्ञानमयी भवति मध्यमावाक्।
इच्छा पुनः पश्यन्ती
सूक्ष्मा समरसा वृत्तिः॥

(महा० म० ४९) इति।

"वाक्तत्त्वं तावत्क्रमात्—सूक्ष्मा पश्यन्ती मध्यमा वैखरी इति चतुर्धा भिद्यते। तत्र वैखरीति ताल्वादिकरणव्यापारे प्रसिद्धा या क्रियाशक्तिरित्यध्यव-सीयते। मध्यमा च बुद्धिवृत्तिमात्रं प्रवर्त्यमानत्वात् ज्ञानशक्तिः। पश्यन्ती पुनरिच्छाशक्तिः—बहिःप्रसरणाभ्युपगमरूपत्वात्तस्याः, यतः पश्यन्तीति व्युत्पत्तिः। सूक्ष्मा तु शिखण्ड्यण्डरसन्यायादुक्तवाक्त्रयशवली (कृत) स्वभावा प्रत्यग्दृशः परमेश्वरस्योद्योगलक्षणा वृत्तिराख्यायते, परावाक् तु पुनस्तस्यैव परमेश्वरस्य स्वरूपमनुप्रविशन्ती परिस्फुरति" इति च तत्रैव।

तयोरिति। वाच्यवाचकविशेषयोः। पश्यन्त्यवस्थायां वाच्यवाचक-विशेषासूत्रणसत्वेऽपि भेदेनावभासो नास्ति। अतः सा तयोर्भेदाविकल्पावस्था इत्युच्यते। मध्यमा च तस्या एव परायास्तृतीयास्था। अस्यां तद्भेदस्यास्फुटा-वभासो भवतीति सा तद्भेदविकल्पावस्था। वैखरी तस्यास्तुरीयावस्था। तस्यां वाच्यवाचकविशेषभेदः स्फुटतरमवभासते।

पूर्वोक्तरीति से पराचिति शक्ति ही निर्वर्णित माया के माहात्म्य से विश्वमयी भवनशील होने से वाच्यवाचक विशेष को स्वात्मसात् करती हुई उन (वाच्यवाचकविशेष) के भेद की अविकल्प दशा अर्थात् वाच्ययाचकविशेष के भेद की कल्पना हो जिसमें न हो, ईदृशदशा तथा तादृशभेदकी विकल्पदशा अर्थात् जिसमें भेद की न्यूनाधिक कल्पना

धिशय्य वैखरीभूमौ भेदं स्फुटतरं भासयन्ती तत्तद्व्यवहारं निर्वाहयति । एवञ्च "अक्षरमम्बरान्तधृते" रित्यधिकरणे प्रणवस्य तत्प्रतिपाद्यब्रह्मणश्च भेदव्युत्पादनं भाष्यकृतां प्रणवपदेनोपाधिमात्रविवक्षयेति न विरोधः। बृहदारण्यकद्वितीयाध्यायभाष्ये "अनेके हि विलक्षणाश्चेतनाचेतनरूपाः सामान्यविशेषाः, तेषां पारम्पर्यगत्या यथैकस्मिन् महासामान्येऽन्तर्भावः प्रज्ञानघने" इतिग्रन्थेन वाच्यवाचकात्मकसकलप्रपञ्चस्य ब्रह्मरूपताभिधानं त्वधस्ताद्विवेचितरीति मनसि निधायैव । एवञ्च वाक्शक्तिरेव चितिरित्यनुक्त्वा चितिरेव वाक्शक्ति·

ननु वाच्यवाचकयोरभेदस्वीकारे भाष्यविरोधः "यदपि ओंकार एवेदं सर्वमिति तदपि ब्रह्मप्रतिपत्तिसाधनत्वात्स्तुत्यर्थं द्रष्टव्यमित्यादिना वाच्यवाचकयोर्ब्रह्मप्रणवयोर्भेदस्य भाष्यकृता प्रतिपादनादिति चेत्तं परिहरति—एवञ्चेति। तथा च तत्र मनोवृत्यवच्छिन्नप्रणवस्य वाचकत्वादौपाधिको भेदो विवक्षित इति न विरोधः ।

बृहदारण्यकद्वितीयाध्यायभाष्य इति । "स यथा वीणायै" बृ० २।४।९) इत्यादिश्रुतिव्याख्यानभाष्ये इति शेषः । सामान्यविशेषाणां परस्परविलक्षणचेतनाचेतनरूपाणामेकस्मिन्नेव ब्रह्मणि पर्यवसानं भवतीत्याह—तेषामिति। पारम्पर्यगत्येति । तेषां स्वस्वसामान्येऽन्तर्भावद्वारा । अधस्ताद्विवेचनरीतिमिति। मन्त्रात्मकचैतन्येन बोध्यमपि चैतन्यमित्युपाधिमात्रभेदे सति वाच्यवाचकसामान्ययोरैक्यमुक्तप्रायमेवेति पूर्वोक्ता रीतिः ।

ननु वाक्शक्तेर्वाचकत्वेन मनोवृत्यवच्छिन्नचैतन्यरूपतया परिच्छिन्नत्वेन वाच्यायाश्च चितेः शुद्धतयाऽपरिच्छिन्नत्वेन न वाक्शक्तिमुद्दिश्य चितित्वविधानमुचितम्, परिच्छिन्नेऽपरिच्छिन्नस्य समावेशासम्भवात् घटाकाश एव आकाश इतिवदित्याकलय्याह—एवञ्च वाक्शक्तिरेवेति । समञ्जसं स्यादिति ।

सम्पन्न हो चुकी हो, ईदृशविकल्पात्मक पश्यन्ती-मध्यमादशा का आश्रयण कर वैखरीभूमि में भेद का स्पष्टतया भासन करती हुई वाच्यवाचक विशेष व्यवहार का निर्वाह करती है ।

एवञ्च "अक्षरमम्बरान्तधृतेः" इस अम्बराधिकरण में भाष्यकार श्रीमद्भगवत्पाद का प्रणव तथा तत्प्रतिपाद्य ब्रह्म का भेद प्रतिपादन भी विरुद्ध नहीं है, क्योंकि वहाँ प्रणवपद से उपाधिमात्र की विवक्षा है ।

बृहदारण्यक उपनिषद् के द्वितीयाध्यायभाष्य में "अनेके····" (परस्पर विलक्षण अनेक चेतनाचेतन सामान्यविशेषपदार्थ हैं । उन सबका जिस प्रकार प्रज्ञानघनरूप एक ही महासामान्य में अन्तर्भाव होता है ।) इत्यादि ग्रन्थ से भाष्यकार ने जो वाच्यवाचकात्मक सकल प्रपञ्च के ब्रह्मरूपता का कथन किया है, वह पूर्वप्रदर्शित सरणि को

रिति मण्डनमिश्रैरुच्यमानं समञ्जसं स्यात्। अनुस्यूतस्याकल्पितत्वं व्यभिचारिणश्च कल्पितत्वमित्यत्रागमा अपि भजन्तेऽनुकूलतामित्याकलनीयं किल कौलैरपीति प्रोक्तं पुरा।

इदन्त्ववधेयम्—तत्तदर्थविषयकासत्त्वापादकाज्ञानविरोधिचिन्निष्ठतया तत्तदर्थविषयकेच्छाजनकतावच्छेदकज्ञानत्वस्य, वृत्तिविशेषावच्छिन्नचिन्निष्ठतया चान्येच्छानधीनेच्छाविषयत्वयोग्यत्वरूपसुखत्वस्यापि कदाचित्त्वेऽपि तदुपलक्षितव्यक्तेरिव तत्तद्रवसम्पृक्तचिन्निष्ठतया वाग्रूपत्वस्य कादाचित्कत्वेऽपि तदुपलक्षितव्यक्तेर्ब्रह्मस्वरूपलणक्षत्वाभ्युपगमे ज्ञानानन्दरूपैव चितिरितिवत् वाक्शक्तिरेव चितिरित्यप्युक्तिर्न दुष्यतीत्येषा दिक्।

कौलैरिति। कुलं परसंवित्तत्त्वं षट्त्रिंशत्तत्त्वसमुदायश्च, तदुपगन्तृभिः, परसंवित्तत्त्वप्राप्त्युपायेष्वागमदर्शितोपासनाऽऽचारात्मकेषु निरतैरिति चार्थः। युक्तियुक्तं स्यादित्यर्थः।

विभक्तस्य नाकल्पितत्वं कौलैरपि मन्तुमुचितमित्याह—अनुस्यूतस्येति। तत्त्वञ्च स्वतादात्म्यविषयतानिरूपितविषयत्वाभावानाश्रयचेत्यकेत्वम्। स्वं = चितिः। व्यभिचारित्वञ्च परस्परतादात्म्येन भासमानत्वाभाववत्त्वम्। प्रोक्तं पुरेति। स्वातन्त्र्यवादे।

उपलक्षणविधया तु मण्डनोक्तिरपि न दोषावहेत्याह—इदन्त्ववधेयमिति। तदुपलक्षितव्यक्तेरिवेति। तादृशज्ञानत्वोपलक्षितचिद्व्यक्तेः, तादृशसुखत्वोपलक्षितचिद्व्यक्तेश्चेव। तदुपलक्षितव्यक्तेरिति। वाग्रूपत्वोपलक्षितचिद्व्यक्तेरित्यर्थः। ब्रह्मस्वरूपलक्षणत्वेति। सत्यज्ञानानन्दाद्यात्मकलक्षणत्वस्वीकारे। फलितमाह—ज्ञानानन्दरूपैवेति। प्रकृतार्थमुपसंहरति—वाक्शक्तिरेव-

मन में रखकर ही किया गया है, अतः विरोध नहीं है। एवञ्च "वाक्शक्तिरेव चितिः" ऐसा न कहकर "चितिरेव वाक्शक्तिः" ऐसा यदि मण्डनमिश्र कहते तो अधिक सामञ्जस्य होता।

"अनुस्यूत पदार्थ अकल्पित (सत्य) होता है तथा व्यभिचारि पदार्थ कल्पित (मिथ्या) होता है। इसमें आगमशास्त्र भी अनुकूल है", यह कौलसम्प्रदायवेत्ताओं को भी ज्ञातव्य है, यह पूर्वदर्शित है।

यहाँ यह अवधातव्य है कि तत्तत् पदार्थविषयक-अज्ञानाविरोधिचिन्निष्ठ होने से तत्तत्पदार्थविषयक इच्छाजनकतावच्छेदक ज्ञानत्व के सुखाकारावृत्तिविशेषावच्छिन्नचिन्निष्ठ होने से अन्येच्छानधीनइच्छाविषयत्वयोग्यत्वरूपसुखत्व के कादाचित्क (अनित्य) होने पर भी जैसे तदुपलक्षित ज्ञान-सुखादि व्यक्ति सदातन है। उसी प्रकार तत्तत् शब्द सम्पृक्त चिन्निष्ठ होने से वाग्रूपता के कादाचित्क होने पर भी तदुपलक्षित चिद् व्यक्ति तो शुद्धब्रह्मस्वरूपात्मक ही है। ऐसी स्थिति में उस चिति के विषय में जैसे कहा जा

## द्वैतप्रथाप्रयोजनचिन्ता

किञ्च विवर्तवादानभ्युपगमे सृष्टयादिकमपि नोपपद्यते, तथाहि—परमेश्वरोऽनाप्तकामो वाऽऽप्तकामो वा, आद्ये तस्य संसारित्वप्रसङ्गः द्वितीये तु कथं प्रपञ्चोल्लासनप्रवृत्तिः, च हसितादिसाम्यम्; तत्रापि स्वानन्दप्रकटनादेः

एषा दिगिति। विमर्शरूपाया वा चितौ विमर्शतोषनायिकाया वा स्वभावभूतशक्तेः स्वरूपालोचनं किञ्चित्कृतं किञ्चिच्च करिष्यमाणं दिगर्थो ज्ञातव्य इत्यनया रीत्या विमर्शात्मकप्रकाशतापक्षोऽपि शक्यत एव व्यवहर्तुम्। विमर्शस्यान्तर्लीनताबहिरौन्मुख्ये चानुपद चिन्तिते एव।

चितिरिति। दिगर्थो व्यक्तष्टीकायाम्।

## द्वैतप्रथाप्रयोजनचिन्ता

निष्पोडितस्वातन्त्र्यवादशब्दाद्वैतवादयोर्विवर्तवादे पर्यवसानमुक्तम्। अथेदानीं सृष्ट्याद्यन्यथानुपपत्त्यापि विवर्तवाद एव सिध्यतीत्याह—किञ्चेति। सृष्ट्यादिकमिति। स्थितिप्रलयावादिपदार्थः। अनुपपत्तिप्रकारमारचयति—तथाहीति। संसारित्वप्रसङ्ग इति। आप्तकामत्वप्रतिपादकश्रुतिविरोधस्याप्युपलक्षणमेतत्। आप्तकामत्वे—चेतनप्रवृत्तीनां सप्रयोजनत्वनियमात्, 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इत्युक्तत्वादिति जगदुत्पादनाय प्रवृत्तस्य परमेश्वरस्य किं परकीयं प्रयोजनं किं वा स्वकीयं, आद्ये—परानुग्रहो वा स्यात् परनिग्रहो वा, नोभयथापि, तत्र परस्यैवाभावात्। नापि द्वितीयः। श्रुतिसिद्धस्याप्तकामस्य परमेश्वरस्य स्वकीयप्रयोजनाभावादित्याशयेनाह—द्वितीये त्विति।

ननु प्रयोजनमन्तरैव हास्यं यथा तथा प्रकृतेऽपि प्रयोजनमन्तरैव जगदुत्पादनाय प्रवर्तिष्यते परमेश्वर इति चेत्तत्राह—न च हसितादिसाम्यमिति। न च न हीत्यर्थः। तत्र हेतुः—तत्रापीति। हास्यादावपीत्यर्थः।

सकता है कि—"ज्ञानानन्दरूपैव चितिः", वैसे ही "वाक् शक्तिरेव चितिः" यह कथन भी दोषावह नहीं है।

## द्वैतप्रथाके प्रयोजनको चिन्ता

किञ्च विवर्तवाद के न मानने पर सृष्ट्यादि भी अनुपपन्न हो जायेंगे। कैसे ? तो यहाँ विचार करें—परमेश्वर अनाप्तकाम है या आप्तकाम। यदि उसे अनाप्तकाम

**प्रयोजनस्योत्प्रेक्षणसम्भवात्, आनन्दोच्छलत्तादिरूपाणां तेषां बहिर्मुखताविशेषरूपतयेह बहिर्मुखतायां बीजस्य वक्तव्यत्वाच्च, स्वाभाविकत्वेऽनिर्मोक्षप्रसङ्गात्, अतएव—अत्र निमेषादिसाम्यम्, देवस्यैष स्वभावोऽयमित्युक्तेरिति-न वाच्यम्, स्वाभाविकत्वेऽपि मिथ्यात्वेऽभीष्टसिद्धेरिति मायावादे एवेदं समञ्ज-**

ननु प्रवृत्त्युद्देश्यत्वं प्रयोजनत्वं कार्यत्वाद् विलक्षणम्, तच्च हसितादिस्थले आनन्दप्रकटनादौ क्वचित्स्यात्, न तु सर्वत्र, अनिच्छतोऽपि हसिताद्युत्पादादित्यस्वरसादाह—आनन्दोच्छलत्तेति। इह = जगदुत्पत्तये प्रवृत्ते परमेश्वरे। न च तत्र बीजसापेक्षा बहिर्मुखता, अपि तु स्वाभाविकी सेति चेत्तत्राह—तस्या स्वाभाविकत्व इति। तादृशबहिर्मुखतात ईश्वरस्यानिर्मोक्षिप्रसङ्गादित्यर्थः। अत एवेति। अनिर्मोक्षप्रसङ्गादेव। न वाच्यमिति योजना। यथा प्रयोजनाभावेऽपि निमेषोन्मेषयोः स्वाभाविकी प्रवृत्तिस्तथैव परमेश्वरस्यापि। तत्राचार्योक्ति दर्शयति—देवस्यैष इति। स्वाभाविकत्वेऽपि तस्य सत्यत्वं वा स्यात् मिथ्यात्वं वा स्यात्, अन्यस्याभावात्, "परस्परविरोधे हि न प्रकारान्तरास्थितिरित्युक्तेः। तत्र नाद्योऽनिर्मोक्षप्रसङ्गात्, उपयन्नपयन् धर्मो विकरोत्येव धर्मिणमिति नयेन विकारित्वावगतेः। द्वितीये त्विष्टापत्तेरित्याशयेनाह—स्वाभाविकत्वेऽपीति। अभिष्टसिद्धिर्विवर्तवादे पर्यवसानम्, चित्सत्ताऽतिरिक्तसत्ताशून्य-

माने तो वह संसारी जीव हो जायेगा और यदि द्वितीय पक्ष—आप्तकाम मानें तो प्रपञ्च के उत्पादनार्थ उसकी प्रवृत्ति कैसे होगी, [ क्योंकि निष्प्रयोजन प्रवृत्ति होती नहीं और परमेश्वर आप्तकाम होने से निष्प्रयोजन है। ]

यदि कहा जाय कि जैसे हसने आदि में पुरुष निष्प्रयोजन ही प्रवृत्त होता है। उसके समान परमेश्वर भी निष्प्रयोजन ही सृष्ट्यादि में प्रवृत्त हो जायेगा, तो यह कथन उचित नहीं, क्योंकि हसने आदि में भी स्वकीय आनन्द को प्रकट करना ही पुरुष का प्रयोजन है ऐसी उत्प्रेक्षा ( कल्पना ) की जा सकती है। आनन्द के उच्छलन की वहिर्मुखता विशेष ही तो हास्य है, अतः अन्तःजायमान आनन्द के उच्छलन के समान परमेश्वर की आनन्दोच्छलत्तारूप वहिर्मुखता का क्या प्रयोजन है, यह भी कहना होगा। यदि उस बहिर्मुखता को स्वाभाविक मान लिया जाय, तो परमेश्वर का उससे अनिर्मोक्ष प्रसङ्ग हो जायेगा।

अत एव—परमेश्वर की प्रपञ्चोल्लासन प्रवृत्ति निमेषादि के समान है। जैसे निमेष उन्मेष क्रिया करने में किसी प्रयोजन की अपेक्षा नहीं होती, स्वतः स्वभावत ही होती रहती है, वैसे ही परमेश्वर की प्रपञ्चोल्लासन प्रवृत्ति स्वतः स्वभावत ही होती रहती है चूंकि "देवस्यैष......" [ परमेश्वर का पञ्चकृत्यपरायण होना स्वभाव है। ] यह वचन मिलता है। यह कथन भी उचित नहीं है क्योंकि इस प्रकार से उसे स्वाभाविक

सम् । यत्तु—कृतार्थानामाप्तकामानामेव क्रीडादिप्रवृत्तिरुल्लासात्, प्रार्थना-परिक्लिष्टचेतसां तु रतिविरहिणामनभिमतैव क्रीडा भवति, न च वैषम्यनैर्घृण्य-दोषः, न हि मायाकारस्य विविधं प्रपञ्चं दर्शयतोऽङ्गसाकल्यवैकल्यविभागेन

त्वमिति यावत् । मायावादे एवेदमिति । इदम् = सृष्ट्यादिकम् । समञ्जसम् यौक्तिकमित्यर्थः ।

चेतनप्रवृत्तेः प्रयोजननिबन्धनत्वेऽपि परमेश्वरस्य चाप्तकामत्वेऽपि न जगदुत्पादनाय परमेश्वरस्य प्रवृत्त्यनुपपत्तिः, तस्य क्रीडारूपत्वादित्यभिप्रायकं ब्रह्म-सिद्धिकारोक्तं दर्शयति—यत्त्विति । यथा लौकिक्यां क्रीडायां कृतकृत्यानां प्राप्तसर्वकाम्यकानां निश्चिन्ततया प्रवृत्तिरनुपद्रुता भवति, तथैवाप्तकामस्यापि परमेश्वरस्य प्रवृत्तिर्भविष्यतीति भावः । एवकारेण वासनाविषयप्रेप्सून् व्यावर्त-यति । तेषां प्रवृत्त्यनुपपत्तिमुपपादयति—प्रार्थनेति । इदं मे भूयात्, अदः प्राप्नुयामिति वासनाविष्टचेतसां तु तत्रैव व्यग्रतया क्रीडायां रूचेरभाव इत्यर्थः ।

ननु कांश्चित्सुखिनः कांश्चिद्दुःखिन उत्पादयतः परमेश्वरस्य रागद्वेष-वत्त्वं संहरतश्च सर्वं निर्दयत्वं स्यादिति चेन्नेत्याह—न च वैषम्यनैर्घृण्यदोष इति । तत्र दृष्टान्तः—न हीति । यथा मायिकस्य ( ऐन्द्रजालिकस्य ) माया-निमित्तकविविधप्रपञ्चोत्पादनप्रदर्शनेऽपि तस्य प्रातिभासिकत्वेन व्यावहारि-कत्वाभावान्न वैषम्यनैर्घृण्यदोषवत्त्वं तथा महामायिकस्य परमेश्वरस्यापि मायिकप्रपञ्चोत्पादने न तद् दोषवत्वप्रसङ्ग इति भावः । तदपीति । ब्रह्मसिद्धि-

मान भी लें तो मिथ्यात्व मानने पर अभीष्ट सिद्धि होगी, ऐसी स्थिति में इसका माया-वाद में ही सामञ्जस्य बनता है ।

ब्रह्मसिद्धिकार ने जो यह कहा है कि —"कृतकृत्य आप्तकाम पुरुषों को ही स्वाभाविक उल्लास ( उत्साह ) से क्रोडा आदि में प्रवृत्त होती है । सांसारिक पुरुषों का चित्त अपने इष्टलाभ हेतु प्रार्थना करने में ही परिश्रान्त रहता है, अतः क्रोडा-विषयक राग न होने से इन्हें क्रोड़ा करना अभिप्रेत नहीं हो सकता । [ अतः परमेश्वर के आप्तकाम होने पर भी प्रपञ्चोल्लासनार्थं प्रवृत्ति हो सकती है । ] परमेश्वर में वैषम्य-नैर्घृण्य दोष भी नहीं है । जैसे किसी मायावी (जादुगर) के द्वारा दिखाये गये नानाविध प्रपञ्च में किसी अंश की परिपूर्णता तथा किसी अंश की विकलता को देखकर भी मायावी के मन में उस प्रपञ्च के प्रति राग-द्वेष नहीं होता, वैसे ही परमेश्वर नानाविध-विषम सृष्टिकर्ता होने पर भी तद्विषयक रागद्वेषवान् न होने से वैषम्यनैर्घृण्य दोष युक्त भी नहीं है ।" यह ब्रह्मसिद्धिकार का कथन भी प्रपञ्चमिथ्यात्ववाद में ही सुशोभित होता है ।

रागद्वेषविभाग इति; तदपि प्रपञ्चमिथ्यात्ववाद एव शोभते, न वा तत्रापि, वैषम्यनैर्घृण्यपरिहारेऽप्याप्तकामत्वस्यासम्भवात्—तद्धि कामसामान्यशून्यत्वं वा प्राप्तसर्वकाम्यकत्वं वा, उभयथापि प्रवृत्तेरिच्छाव्याप्यत्वेन तदभावेऽसम्भवात्। द्वितीयस्य निर्विशेषतत्त्वे प्रसक्तेरेवाभावाच्च। मायानिबन्धतत्प्रसक्तौ च विषयलाभेनैव रतेरसम्भवात्, रतिसद्भावे चानवाप्तकामताया आवश्यकत्वादिति। ननु किमुक्तविकल्पद्वयेन, यतः स्वयमेव स्वेछापूरणक्षमः परमेश्वर इत्युक्तौ संसारित्वादिप्रसङ्गाभावादितिचेन्न, द्वैतमनुद्धास्य बोद्धास्य वा स्वेच्छा-

कारोक्तमेतदपीत्यर्थः।

न वा तत्रापीति। प्रपञ्चमिथ्यात्ववादेऽपि। तत्र हेतुः—वैषम्यनैर्घृण्यपरिहारेऽपीति। आप्तकामत्वासम्भवं दर्शयति—तद्धीति। तदाऽऽप्तकामत्वपरामर्शः। तदभावेऽसम्भवादिति। इच्छाया अभावे प्रवृत्तेरभावात्। व्यापकाभावाद् व्याप्याभाव इतिनियमात्। आप्तकामस्य चेच्छाऽसम्भवात्। प्रारब्धस्थले इच्छानिच्छापरेच्छा चेत्याद्युक्त्या प्रवृत्तेरिच्छाव्याप्यत्वाभावेऽपि बुद्धिपूर्वकप्रवृत्तेरिच्छाव्याप्यत्वमेव। परमेश्वरे च प्रारब्धाभावात्। यद्वा अनिच्छास्थले इच्छायामौत्कट्याभावः। विषयलाभेनैवेति। मायावशाद् विषयस्य चिदात्मन्येवाध्यस्तत्वादित्यादिः। आवश्यकत्वादिति। "आत्मारामोऽप्यरीरमदि" त्यादावपि भक्तेच्छापरिपूर्तिः काम्यते एवानुकम्पकेनेति न प्राप्तसर्वकाम्यकत्वमिति भावः।

परमेश्वरोऽनाप्तकामो वाऽऽप्तकामो वेति विकल्पद्वयस्य वैयर्थ्यमाशङ्कते—नन्विति। किमाक्षेपे। कथन्तां निराचष्टे—यतः स्वयमेवेति। विकल्पान्तर-

अथवा प्रपञ्चमिथ्यात्ववाद (विवर्तवाद) में भी ब्रह्मसिद्धि का कथन युक्तिसह नहीं है क्योंकि उस पक्ष में वैषम्यनैर्घृण्य दोषों का परिहार होने पर भी परमेश्वर में आप्तकामत्व नहीं बन सकता। कैसे ? तो विचार करें—वह आप्तकामत्व क्या है ? कामसामान्यशून्यत्व है या प्राप्तसर्वकाम्यकत्व, इन दोनों ही पक्षों में प्रवृत्ति के इच्छाव्याप्य होने से इच्छा के अभाव में प्रवृत्ति भी नहीं हो सकती। और द्वितीयकल्प—प्राप्तसर्वकाम्यकत्व भी सम्भव नहीं है क्योंकि निर्विशेषतत्त्व में वह (प्राप्तसर्वकाम्यकत्व) प्राप्त ही नहीं है। यदि माया निमित्तक तत् (प्राप्तसर्वकाम्यकत्व) प्रसक्ति मान भी ली जाय, तो विषय के लाभ होने से तद्विषयक रति (राग) उसमें नहीं हो पायेगी। और यदि तद् विषयक राग का सद्भाव मान लें तो तद्विषयक रति के रहने से अनाप्तकामता को भी मानना आवश्यक हो जायेगा।

यदि शङ्का करें कि उक्त विकल्पद्वय करने से क्या लाभ है। क्योंकि "परमेश्वर स्वयं ही स्वेच्छापूरणक्षम है" ऐसा कहने मात्र से ही संसारित्वादि प्रसङ्ग निरस्त हो

पूरणक्षम इति विकल्पसम्भवात्, आद्ये द्वैतप्रतीतेरपलापापत्तेः, द्वितीये तु द्वैतस्य मृषात्मताया उक्तत्वेन विवर्तवादः समापतित एव, न हि तत्र तादृश-विकल्पसम्भवः, आप्तकामत्वेऽपि भ्रान्तेः प्रयोजनानपेक्षत्वात्। तदिदमाहुर्म-

## ऐश्वर्यस्य तदुत्थद्वैतप्रथायाश्च स्वाभाविकत्वम्

भ्रान्तेः प्रयोजनानपेक्षत्वादिति। अत्र स्वहृदयमेतत्प्रकरणान्ते वक्ष्यति, तेन—यस्य भ्रमो मुख्यजीवस्य वा जीवाभासस्य वा तस्यापि भ्रमविषयान्तर्गततयाऽन्यनिष्ठभ्रम-विषयत्वेन कल्पितत्वसमर्थनेऽनवस्था, ईश्वरस्तु नास्ति मुख्यजीवातिरिक्तः सन् वा सर्व-ज्ञोऽसौ न भ्रमभाजनमिति—शङ्का न प्रसज्यते। यदि च मुख्यजीवोऽनादिरेव व्याव-हारिकः, तदापि 'यः सर्वज्ञः सर्वविदि'त्यादिश्रुत्यादिविषयोऽसावेव चेन्न भ्रान्तोऽसौ स्यात्, यदि चान्योऽपि स्यात्, तदापि सर्वज्ञस्य तस्य सर्वशक्तिमत्ताया अप्यावश्यकत्वेन शक्तेश्च कुर्वद्रूपतायाः स्वाभाविकतयाऽवार्यत्वेन निरङ्कुशैश्वर्यशीलस्य विलासः किलायं द्वैतभ्रमस्फारः स्यादितिवक्ष्यमाणार्थे पर्यवसानम्। न च मुख्यजीवेन कल्पितः सर्वज्ञः प्रातिभासिक एव; यतो जीवो व्यावहारिक ईश्वरस्तु प्रातिभासिक इति सात्त्विकचेतसा न भवानपि मन्येत। न चासर्वज्ञः स सर्वज्ञं कल्पयितुमपि शक्नोति; न चास्मदादिवच्छ-क्नुयात्, शास्त्रादिमूला ह्यस्माकं कल्पना, न च तस्यापि स्यादेवम्, शास्त्रनिर्माणमूलभूत-कल्पनाया अप्यन्वेषणीयत्वात्। न चास्माकं स्वप्ने यथा भगवत्कल्पना तथा तस्यापि स्यात्; स्वाप्नकल्पनाया जाग्रत्कल्पनामूलकसंस्कारोत्थत्वात्। अथ पूर्वपूर्वकल्पोपलब्ध-कल्पनामूलकसंस्कारनिचयस्तस्यापि नाल्प इति चेत्, किमेतावता? इदम्, यत्परमेश्वरो नास्ति कश्चिद्व्यावहारिकः किन्तु प्रातिभासिककल्पनामात्रजीवातुरेवेति चेदेवं तर्हि जीवस्यापि व्यावहारिकत्वं त्याज्यमिति तस्यापि किन्निष्ठकल्पनाप्रयुक्तत्वमिति दुरुत्तर-मापद्यते। मुख्यजीवो व्यावहारिकः; परमेश्वरस्तु प्रातिभासिक इत्येवमभ्युपजिगमिषुस्तु कस्य गुरोः कृपापात्रमिति चिरं चिन्तयन्तोऽपि न विद्मः।

सम्भवोक्त्या निरूक्तशङ्कामुच्छिनत्ति—न, द्वैतमनुद्भास्येति। उद्भासनं वास्तव-मवास्तवं वेति विकल्प्याद्यं निरस्यति—आद्ये इति। द्वितीयेत्वाह—द्वितीय इति। न हि तत्रेति। विवर्तवादवर्त्मनि। तादृश विकल्पः = परमेश्वर आप्तकामो वाऽनाप्तकामो वा। हेतुं योजयति—आप्तकामत्वेऽपीति। भ्रान्तेः प्रयोजनान-

जायेंगे। तो यह शंका उचित नहीं क्योंकि परमेश्वर द्वैत का उद्भावन न करके स्वेच्छा पूरणक्षम है, अथवा द्वैत का उद्भावन करके? यह विकल्प कर सकते हैं। इसमें यदि प्रथमपक्ष मानें तो द्वैतप्रतीति का अपलाप हो जायेगा। और यदि द्वितीयकल्प मानें तो द्वैतमिथ्यात्व के पूर्व प्रतिपादित होने से उससे विवर्तवाद ही सिद्ध होगा। क्योंकि विवर्तवाद में इस प्रकार का विकल्प करना सम्भव नहीं है। परमेश्वर के आप्तकाम होने पर भी विना प्रयोजन ही भ्रान्ति हो सकती है। [ कारण कि भ्रान्ति

शुक्तिरजतादिवदीश्वरस्य कल्पितत्वं हि न विशेष्यांशमादाय स्यात् तस्य नित्य-
चिद्रूपत्वात्, किन्तु विशेषणांशं मायात्मकमादाय, तस्य च यदि शुक्तिरजतादिवत्प्राति-
भासिकत्वं तदा कोऽन्योऽपि जीवत्वप्रयोजक उपाधिर्व्यावहारिक इति वक्तव्यम्, मनः
प्रभृतेरपि मायासमुत्थिततयाऽभ्युपगतत्वेनेदानीं व्यावहारिकताया वक्तुमशक्यत्वात् । अथ
जीवोऽप्यन्यनिष्ठकल्पनाप्रयुक्ततया प्रातिभासिक एव, अनवस्थितान्धपरम्पराऽभ्युपगमे तु
लज्जा त्याज्यैवास्माभिरिति चेत्, संस्काराणां स्थायिताया औचित्यानीतत्वेन प्रातिभासि-
ककल्पनानधीनतायाः प्रागुपवर्णितत्वात् । अथैवमस्तु संस्कारराश्यवच्छिन्नश्चेतन एव जीवो
व्यावहारिकः, ईश्वरस्तु गतो दृष्टिसृष्टिगर्भे एवेति चेच्चेतने संस्कारसद्भावप्रयोजकतया
मूलशक्तेरावश्यकताया उक्तत्वात् । चेतनस्य स्वयमेव पूर्वपूर्वसंस्कारद्वारोत्तरोत्तरकल्पना-
जालैरभिनवसंस्कारोपार्जनमनुमन्यताम्, प्रपञ्चप्रवाहानादितायाः केनापि त्यक्तुमशक्यत्वा-
दिति चेच्चितेरेवं सति कौटस्थ्यप्रच्यवप्रसङ्गात् । अनुभवसिद्धैस्तैस्तै रूपैः सा केवलं
भात्येवेत्येव वक्तव्यम्, गत्यन्तराणां निरस्तत्वात्, न हि दिक्कालतदवच्छिन्नानां बाह्यानां
निरासे दिक्कालातीतानाधेयातिशयचितेरेव परिशेषे च काचिदन्या गतिः स्यादिति
चेदनागन्तुकचितेरागन्तुकभानात्मकतानुपपत्तेः । ननु स्वस्वनिरूपकसंवलितानां विषयितानां
तावन्मिथ्यात्वमेव प्रागुपवर्णितप्रकारैः, एवं च तासां यातायातैः परमार्थचितेः कौटस्थ्य-
च्युतिप्रसक्तेर्दर्शयितुमशक्यतया स्वभाव एव तस्यास्तथाविधः कोऽपि येनासावागन्तुकतया
शून्याऽपि तद्वती प्रतीयते परमिति स्वीक्रियतामिति चेत्तादृशस्वभावस्यैव सर्वपर्यनुयोगा-
योग्यस्य स्वातन्त्र्यापरपर्यायैश्वर्यपर्यवसायिनः शक्तिशब्देनोदितत्वात् । ईदृशस्वभावबा-
बाभिप्रायेणैव—

'सति दीप इवालोकः सत्यर्क इव वासरः ।
सति पुष्प इवामोदश्चिति सत्यां जगत्तथा ॥'

इति महोपनिषदि निविष्टः श्लोको विलोक्यः । न च वाच्यम्—ऐश्वर्यस्य तत्समुत्थ-
जगतश्च चित्स्वभावत्वे सत्यत्वं प्रसज्यत इति; चिद्भिन्नत्वादिनैव मिथ्यात्वं न तु चिद्रू-
पेणापि क्वचिदित्यस्योपपादितत्वात् । न च निर्वर्णितचितस्तादृशस्वभावोऽसम्भावनीय
इति भणनीयम्, यतस्तदन्यस्य विलोपे तस्या एवासौ सम्भावनीय इति ब्रूमः ।

अथैवमुच्येत, किमीदृशस्वभाववादाश्रयणेन, निर्विशेषतत्त्वावगतिर्यदि सम्पन्ना,
तदा तद्वतो दृष्ट्या कदाचिदपि द्वैतप्रतिभासस्याभावेनैव तत्र कल्पकस्य तत्सहकारि-
विशेषस्य वा जिज्ञासाऽनुपपन्ना, यदि तु तादृशावगतिशून्यो जनः, तदा निर्विशेषेऽपि
वस्तुतत्त्वे को वा द्वैतकल्पनाया उल्लासक इति कथं शङ्काप्युदीयात्, आपाततो यदि
निर्विशेषचिन्मात्रमवगत्य शङ्केत, तदापि विचारधाराधौतस्वान्तताराहित्येन किञ्चिद-
विचारितरमणीयं कारणं परिकल्प्य तुष्येदसौ, न तु तावता वस्तुगतिरसौ स्यादिति
निष्कारणक एव द्वैतप्रतिभास इति युक्तम्, अभ्रान्तेन निर्विशेषचिन्मात्रविदुषा कारण-
स्यानिर्णीतत्वादिति; तदेतत्तुच्छतरम्, निर्विशेषचिन्मात्रे कथं द्वैतप्रतिभास इति संशय-

ण्डनमिश्रादयः--"न हि गन्धर्वनगरादिविभ्रमा' समुद्दिष्टप्रयोजना भवन्ती" ति। एवञ्च "क्रीडां करोति सृष्ट्यादिक्रमेण सर्वसाक्षिणी" त्यादिनिष्प्रयोजनत्वनि-

स्यानिवारणे निर्विशेषतत्त्वस्यैवानिर्णीतताप्राप्तेः, एवं च यद्यस्ति सद्योमोक्षपक्षः, तदा शास्त्रप्रणेतृबद्धजनजनितनिर्णयस्याविश्वसनीयतया गता दयनीयतां मोक्षकथा निरालम्बा, प्रसक्तं च तदाश्रयाणां शास्त्राणामनपवदनीयमप्रामाण्यम्। यदि तु नास्ति तादृश-पक्षः, तदा जीवन्मुक्तेनैव प्रसक्तद्वैतप्रतिभासेन दूरीकरणीयोऽसौ संशयः, यदाह— 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इति। न च वाच्यम्—जीवानां ज्ञानेन सद्योमोक्षेऽपीश्वरप्रणीतशास्त्रादेव तत्त्वनिर्णयोऽन्येषां स्यादिति; द्वैतप्रतिभासोत्थापका-निर्णये निर्विशेषतत्त्वे ईश्वरत्वस्य वक्तुमशक्यत्वादिति।

यदि तु कश्चिद्ब्रूयात्—भवतु मायाशक्त्यवच्छिन्नं ब्रह्मैवेश्वरः, तस्य प्राति-भासिकत्व तु प्रतिभाससमनियततया शुक्तिरजतादिवदस्त्येवेति; तत्रेत्थं प्रतिवक्तव्यम्, यदि किञ्चिद्व्यावहारिकं वस्तु स्वीकृत्य तत्र प्रातिभासिकलक्षणसमन्वयमात्रकृते सतत-मनुवर्तमानः प्रतिभासः स्वीक्रियेत तद्विषयकः, तदा को विवादः, कादाचित्कप्रतिभास-समनियतरजतादिविलक्षणतायास्तस्मिन् वस्तुन्यागतत्वादेव। प्रतिभासोऽपि चासौ यदाकदाचिद्यत्किञ्चिच्छरीरावच्छेदेन सविकल्पको निर्विकल्पको वा वर्तत एवेत्येवं सतत-मनुवर्तमानतया प्रतिवादिनं प्रति नोपपादयितुमुचितः, सांशयिकत्वात्। अचिन्त्यशक्तिमत्त्वेन रूपेण चितो निर्विकल्पकागोचरत्वाच्च, अहमर्थादिविषयकप्रतिभासानां च तादृशचिद-विषयकत्वात्। शरीरविशेषानवच्छेदेनैव तादृशप्रतिभासोपपादनं त्वीश्वरस्य सर्वज्ञतया स्वविषयकप्रतिभासस्यापि तस्मिन् सत्त्वेनादरणीयमेव, किन्तु नैतावता न तस्य व्याव-हारिकत्वमिति।

तस्मान्निरूपितं स्वभावविशेषात्मकमैश्वर्यमेव 'न हि स्वभावो भावानां व्यावर्ते-तौष्ण्यवद्रवेः' इति न्यायेनानाद्यनन्तमादाय चितेर्जगत्कल्पकत्व मति तादृश्या एव तस्या दृष्टिसृष्टिः शरीरविशेषानवच्छेदेन, तदवच्छेदेन तु सृष्टिदृष्टिरेवेत्येव युक्तमुत्पश्यामः। भावना तु विजातीयशान्तरसलिप्सुना सर्वथैव द्वैतनास्तितायाः अलीकतापर्यन्तधाविन्या अपि कार्या केन निराक्रियेतेति।

पेक्षत्वमाचार्योक्त्या प्रमाणयति—तदिदमाहुरिति। वाचस्पतिमिश्र आदिपदार्थः। समुद्दिष्ट प्रयोजना इति। प्रयोजनस्योद्देश्यत्वघटितत्वेऽप्यत्र समुद्दिष्टेति पृथगुपादानात् कार्यत्वरूपत्वम्। आगमवचनमपि तत्र दर्शयति - एवञ्च क्रीडा-

के लिए किसी प्रयोजन की अपेक्षा नहीं होती। ] अतएव मण्डनमिश्रादि ने कहा है कि—"न हि गन्धर्व ..........'' [ गन्धर्व नगरादि भ्रम किसी प्रयोजन की अपेक्षा नहीं रखते। ]

रायासत्वाभिप्रायेणैवावगन्तुमुचितम् । भ्रमश्च भ्रमाहितसंस्कारमूलोऽपि, कस्यचिद्वचसा रज्ज्वादावेव सर्पत्वप्रत्ययवतो बालस्य तत्सदृशे पुनः सर्पत्वप्रत्ययोद्भवदर्शनात्, प्रमात्वस्याप्रयोजकत्वाच्चेति न सत्यप्रपञ्चान्तरसिद्धिप्रसङ्गः । वस्तुतस्तु भ्रमाहितसंस्कारमूल एव, हट्टस्थरजतशुक्तिरज-

मिति। अत एव तट्टीकाकृद्भिरपि—क्रीडां करोतीति परसंविदात्मनः सृष्ट्यादौ न प्रयोजनान्तरमिति सूचितमित्युक्तम्।

ननु भ्रान्तेः प्रयोजनानपेक्षत्वेऽपि तद्विषयकभ्रान्तेः तद्विषयक ज्ञान पूर्वकत्वनियमान्न सा सम्भवति, भ्रान्तेः प्राक् प्रपञ्चस्यासत्त्वेन तत्प्रमासम्भवादितिचेत्तत्राह—भ्रमश्चेति। संसारस्यानादित्वेन पूर्वपूर्वविभ्रमजन्यसंस्कारजन्यैवोत्तरोत्तरभ्रान्तिरिति भावः।

अथवा—प्रपञ्चो यदि भ्रान्तिविषयः स्यात्तर्हि सत्यप्रपञ्चपूर्वकः स्यात्, प्रपञ्चो यदि कल्पितः स्यात्तदा सत्यप्रपञ्चपूर्वकः स्यान्न चैवम्, तस्मान्न कल्पितः नापि तज्ज्ञानस्य भ्रान्तित्वमितिचेन्नेत्याह—भ्रमश्चेति। भ्रमो ह्यारोप्यप्रतीतिमात्रं तत्संस्कारञ्चापेक्षते न तु तद्विषयस्य सत्यत्वम्, अनुपयोगात्। तदुक्तम् भामतीपतिना—"अप्रतीतस्यारोपायोगादारोप्यस्य प्रतीतिमात्रमुपयुज्यते न वस्तुसत्ता" इति। तथा च प्रपञ्चस्यानादित्वात्पूर्वपूर्वविभ्रमजन्यसंस्कारेणैवोत्तरोत्तरप्रपञ्चभ्रान्तिसम्भव इति भावः। एतेनारोप्यप्रपञ्चसंस्कारसिद्धौ प्रपञ्चारोपसिद्धिस्तत्सिद्धौ च प्रपञ्चसंस्कारसिद्धिरिति परस्पराश्रयोऽपि निरस्तः। अपिना प्रपञ्चसत्यत्ववादिनां क्वचित्प्रमाहितसंस्कारमूलकत्वमपि न क्षतिकरमिति ध्वनितम्। अथवा—सत्तात्रयपक्षे प्रपञ्चस्य व्यावहारिकसत्तासद्भावाद् व्यावहारिकप्रमाजन्यसंस्कारमूलकत्वमपीत्यपिना ध्वनितम्।

भ्रममूलकत्वमेव दर्शयति—कस्यचिद्वचसेति। न च प्रमाजन्यसंस्कारस्य भ्रमहेतुत्वम्, मानाभावात्, भ्रमजन्यसाधारणसंस्कारत्वेन भ्रमहेतुत्वे लाघवाच्चेत्याह—प्रमात्वस्याप्रयोजकत्वाच्चेति।

एवञ्च "क्रीडां करोति........" [ सर्वसाक्षिणी चितिशक्ति श्रीश्रीकुमारी सृष्ट्यादिक्रम से क्रीडा करती है ] इत्यादि वाक्य भी निष्प्रयोजनत्व एवं निरायासत्व के अभिप्राय से कहे गये हैं, ऐसा मानना उचित है। यह कहने की आवश्यकता नहीं है कि भ्रम के लिए भी सप्रपञ्च की अपेक्षा होगी, क्योंकि भ्रमाहितसंस्कारमूलक भी भ्रम होता है। जैसे किसी के वचन से रज्जू में ही सर्पत्वप्रकारक ज्ञान होने वाले बालक को तत्सदृश रज्जु आदि में पुनः सर्पत्वभ्रम होते देखा जाता है। उस ज्ञान में प्रमात्व होना भी भ्रम के प्रति कारण नहीं है। अतः उस भ्रम के द्वारा सत्य प्रपञ्चान्तर की सिद्धि नहीं माना जा सकती।

वस्तुतस्तु भ्रम को भ्रमाहितसंस्कारमूलक भी हट्टस्थरजत और शुक्तिरजत दोनों में

तयोराविद्यकत्वाविशेषात्, स्वप्नजागरयोरविशेषमधिकृत्य चोक्तम्। किञ्च नानिर्वाच्यवादिना भ्रमत्वं व्यवस्थापनीयम्, अपि तु प्रमात्वं खण्डनीयम्,

अधिकृत्य चोक्तमिति। 'आशामोदकतृप्ता ये' इतिश्लोकशारदायाम्। कथञ्चित्-स्वप्नजागरयोर्विशेषान्तरसम्भवेऽप्याविद्यकत्वं समानमेव, अविद्या हि ब्रह्मस्वरूपतिरोधायिका शक्तिः, एवं च रज्जुसर्पादेरिवाधिष्ठानस्वरूपतिरोधानप्रयुक्ततया प्रपञ्चस्य विवर्तत्वं मिथ्यात्वाविनाभूतं भणितभङ्ग्येति जागरावगमानां भ्रमत्वं शुद्धब्रह्मातिरिक्त-गोचराणां निर्बाधमिति भ्रमाहितसंस्कारमूल एव भ्रम इति पक्षो निरुपप्लवः। एवं चेश्वरदृष्ट्या दृष्टिसृष्टिरस्मदाद्यपेक्षया तु सृष्टिदृष्टिरितिनिष्कृष्टकल्पेऽपि नासङ्गतिः, ईश्वरस्य जीवन्मुक्तस्य च बाधकालीनद्वैतज्ञानवत्त्वेऽप्यस्मदादेर्भ्रमाश्रयतया एव वाच्यत्वात्।

सत्ताद्वयपक्षे सर्वप्रपञ्चस्य प्रातिभासिकत्वमाश्रित्याह—वस्तुतस्त्विति। प्रपञ्चभ्रान्तिमभ्युपेत्य परमेश्वरस्य प्रयोजनानपेक्षसृष्टिकर्तृत्वं दर्शितम्। वस्तुतस्तु न साऽपि व्यवस्थापनीया, भ्रान्तेरपि याथार्थ्याङ्गीकारेऽनिर्वाच्य-वादित्वभङ्गप्रसङ्गादित्याशयेनाह—किञ्चेति। शारदायामिति। खण्डनशारदा-याम्। तत्र तत्त्वानुभूतिः प्रमा, यथार्थानुभूतिः प्रमा, सम्यक्परिच्छित्तिः प्रमा, अव्यभिचार्यानुभूतिः प्रमा, अविसंवाद्यनुभूतिः प्रमा, अबाधितानुभूतिः प्रमेत्या-दिलक्षणखण्डनावसरे—तत्त्वं यदि प्रमितापरपर्यायं विषयतानिविष्टं तदाऽऽत्मा-श्रयः; यदि च याथार्थ्यापरपर्यायं विषयिणि विशेषणं तदा यथार्थत्वस्य तत्त्वविषयत्व-रूपत्वे तत्त्वानुभूतिप्रमेत्यादावेव विश्रान्तिरतस्तन्निरासेनैव निरस्तम्। अर्थ-सदृशत्वरूपत्वे च सादृश्यस्य सर्वात्मना स्वीकारे कस्यापि ज्ञानस्य सर्वात्मनाऽर्थसा-दृश्याभावादसम्भवः, येनकेनचिद् रूपेण स्वीकारे च व्यभिचारोऽपि प्रमेयत्वा-दिनाऽर्थसादृश्यस्य सत्त्वेन प्रमात्वापातः। एवं स एवायं घट इत्यादिप्रत्यभि-ज्ञायां साङ्कर्यादिदूषणसद्भावादनुभूतित्वस्य जात्यादिरूपत्वमपि न वक्तुं शक्य-मित्यादिरीत्या प्रमात्वस्य विचारासहत्वं दर्शितम्।

ननु यथा भ्रमत्वव्यवस्थापनमन्तरैव ममाभिप्रेतं प्रमात्वं खण्ड्यते त्वया, तथैव मया प्रमात्वव्यवस्थापनमन्तरैव त्वदभिमतं भ्रमत्वं खण्डयिष्यते इति चेत्तर्हि चिरं जीव्यताम्, मदीयानिर्वाच्यत्ववादित्वस्य त्वयैव निर्वाहात्। व्यवस्थापनं हि प्रमिततया ज्ञापनं, तस्य भ्रमत्वेऽपि ममानिष्टत्वात्। प्रमात्वं मया खण्डितं, भ्रमत्वञ्च त्वयेत्यनिर्वाच्यत्वस्यैव पर्यवसानादित्याह—न च मयेति। स्वातन्त्र्य-

आविद्यकत्व के समान होने से स्वप्न तथा जागरावस्था में भी साम्य मानकर कहा गया है। किञ्च अनिर्वाच्यवादि वेदान्ती को भ्रमत्व सिद्ध नहीं करना है, अपितु केवल प्रमात्व

तत्खण्डनं च शारदायां द्रष्टव्यम्। न च मयापि प्रमात्वं न व्यवस्थापनीयम्, अपि तु भ्रमत्वं खण्डनीयम्; प्रमात्वखण्डने सति विषयसत्यताया असिद्धेर्भ्रमत्वखण्डनस्येष्टत्वात्।

ननु भवत्वेवं तथापि भ्रान्ति कस्य? वस्तुतोऽङ्ग! न कस्यापि, यथा-

वादिना। न च वक्तुं शक्यमितिशेषः।

ननु कस्येयं भ्रान्तिः, न तावद् दृश्यस्य तस्य जड़तया प्रमाणप्रयोजनाभावादविद्यावरणाभावेनाज्ञानाश्रयत्वाभावे भ्रान्त्याश्रयत्वानुपपत्तेः। नापि दृशः, तत्र ब्रह्मणो वा स्यादीश्वरस्य वा जीवस्य वा। न तावद् ब्रह्मणः, तस्य स्वप्रकाशस्वरूपतया तमःप्रकाशवदविद्याया विरुद्धस्वभावत्वेनाज्ञानाश्रयत्वानुपपत्त्या भ्रान्त्याश्रयत्वानुपपत्तेः। आत्मवदनिवृत्तिप्रसङ्गाच्च। नापीश्वरस्य, तस्य "यः सर्वज्ञः सर्वविद्" इतिश्रुत्या सर्वज्ञत्वबोधनाद् भ्रान्त्याश्रयत्वानुपपत्तेः। तस्य भ्रान्तत्वे "यः सर्वज्ञः" इति श्रुतिबोधितसर्वज्ञत्वविरोधात्। नापि जीवस्य, तत्र हि मुख्यजीवस्य वा जीवाभासस्य वा, नोभयथापि, तयोर्भ्रमविषयान्तर्गतत्वादित्याशयेनाशङ्कते—ननु भवत्वेवमिति। प्रष्टारमुत्तमाधिकारिणं मत्वाऽजातवादमाश्रित्य समाधत्ते—वस्तुतोऽङ्ग! न कस्यापीति। अङ्ग इति सम्बोधनेनोत्तमाधिकारिणं प्रति स्नेहं व्यनक्ति। अजातवादपक्षे हि "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम्" (मु० १।६) "न तत्र चक्षुर्गच्छति न वागच्छति नो मनो न विद्मो न विजानीमो, यथैतदनुशिष्यादन्यदेव तद् विदितादथो अविदितादधि" (के० १।३) इत्यादि श्रुतिसिद्धमेकमेव तत्त्वम्। तदतिरिक्तस्य सर्वस्यापि सर्वथैवाभावाच्च न जीवेश्वरविभागोऽपि। अतएव बन्धमोक्षव्यवस्थाविरहोऽपि। तदुक्तमधस्तात् "न निरोधो न चोत्पत्तिः" "संसारोऽस्ति न तत्त्वत" इत्यादिनात्र। अन्यत्रापि—

स्वतो वा परतो वापि न किञ्चिद् वस्तु जायते।
सदसत्सदसद्वापि न किञ्चिद् वस्तु जायते॥ (मा० का० ४।२२)
न किञ्चिञ्जायते शान्तान्न किञ्चित्प्रविलीयते।

का खण्डन ही करना है, और वह खण्डन-शारदा में द्रष्टव्य है। यदि कहा जाय कि मुझे भी प्रमात्व की व्यवस्था नहीं करना है अपितु केवल भ्रमत्व का खण्डन ही करना है? तो ऐसा नहीं कह सकते, क्योंकि प्रमात्व का खण्डन होने पर विषय की सत्यता सिद्ध नहीं हो सकती, और भ्रमत्व का खण्डन हमें भी इष्ट है।

प्रश्न—मान लेते हैं कि विवर्तवाद के अनुसार समस्त संसार भ्रम है किन्तु यह बतावें कि यह भ्रान्ति किसको है?। उत्तर—तात? वस्तुतः किसी को नहीं,

स्वसत्तायां स्थितं ब्रह्म न बीजं न च कारणम् ॥
शुद्धानुभवमात्रं तत्तस्मादन्यन्न विद्यते।
किञ्चिज्जगदहंतादि तदेवानन्तमस्ति हि ॥
( योग० वा० ६।९६—१-२ ) इति।

अयमेव च मुख्यो वेदान्तसिद्धान्तः यत्रानुपदमेव वक्ष्यन्त्याचार्याः— "यत्तु सुरगुरुणापि न शक्यं खण्डयितुं तदेव मुख्यो वेदान्तसिद्धान्तः" इति। तथा चैतत्पक्षे न कस्यापि भ्रान्तिः, किन्त्वीश्वरानुग्रहवशाद् व्यपगतापाप्मसंस्पर्शतया नितान्तनिर्मलस्वान्तैः शान्तसमाहितचेतोभिरुत्तमाधिकारिभिरेवानुभवगोचरीक्रियतेऽयम्, न त्वनुत्तमाधिकारिभिः। अतएव तत्कृतेऽभाणि—

निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥
( वे० कल्प० १।१।२० ) इति।

तथा च तत्कृते मायिकीदशामुपेत्याह—यथा व्यवहारन्त्विति। भवादृशामस्मादृशाञ्चेति। जीवत्वाभिमानिनां शरीरेन्द्रियादिपञ्जराध्यक्षाणाम्। ईदृशानामेव भ्रान्तिः। तथा चोक्तं श्रीमद्भगवत्पादैः—"सर्वो हि जीव पश्यन्श्रृण्वन्मन्वानो विजानन् व्यवहरति, अन्यथा व्यवहारानुपपत्तेः" ( ब्र० सू० भा० १।३।१९ ) इति। जीवो हि नाम चेतनः शरीराध्यक्षः प्राणानां धारयिता तत्प्रसिद्धेर्निर्वचनाच्च" ( ब्र० सू० १।१।६ ) इति च।

एतदुक्तं भवति। यद्यपि सृष्टयादौ संसारस्यानादित्वाद्वा महाप्रलयसमयेऽन्तःकरणादीनामभावात् तदुपाधिकस्य जीवस्याप्यभावाद् भवति तस्य भ्रान्तिविषयान्तर्गतत्वम्, तथापि सत्कार्यवादाभ्युपगमात् स्वकारणेऽनाद्यनिर्वाच्यायामविद्यायां लीनाः सूक्ष्मरूपेणाविद्यावासनाभिः सहावतिष्ठन्ते एव। तथा च स्मृतिः—

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ इति।

ते चावधिं प्राप्य परमेश्वरेच्छाप्रचोदिता यथा कूर्मदेहे विलीनान्यङ्गानि ततो निःसरन्ति, यथा वा वर्षापाये प्राप्तमृद्भावानि मण्डूकशरीराणि तद्वासनावासिततया घनाघनसारसहितानि पुनर्मण्डूकदेहभावमनुभवन्ति तथाऽन्तःकरणादयोऽप्युत्पद्यन्ते। अत एव "जीव ईश" इत्यादिना जीवानामनादित्वमुद्घोषयन्ति। तथा च सर्गकालेऽपि जीवानां सत्त्वेन सम्भवति जीवानां भ्रान्तिरितिभावः।

व्यवहारानुरूप तो आप तथा हमारे समान मानवों को होता है। प्रश्न—वे व्यवहार-

व्यवहारं तु भवादृशामस्मादृशाञ्च । तेऽपि के इति चेत् । वस्तुतो न केऽपि, यथाव्यवहारं तु यथानुभूयन्ते तथैव । तत्किं वस्तुतः शून्यतैव ? न वस्तुतः सापि । वस्तुतस्तु यया प्रागुक्तनयेन क्षणिकतां दुःखरूपताञ्च स्प्रष्टुमप्यपारयन्त्या कालकलनातिपात्यानन्दरूपया चित्या भास्यते सा, सैव । तत्किं भ्रान्तिर्निर्मूलैव ? वस्तुत एवमेतत्, तथाऽप्यनाद्यविद्यामूला सेति प्रक्रिया-

अजातवादमाश्रित्य जिज्ञासापूर्वकं समाधत्ते—तेऽपि के इति चेत्, वस्तुतो न केऽपीति । तदाह—भगवती श्रुतिः—"नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता" ( बृ० ३।७।२३ ) इति ।

अविद्यादशामधिशय्य तु व्यवहारानुरोधिस्वरूपमिष्यते इत्याह—यथा व्यवहारमिति । यथानुभूयन्ते इत्यनेन व्यवहार्यस्यानुभवमात्रसाक्षिकतयाऽनुभवसत्तयैव सत्तावत्त्वं ध्वनितम् । असद्वादी सर्वासत्त्वं शङ्कते—तत्किमिति । परिहरति—न वस्तुतः सापीति । किन्तर्ह्यस्ति चेच्छृणु दर्शनरहस्यमित्याह—वस्तुतस्त्विति । सा शून्यता । सैव चितिरेवेत्यर्थः । सा च न शून्यरूपा "अयमात्मा ब्रह्म सर्वानुभूः" ( बृ. २।५।१९ ) "सदेव सोम्य" ( छा. ६।२।१ ) इत्यादिना सदात्मना तस्या अवधारितत्वात् । अतएव श्रीमद्भगवत्पादाः—"नासौ नास्ति नाधिगम्यते इति वा शक्यं वदितुम्, "स एष नेति नेत्यात्मा" इत्यात्मशब्दात्, आत्मनश्च प्रत्याख्यातुमशक्यत्वात्, य एव निराकर्ता तस्यैवात्मत्वात्" (ब्र. सू. भा. १।१।४) इत्याहुः । श्रुतिश्चात्र भवति भगवती "असन्नेव स भवति, असद् ब्रह्मेति वेद चेत्" (तै. २।६) इति । अत एवावादीत्—

अनादृत्य श्रुतिं मौर्ख्यादिमे बौद्धास्तमस्विनः ।
आपेदिरे निरात्मत्वमनुमानैकचक्षुषः ॥ (प. २।६१) इति ।

ननु चिदतिरिक्तस्य सर्वस्याभावे प्रपञ्चभ्रान्तिरपि निष्प्रामाणिकी स्यादिति चेदिष्टापत्तेरित्याह—तत्किं भ्रान्तिर्निमूलैवेति । तथापीति । यद्यपि न निरोधो न चोत्पत्तिरित्यादिदिशा परमार्थतो नास्त्येव भ्रान्तिरपि, तथापि तादृशपरमार्थदृष्टिशून्यमन्दाधिकारिदृष्ट्या प्रपञ्चस्य दृश्यमानत्वेन स्थितस्य गतिश्चिन्तनीयेतिन्यायेन प्रपञ्चभ्रान्तिरवश्यमुपेया । सा च सृष्ट्यादिप्रक्रियाऽन्यथानुपपत्त्यादिसध्रीचीनश्रुत्यादिभिः कल्प्यमानाविद्यामूलैवेति भावः । प्रमाणा-

कर्ता भी कौन है ? उत्तर—वस्तुतः कोई नहीं, व्यवहारानुसार तो जैसा अनुभव होता है वैसा ही मान लिया जाता है । प्रश्न—तो क्या वस्तुतः शून्यता ही है ?

उत्तर—वस्तुतः शून्यता भी नहीं है । वस्तुतस्तु प्रागुक्तप्रकार से जो क्षणिकता तथा दुःखरूपता से सर्वथा असंस्पृष्ट-कालकलना से बहिर्भूत एवं आनन्दरूप है ऐसी जिस चिति के द्वारा ( शून्यता ) भासित होती है, वही ( चितिशक्ति ही ) है । प्रश्न—तो क्या प्रपञ्चभ्रान्ति निर्मूल ही है ? उत्तर—वस्तुतः ( निर्मूल ) ही है, तथापि प्रक्रिया-

लम्बिभिरालोक्यते। सा चोक्तरीत्यैवावतरीतुं मानपथं कथमपि क्षमत एव। वयं तु शुद्धानिर्वाच्यवादिनोऽविद्यामपास्यैव वर्तमाना लक्षणप्रमाणलोकेऽवलोकितदोषजाला न लेशतोऽपि दोषाविनाभूतप्रक्रियासमर्थनमर्थयामहे। ऊचिरे च श्रीसुरेश्वराचार्याः—

"सेयं भ्रान्तिर्निरालम्बा सर्वन्यायविरोधिनी।
सहते न विचारञ्च तमो यद्वद्दिवाकरम्॥
अविद्याया अविद्यात्वमिदमेवात्र लक्षणम्।
यद्विचारासहिष्णुत्वमन्यथा वस्तु सा भवेत्" ॥ इति।

नामप्यविद्यामूलकत्वात्कथमपीत्युक्तम्। वस्तुस्थितिं दर्शयति—वयन्त्विति। तदिदमाचार्योक्त्या प्रमाणयति—सेयमिति। न्यायो युक्तिः। यतः सत्त्वसाधकयुक्तिविरोधिनी, अतः निरालम्बा। यद्विचारेति। सत्त्वप्रकारकप्रतीत्यविषयत्वे सत्यसत्त्वप्रकारकप्रतीत्यविषयत्वे सति सदसत्त्वप्रकारकप्रतीत्यविषयत्वं विचारासहिष्णुत्वम्। प्रमाणवचनं विचारशब्दः। तथा चाविद्याया अवस्तुत्वात्तत्र प्रमाणयोग्यता नास्ति। तथा चानुमानम्—अविद्या मानायोग्या अवस्तुत्वात् शशविषाणवत्। अविद्या यदि प्रमाणयोग्या स्यात् वस्तु स्यात्, वस्तुत्वञ्च ज्ञानानिवर्त्यत्वम्। तच्चाविद्यायां न वक्तुं शक्यम्, तस्या ज्ञाननिवर्त्यत्वात्।

नन्वविद्या मानयोग्या शास्त्रार्थत्वाद् ब्रह्मवदिति चेन्न हेत्वसिद्धेः। सर्वेषां शास्त्रवाक्यानामद्वितीये ब्रह्मण्येव तात्पर्यस्य समन्वयसूत्रादौ प्रतिपादितत्वात्। शास्त्रार्थत्वं हि शास्त्रतात्पर्यविषयत्वं तच्चाविद्यायां नास्त्येव। न चाविद्यासाधकानुमानविरोधः, ज्ञाननिवर्त्यत्वरूपेणैव तेषामविद्यासाधकत्वात्। मानायोग्यत्वं हि सद्रूपतयासाधनानर्हत्वम्, तस्मान्न विरोधः।

वलम्बी वेदान्ती उसे ( भ्रान्ति ) अनादि अविद्यामूलक मानते हैं। और उक्तरीति से ही वे कथमपि उसे ( अविद्या ) प्रमाणित करने में भी सफल होते हैं। किन्तु लक्षण प्रमाणादि में भो दोषद्रष्टा अविद्या का परित्याग कर वर्तमान शुद्ध अनिर्वाच्यवादी हम लोग लेश भी दोष से अविनाभूत प्रक्रिया के समर्थन का प्रयास नहीं करते। श्रीसुरेश्वराचार्य ने कहा है—"सेयं भ्रान्ति………" [ सम्पूर्ण युक्तियों से विरुद्ध यह भ्रान्ति निरालम्ब है अतएव जैसे तम दिवाकर ( आदित्य ) को सहन नहीं करता उसी प्रकार यह ( भ्रान्ति ) सत् असत् आदि विचार को सहन नहीं करती। सत्त्वप्रकारक प्रतीति का अविषय, असत्त्व-प्रकारक प्रतीतिका अविषय एवं सदसत्त्व प्रकारक प्रतीति का अविषय होना जो विचारासहिष्णुत्व है यही अविद्या का अविद्यात्व तथा लक्षण है। अन्यथा अर्थात् तादृश विचार सहिष्णु होने पर वह ( अविद्या ) वस्तु ( यथार्थ ) हो जायेगी। ]

अनीदृशविचारधाराधिरूढमतिस्तु देवताप्रसादमनासाद्य नाद्वैततत्त्वं प्रतिपत्तुं प्रभवतीति तन्मतिमलक्षालनाय नेह यत्नः। येन केनापि यत्किञ्चित्खण्ड्यते तत्सर्वं सविशेषतया मुख्यवेदान्तसिद्धान्तबहिर्भूतमेव, प्रपञ्चमिथ्यात्वादिलक्षणादेरपि निरासस्य शारदायां यथायथं दर्शितत्वात्। यत्तु सुरगुरुणापि न शक्यं खण्डयितुम्, तदेव मुख्यो वेदान्तसिद्धान्तः। तच्च वाङ्मनसागम्यमप्यापातत आकाङ्क्षापनुत्तये एव निर्विशेषं ब्रह्मेत्युच्यते। निर्विशेषे

देवताप्रसादमनासाद्येति। अत एवोक्तम्—

जगद्गुरोरीश्वरस्य सर्वप्रत्यक्स्वरूपिणः।
प्रसादलभ्या विद्यैषा न पाण्डित्यैर्न जल्पनैः ॥ इति
ईश्वरानुग्रहादेषा पुंसामद्वैतवासना।
महाभयकृतत्राणा द्वित्राणां यदि जायते ॥ इति च खण्डने।

वेदान्तप्रतिपाद्यतत्वस्याखण्डनीयत्वं स्फुटयति—येन केनापीति। वेदान्तसिद्धान्त इति। वेदान्तो नामोपनिषद्। सा चोप-समीपे समागतानां स्वपरिशीलनपराणां सहेतुं संसारं सादयति नाशयति तादृशान् वा मुमुक्षुन् परं ब्रह्म गमयति प्रापयतीति व्युत्पत्या ब्रह्मविद्या। अन्तशब्दस्य निश्चयार्थत्वेन वेदान्तशब्दस्यापि तदर्थत्वात्। तादर्थ्याच्च ग्रन्थस्यापि तच्छब्दत्वोपपत्तेः। उपनिषन्मूलकत्वाच्च शारीरकसूत्रतद्भाष्यादयोऽपि वेदान्ताः। तेषां सिद्धान्तस्तात्पर्यविषयीभूतोऽर्थश्चिदात्मा। स च न केनापि निराकर्तुं शक्यः। तदुक्तं श्रीमद्भाष्यकृद्भिः—"आत्मत्वाच्चात्मनो निराकरणशंकानुपपत्तिः। न ह्यात्मागंतुकः कस्यचित्, स्वयंसिद्धत्वात्। न ह्यात्मा आत्मन प्रमाणमपेक्ष्य सिध्यति। तस्य हि प्रत्यक्षादीनि प्रमाणान्यसिद्धप्रमेयसिद्धये उपादीयन्ते। न ह्याकाशादयः पदार्थाः प्रमाणनिरपेक्षाः स्वयंसिद्धाः केनचिदभ्युपगम्यन्ते।

आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात्प्रागेव प्रमाणादिव्यवहारात्सिध्यति। न चेदृशस्य निराकरणं सम्भवति। आगन्तुकं हि वस्तु निराक्रियते न स्वरूपम्।

ईदृशविचारधाराशून्य प्राणी परमेश्वरके कृपाकटाक्ष प्राप्त किये बिना अद्वैततत्त्व का ज्ञान नहीं कर सकते। अतः उनके मतिमल-प्रक्षालनार्थ हमारा प्रयत्न नहीं है। वास्तविकता यह है कि जिस किसी भी वादि प्रतिवादि के द्वारा जो कुछ भी खण्डित किया जाता है वह सभी सविशेष होनेके कारण मुख्य वेदान्तसिद्धान्त के बहिर्भूत हो है। प्रपञ्चमिथ्यात्वादि के लक्षणादि का भो निरास खण्डन-शारदा के तत्तत् स्थलों में दर्शित है। जो सुरगुरू बृहस्पति के द्वारा भी खण्डित न किया जा सके, वही मुख्य वेदान्तसिद्धान्त है। और वह ( तत्त्व ) वाणी मन आदि से अगम्य होने पर भी आपातत आकांक्षा के अपनोदनार्थ निर्विशेष ब्रह्म कह दिया जाता है। "निर्विशेष तत्त्व

न प्रमाणसम्भव इत्याक्षिपंस्तु 'भवदीयवाक्ये निर्विशेषपदं निर्विशेषं बोधयति सविशेषं वा, आद्ये स्थानान्तरस्थेन तेन निर्विशेषबोधनं कुतो न स्यात्, तात्पर्याधीना वृत्तिरितिनीतेर्भवताप्यनुमन्तव्यत्वात्। द्वितीये तु सविशेषे न प्रमाणसम्भव इत्यर्थपर्यवसाने स्वसिद्धान्त एव भवताऽऽक्षिप्तः स्या'दित्येवं प्रतिबोधनीयः। प्रामाणिकत्वव्यापकं सविशेषत्वमितिवदताऽपि सविशेषत्वाभाववति प्रामाणिकत्वाभावबोधोऽऽनुमन्तव्य इति तादृशबोधात्मकप्रमाविषयत्वं निर्विशेषे निर्बाधम्, अन्यथोक्तदोषात्। एवमुक्तव्यापकताज्ञानेन निर्विशेषे

स्थानान्तरस्थेनेति। एतेनालीके न प्रमाणसम्भव इत्याक्षेपेणालीकसिद्धिप्रत्याशा प्रत्यादिष्टा, तावताऽऽक्षेप्तुरलीकबोधाभ्युपगमस्यौचित्यप्राप्तत्वेऽपि तद्बोधे प्रमात्वाप्रसक्तेः, न हि श्रुत्यादिकं तत्र प्रमाणम्, भवद्भिर्विशिष्टतयोच्यमानमेव च वस्तु विशेषणमपास्य वेदान्तिनोच्यते इति कथमलीकत्वशङ्कापीति भावः।

य एव हि निराकर्ता तदेव तस्य स्वरूपम्। न ह्यग्नेरौष्ण्यमग्निना निराक्रियते"। ( ब्र. सू. भा. २।३।७ ) इति। स्थानान्तरस्थेनेति। 'आह च श्रुतिश्चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म—"अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" ( ब्र. सू. भा. ३।२।१६ ) दर्शयति च श्रुतिः पररूपप्रतिषेधेनैव ब्रह्म, निर्विशेषत्वात्—"अथात आदेशो नेति नेति" "अन्यदेव तद् विदितात्" "यतो वाचो निवर्तन्ते" इत्येवमाद्या ( बृ. ।२। ७ ) "अयमात्मा चैतन्यरूपो निर्विशेषो वाङ्मनसातीतः" ( बृ. ३।२।१८ ) इत्यादिवाक्यस्थेनेत्यर्थः।

ननु न वयं निर्विशेषमाक्षिपामः, अपि तु प्रामाणिकव्यापकं सविशेषत्वमिति ब्रूमः। तथा च व्यापकाभावाद् व्याप्याभाव इतिन्यायेन सविशेषत्वाभाववति निर्विशेषेऽप्रामाणिकत्वं सेत्स्यतीति चेन्नेत्याह—प्रामाणिकत्वव्यापकमिति। अन्यथोक्तदोषादिति। तादृश बोधात्मकप्रमाविषयत्वानङ्गीकारे भवद-

में कोई प्रमाण नहीं है" इस प्रकार आक्षेप्ता से कहना चाहिए कि—"आप के वाक्य में निर्विशेष पद निर्विशेष का बोधक है या सविशेष का, यदि प्रथम पक्ष मानें तो उपनिषद् वाक्यस्थ निर्विशेष पद से निर्विशेषतत्त्वका बोध क्यों नहीं होगा। क्योंकि तात्पर्याधीन वृत्तिः [ जिसका जिसमें तात्पर्य होता है वह शक्तिलक्षणान्यतरसम्बन्ध से उसका बोध कराता है। ] इस नियम को आपने भी माना है। यदि द्वितीय पक्ष को स्वीकार करें तो "निर्विशेषतत्त्व में प्रमाण नहीं है" आप के इस वाक्य का "सविशेष में कोई प्रमाण नहीं है" इत्यर्थ में ही पर्यवसान होगा। ऐसी स्थिति में उक्त वाक्य से आपने अपने सिद्धान्त पर ही आक्षेप किया। प्रामाणिकत्व का व्यापक सविशेषत्व है" ऐसा कहने वाले को भी व्यापकाभावाद् व्याप्याभावः नियमानुसार सविशेषत्वाभावाधिकरण में प्रामाणिकत्वाभाव का ज्ञान भी मानना ही होगा। ऐसी

प्रामाणिकत्वग्रहप्रतिबन्ध इत्याद्यभिधानेऽपि द्रष्टव्यम् । अधिकन्तूक्तं शारदायाम् ।

वस्तुतस्तु निर्विशेषे तादृशशब्दप्रयोगोऽपि तस्य मानहानिमानयति । न च वीतरागाणामीदृशो व्यापार इति शान्त्यपाराकूपारा महानुभावा मौनेन तदुपदिशन्ति । तदवोचन्—

चित्रं वटतरोर्मूले शिष्या वृद्धा गुरुर्युवा ।

इत्याद्यभिधानेऽपीति । अयं घट इत्यादावपि घटत्वादिनिष्ठविषयताया आधेयता-सम्बन्धेन घटाद्यवच्छिन्नत्वमभ्युपेत्य या या विषयता सा किञ्चिदवच्छिन्नेति व्याप्त्यभ्यु-पगमोऽप्यप्रयोजकतापराकृत इति भावः । अधिकं तु शारदाराजहंसोपक्रमे मृग्यम् ।

भिमतः सिद्धान्त एवाक्षिप्तः स्यादितिभावः । न चोक्तव्यापकत्वज्ञानेन न प्रामाणि-कत्वाभावबोधोऽनुमन्यतेऽपि तु निर्विशेषे प्रामाणिकत्वग्रहप्रतिबन्ध इत्याशङ्क-नीयम् यतः ग्राह्याभावाद्यवगाहितयैव ज्ञानस्य प्रतिबन्धकत्वनियमात् तादृश-व्यापकत्वज्ञानस्य प्रामाणिकत्वाभावबोधद्वारैव प्रतिबन्धकत्वसम्भवात् तादृश-बोधस्यावश्यं स्वीकर्तव्यत्वापातादित्याशयेनाह—एवमुक्तव्यापकताज्ञानेनेति ।

वस्तुतस्तु निर्विशेषे जात्यादिशब्दप्रवृत्तिनिमित्तानामप्यभावान्न तच्छब्द-बोध्यतापि तत्रेत्याह—वस्तुतस्त्विति । ननु तादृशस्य निर्विशेषतत्त्वस्य कथमुपदेश इति चेत्तत्राह—शान्त्यपाराकूपारा इति । कुं पृथिवीं पिपर्त्तीत्यर्थे पालन-पूरणार्थात्पृधातोः कर्मण्यणित्यणि "अन्येषामपि" इति दीर्घे नञ्समासे चाकूपारः समुद्रः । अविद्यमानः पारो यस्य तादृशः सः । शान्तेरपाराकूपाराः शान्तेरपार-समुद्राः इत्यर्थः परमशान्ता इतियावत् ।

चित्रमिति । अद्‌भूतमित्यर्थः । किन्तत् ? तदाह—वृद्धा इत्यादिना ।

स्थिति में तादृशबोधात्मक प्रमा की विषयता निर्विशेषतत्त्व में मान लेने में कोई बाधक नहीं है । अन्यथा आप का स्वसिद्धान्त ( सविशेषत्ववाद ) ही आक्षिप्त होगा । एवं उक्त व्यापकता ज्ञान ( प्रामाणिकत्वव्यापकं सविशेषत्वम् ) के द्वारा निर्विशेष में प्रामा-णिकज्ञान प्रतिबद्ध होता है" । इस कथन में भी उक्त ज्ञानीय विषयता निर्विशेष में माननी होगी अन्यथा उक्तदोष ही आपन्न होगा । इस विषय में अधिक वक्तव्य शारदा में कह चुके हैं ।

वस्तुतस्तु निर्विशेषतत्त्व में निर्विशेष शब्द का प्रयोग भी उस ( निर्विशेषतत्त्व ) की मान हानि ही करता है । वीतराग महापुरुष निर्विशेषतत्त्व में निर्विशेष शब्द का प्रयोग भी नहीं करते हैं । अतएव शान्ति के अपार सागर अर्थात् परमशान्तावस्थापन्न महानुभाव मौन के द्वारा ही निर्विशेषतत्त्व का उपदेश देते हैं । कहा है—"चित्रं बटतरो......" [ वट वृक्ष के मूल में विराजमान गुरुदेव युवा है और शिष्यगण वृद्ध

गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥ इति ।

न चेदृशावस्थास्थितिर्देवतानुकम्पां विना, न चासौ तदुपासनां विना, जिज्ञासुं प्रति तादृशावस्थाप्राप्त्युपायसरणिमुपदिशति—न चेति। गुरोरिति। तीव्रवारिप्रवाहान्तःपातितृणवत्संसारसागरोर्मिभिरनिशं मोमुह्यमानो जीवो यं शरणीकृत्यात्मस्वरूपविश्रान्तिं लभते स एव गुरुपदवाच्यः। तदुपदर्शितमार्गेणैव जीवः स्वसंवेद्यमात्मानं पश्यति नान्यः पन्था। तदाह जठरसंहितायाम्—

परम्पराप्त-सन्मार्ग-दर्शने यस्य योग्यता।
स गुरुर्भवति श्रीमानात्मविश्रान्तिकारणम् ॥
तेन सन्दर्शितमार्गे स्वसंवेद्यस्य दर्शनम्।
भवतीति गुरुं देवभावेन परिचिन्तयेत् ॥ इति।

सर्वशरीरस्थचैतन्यब्रह्मप्रापको गुरुरूपास्यः ( निराल. उप. ) इति च।

यद्यपि तन्त्रालोकेऽकल्पितोऽकल्पितकल्पकः कल्पिताकल्पितः कल्पितश्चेति भेदचतुष्टयमभिनवोऽभ्युपागमच्चतुर्थाह्निके, तथापि परमशिव एव भगवान् विनेययोग्यतावैचित्र्यात्प्रोक्तभूमिकामभिनयन्निव भवति तत्तद्रूपभागिति प्रकाशविमर्शसामरस्यात्माऽनुग्रहैकवपुः परमशिव एव गुरुः।

स्वप्रकाशशिवमूर्तिरेकिका
तद्विमर्शतनुरेकिका तयोः।
सामरस्यवपुरिष्यते परा
पादुका परशिवात्मनो गुरोः ॥
गुरुराद्याभवेच्छक्तिः साविमर्शमयीमता।
नवत्वं तस्य देहस्य रन्ध्रत्वेन विभासते ॥ (तन्त्रराजः)

कुमारं प्रत्याह परमः शिवः स्वयमेव—

अखण्डैकरसोरुद्र अखण्डैकरसोऽस्म्यहम्।
अखण्डैकरसोह्यात्मा ह्यखण्डैकरसो गुरुः ॥ (तेजोवि. उ. २।६)
"गुरुब्रह्म" ( तेजोवि. उ. ६।३७ )

ॐ श्रीगुरुः सर्वकारणभूताशक्तिः ( भावनोपनिषद् ) इत्यादिनिगमागमवाक्येभ्यः।

अतएव—"गुरुर्गुरुतमो धाम" ( वि. स. ३६ ) इत्यत्र सर्वविद्यानामुप-

हैं। गुरुदेव के मौन व्याख्यान से ही शिष्यगण का संशय उच्छिन्न हो जाता है। ]

ईदृश अवस्था में स्थिति होना परमेश्वर के अनुग्रह के विना सम्भव नहीं है, और वह अनुग्रह भी परमेश्वर की उपासना के विना नहीं हो सकता। परमेश्वर की उपासना श्रीगुरुदेव के कारुण्य ( कृपाकटाक्ष ) के बिना नहीं हो सकती। जिसका

**न चैषा गुरोः कारुण्यं विना, न च यस्य न देशयति देशना दिशं दिशमस्पृशन्त्या अपि दृशस्तस्य गुरुताऽपि, न च यस्य नापारपुण्यपरम्परापरिपाकस्तस्य तादृशगुरोरासत्तिरपीति स्वस्वाधिकारानुरूप्येण काचिदाचर्या चर्यति कृतमनुप्रसक्तेन।**

देष्टृत्वात्सर्वषां जनकत्वाद्वा गुरुः" इति श्रीमद्भगवत्पादः। स च "पूर्वेषामपि गुरुः कालेनानवच्छेदात्" (१-२६) इति च भगवान् पतञ्जलिः। अत एव च –

गुरुं न मर्त्यं ध्यायेत यदि बुध्येत तस्य तु।
न कदाचिद् भवेत्सिद्धिर्न मन्त्रैर्देवपूजनैः॥

इत्युक्तमपि संगच्छते। तत्रैव गुरुतायाः परमविश्रान्तिः। अन्यत्र तु तत्तदाधारवैशिष्ट्येन स्वात्मगतां तां भगवतीमाविर्भावयति भगवान् भूरिभर्गः कृपाकणेन। अतएव—

यत्तासामुपदेशार्थं गुरुत्वं मह्यमर्पितम्।
जगद्गुरोस्तदगुरुत्वं मया ताभ्यः समर्पितम्॥

इति जगद्गुरुमुद्धवोऽभ्यधात्। श्रीगुरुप्रसादाद्धि साधकस्य स्वाभाविकः परमानन्दः समुल्लसितो भवति। तदाह—

स्वप्रकाशवपुषा गुरुः शिवो यः प्रसीदति पदार्थमस्तके।
तत्प्रसादमिह तत्त्वशोधनं प्राप्य मोदमुपयाति भावुकः॥ इति।

अतएव—

किमत्र बहुनोक्तेन शास्त्रकोटिशतेन च।
दुर्लभा चित्तविश्रान्तिर्विना गुरुकृपां पराम्॥

(सि॰ सि॰ पद्धतिः) इत्युक्तिरपि नात्युक्तिः।

न च यस्येति। दिशमस्पृशन्त्या अपि दृशः दृतत्वस्य दिशं न देशयति यस्य देशना = उपदेशस्तस्यैवियोजना। ईदृशस्य गुरोरासत्तिरपि सुदुर्लभेत्याह— न च यस्य नापारपुण्येति। चर्यति। काचिच्चर्या = सृतिरनुसरणीयेत्यर्थः। सा च बुद्ध्यालम्बनेन वा प्राणालम्बनेन वा देहालम्बनेन वेत्यन्यदेतत्।

उपदेश दिशाओं से असंस्पृष्ट दृग्तत्त्व की दिशा को नहीं दिखाता, उसको तादृशगुरुता की प्राप्ति भी सम्भव नहीं है तथा तादृश गुरु की प्राप्ति भी अपार पुण्यपरम्परा के परिपाक के विना सम्भव नहीं है। ऐसी स्थिति में साधकों को चाहिए कि अपने-अपने अधिकार-योग्यता के अनुरूप कुछ चर्या = मार्ग ( परमेश्वरशरणागति ) का आचरण ( अनुसरण ) करते रहे। ( जिससे तादृश गुरु की प्राप्ति हो सके ) यह प्रसङ्गानुगत वक्तव्य हमने कह दिया।

## सर्वज्ञानयाथार्थ्यभङ्गः

ननु यथार्थं सर्वं ज्ञानमिति कथं भ्रान्तिः ? न च धर्म्यंशे ज्ञानमात्रस्य याथार्थ्यं सर्वसम्प्रतिपन्नमेवेति सिद्धसाधनम्; तज्ज्ञानीयविशेष्यताश्रयावृत्तिधर्मस्तज्ज्ञानीयप्रकारत्वाभाववानिति तात्पर्यात्, न च तथापि रङ्गरजतयोरिमे

## सर्वज्ञानयाथार्थ्यभङ्गः

चिदतिरिक्तस्य सर्वस्यापि भ्रान्तित्वाच्चिदेवैकं सन्निर्विशेषमवशिष्टं शरणीकरणीयमित्युक्तम्। तत्र भ्रान्तेरेवाभावात्कथं निर्विशेषावशेषः। ननु तदभाववन्निष्ठविशेष्यतानिरुपिततन्निष्ठप्रकारतानिरूपकत्वात् "इदं रजतमि' त्यादिवित्तेः कुतो न भ्रमत्वमिति मैवं भासिष्ठाः, इदं रजतमित्यादिस्थले धर्मीन्द्रियसन्निकर्षादिदन्त्वेने शुक्तिप्रत्यक्षं, दोषरूपप्रतिबन्धकवशाच्छुक्तित्वाप्रत्यक्षं, सादृश्यसदर्शनोद्भूतोद्बुद्धरजतसंस्कारात् रजतस्मृतिश्चेति ज्ञानद्वयमेव। विशिष्टज्ञानसाध्या पुरोवर्तिनि रजतार्थिप्रवृत्तिस्तु पुरोवर्तिनीष्टरजतादिभेदाग्रहबलेन दोषप्रयुक्तेन धर्मिज्ञानरजतोपस्थितिसहकृतेन साधनीयेत्यस्मत् सिद्धान्तात्। तथा च नास्ति भ्रम इत्यख्यातिवादिनः प्रत्यवतिष्ठन्ते—ननु यथार्थमिति। तथा च विवादास्पदाः सर्वे प्रत्ययाः यथार्थाः प्रत्ययत्वात् संप्रतिपन्नवदित्यनुमानेन सर्वज्ञानयाथार्थ्यसिद्धिः।

सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इतिनियमाद्धर्मिविषयकत्वावच्छेदेनेदंरजतमित्यादिज्ञानस्यापि यथार्थत्वसम्भवादुक्तानुमाने सिद्धसाधनमाशङ्क्य निराचष्टे—न च धर्म्यंश इति। धर्मिविषयकत्वावच्छेदेनेत्यर्थः। यथार्थत्वं हि नार्थमनतिक्रम्य वर्तते इति व्युत्पत्त्या तद्वति तत्प्रकारकत्वरूपप्रमात्वापरपर्यायं येनांशतः सिद्धसाधनं स्यादपि तु तज्ज्ञानीयविशेष्यताश्रयावृत्तिधर्मनिष्ठतज्ज्ञानीयप्रकारत्वानिरूपकत्वम्। तथा चेदं रजतमित्यादिज्ञानीयविशेष्यताश्रयावृत्तिः धर्मस्तादात्म्येन रजतम्। तत्र तादृशज्ञानीयप्रकारत्वाभावस्य भवन्मतेऽसिद्धत्वान्नसिद्धसाधनमिति भावः। इमे रजतरङ्गे इत्यत्र व्यभिचारमाशङ्कते—न च तथापीति। यद्यपि स्वव्यधिकरणप्रकाशावच्छिन्ना या या विष-

## सर्वज्ञानयाथार्थ्यभङ्ग

शंका—सभी ज्ञान यथार्थ ही है फिर भ्रान्ति कैसे हुई। यदि कहें कि धर्मीरूप अंश में ज्ञानमात्र का यथार्थत्व सर्वसम्मत है अतः आपके कथन में धर्म्यंश को लेकर सिद्धसाधन दोष है, तो यह नहीं कह सकते, क्योंकि तज्ज्ञानीयविशेष्यताश्रयावृत्ति धर्म तज्ज्ञानीयप्रकारता के अभाववाला है यह तात्पर्य है। [ भाव यह है कि इदं रजतम् इत्या-

रजतरङ्गे इति ज्ञानप्रकारयो रजतत्वरङ्गत्वयोस्तज्ज्ञानीयविशेष्यावृत्तित्वाभावेन तादृशज्ञानस्य भ्रमत्वाव्यावृत्तिः, तदवृत्तिधर्मस्तन्निष्ठविषयतावच्छेदकत्वाभाववान् तदवृत्तित्वादिति विवक्षितत्वात् । न च रजतत्वेनेदं जानामीत्यनुभवेन रजतत्वावच्छिन्नशुक्तिनिष्ठविशेष्यताकज्ञानसिद्धया बाधः, एवं तद्विशेष्यकतत्प्रकारकप्रवृत्तिं प्रति तद्विशेष्यकतत्प्रकारकज्ञानस्य हेतुतयापि तादृशज्ञानसिद्धौ बाध इति वाच्यम्, भवन्मतेऽपि रजतत्वप्रकारकनिर्णयधर्मितावच्छेदकेदन्त्वप्रकारकनिर्णयोः प्रवृत्तेः पूर्वमावश्यकत्वेन ताभ्यामेव तादृशानुभवप्रवृत्त्यो-

यता तदनिरुपकत्वमिति सर्वांशे प्रमात्वं निरूक्तं गदाधरभट्टाचार्यैः सामान्यनिरूक्तौ । स्वव्यधिकरणो यः प्रकारस्तदवच्छिन्नं यत्स्वं तदनिरूपकत्वमिति च तदर्थः, किन्तु तस्यान्यथाख्यात्यनुसारेण समन्वयसम्भवेऽपि प्रकृतेऽख्यातिमते तादृशविषयताया अप्रसिद्धत्वात्तदुपेक्ष्य प्रकारान्तराभिप्रायेणोक्तव्यभिचारं निराचष्टे—तदवृत्तिधर्म इति । तदा विशेष्यपरामर्शः । धर्मः रजतत्वं रङ्गत्वं वा ।

रजतत्वेनेदं जानामीति प्रत्यक्षेण विमतं ज्ञानं तद्विशेष्यकतत्प्रकारकं तद्विशेष्यकतत्प्रकारकप्रवृत्तिं प्रति हेतुत्वात्संप्रतिपन्नवदित्यनुमाने न च निरूक्तानुमानस्य बाधमुद्भावयति—न च रजतत्वेनेति । अख्यातिवादी निरूक्तप्रत्यक्षानुमानयोरन्यथोपपत्त्या समाधत्ते—भवन्मत इति । तार्किकमतेऽपीत्यर्थः । तथा च तार्किकमते प्रवृत्तेः पूर्वं रजतत्वप्रकारकनिश्चयधर्मितावच्छेदकेदन्त्वप्रकारकनिश्चयाभ्यामतिरिक्तभ्रमात्मकविशिष्टज्ञानस्वीकारे गौरवम् । मन्मते तु ताभ्यां निश्चयाभ्यामेव प्रवृत्त्याद्युपपत्तेर्लाघवमिति भावः । अन्यथाख्यातिवादी शङ्कते—तत्किमिति । तानवम् नैर्बल्यम्, स्वरूपधारणाक्षमत्वात्मकनैष्फल्यमिति यावत् ।

कारक ज्ञान की विशेष्यता का आश्रय इदं पदार्थ है । उस इदं पदार्थ में अवृत्ति धर्म है रजतत्व, उस रजतत्व में इदं रजतम् इत्याकारक ज्ञान की प्रकारता नहीं हैं । अर्थात् इदं रजतम् इत्याकारक ज्ञान रजतत्वप्रकारक नहीं है । प्राभाकर के सिद्धान्त में इदं रजतम् इत्यादि स्थल में दो ज्ञान माने जाते हैं । एक इदम् इत्याकार अनुभव, दूसरा रजतम् इत्याकारक स्मृति, प्राभाकर के मत में प्रमुष्टतत्ताकस्मृति मानते हैं । अतः इन दोनों ज्ञानों को असंसर्गाग्रह के कारण एक मानकर इदं रजतम् इत्याकारक संसृष्ट व्यवहारमात्र होता है । भ्रमात्मक ज्ञान नहीं । अतः तादृशविशेष्यतानिरूपित तादृश ज्ञानीय प्रकारता रजतत्व में नहीं है । अतः सिद्धसाधन दोष नहीं है । ]

यदि कहें कि—एतादृशतात्पर्य होने पर भी जहाँ रङ्ग एवं रजत में इमे रङ्गरजते इत्याकारक ज्ञान होता है वहाँ उस ज्ञान के प्रकारभूत रंगत्व रजतत्व में तज्ज्ञानीय विशेष्यताश्रयावृत्तित्व नहीं है । अतः "इमे रंगरजते" इत्याकारक ज्ञान की भ्रमत्व से व्यावृत्ति नहीं हो पायेगी । अर्थात् इस ज्ञान को भ्रम मानना होगा । [ वस्तुतः ज्ञान

रुपपाद्यत्वात् । तर्हि गौरवमेवैतदन्यथाख्यातेस्तानवमातनोति ? नैतत्;

न केवलं नैर्बल्यमेवापि त्वन्यथाख्यातेर्बाधकमप्यस्तीत्याशयेनाह —नैतदिति। अन्यथाख्यातिवादिनये रजताद्यंशेऽपि चाक्षुषत्वस्यैवाभ्युपगतत्वेन सन्निकर्षं विना च तदुत्पत्तेरसम्भवात्, देशान्तरस्थरजतादिना लौकिकसन्निकर्षस्य विरहादलौकिकं तं ज्ञानलक्षणं स्वसंयुक्तमनःसंयुक्तात्मसमवेतस्मृतिज्ञानविषयत्वरूपं तादृशसंस्कारविषयत्वरूपं वा परिकल्प्यैव रजतादेश्चाक्षुषत्वमुपेयते, तच्च न

अर्थात् इस ज्ञान को भ्रम मानना होगा। [ वस्तुतः यह ज्ञान भ्रम है क्योंकि रङ्ग को रजत एवं रजत को रङ्ग मानकर इमे रङ्गरजते यह ज्ञान हो रहा है। किन्तु प्रभाकर की दृष्टि से यह प्रमा होना चाहिए, किन्तु प्रमा के नियम से आक्रान्त नहीं हो रहा है।] तो ऐसा नहीं कहना, क्योंकि तदवृत्तिधर्मस्तन्निष्ठविषयतावच्छेदकत्वाभाववान् तदवृत्तित्वात् इत्याकारक अनुमान हमें विवक्षित है। इस अनुमान में तदवृत्तिधर्म = विशेष्यावृत्ति धर्म लेना है। इदं रजतम् इत्यादि में विशेष्य जो इदम्, तदवृत्ति धर्म रजतत्व है वह (रजतत्व) विशेष्य—इदम् में रहने वाली विषयता का अवच्छेदक नहीं है इसलिए उस रजतत्व में तादृशावच्छेदकत्वाभाव है, उस रजतत्व के विशेष्यावृत्ति होने से। ऐसी विवक्षा करने से इमे रङ्गरजते इत्याकारक ज्ञान में भी भ्रमत्व व्यावृत्त हो जायेगा। क्योंकि रङ्ग और रजत में जायमान "इमे रङ्गरजते" इत्याकारक ज्ञान में विशेष्य रङ्ग और रजत दोनो है, इसलिए रङ्ग और रजत दोनों ही क्रमशः तत् शब्द से लिये जायेङ्गें। जब तत् शब्द से रजत लेङ्गें तो उसमें अनुवृत्तिधर्म रङ्गत्व होगा, वह तत् = रजतनिष्ठ विशेष्यता का अवच्छेदक नहीं है और जब तत् शब्द से रङ्ग लेङ्गे तो तदवृत्तिधर्म रजतत्व होगा, वह भी रङ्गनिष्ठविशेष्यता का अवच्छेदक नहीं है। तदवृत्ति होने से। इस प्रकार उक्तानुमान के विवक्षित होने पर इमे रङ्गरजते इत्यादि ज्ञान में भी भ्रमत्व को व्यावृत्ति हो जायेगी।] यदि कहा जाय कि—रजतत्वेन इदं जानामि इस अनुभव के द्वारा–रजतत्वावच्छिन्नशुक्तिनिष्ठविशेष्यताकज्ञान सिद्ध होता है, उससे उक्तानुमान का बाघ हो जायेगा। एवं तद्विशेष्यक तत्प्रकारक प्रवृत्ति के प्रति तद्विशेष्यकतत्प्रकारकज्ञान हेतु होता है। (यहाँ इदं विशेष्यक रजतप्रकारक प्रवृत्ति होती है, उसके लिए इदंविशेष्यक रजतप्रकारज्ञान भी मानना होगा) और उसी ज्ञान के द्वारा उक्तानुमान बाध हो जायेगा। तो यह कथन उचित नहीं, क्योंकि आप (तार्किक) के मत में भी प्रवृत्ति के पूर्व रजतत्व प्रकार निर्णय और धर्मितावच्छेदक इदन्त्वप्रकारक निर्णय को मानना आवश्यक होने से उन्हीं दो ज्ञानों के द्वारा तादृश ( रजतत्वेन इदं जानामि) अनुभव एवं प्रवृत्ति की उपपत्ति हो जायेगी।

प्रश्न—तो क्या उक्त ज्ञानद्वयस्वीकारात्मक गौरव ही अन्यथाख्याति में दुर्बलता का सम्पादक है ? उत्तर—यह बात नहीं है, अन्यथाख्याति के और भी बाधक है।

अन्यदपि तद्बाधकमस्त्येव, सुरभि चन्दनमित्यादौ सौरभं पश्यामीत्यनुभवाभावेन विषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नाधिकरणतायाः सौरभादौ मानाभावेन लौकिकविषयतासम्बन्धेन चाक्षुषाद्युत्पत्तये ज्ञानलक्षणादेः सन्निकर्षतायां सन्निकर्षतायां मानाभावादिति। प्रकृते हि लौकिकविषयतयैव चाक्षुषम्, रजतं पश्यामीत्यनुभवात्।

सम्भवति, योगजातिरिक्तेऽलौकिकसन्निकर्षे मानाभावादित्याह—अन्यदपीति। अप्रामाणिकालौकिकसन्निकर्षस्वीकरणम्। अन्यथाख्यातिवादिमते सुरभिचन्दनमित्यस्यासाङ्गत्यमुपपादयति—सुरभिचन्दनमित्यदाविति। चाक्षुषत्वावच्छिन्नाधिकरणतायाः—चाक्षुषत्वावच्छिन्नप्रत्यक्षनिष्ठनिरूपकतानिरूपिताधिकरणतायाः।

अत्रेदं बोध्यम्, यद्यपि सुरभिचन्दनमिति नैष भ्रमप्रत्ययः, न्यायनयेऽपि तस्य प्रमात्वेन स्वीकारात्, तथापि न्यायनये तस्यैकविशिष्टज्ञानतयोपपादनमशक्यमेव। अनुमानाद्युच्छेदापत्तिभिया ज्ञानादिलक्षणायाः प्रत्यासत्तेरभ्युपगन्तुमशक्यत्वात्, लौकिकस्य च तस्याभावात्। मन्मते तु—इदं रजतमितिवत् सुरभिचन्दनमित्यत्रापि ज्ञानद्वयमेव। चन्दनखण्डांशे प्रत्यक्षम्, सौरभांशे तु—यत्र चन्दने सौरभं प्राग्गृहीतं तद्विषयिण्याः सुरभिचन्दनमिति प्रतीतेः स्मृतित्वम्, यत्र न सौरभं प्राग्गृहीतं तद्विषयिण्याः सुरभिचन्दनम् इत्यादिप्रतीतेश्चन्दनत्वलिङ्गकानुमितित्वमेव तथा च यदि भवन्मते प्रमास्थलेऽपि विशिष्टमेकं ज्ञानं न स्वीकर्तुं शक्यं तर्हि कैव कथाऽन्यथाख्यातिस्थले।

ननु तत्प्रकारकजन्यप्रमात्मकसाक्षात्कारं प्रत्येव विशेषणेन सन्निकर्षो हेतुः, तत्प्रकारकभ्रमात्मकसाक्षात्कारं प्रति तु दोषविशेषो हेतुः। इदं रजतमित्यादौ च दोषस्य चाकचिक्यादेः सत्त्वेन भवति साक्षात्काररूपता, साक्षात्कारित्वव्यञ्जकविषयतां प्रति च लौकिकसन्निकर्षस्येव दोषस्यापि प्रयोजकतया दोषप्रयोज्यायास्तादृशविषयतायाः सत्त्वेनोपपद्यते एव रजतं साक्षात्करोमीत्याद्यनुभवः। सुरभिचन्दनमित्यत्र चासन्निकृष्टस्यापि सौरभांशस्य तदुद्बुद्धसंस्कार सहकृतविशेष्यांशैकदेशेन्द्रियसन्निकर्षेणैव भानं भविष्यतीत्यभिप्रायेण शङ्कते—

सुरभिचन्दनम् इत्यादि में सौरभं पश्यामि इस अनुभव के न होने से सौरभ में विषयतासम्बन्धेन चाक्षुषत्वावच्छिन्न की अधिकरणता के होने में कोई प्रमाण नहीं है। अर्थात् विषयतासम्बन्धेन चाक्षुषत्वावच्छिन्न ज्ञाननिष्ठाधेयतानिरूपित—अधिकरणता सौरभ में नहीं है चूंकि सौरभ चाक्षुषज्ञानका विषय नहीं होता। ऐसी स्थिति में लौकिक विषयता सम्बन्धेन चाक्षुषज्ञान की उत्पत्ति के लिए ज्ञानलक्षणा को सन्निकर्ष मानने में भी कोई प्रमाण नहीं है। प्रश्न—यह सत्य है कि ज्ञानलक्षणा के द्वारा निर्वाह नहीं हो पाता।

मानाभावात् । ननु सत्यमेतन्न ज्ञानलणया निर्वाह इति, तथापि लौकिकविषयता-सम्बन्धेन प्रत्यक्षं प्रति दोषस्यापि हेतुत्वमुपेत्यान्यथाख्यातिरक्षाविधानं कुतो न स्यात्, यदाह खण्डनकारः—"प्रत्यभिज्ञायां तदर्थं इन्द्रियेणासन्निकृष्ट एवोल्लिख्यते विभ्रमार्थवत्, सन्निकृष्टग्राहिता चेन्द्रियस्य सन्निकर्षसहकार्यवश्यम्भावमात्रम्, तच्चेदमंशसन्निकर्षादेव स्यात्, न तु सर्वग्राह्यसन्निकर्षसहकारित्वे" ति नव्यतार्किकैरपि चायमेव पक्षः कक्षीकृत इति चेन्न, संयोगदोषयोरुभयोर्हेतुत्वे

ननु सत्यमेतदिति। तदेतत् खण्डनकारोक्त्या पुष्णाति—यदाह खण्डनकार इति। प्रत्यभिज्ञायामिति। भ्रमार्थो रजतादिरसन्निकृष्टो दोषसहकृतेन्द्रियेण गृह्यते यथा, तथा संस्कारसहकृतेन्द्रियेण तत्तावैशिष्ट्यमसन्निकृष्टमपि गृह्यते। चक्षुरादिकं सन्निकृष्टग्राहि बहिरिन्द्रियत्वात् त्वगादिवदिति तु सन्निकर्षसहकार्यवश्यम्भावेनाप्युपपत्तौ न प्रकृते दोषमावहति। यत्किञ्चित्सन्निकर्षमात्रोपगमाच्च सिद्धसाधनमित्याह—सन्निकृष्टेति। भ्रमार्थस्य ग्रहणं विप्रकृष्टस्यावश्योपेयं तेन प्राप्यकारित्वमिन्द्रियस्य सम्प्रयोगसहकारित्वमात्रापेक्षमिति भावः। प्रागवस्था वैशिष्ट्यस्यासम्प्रयुक्तत्वेऽपीदन्ताविशिष्टस्य सम्प्रयुक्तत्वात्सन्निकर्षसहकारिमात्रत्वमुपपन्नमिति खण्डनग्रन्थार्थः।

नव्यतार्किकैरपीति। अतएव "सादृश्यस्योभयवृत्तिधर्मस्य यत्किञ्चिद्विशेष्यसन्निकर्षात्प्रत्यक्षेण भानं यावद्विशेष्यसन्निकर्षस्याप्रयोजकत्वादि" त्युपमानमणौ "यत्किञ्चिद्विषयसन्निकर्षजन्यतयैव प्रत्यक्षत्वनिर्वाहादि"ति परामर्शगादाधर्याञ्चोक्तम्।

संयोगदोषयोरिति। दोषेन्द्रियसन्निकर्षान्यतरजन्यप्रत्यक्षेऽन्यतरस्याभावाद् व्यभिचारवारणाय—दोषाव्यवहितोत्तरजायमानप्रत्यक्षं प्रति दोषः कारणम्, इन्द्रियसन्निकर्षाव्यवहितोत्तरजायमानप्रत्यक्षं प्रति इन्द्रियसन्निकर्षः कारणमिति

तथापि लौकिक विषयतासम्बधेन प्रत्यक्ष के प्रति दोष को भी हेतु मानकर अन्यथाख्याति की रक्षा करेंगे। [अर्थात् दोष सहित ज्ञानलक्षणा के द्वारा देशान्तरस्थ वस्तु की प्रतीति मानकर अन्यथाख्याति स्वीकार करेंगे।] जैसा कि खण्डनकार ने कहा है—"प्रत्यभिज्ञायाम्···" [ जैसे इदं रजतम् इत्यादि भ्रमस्थल में असन्निकृष्ट रजत का भान होता है, उसी प्रकार सोऽयं देवदत्तः इत्यादि प्रत्यभिज्ञा में इन्द्रिय से असन्निकृष्ट पदार्थ का ही भान होता है। सम्बद्धं वर्तमानञ्च गृह्यते चक्षुरादिना के द्वारा इन्द्रिय में जो सन्निकृष्ट ग्राहकता कही गई है वह तो सन्निकर्षरूप सहकारि कारण के अवश्यम्भाव मात्र की दृष्टि से कहा गया है। और वह सन्निकर्ष में सहकारित्व तो इदं रजतम् इत्यादि स्थल में इदमंश के सन्निकर्ष होने मात्र से ही हो सकता है न कि सर्वांश में सन्निकर्ष की सहकारिता।] और नव्य तार्किकों ने भी इसी पक्ष का समर्थन किया है।

व्यभिचारवारणायाव्यवहितोत्तरत्वस्य कार्यतावच्छेदके निवेशनीयत्वेन दोषस्य रजतभ्रमं प्रति हेतुतायाः कल्पनीयत्वेन च गौरवात् ।

ननु शुक्तित्वप्रकारकज्ञानं प्रति प्रतिबन्धकत्वं दोषस्य भवतापि वाच्यम्, सत्यम्, भवतोऽपि त्वेतत्तुल्यम्, यथा च सन्मात्रविषयकत्वासत्संसर्गविषयकत्वा-

कार्यतावच्छेदकेऽव्यवहितोत्तरत्वनिवेशाद् गौरवम् । एवं स्वक्षणध्वंसाधिकरण-क्षणध्वंसानधिकरणत्वे सति स्वक्षणाध्वंसाधिकरणत्वमिति परिष्कृततत्स्वरूप-ज्ञप्तावपि गौरवम् । कार्यतावच्छेदककोटौ कारणप्रवेशानौचित्यमपीति बोध्यम् ।

नन्वख्यातिवादिनोऽपीदं रजतमित्यादौ स्मृत्यनुभवरूपं ज्ञानद्वयमादृत्येद-मिति पुरोवर्तिद्रव्यमात्रग्रहणम्, दोषवशात्तद्गतशुक्तित्वसामान्यविशेषस्याग्रहमु-पयन्ति । तथा च तन्मतेऽपि दोषस्य प्रतिबन्धकत्वकल्पनायां गौरवं समभि-व्याशङ्क्य तादृशज्ञानं प्रति दोषस्य प्रतिबन्धकत्वमख्यातिवादिवदन्यथाख्याति-वादिपक्षेऽपि तुल्यमित्याशयेन निराचष्टे—भवतोऽपीति । लक्षणप्रयोजनखण्डन इति । इदं रजतमित्यादौ हि नान्यथाख्यातिः सेद्धुमर्हति, सन्निकर्षाभावात् । ननु लौकिकसन्निकर्षाभावेऽपि प्रकारे तत्संसर्गे चान्यत्र प्रतिपन्नेऽलौकिकसन्निकर्षोऽ-स्त्येवेति चेन्न, तस्याप्रामाणिकत्वात् । प्रामाणिकत्वेऽपि कथञ्चिद् इदं रजतमि-त्यत्रेदमनुयोगिको रजतप्रतियोगिकस्तादात्म्यसंसर्गो रजतत्वप्रतियोगिकसमवायो वा भासते, तस्य चालीकत्वान्न प्रागनुभव इति कथं तदुपनयसम्भवः । न हि शुक्तिगतेदन्ता रजते, तस्याः प्रतिव्यक्तिविश्रान्तत्वात् । अत एव—

इदं रजतमित्येवं रूपं वस्तु न कुत्रचित् ।
न शुक्तौ रजतज्ञानं नेदन्ता रजतेऽस्ति नः ॥ (बृ. वा. -७५)

इति बृहदारण्यकवार्तिकेऽप्यन्यथाख्यातिखण्डनतयोक्तम् । किञ्च न रजतत्वे रजतनिष्ठे रजतरजतत्वयोः संसर्गे चाप्रामाण्यम् तयोरन्यत्र सत्त्वात् । अन्यत्र सत्त्वेऽप्यत्रासत्त्वेन तदंशे भ्रमत्वं तु तदीये तद्देशसंसर्गांशे एव पर्यवसन्नमि-त्याद्युक्त्या ।

उत्तर–संयोग तथा दोष दोनों को ज्ञान के प्रति हेतु मानने में परस्पर व्यभिचार होता है, अतः तद्वारणार्थ कार्यतावच्छेदक में अव्यवहितोत्तरत्वका निवेश करना होगा, अर्थात् इन्द्रियसंयोगाव्यवहितोत्तरजायमान ज्ञान के प्रति इन्द्रियसंयोग तथा दोषाव्यवहितोत्तर-जायमान ज्ञान के प्रति दोष को कारण कहना होगा, और रजतभ्रम के प्रति भी दोष को कारण मानना पड़ेगा, अतः गौरव होगा ।

यदि आप कहें कि—शुक्तित्वप्रकारकज्ञान के प्रति दोष को प्रतिबन्धक आप (अख्यातिवादी) को मानना पड़ता है तो यह आपका कथन सत्य है किन्तु वह (तादृश प्रतिबन्धकत्व की कल्पना) आप (तार्किक) के मत में भी तो समान है । सन्मात्र-

ह्यनुपपत्त्यापि नान्यथाख्यातिसम्भवस्तथा लक्षणप्रयोजनखण्डने हेत्वाभाससामान्यलक्षणाक्षेपशेषादौ च शारदायामेवानुसन्धेयम् । न च तथापि प्रवृत्तिसामान्यं प्रति संवादिप्रवृत्तिं प्रति विसंवादिप्रवृत्तिञ्च प्रति क्रमेण स्वतन्त्रोपस्थितेष्टतावच्छेदक--धर्म्यसंसर्गाग्रहस्य विशिष्टज्ञानस्य दोषाधीनज्ञानस्य च कारणतायाः कल्पनीयतया गौरवम्; सर्वत्रैव स्वाश्रयसमवेतत्वस्वसमानकालिकत्वाभ्यां रजतत्वप्रकारताशालिज्ञानविशिष्टेदन्त्वप्रकारतानिरूपितधर्मिनिष्ठ-

स्वतन्त्रोपस्थितेति । रजते नेदं रजतमितिव्यवहारस्थले प्रवृत्तिवारणायाभावाप्रतियोगित्वरूपं स्वातन्त्र्यं विवक्षितम्, तत्र भेदाग्रहस्सत्त्वस्त्येव, रजते रजतभेदग्रहोपगमेऽन्यथाख्यातिप्रसङ्गात् ।

हेत्वाभाससामान्यलक्षणाक्षेपादाविति । "ननु तथापि सरलया सरण्या निष्कृष्टलक्षणेषु को दोष इत्युच्यतामिति चेत्सर्व एव, अन्यथा निष्कृष्टलक्षणेषु दोष इति सप्तम्या सम्बन्धभानानुपपत्तेः । तस्यालीकत्वेऽसत्ख्यात्यापत्तेः । सदसदुपरागासम्भवाच्च, सत्त्वे चास्मदभीष्टसिद्धेः । सत्त्वासत्त्वाभ्यां संदिग्धत्वेऽपि दोषसंशये लक्षणत्वानुपपत्तिरेवे"त्याद्युक्त्या ।

ननु भवन्मते प्रवृत्तित्वावच्छिन्नं प्रति स्वतन्त्रोपस्थितेष्टतावच्छेदकधर्म्यसंसर्गाग्रहस्य विसंवादिप्रवृत्तित्वावच्छिन्नं प्रति दोषाधीनज्ञानस्य, संवादिप्रवृत्तित्वावच्छिन्नं प्रति विशिष्टज्ञानस्य च कारणताकल्पने गौरवमित्याशङ्क्य निराचष्टे—न चेति । न हीत्यर्थः । गौरवमित्यन्वयः । तत्र हेतुं योजयति—सर्वत्रैवेति । त्रिष्वपि स्थलेषु । स्वं रजतत्वप्रकारताशालिज्ञानं तदाश्रय आत्मा तत्समवेतत्वम् इदन्त्वप्रकारतानिरूपितधर्मिनिष्ठनिरवच्छिन्नविशेष्यताशालिज्ञाने । एवं स्वसमानकालिकत्वमपि तत्रैव । एवञ्चेदृशस्यैकस्यैव विशिष्टज्ञानस्य कारण-

विषयकत्व एवं असत्संसर्गाविषयकत्व की अनुपपत्ति से भी अन्यथाख्याति को मानना सम्भव नहीं है यह लक्षण प्रयोजन खण्डन की तथा हेत्वाभाससामान्यलक्षणखण्डनान्त की शारदा में अनुसन्धेय है ।

यदि कहा जाय कि दोष में शुक्तित्वप्रकारकज्ञान के प्रति प्रतिबन्धकत्व की कल्पना के तुल्य होने पर भी अख्यातिवादि के मत में गौरव होगा, क्योंकि वे प्रवृत्ति सामान्य के प्रति स्वतन्त्रोपस्थित इष्टतावच्छेदक ( रजतत्वादि ) और धर्मि के असंसर्गाग्रह में, संवादि ( सफल ) प्रवृत्ति के प्रति विशिष्ट ज्ञान में, एवं विसंवादी प्रवृत्ति के प्रति दोषाधीन ज्ञान में कारणता की कल्पना करते हैं । तो यह नहीं कह सकते, क्योंकि सर्वत्र ही स्वाश्रयसमवेतत्वस्वसमानकालिकत्वसम्बन्ध से रजतत्वप्रकारताशालिज्ञानविशिष्ट-इदन्त्वप्रकारतानिरूपितधर्मिनिष्ठनिरवच्छिन्नविशेष्यताशालिज्ञानत्वेन हेतुता मानी जा सकती है । [यहाँ समन्वय इस प्रकार है—स्वं रजतत्वप्रकारताशालिरजतम्

**निरवच्छिन्नविशेष्यताशालिज्ञानत्वेन हेतुतायाः शक्यवचनत्वात् । न चैवं नेदं रजतमिति ज्ञानेऽपि प्रवृत्त्यापत्तिः, रजतभेदरजतत्वात्यन्ताभावतद्व्याप्यावगाहिज्ञानानि इदन्त्वावच्छिन्नविशेष्यकरजतत्वप्रकारकबुद्धिप्रतिबन्धकत्वेनानुगमय्य तादृशानुगतरूपावच्छिन्नाभाववैशिष्ट्यस्यापि प्रोक्तसम्बन्धाभ्यां प्रवृत्तिजनकता-**

त्वान्न गौरवमिति भावः। नन्वेवं नेदं रजतमिति ज्ञानस्यापि प्रवृत्तिजनकत्वापत्तिः, तस्यापि प्रोक्तसम्बन्धाभ्यां तादृशविशिष्टज्ञानत्वात् । अधिकन्तु प्रविष्टन्न तु तद्धानिरिति न्यायेन नञर्थो भेदस्तत्र परमतिरिक्त इत्याशयेनाशङ्कते—न चैवमिति । परिहरति—रजतभेदेति । तथा चेदन्त्वावच्छिन्नविशेष्यकरजतत्वावच्छिन्नप्रकारकबुद्धित्वावच्छिन्नं प्रति तद्भेदतद्धर्मात्यन्ताभावतद्व्याप्यवत्तावगाहि ज्ञानानि प्रतिबन्धकानियतिप्रतिबन्धकत्वेन त्रयाणामप्यनुगमः । एवञ्च तादृशप्रतिबन्धकत्वावच्छिन्नाभावविशिष्टं निरुक्तविशिष्टज्ञानं प्रवृत्तिं प्रति कारणमिति भावः । अथवा परिहरति—रजतभेदेनेति । अत्र रजतभिन्नत्वप्रकारकं ज्ञानम्, रजतत्वात्यन्ताभाववत्त्वप्रकारकं ज्ञानम्, रजतभेदव्याप्यत्वप्रकारकं ज्ञानम्, रजतत्वात्यन्ताभावव्याप्यवत्त्वप्रकारकं ज्ञानञ्चेति ज्ञानचतुष्टयान्यतममेव—इदन्त्वावच्छिन्नविशेष्यकरजतत्वप्रकारकबुद्धित्वावच्छिन्नं प्रति प्रतिबन्धकम् । तत्र परस्परव्यभिचारवारणाय तत्रैकप्रतिबध्यप्रतिबन्धकभावोपपादनाय च प्रतिबन्धकत्वेन चतुर्णामप्यनुगमं विधाय तादृशप्रतिबन्धकत्वावच्छिन्नाभावविशिष्टं निरुक्तविशिष्टज्ञानं प्रवृतिसामान्यं प्रति कारणमिति वक्तुं शक्यमितिभावः ।

इत्याकारकज्ञान, तदाश्रय आत्मा, तत्समवेतत्व है इदन्त्वप्रकारतानिरूपितधर्मिनिष्ठनिरवच्छिन्नविशेष्यताशालि "इदम्" इत्याकारक ज्ञान में । एवं स्वं रजतत्वप्रकारताशालिज्ञान, तादृश इदम् इत्याकारक ज्ञान में तत्समानकालिकत्व है । वही सभी प्रवृत्तियों के प्रति कारण हो जायेगा, अतः गौरव नहीं है ।] यदि कहें कि तादृश ज्ञान को प्रवृत्ति के प्रति हेतु मानने पर नेदं रजतम् इत्याकारक ज्ञान से भी प्रवृत्ति होनी चाहिए क्योंकि नेदं रजतम् यह ज्ञान भी नञर्थ अभाव के अधिक प्रविष्ट होने पर भी तादृशरूप वाला है, तो यह कहना उचित नहीं, क्योंकि रजतभेद, रजतत्वात्यन्ताभाव और इन दोनों के व्याप्यावगाहि ज्ञानों का इदन्त्वावच्छिन्नविशेष्यकरजतत्वप्रकारकबुद्धि के प्रति प्रतिबन्धकत्वरूप से अनुगम करके तादृश अनुगतरूपावच्छिन्नाभाव के वैशिष्ट्य का भी प्रोक्तसम्बन्धद्वय से प्रवृत्तिजनकतावच्छेदक कोटि में प्रवेश मानेंगे । [ तात्पर्य यह है कि इदन्त्वावच्छिन्नविशेष्यकरजतत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपित जो रजतभेद रजतत्वात्यन्ताभाव एवं तद्व्याप्यावगाहि ज्ञाननिष्ठप्रतिबन्धकता, तादृश प्रतिबन्धकत्वावच्छिन्नप्रतियोगिताकाभावविशिष्ट जो पूर्वोक्त सम्बन्धद्वय से रजतत्वप्रकारता-

वच्छेदककोटौ निवेशादिति चेन्न,

इदं रजतमितिज्ञानद्वयस्य नेदं रजतमितिज्ञानप्रतिबध्यतावच्छेदकेदन्त्वावच्छिन्नविशेष्यतानिरूपितरजतत्वप्रकारताकबुद्धित्वानाक्रान्तत्वेन तादृशज्ञानस्य प्रतिबन्धकतानापत्तेः । रजतं साक्षात्करोमीतिप्रतीतिसाक्षिकविषयतायाः

निवेशादिति । स्वविषयागृहीतासंसर्गकविषयकत्वसम्बन्धेन वैशिष्ट्यं तु न निवेशितम्, असंसर्गाग्रहस्य भेदाद्यग्रहरूपस्याननुगतत्वात् ।

कण्टकेनैव कण्टकोद्धार इति न्यायमनुसरन्तोऽख्यातिवादिनैवान्यथाख्यातिं निरस्येदानीमख्यातिं निराकरिष्णवो लब्धावसराः सिद्धान्तिनोऽनिर्वचनीयख्यातिं भ्रान्तिमाख्यातुकामाः प्रक्रमन्ते—इदं रजतमितिज्ञानद्वयस्येति । इदं रजतमिति ज्ञानानन्तरं जायमानस्य नेदं रजतमिति बाधकप्रत्ययस्य सर्वजनीनस्य बाधकत्वान्यथानुपपत्त्यैव भ्रान्तिसिद्धिरिति भावः । अनाक्रान्तत्वान्तमुक्तज्ञाननिष्ठबाधकत्वस्यानुपपत्तौ हेतुः । न हि ज्ञानद्वयीयविषयतयोर्निरूप्यनिरूपकभाव इति वक्ष्यति । न च विशिष्टव्यवहृतिबाधादेव बाधकत्वसम्भवः, ज्ञानबाधमन्तरा व्यवहृतिबाधस्य वक्तुमशक्यत्वात् । तथा चैतदर्थापत्तिबाधितं ज्ञानयाथार्थ्यानुमानमिति भावः । उक्तं हि शारदाप्रसादलब्धशेमुषिकैः श्रीखण्डनकृद्भिः—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका ॥ इति ।

बाधकान्तरमाह—रजतं साक्षात्करोमीति । इच्छादिगुणानामाश्रयान्तरा-

शालिज्ञानविशिष्ट इदन्त्वप्रकारतानिरूपितधर्मिनिष्ठनिरवच्छिन्नविशेष्यताशालिज्ञान, तादृश ज्ञानत्वेन हेतुता मानेंगे । नेदं रजतम् ज्ञान में तादृशानुगतरूपावच्छिन्नाभावरूपविशेषण के न होने से वह प्रवर्तक नहीं हो सकता ।]

समाधान—इदं रजतम् यह ज्ञानद्वय नेदं रजतम् इस ज्ञान के इदन्त्वावच्छिन्नविशेष्यतानिरूपितरजतत्वप्रकारताबुद्धित्वरूपप्रतिबध्यतावच्छेदक से अनाक्रान्त है, अतः नेदं रजतम् ज्ञान उसका प्रतिबन्धक नहीं हो पायेगा । [तात्पर्य यह कि इदं रजतम् इस ज्ञान को एक विशिष्टज्ञान मानने पर वह इदन्त्वावच्छिन्नविशेष्यतानिरूपितरजतत्वप्रकारताशालिज्ञान है, अतः तदभावावगाहि होने से नेदं रजतम् यह ज्ञान उसका प्रतिबन्ध होता है । यदि उसे एक विशिष्टज्ञान न मानकर प्रभाकर के अनुसार इदं यह अनुभव तथा रजतम् यह स्मृति ज्ञानद्वय मान लिया जाय तो नेदं रजतम् यह ज्ञान तदभावावगाहि न होने से उसका प्रतिबन्ध नहीं होगा । क्योंकि ज्ञानद्वय मानने पर इदन्त्वावच्छिन्नविशेष्यतानिरूपित रजतत्वनिष्ठ प्रकारता ही नहीं है ।]

रजतं साक्षात्करोमि इत्याकारक प्रतीतिसाक्षिक विषयता स्मृतिज्ञान में हो

**स्मृतावसम्भवेन त्रिवृत्करणप्रतिनिधिन्यायाभ्यां शुक्त्यादौ रजतादिसद्भावस्य भवद्भिरभ्युपगतत्वेन सुरासदृशवस्तुनि सुरात्वप्रकारकप्रतीतेरप्युक्तरीत्या प्रमात्वेन तत्पानेन सुरां न पिबेदिति निषेधशास्त्रोल्लङ्घनेन प्रत्यवायापत्तेश्च । न च–**

**प्रतिनिधिन्यायेति । सोमाद्यलाभे तत्सदृशपूतीकादिग्रहणबोधकशास्त्रेण सदृशयोः परस्परावयवानुप्रवेशोऽनुमन्यत इति भावः ।**

नुपपत्त्याऽऽत्मसिद्धिवद् रजतं साक्षात्करोमीति प्रतीतिसाक्षिकविषयताया निरूपकत्वसम्बन्धेनाश्रयान्तरानुपपत्त्या इदं रजतमित्याकारकः साक्षात्कारात्मकोऽनुभव एव स्वीकरणीयः, तस्य च प्रमात्मकस्य विषयसत्तानियततया साऽपि ( विषयसत्तापि ) भ्रान्तिमनभ्युपगच्छतापि भवताऽवश्योपेया। तथा च सति रजतस्य पारमार्थिकसत्तावत् शुद्धे वस्तुनि सुरात्वप्रकारकप्रतीतौ सुरासत्ताया अपि स्वीकरणीयतया तत्पाने प्रत्यवायापत्तिरिति भावः ।

मन्मते तु इदं रजतमित्यस्य भ्रान्तित्वात् तद्विषयरजतस्य प्रातिभासिकत्वेन कनककुण्डलादिनिर्माणाक्षमत्ववद् भ्रान्तिकल्पितसुरापानस्यापि न प्रत्यवायजनकत्वापत्तिः । एतेन रजतादिप्रतीतेरनुभवत्वमपि व्याख्यातम् । त्रिवित्करणं नाम पृथिव्यप्तेजःसु प्रत्येकं द्विधा विभज्य, प्रथमं भागं पुनर्द्विधा विभज्य स्वेतरयोर्द्वयोः सम्मेलनम् । तदुक्तम्—

द्विधाविधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात्पञ्च पञ्च ते ॥ इति ।

यद्यपि पञ्चीकरणमेतत्तथापि त्रिवृत्करणस्याप्युपलक्षणम् । "एकैकां त्रिवृतं त्रिवृतं करवाणि" इत्यादि श्रुतिव्याख्याने श्रीमद्भाष्यकारैस्तथैवोक्तत्वात् । तेजःप्रधानसृष्टिदृष्ट्या तु त्रिवृत्करणमुक्तम् । प्रतिनिधिन्यायस्वरूपन्तु व्यक्तं टीकायाम् ।

इदं रजतमिति ज्ञानद्वयीयविषयतयोर्निरूप्यनिरूपकभावमाशङ्कते—

नहीं सकती, त्रिवित्करण एवं प्रतिनिधिन्यायानुसार शुक्त्यादि में रजतादि सद्भाव आप भी मानते हैं अतः सुरासदृश वस्तु में सुरात्वप्रकारक ज्ञान को भी उक्तरीति से प्रमा मानने पर उसके पान से पानकर्त्ता सुरां न पिबेत् इस निषेधशास्त्र का उल्लङ्घन करने से प्रत्यवाय भागी होना चाहिए । [त्रिवृत्करणन्याय इस प्रकार है—सूक्ष्म पृथिवी जल तथा तेज को स्थूलरूप में लाने हेतु प्रत्येक को दो भागों में विभक्त कर उनमें प्रथम भाग को पुनः दो विभाग करके स्वातिरिक्त अंश में मिला देने से प्रत्येक पृथिव्यादि पदार्थ में आधे में अपना और आधे अंश में अन्य भूतों का समावेश रहता है । प्रतिनिधिन्याय इस प्रकार है—यज्ञ में सोमादि के प्रतिनिधिरूप से शास्त्रानुमोदित होता है ।]

विसंवादिप्रवृत्तिजनकज्ञानद्वयीयविशेष्यताप्रकारतयोर्निरूप्यनिरूपकभावाङ्गी - कारेण विशिष्टज्ञानवज्ज्ञानद्वयस्यापि रजतत्वनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्न-विशेष्यताशालिज्ञानत्वेन प्रवृत्तिजनकत्वम्, एवञ्च नोक्तप्रतिबन्धकतानुपपत्तिर्न वोक्तरीत्या प्रत्यवायापत्तिः, स्वनिरूपकज्ञानानिरूपितत्वस्वनिरूपितत्वाभ्यां प्रकारताविशिष्टविशेष्यताशालिबुद्धित्वस्य भ्रमपदशक्यतावच्छेदकतोपगमेन तदनाक्रान्तसुरात्वप्रकारकप्रमाविशेष्यपानस्यैव प्रत्यवायप्रयोजकत्वात्, अन्यथा-ख्यातित्वं तु स्वाश्रयाभाववन्निष्ठत्वस्वनिरूपितत्वस्वनिरूपकज्ञाननिरूपितत्वैः प्रकारताविशिष्टविशेष्यताकत्वरूपमेव मया नाङ्गीक्रियते इति--वाच्यम्, ज्ञान-द्वयीयविषयतयोर्निरूप्यनिरूपकभावे मानाभावात्, न च सर्वज्ञानया-

न चेति। नोक्तप्रतिबन्धतानुपपत्तिरिति। निरूप्यनिरूपकभावापन्नत्वे निरुक्त-ज्ञानद्वयस्य निरुक्तप्रतिबध्यतावच्छेदकाक्रान्तत्वसम्भवात्। प्रत्यवायापत्तिं निरस्यति—स्वनिरूपकेति। सुरासदृशवस्तुनि सुरात्वप्रकारकप्रतीतेस्तु प्रकार-ताविशिष्टविशेष्यताशालिबुद्धित्वरूपभ्रमपदशक्यतावच्छेदकाक्रान्तत्वान्न प्रत्यवाया-पत्तिः। नन्वेवमन्यथाख्यात्यापत्तिरिति चेन्नेत्याह—अन्यथाख्यातित्वं त्विति। समाधत्ते—ज्ञानद्वयीयविषयतयोरिति। ननु सर्वज्ञानयाथर्थ्यसिद्ध्यनुपपत्तिरेव

प्रश्न—विसंवादी प्रवृति के जनक ज्ञानद्वयीय विशेष्यताप्रकारता का निरूप्यनि-रूपकभाव मानने से विशिष्ट ज्ञान के समान इदं रजतम् यह ज्ञानद्वय भी रजतत्वनिष्ठ-प्रकारता निरूपित इदन्त्वावच्छिन्नविशेष्यताशालिज्ञान होने से प्रवृत्ति का जनक हो जायेगा। एवञ्च नेदं रजतम् इस ज्ञान में प्रतिबन्धकता की अनुपपत्ति भी नहीं है और न उक्तरीति से प्रत्यवायापत्ति हो है, क्योंकि स्वनिरूपकज्ञानानिरूपितत्व, स्वनिरूपित-तत्व, उभय सम्बन्ध से प्रकारताविशिष्टविशेष्यताशालिबुद्धित्व ही भ्रमपद शक्यतावच्छेदक है। [यहाँ स्वं रजतत्वनिष्ठप्रकारता, तन्निरूपकज्ञान रजतम् इत्याकारक ज्ञान, तद् अनिरूपितत्व इदम् निष्ठविशेष्यता में। एवं स्वं रजतत्वनिष्ठप्रकारता, तन्निरूपितत्व इदं निष्ठविशेष्यता में] ईदृश भ्रमपदशक्यतावच्छेदक से अनाक्रान्त सुरात्वप्रकारक-प्रमाविशेष्यक सुरापान ही प्रत्यवाय का जनक होता है। [सुरासदृश वस्तु में सुरात्व-प्रकारक प्रतोति तो उक्तबुद्धित्वरूप भ्रमपद के शक्यतावच्छेदक से आक्रान्त ही है, अतः वहाँ प्रत्यवाय को आपत्ति नहीं है।] अन्यथाख्यातित्व की आपत्ति भी हमारे पक्ष में नहीं है क्योंकि स्वाश्रयाभाववन्निष्ठत्व, स्वनिरूपितत्व, एवं स्वनिरूपकज्ञाननिरूपितत्व इन सम्बन्धत्रय से प्रकारताविशिष्टविशेष्यताकत्वरूप ही अन्यथाख्यातित्व है जिसे हम ( अख्यातिवादी ) नहीं मानते। यहाँ स्वं रजतत्वनिष्ठप्रकारता, तदाश्रय रजत, तद-भाववत् इदम्, तन्निष्ठत्व इदम्निष्ठविशेष्यता में। एवं स्वं रजतत्वनिष्ठप्रकारता, तन्निरूपितत्वं इदम् विशेष्यता में, तथा स्वं रजतत्वनिष्ठप्रकारता, तन्निरूपक इदं रजतम् इत्याकारक ज्ञान, तन्निरूपितत्व इदम्निष्ठविशेष्यता में। ] उत्तर—ज्ञानद्वयीय विषय-

थार्थ्यसिद्धिरेव मानम्, उक्तनिरूप्यनिरूपकभावसिद्धिं विना तदसिद्धे-रन्योन्याश्रयात्। न च रजतत्वं स्वनिरूपकज्ञाननिरूपितत्वस्वनिरूपितत्वाभ्यां शुक्तिनिष्ठविषयताविशिष्टाया अवच्छेदकताया अभाववत्, शुक्त्यवृत्तित्वा-दित्यनुमानेन फलतो ज्ञानयाथार्थ्यं प्रसाध्य भवदुक्तबाधकविधूननायोक्त-विषयतयोर्निरूप्यनिरूपकभावः स्वीकार्यः, उक्तबाधकनिरासं विना तादृशानु-

तदसिद्धेरन्योन्याश्रयादिति। एवं च भ्रमपदशक्यतावच्छेदके द्वितीयसम्बन्धा-सङ्गत्योक्तप्रत्यवायापत्तिरपि तदवस्थैवेतिभावः।

तत्साधिकेत्याशङ्क्यान्योन्याश्रयेण तन्निराचष्टे—न च सर्वज्ञानेति। सर्वज्ञानया-थार्थ्यसिद्धौ ज्ञानद्वयीयविषतयोर्निरूप्यनिरूपकभावसिद्धिः। तत्सिद्धौ च नेदं रजतमित्यादेः प्रतिबन्धकतानुपपत्तिरूपबाधकविधुननेन सर्वज्ञानयाथार्थ्यसिद्धि-रित्यन्योन्याश्रयः। अधिकञ्च प्रमुष्टतत्ताकस्मृतिखण्डनशारदायामनुसन्धेयम्।

अनुमानमानमाशङ्कते—न च रजतत्वमिति। स्वं शुक्तिनिष्ठविषयता, तन्निरूपकम् इदमिति ज्ञानम्, तन्निरूपितत्वमिदन्त्वनिष्ठावच्छेदकतायाम्। एवं स्वं शुक्तिनिष्ठविशेष्यताख्या विषयता तन्निरूपितत्वमपि तत्रैव, तदभावश्च रजतत्वे। यद्यपि तादृशावच्छेदकत्वाभावस्यैव साक्षादनुमितिविधेयत्वम्, तथापीदं रजतमित्यादि ज्ञानस्य याथार्थ्ये एव तत्सिद्धिः। ज्ञानस्यैकस्य भ्रान्तित्वे तूक्तसम्बन्धाभ्यां तादृशावच्छेदकताया रजतत्वे सत्वान्न तादृशाभावः साधयितुं शक्य इत्याशयेनाह—फलत इति। उक्त बाधकवि-धूननाय—प्रतिबन्धकत्वानुपपत्त्यादिनिरासाय। उक्तानुमानं निराचष्टे—उक्तबाधकनिरासं विनेति। अनेनानुमानेन ज्ञानयाथार्थ्यस्य फलतः सिद्धौ

ताओं के निरूप्यनिरूपक भाव में प्रमाण नहीं है। यदि कहें कि सर्वज्ञानयाथार्थ्य-सिद्धि ही उसमें प्रमाण है, तो यह नहीं कह सकते, क्योंकि उक्तनिरूप्यनिरूपक-भाव की सिद्धि के बिना सर्वज्ञानयाथार्थ्य ही सिद्ध नहीं हो सकता, अतः अन्योन्याश्रय-दोष होने से उसे प्रमाण नहीं कह सकते। यदि कहा जाय कि—रजतत्व स्वनिरूपक ज्ञाननिरूपितत्व स्वनिरूपितत्व उभय सम्बन्ध से शुक्तिनिष्ठविषयताविशिष्ट-अवच्छेदकता के अभाव का आश्रय है, शुक्ति में अवृत्ति होने से" [ यहाँ स्वं शुक्तिनिष्ठविषयता, तन्निरूपकज्ञान"""इदम् इत्याकारकज्ञान, तन्निरूपितत्व इदन्त्वनिष्ठ अवच्छेदकता में। स्वं शुक्तिनिष्ठविषयता तन्निरूपितत्व इदन्त्वनिष्ठअवच्छेदकता में। ] इस अनुमान के द्वारा फलतः ज्ञानयाथार्थ्य सिद्धकर भवदुक्त बाधक के निरासार्थ उक्त विषयताओं ( ज्ञानद्वयीय विषयता ) का निरूप्यनिरूपकभाव मान लेगें। तो यह कथन उचित नहीं है। क्योंकि उक्त बाधक के निरास के बिना तादृश अनुमिति ही नहीं की जा सकती।

मितेरुत्पादयितुमशक्यत्वात्, अप्रयोजकत्वाच्च, यथाहि पटावृत्तित्वेपि घटत्वस्य पटनिष्ठप्रतियोगितारूपधर्मावच्छेदकत्वदर्शनेन यो यदवृत्तिः स तन्निष्ठधर्मनिरूपितावच्छेदकत्वाभाववानितिव्याप्तिरप्रामाणिकी, तथोक्तानुमानीयापि। यद्यपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावः सांशयिक एवेत्युपपादितमनुमानखण्डनशारदायाम्, तथापि तस्य सांशयिकत्वेऽपि व्यभिचारसंशयस्य दुर्वारत्वात्। खण्डनविधाता त्वत्र "कस्माद्वा प्रत्यभिज्ञादयोऽप्येकं

प्रोक्तस्यान्योन्याश्रयस्यापाततो निराकरणेऽपि प्रोक्तानुमानमेव बाधहेत्वाभासाक्रान्तत्वेन नोदेतुमीष्टे, दूरे ज्ञानयाथार्थ्यसाधनम्। कथमिति चेत्—त्रिवृत्करण-प्रतिनिधिन्यायाभ्यां रजतस्य शुक्तौ सत्त्वे शुक्तिनिष्ठविषयतावच्छेदकत्वमपि रजतत्वेऽस्त्येवेति साध्याभाववान् बाधः। तथा च फलतो याथार्थ्यस्यासिद्ध्याऽन्योन्याश्रयात्, परस्परनिरूप्यनिरूपकभावोऽपि न। अप्रयोजकत्वाच्चेति। एतदेव विवृणोति—यथाहीति। व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगन्तृमतमादायोच्यते—पटावृत्तित्वेऽपीत्यादि। घटत्वेन पटो नास्तीत्यादावितिशेषः। तथोक्तानुमानीयापीति। यः शुक्त्यवृत्तिः सः शुक्तिनिष्ठविषयतावच्छेदकत्वाभाववानिति व्याप्तिरप्यप्रामाणिकीत्यर्थः।

ननु व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव संशयास्पदत्वात् तत्र व्यभिचारमादाय नोक्तव्याप्तेरप्रामाणिकत्वं वक्तुं शक्यमिति चेत्तत्राह—यद्यपीति। तथापीति। तथापीत्यस्यैव विवरणम्-तस्य सांशयिकत्वेऽपीति।

अनुमानखण्डनशारदायामिति। व्याप्तिलक्षणखण्डनावसरे। अत्रापि चोपदर्शितमधस्तात् ( १५२ पृष्ठे )। व्यभिचारसंशयस्येति। व्यभिचारसंशयस्य

[ भाव यह है कि नेदं रजतम् में इदं रजतम् ज्ञान के प्रति प्रतिबन्धकत्वसिद्ध होने पर ही रजतत्व में उक्त अवच्छेदकता का अभाव सिद्ध किया जा सकता, अन्यथा नहीं।] किञ्च यह हेतु अप्रयोजक [व्यभिचारशंका निवर्तक शून्य भी है जैसे कि घटत्व के पटावृत्ति होने पर भी उसमें घटत्वेन पटो नास्ति इत्याकारक अभावीय पटनिष्ठप्रतियोगितारूप धर्म की अवच्छेदकता देखी जाती है। अतः यो यदवृत्तिः स तन्निष्ठधर्मानिरूपितावच्छेदकत्वाभाववान् [जो धर्म जिसमें अवृत्ति है वह धर्म, उसमें रहने वाले धर्म का अवच्छेदक नहीं होता ] इत्याकारक व्याप्ति अप्रामाणिक है वैसे ही उक्त अनुमान में भी व्याप्ति अप्रामाणिक है। यद्यपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाव संशयास्पद ही है यह अनुमानखण्डनशारदा में उपपादित है। तथापि व्यभिचार संशय तो हो ही सकता है। ( व्यभिचारसंशय भी व्याप्तिसंशय द्वारा अनुमिति का विघटक होता है। ) खण्डनविधाता श्रीहर्ष ने चतुर्थपरिच्छेद में कहा है—"कस्माद्वा...." [ सोऽयम्

ज्ञानमङ्गीकृता इत्युच्छिन्ना विशिष्टविज्ञानसङ्कथा, सञ्जातश्च गौरश्वः पुरुष इतिवद्विशकलितो विज्ञानसंसार" इति चतुर्थे परिच्छेदेऽभ्यधात् ।

किञ्च सर्वज्ञानयाथार्थ्यसाधनं विदधतो भवतोऽन्यत्रोदीरितस्य प्रमात्वादिखण्डनस्यावतारे कः प्रतिकारः ? भ्रमेऽपि तादृशरीत्या दूषणोद्भावनसम्भव इति प्रतिबन्दिरेवेतिचेन्न, ज्ञानस्य तावद्विषय एव सर्वस्वम्, स एव तु तत्र तत्रोक्तरीत्योत्पन्नत्वानुत्पन्नत्वाभ्यामपि दुर्निरूपतया यस्यालब्धसत्ताक इवा-

उत्पन्नत्वानुत्पन्नत्वाभ्यामपि दुर्निरूपतयेति । अत्रैव विज्ञानवादोपक्रमे शारदायां च प्रथमप्रकरणे 'मरुमरीचिकादावपी'ति पङ्क्तिव्याख्यानावसरे तद्राजहंसे चोक्तानां विषयाणां योजनया तादृशदुर्निरूपता प्रत्येतव्या । किञ्च प्रातिभासिकस्य यदि काचिज्ज-

व्याप्तिसंशयद्वाराऽनुमिति प्रतिबन्धकत्वात् । प्रत्यभिज्ञादयोऽपीति । "सोऽयं कृष्ण" इत्यादि प्रत्यभिज्ञायामपि "सः" "अयम्" इति स्मृत्यनुभवात्मकं ज्ञानद्वयमङ्गीकरणीयम् । अयं घट इत्याद्यादिपदार्थः । इतिशब्दो हेत्वर्थः । सर्वत्र ज्ञानद्वयाङ्गीकाराद् विशिष्टज्ञानकथैव विलुप्ता स्यादित्यर्थः ।

प्रमात्वलक्षणखण्डनोक्तयुक्तिभिर्निरुक्तानुमानस्य बाधोऽपीत्याह—किञ्चेति । अनुपपत्तिसाम्यं प्रतिबन्दिः । भ्रमत्वप्रमात्वयोरुभयोरपि दूषणोद्भावनसम्भवेन निरस्तत्वेऽपि विज्ञानन्तावदकामेनाप्यवश्यमभ्युपेयमेव । उपेयते च सर्वैरपि तदिति प्रकृतग्रन्थोपक्रमे विशदीकृतम् । तस्य च सविषयकत्वमपि "विषयशूराणि हि ज्ञानानि" इतिन्यायात् । तत्त्ववैशारद्यामपि—"ज्ञानञ्च ज्ञेयरहितं न शक्यं गोचरयितुमिति ज्ञेयमपि गोचरीक्रियते" ( १।३८ ) इति । अत एव रजतं पश्यामीति धीर्मनागपि व्यावहारिकरजतधियोऽपरोक्षत्वे भिदामनासादयन्ती प्रातिभासिकोत्पत्तिमङ्गीकृत्यैव निर्वाह्यते धीधनैः । सगच्छते चानेनेव पथा "न तत्र रथा न रथयोगा" इति स्वरसत एव स्वाप्नपदार्थोत्पत्तिमभिदधाना श्रुतिरपीत्याशयेनाह—ज्ञानस्य तावद्विषय एव सर्वस्वमिति । तस्य च विषयस्य सर्वस्योपपादयितुमशक्यत्वादाविद्यकत्वमेव मन्तव्यमित्याह—स एव त्विति । सो

इत्यादि प्रत्यभिज्ञादि में भी एक ज्ञान क्यों मानते हैं । इस प्रकार तो विशिष्ट विज्ञान की कथा ही उच्छिन्न हो जायेगी । सभी विज्ञान गौ अश्व पुरुष इस प्रकार विशकलित ( परस्पर असंबद्ध ) ही हो जायेङ्गे ।]

किञ्च सर्वज्ञानयाथार्थ्य सिद्ध करने वाले आप ( अख्यातिवादी ) खण्डनादिग्रन्थोक्त प्रमात्वादिखण्डनयुक्तियों के उपस्थित होने पर क्या प्रतिकार करेङ्गे ? यदि कहें कि भ्रमसाधन में भो तादृशरीति से दूषणोद्भावन करना सम्भव है यही प्रतिकार है, तो यह कथन युक्तिसङ्गत नहीं है। क्योंकि ज्ञान का सर्वस्व विषय ही है । और वह तो तत्तत् स्थलों में शारदोक्तरीति से उत्पन्नत्व अनुत्पन्नत्व के द्वारा दुर्निरूप है ।

विद्यक इति मन्महे, तस्य निर्धनस्य किमपहृत्य चेतः सन्तोषयिष्यसि। प्रमायास्तु खण्डनेन सविशेषविषयापहारे निर्धना सती सा भवतः किं प्रसाधयिष्यति। तस्मात्त्यक्तसर्वस्वा प्रमाकुलस्यापि सर्वस्वमाच्छिद्याविद्योदरे निक्षिपन्ती भ्रान्तिरेव विजृम्भते न तु प्रमितिरिति दिक्।

ननो स्यात्, तर्हि साऽविद्यैवेति तस्या एव सदसत्त्वादिना धर्मान्तरैश्च दुर्वचत्वे तज्जन्यस्य सुतरां तथात्वमितिभावः। निर्विशेषस्य ब्रह्मणो निरासानुपपत्तिमभिप्रेत्याह सविशेष-विषयापहार इति।

उक्तानुमानीयान्वयव्याप्तौ घटत्वादेर्दृष्टान्ततया शुक्तिसदृशावृत्तित्वमुपाधिः, व्यतिरेकव्याप्तावप्यनुकूलतर्कशून्यत्वम्। भ्रमपदशक्यतावच्छेदकनिरूपणं च सर्वथैवा-सङ्गतिमालिङ्गति, प्रकारतानिरूपकज्ञानानिरूपितापि विशेष्यता प्रकारतया निरूपितेति कः श्रद्धीत, न हि ज्ञानविशेषमस्पृष्ट्वा विशेष्यता तत्संस्पृष्टप्रकारतां स्प्रष्टुमीष्टे। एवं चेत्थं दृढीकृतप्रत्यवायापत्तिपरिहाराय शुक्त्यादौ रजतादिसद्भावाभ्युपगमत्यागे रजतं साक्षात्करोमीतिप्रत्ययानुपपत्तिः, रजते साक्षात्कारविषयत्वासंसर्गाग्रहेण तु न तदुपपादन-सम्भवः उक्तानुव्यवसायस्य विशिष्टैकज्ञानतया अपलापस्याप्रामाणिकत्वादित्याशयेनाह इति दिगिति।

विषयः। यस्य तस्येतियद्तद्भ्यां विज्ञानपरामर्शः। सा चितिः। प्रकृतार्थ-मुपसंहरति—तस्मात्त्यक्तसर्वस्वेति। दिगर्थस्तु व्यक्तटीकायाम्।

अतः जिस विज्ञान के विषय को अलब्धसत्ताक के सदृश तथा आविद्यक मानते हैं, उस निर्धन ( विषयशून्य ) ज्ञान का क्या अपहरण कर अपने चित्त को संतुष्ट करेङ्गे। प्रमा के खण्डन से सविशेषविषय का अपहरण होने पर निर्धन होकर वह चिति आपके किस प्रयोजन को सिद्ध करेगी। तस्मात् अपने सर्वस्व का परित्याग कर प्रमासमुदाय के भी सर्वस्व को छीनकर अविद्या के उदर में निक्षेप करती हुई भ्रान्ति ही विजयश्री को प्राप्त करती है न कि प्रमिति।

—०—

शरीरशरीरिभावभङ्गः

ये तु चिदचिदुभयविशिष्टाद्वैतोपपादनाय "यस्य पृथिवी शरीर"

## शरीरशरीरिभावभङ्गः

शरीरशरीरिभावं विभङ्क्तुमद्वैतमतप्रतीपविशिष्टाद्वैतवादिरामानुजमत-मुत्थापयति—ये त्विति। एतन्नये चिदचिद्रूपशरीरविशिष्टः परमात्मा एक एव न तु, तस्मात्तच्छरीराच्चान्यत्किञ्चित्। परमात्मा चेतनत्वेन स्वसजातीयेभ्यो जीवेभ्योऽचेतनत्वेन विजातीयेभ्यो जडेभ्यः प्रधानादिभ्यः स्वगतेभ्यः कल्याण-गुणगणेभ्यश्च भिन्नः। स च परमात्मा सविशेषः। सर्वज्ञत्वनित्यत्वव्यापित्वा-दिविशेषयुक्तः। स्वभावत एवापहतपाप्मत्वाद्यनेककल्याणगुणगणाश्रयः, न तत्र हेयगुणाः सन्ति। स एवचेश्वरः। तच्छरीरभूतो जीववर्गो जडवर्गश्च ततो भिन्न एवेति चिदचिदीश्वररूपं तत्त्वत्रयम्। तत्र चिज्जीवः, स च भोक्ता अचिज्जडपदा-र्थजातं भोग्यम्। ईश्वरश्च तयोरन्तर्यामी भूत्वा नियामको भवति। उक्तञ्च —

ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः।
ईश्वरश्चिदिति प्रोक्तो जीवो दृश्यमचित्पुनः॥ इति।

परमात्मनः सकाशाद्वस्तुतो भिन्नं त्रिगुणात्मकं प्रधानं जगतः मूल-प्रकृतिः। अत एवेश्वरसान्निध्यात्प्रधानपरिणामभूतः प्रपञ्चः। स च सत्य एव न तु मिथ्या। अत एवैतन्मते सर्वत्र सत्ख्यातिरेव। जीवोऽणुः, तस्य ज्ञानद्वारा सर्वशरीरावयवेषु व्याप्तिः। जीवाश्च वस्तुत एव नानाविधाः। प्रारब्धकर्मक्षये लौकिकशरीरपरित्यागे दिव्यदेहप्राप्त्या परमात्मना सह परमं साम्यं भवतीति तदेव मोक्षः। मुक्तावपि जीवब्रह्मणोर्भेदोऽनुवर्तत एव। अयञ्च तन्मतसंग्रहः—

नित्यं हेयगुणावधूननपरा नैर्गुण्यवादाः श्रुतौ
स्पष्टार्थाः सगुणोक्तयः शुभगुणप्रख्यापना ब्रह्मणः।
अद्वैतश्रुतयो विशिष्टविषया निष्कृष्टरूपाश्रया
भेदोक्तिस्तदिहाखिलश्रुतिहितं रामानुजीयं मतम्॥ इति।

एतत्तत्वत्रयं मिथो भिन्नं मिथः सम्बद्धञ्च पारमार्थिकम्। तत्र सम्बन्ध-

## शरीरशरीरिभावभङ्ग

जो सज्जन चिदचिदुभयविशिष्टाद्वैत के उपपादनार्थ "यस्य पृथिवी शरीरम्"

**मित्यादियथाश्रुतश्रुत्यर्थाभिमानेन वैशिष्टयप्रयोजकं शरीरशरीरिभावमिच्छन्ति,**

श्चेश्वरेण संयोगो वा समवायो वा तादात्म्यं वा तदतिरिक्तः कश्चन अपृथक्-सिद्धसम्बन्धलक्षणो वा ? तत्र न तावत् संयोगसम्बन्धो भवितुमर्हति गुणगुणिनोः संयोगासम्भवात्। नापि समवायोऽपि सम्भवति, अनवस्थादिदोषकवलितत्वेन समवायस्यान्यत्र बहुधा निराकृतत्वात्। नापि तादात्म्यसम्बन्धोऽपि, तद्धि भेदाभेदरूपं वा, अत्यन्ताभेदरूपं वा, न तावद् भेदाभेदरूपमिति वक्तुं शक्यं तयोर्विरोधेनैकत्रासत्वेन सम्बन्धत्वासम्भवात्। नाप्यत्यन्ताभेदरूपम्, सम्बन्धस्य भेदव्याप्यत्वेनात्यन्ताभेदे सम्बन्धत्वासम्भवात्। सम्बन्धिद्वयभिन्नत्वे सति विशिष्टबुद्धिनियामकत्वस्यैव सम्बन्धलक्षणत्वात्। अन्यथा स्वं स्वीयमित्यापत्तेः। स्वं न स्वीयमित्यनुभवापलापापत्तेश्च। न च रूपभेदेन भेदाभेदसमर्थनं स्यादिति वाच्यम् धर्मयोर्भेदस्यापि रूपभेदेनैव वक्तव्यतयाऽनवस्थापत्तेः। नापि चतुर्थस्तस्य निराकरिष्यमाणत्वादिति पारिशेष्यात् शरीरशरीरिभाव एव सः। तदुक्तं रामानुजभाष्ये—"सर्वं परमपुरुषेण सर्वात्मना स्वार्थे नियाम्यं धार्यं तच्छेषतैकस्वरूपमिति सर्वं चेतनाचेतनं तस्य शरीरम्" (ब्र. सू. २।१।९) इति। "सर्व एव हि वेदान्ताः स्थूलस्य सूक्ष्मस्य च चेतनस्याचेतनस्य समस्तस्य च परमात्मानं प्रति शरीरत्वं श्रावयन्ति" (ब्र. सू. २।१।९) इत्युक्त्वा च तत्रैव प्रमाणरूपेण "यस्य पृथिवी शरीरम्" (बृ. ३।७।३) इति श्रुतिर्दर्शिता। यथाश्रुतेति। यथाश्रुतमेव श्रुत्यर्थ इत्यभिमानो भ्रमस्तेनेत्यर्थः। एतेन शरीरशरीरिभावे उक्तश्रुतेर्मुख्यतात्पर्याभावः सूचितः। यद्यप्युपक्रमादिनिर्णीतार्थस्यैव श्रुतितात्पर्यविषयतया समन्वयाधिकरणेऽवधारितत्वान्नोक्तश्रुतिः शरीरशरीरिभावप्रतिपादनपरा। तथाहि—"य इमं च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरा यमयति" "याज्ञवल्क्यान्तर्यामिणं ब्रूहि" इत्यन्तर्यामिस्वरूपमात्रप्रश्नोत्तरत्वेन "यः पृथिव्यां तिष्ठन्" इत्युपक्रमः। "एष त आत्माऽन्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञाता विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता एष त आत्माऽन्तर्याम्यमृत" इत्युपसंहारः। इत्येताभ्यामेकत्रान्तर्यामिस्वरूपमात्रे तात्पर्यं निर्णीयते। तत्रान्तर्यमनयोगेन प्रवृत्तस्यान्तर्यामिशब्दस्यधिदेवादिदर्शनमादृत्य "एष त आत्माऽन्तर्याम्यमृतः" इत्येकविंशतिकृत्वोऽभ्यासः। अमृतत्वं सर्वनियन्तृत्वं "यं पृथिवी न वेद" इति पृथिव्यादिदेवताया अविज्ञेयत्वञ्चार्थ-

इत्यादिश्रुति के यथाश्रुत अर्थ को ग्रहण कर वैशिष्ठ्य का प्रयोजक शरीरशरीरिभाव को

**तैरसौ निर्वक्तव्यः । तथाहि न तावत् 'न तु दृष्टान्तभावा' दितिसूत्रस्थश्री-**

वादः । "नाहं तं भगवन्वेद" इति प्रमाणान्तरागोचरत्वरूपाऽपूर्वता । स सर्व-
वित्" इत्यादि फलम् । "अतोऽन्यदार्तम्" इति चात्मान्यस्य बाधितत्वबोध-
नादात्मनोऽन्तर्यामिणोऽबाधितत्वात्मिकोपपत्तिरितिषड्विधतात्पर्यलिङ्गोपेतोक्त-
श्रुतिरन्तर्याम्यात्मस्वरूपमात्रप्रतिपादनपरा, न तु शरीरशरीरिभावप्रमापिका ।
व्याख्यातञ्चाचार्यप्रवरैः सत्सम्प्रदायविद्भिः–"नियन्तुरीश्वरस्य लौकिकनियन्तृव-
त्कार्यकारणवत्त्वमिति पृथिव्याः शरीरत्वमेव, न तु शरीरवत्त्वं यस्य च पृथिव्ये-
व शरीरं नान्यदित्याशङ्क्य "पृथिवीदेवतायाः यच्छरीरं तदेव शरीरं यस्य ।
शरीरग्रहणञ्चोपलक्षणार्थं करणञ्च पृथिव्यास्तस्य । स्वकर्मप्रयुक्तं हि कार्यं करणञ्च
पृथिवीदेवतायाः । तस्य स्वकर्माभावादन्तर्यामिणो नित्यमुक्तत्वात् । परार्थ-
कर्तव्यतास्वभावत्वात्परस्य यत्कार्यं करणञ्च तदेवास्य न स्वतः" इत्यादिवच-
ननिचयेन ।

किञ्चोक्तश्रुतेः स्वतः शरीरवत्त्वप्रतिपादनपरत्वे "स पर्यगाच्छुक्रमकाय-
मव्रणमस्नाविरं शुद्धमपापविद्धम्" (ई० ८) "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्"
(का० १।२।२२) "अप्राणो ह्यमना शुभ्रः" (मु० २।१।२) "असङ्गो ह्ययं पुरुषः"
(बृ० ४।३।१५) "अशरीरं वाव सन्तम्" (छ० उ० ८।१२।१) इत्याद्याः श्रुतयः
शरीरादिसम्बन्धाभावमभिदधाना व्याकुप्येयुः । "अस्थूलमनण्वह्रस्वमदीर्घम-
लोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवाग-
मनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यम्" (बृ० ३।८।८) इति न सामञ्ज-
स्येनोपपद्येत । मन्त्रौ चेमावीश्वरस्य शरीराद्यनपेक्षतां दर्शयतः—

न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥
(श्वे० ६।८)

अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥
(श्वे० ३।१९) इति ।

एतेन "अशरीरं शरीरेष्वित्यादि च कर्मनिमित्तशरीरप्रतिषेधपरमि"
त्यपि निरस्तम् । तथाप्यापाततो विवदमनानां मूलमेवोन्मूलयितुं तत्स्वरूपं
निरसितुं विचारं प्रस्तौति—तैरसौ निर्वक्तव्य इति । असौ शरीरशरीरिभावो
न निर्वक्तुं शक्यो वक्ष्यमाणदूषणगणग्रासादितिभावः । तद्दर्शयति—तथाहीति ।

मानते हैं, उन्हें उस ( शरीरशरीरिभाव ) का निर्वचन करना चाहिए । तथाहि ( विचार
करें कि शरीर का क्या लक्षण है । ]

भाष्यानुसारेण यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यं तत्तस्य शरीरमिति युक्तम्, जडे नियामकत्वाप्रसक्तेश्चेतनपदस्याव्यावर्तकत्वात्, चिदचिदुभयस्य द्रव्यत्वे द्रव्यपदस्याप्यव्यावर्तकत्वात् गुणादेर्द्रव्यातिरेके तु

चेतनपदस्याव्यावर्तकत्वादिति । न च—धर्मभूतज्ञानस्य जीवनियम्यत्वाद्द्रव्यत्वाच्च ज्ञानचेतस्य शरीरमिति व्यवहारवारणाय ज्ञानावच्छिन्नानुयोगिताकसम्बन्धप्रतियोगित्वे सतीत्यपि लक्षणे निवेश्यमिति तल्लाभाय ज्ञानविशिष्टार्थकचेतनपदसाफल्यमस्तु, ज्ञान-प्रतियोगिकसम्बन्धश्च न ज्ञानावच्छिन्नानुयोगिताकः, आत्माश्रयप्रसङ्गादिति वाच्यम्, धर्मभूतज्ञानस्य सर्वात्मना जीवनियम्यत्वे मानाभावादित्यभिप्रायात् । यस्तु प्रथममेवोक्तपद-मनुपादाय निब्रूते तं प्रत्याह चिदचिदुभयस्येति । गुणादेरिति । ननु मतेऽस्मिन् द्रव्यम-द्रव्यञ्चेतिद्विधैव प्रमेयविभागाभ्युपगमः, द्रव्यमेव तु जडाजडभेदेन द्विधा विभक्तम्, चतुर्विंशतितत्त्वात्मिका प्रकृतिः कालश्चेत्येतयोर्जडत्वम्, नित्यविभूतिर्धर्मभूतज्ञानं जीव-ईश्वर इत्येतेषां त्वजडत्वमित्यन्यत्, एवं चाद्रव्याणां सत्त्वरजस्तमःशब्दस्पर्शरूपरसगन्ध-संयोगशक्तिभेदेन दशकस्यैव स्वीकृतस्य द्रव्यमपहाय शरीरत्वव्यवहारमनर्हतो द्रव्यत्वनिवे-

यस्येति धर्मभूतज्ञानव्यावृत्यर्थं—चेतनस्येति । चैतन्यविशिष्टस्येत्यर्थः । द्रव्यमिति गुणक्रिययोर्व्यवच्छेदः । सर्वात्मनेति गर्भदासादीनां निरासस्तेषां कदाचिदेव नियन्तुं शक्यत्वात् । अर्थशब्देन परकीयक्रियामादायासम्भवनिवृत्यर्थं स्वार्थे इत्युक्तम् । शक्यमिति योग्यतामात्रकथने रुग्णशरीरेऽव्याप्तिपरिहार इति तत्रत्या पदकृत्यसरणिः । तदेतन्निराचिकीर्षुः सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थ-वदित्युक्त्या जडे नियामकत्वप्रसक्तावेव तद्व्यावृत्तिफलकतया चेतनपदसार्थक्यं स्यान्न चैवमस्तीत्याशयेनाह—जडे इति । यत्तु धर्मभूतज्ञानव्यावृत्यर्थं तदिति; तदसत्, दशाविशेषे वक्ष्यमाणदिशा तत्रापि शरीरत्वस्येष्टत्वात् । कस्यचित्सज्जनस्यापरितोषे तु दोषान्तराणि । "द्रव्यं द्वेधा विभक्तं जडमजडमिति" इत्याद्युक्त्या चिदचिदुभयस्य द्रव्यत्वेन तदतिरिक्तस्य नियाम्यस्याभावादव्यावर्तकत्वाद् द्रव्य-पदस्यापि वैयर्थ्यमाह—चिदचिदुभयस्येति । वैयर्थ्यञ्च स्वसमानाधिकरणप्रकृत-साध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वम् । तथा च तत्पक्षकतत्साध्यकलक्षण-हेतौ व्याप्यत्वासिद्धिरितिभावः । ननु गुणादिव्यावृत्यर्थं द्रव्यपदमुक्तमिति चेत्तदा तत्राव्याप्तिरित्याह—गुणादेरिति । क्रिया आदिपदार्थः । दूषणान्तरमाह—सर्व-

"न तु दृष्टान्तभावात्" इस सूत्रस्थ श्रीभाष्यानुसार "यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यं तत्तस्य शरीरम्" जिस चेतन का जो द्रव्य सर्वात्मना स्वार्थ में नियन्तुं शक्य हो वह उसका शरीर है यह लक्षण युक्तियुक्त नहीं है। क्योंकि जड़ में नियामकत्व के प्राप्त न होने से चेतनपद अव्यावर्तक है। चिद् अचित् दोनों के द्रव्य होने से द्रव्यपद भी अव्यावर्तक है। गुणादि यदि द्रव्यातिरिक्त हैं तो वे भगवान्

तेषां भगवच्छरीरत्वानुपपत्तेः, सर्वपदस्य बुद्धिविषयतावच्छेदकत्वोपलक्षित-धर्मावच्छिन्ने शक्ततया द्वित्र्यादिधर्मानादाय पश्वादौ देवदत्तीयशरीरत्वव्यवहार-प्रसक्तेश्च। उत्पत्तेरपि सर्वपदार्थान्तर्भावे तु नित्यानां भगवच्छरीरत्वानुप-

शब्व्यावर्तनीयता स्यादिति चेत्, स्यादेवं यदि नियम्यत्वमिह द्रव्ये एव वर्तमानं न पर्यवस्येत्, उत्पाद्यत्वनियतं कृतिविषयत्वं हि द्रव्याद्रव्यसाधारणमपि नित्यद्रव्यं न संगृह्णाति, चेष्टाघटितं तु वक्ष्यमाणं न द्रव्यातिरिक्तवृत्तीति तावतैवाद्रव्यव्यावृत्तौ द्रव्यत्व-निवेशो निष्फल एवेत्याशयात्। प्रथममेव द्रव्यत्वाघटितनिरूक्तिमाचक्षाणं प्रति त्वाह सर्वपदस्येति। सर्वपदमहिम्ना वक्ष्यमाणनिरूक्तिप्रविष्टचेष्टासामान्यमेव लब्ध्वा निर्वक्तारं प्रति त्वाह चित्त्वाचित्त्वान्यतरस्येति। द्रव्यत्वमपि नियम्यतावच्छेदकं नात्र शङ्क्यताम्, इश्वरतज्ज्ञानयोरपि वर्तमानतयाऽतिप्रसक्तत्वात्। तदन्यद्रव्यजातस्यैव हीश्वरशरीरत्व-माश्रितं तैः। अतिप्रसक्तस्याप्यवच्छेदकत्वे च ईश्वर ईश्वरस्य शरीरमित्यादिव्यवहारप्रसङ्गो दुर्वारः। नियम्यतासहितस्यैव द्रव्यत्वस्य नियम्यतावच्छेदकत्वे त्वात्माश्रयप्रसङ्गः स्फुट एव, विशेषणतामपास्योपाधिविधयैव नियम्यतासाहित्यविवक्षायामपि न नियम्यता-नियम्यतामनपेक्षमाणैव पर्यवस्यतीत्याशयः।

पदस्येति। शक्ततयेति। शक्तिवादे गदाधरेण तथैवोक्तत्वात्। यद्यपि सर्वे घटा रूप-वन्त इत्यादौ सर्वपदादुद्देश्यतावच्छेदकीभूतघटत्वाद्यवच्छिन्नस्याशेषत्वादिप्रतीते-र्यावत्त्वापरपर्यायाशेषत्वादिः सर्वपदार्थ उक्तस्तथापि रामो दधि भुङ्क्ते, कृष्णः पयो भुङ्क्ते, शिवो घृतं भुङ्क्ते, सदाशिवः सर्वमेव, इत्यादौ प्रक्रान्ततया बुद्धि-विषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नानां दधिपयोघृतानामेव सर्वपदेन भोजन-कर्मतया प्रतिपादनात्सर्वपदस्योक्तधर्मावच्छिन्ने शक्तेरङ्गीकारे न किञ्चिद् वैम-त्यम्। तथा च देवदत्तः पशुं बध्नाति चालयति नयतीत्यादौ बन्धनाद्यात्मना पशोर्देवदत्तेन नियन्तुं शक्यतया पश्वादौ देवदत्तीय शरीरत्वव्यवहारः प्रसज्येत इति भावः। दोषान्तरमप्याह—उत्पत्तेरपीति। नित्यानामुत्पत्तेरभावात्सर्वात्मना नियन्तुमशक्यत्वान्नित्येष्वव्याप्तिः। दोषान्तरमाह—चित्त्वाचित्त्वेति। प्रत्येक-मिति। चित्त्वस्य नियम्यतावच्छेदकत्वेऽचित्यव्याप्तिः, अचित्त्वस्य तथात्वे च चित्यव्याप्तिः। अन्यतरत्वेन तत्स्वीकारे ब्रह्मणोऽपि चिद्रूपतया तदन्तःपातित्वा-त्तत्रातिप्रसक्तेः। उभयस्य तत्स्वीकारे तूभयस्यैकत्रासम्भवादसम्भवः।

के शरीर नहीं हो पायेङ्गें। एवं सर्वपद की बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्माव-च्छिन्न में शक्ति होने से दो या तीन धर्मों के द्वारा पशुआदि में देवदत्तीय शरीरत्वव्यव-हार होने लगेगा। उत्पत्ति के भी सर्वपदार्थान्तर्गत होने से नित्यपदार्थों में भगवत् शरी-रत्व अनुपपन्न हो जायेगा। चित्त्व अचित्त्व इन दोनों में किसी एक को नियम्यतावच्छेदक मानेङ्गे ? तो चित् या अचित् में अव्याप्ति हो जायेगी अर्थात् चित्त्व के नियम्यतावच्छेदक

पत्तेश्च। चित्वाचित्वान्यतरस्य प्रत्येकमन्यतरत्वेन वा तदुभयस्य वा नियम्यतावच्छेदकत्वेऽव्याप्तेर्ब्रह्मण्यतिव्याप्तेरसम्भवस्य वा प्रसक्तेश्च।

एतेन—तदीयकृतिप्रयुक्तस्वीयचेष्टासामान्यकत्वरूपं तन्नियम्यत्वमेव तच्छरीरत्वम्, तदीयत्वस्य समभिव्याहारलभ्यत्वेन तु परिशिष्टमेव शरीरपदप्रवृत्तिनिमित्तमिति परास्तम्, ईदृशनियम्यतावच्छेदकस्यापि निरूप्यत्वेनोक्तदोषात्। अन्यथा कं धर्मं धर्मितावच्छेदकीकृत्य तादृशसामान्यकत्वं ज्ञेयमित्यज्ञानात्। हस्तादौ देवदत्तीयशरीरत्वव्यवहारापत्तेश्च, पर्वतादौ चेष्टायां मानाभावेन तेषां भगवच्छरीरत्वानापत्तेश्च। चेष्टापदेन स्पन्दमात्रविवक्षायामपि गुणादेर्भगवच्छरीरत्वानापत्तेश्च, देवदत्तीयमृतशरीरस्पन्दस्य यज्ञदत्तादिकृति-

पर्वतादाविति। न खलु कुड्यादिरूपतां गतस्य काष्ठशिलादेश्चेष्टा सम्भाव्यापि, अहल्यादिशरीरभूतशिलायां चेष्टासद्भावः परं कस्मै चिद्रोचेत। परमेश्वरस्य सर्वान्तर्यामित्वान्यथानुपपत्त्या शिलाकाष्ठादौ सूक्ष्मचेष्टासद्भावस्तु तदा शंकितुं शक्येत यदि चेष्टाघटितमेवान्तर्यामित्वं निर्णयपद्धतिमध्यासीतेति भावः। गुणादेरिति। पूर्वोक्तरीत्या द्रव्यमपास्य क्वचिच्छरीरताव्यवहारस्यामिष्टत्वे तु नियम्यतावच्छेदकस्य दुर्निरूपत्वं हस्तादावतिव्याप्तिश्चेति पूर्वोक्तदूषणद्वयेन सह वक्ष्यमाणान्येव दूषणानि द्रष्टव्यानि।

नियम्यतावच्छेदकत्वे इति। पृथिवीत्वादिना रूपेण नियम्यत्वानुपपत्तिस्तु सर्वपक्षसाधारणो दोष. स्पष्ट एव।

एतेनेति। वक्ष्यमाणेन। हस्तादाविति। देवदत्तीयकृतिप्रयुक्तहस्तचेष्टा-

होने पर अचित् में और अचित्त्व के नियम्यतावच्छेदक होने पर चित् में अव्याप्ति हो जायेगी। यदि उन दोनों को अन्यतरत्वेन नियम्यतावच्छेदक माने तो ब्रह्म में अतिव्याप्ति होगी, क्योंकि ब्रह्म के चिद्रूप होने से चित्त्वेन रूपेण वह भी नियम्य हो जायेगा। यदि उन दोनों को उभयत्वेन नियम्यतावच्छेदक मानें तो असम्भव हो जायेगा, क्यों कि वे उभय न चित् में हैं और न अचित् में।

शंका—तदीय कृतिप्रयुक्त स्वीयचेष्टासामान्यकत्वरूप तन्नियम्यत्व ही तद्शरीरत्व है। यहाँ तत् शब्द से चेतन तथा स्वशब्द से शरीर लेना है। तथा च तदीयकृतिप्रयुक्त हैं स्वकीय समस्तचेष्टाएँ जिसकी, तादृश होना ही तन्नियम्यत्व है और यही तत्शरीरत्व है। तदीयत्व यहाँ चेतन के सामिप्य से प्राप्त है अतः अवशिष्ट [ कृतिप्रयुक्तस्वीयचेष्टासामान्यकत्व ] ही शरीरपदप्रवृत्ति निमित्त है। समाधान—यह लक्षण भी उक्तयुक्तियों से निरस्त है क्योंकि ईदृशनियम्यतावच्छेदक के निरूपणीय होने से भी उक्त दोष रहेगा। अन्यथा किस धर्म को धर्मितावच्छेदक मानकर तादृशसामान्यकत्व ज्ञातव्य है यही ज्ञान न होगा। और हाथ आदि अवयवों में देवदत्तीयशरीरत्व व्यवहार भी होने लगेगा। तथा पर्वतादि की चेष्टा में प्रमाण न होने से पर्वतादि

प्रयुक्तताया अपि सम्भवेन प्रसिद्धशरीरेऽसम्भवाच्च, जीवच्छरीरं सात्मकं प्राणादिमत्त्वादित्यादौ जीवत्पदोपादानेन लौकिकानामिव वैनयिकानामपि मृते शरीरत्वस्येष्टत्वात् । एतेन पूर्वं शरीरतया स्थितस्य द्रव्यस्य चेतनवियोगानन्तरक्षण एव नाशाभ्युपगम इति नाभ्युपगन्तव्यम्, अत्यल्पश्छेदमुक्तम्, परिणाम-

सामान्यकत्वादित्यादिः । प्रसिद्धशरीरेऽसम्भवाच्चेति । मृतशरीरमादाय सर्वस्यापि शरीरस्य स्वीयचेष्टासामान्यकत्वाभावादसम्भवः । ननु न मन्मते मृतस्य शरीरत्वमिष्टं येनासम्भवः स्यादिति चेत्त्राह— जीवच्छरीरमिति । मृतशरीरस्याशरीरत्वे जीवदिति विशेषणस्याव्यावर्तकत्वेन वैयर्थ्यं स्यात् तथा च तत्पदोपादानेन तार्किकादीनां मते यथा मृतस्यापि शरीरत्वमुपगतं तथा वैनयिकानामपीति । वैनयिकाः दासभावयुक्ता रामानुजादयः । एतेनेति । मृतशरीरस्यापि शरीरत्वाभ्युपगमेन । नाभ्युपगन्तव्यमित्यनेन सम्बन्धः । यदि तूपचयापचयदर्शनवशान्नाशोऽभ्युपगम्यते तदा न केवलं मृतावस्थायामेव शरीरनाशोऽपि तु जीवद्दशायामपीत्याशयेनाह—अत्यल्पञ्चेति । परिणामभेदेनेति । परिणामो हि त्रिविधो धर्मलक्षणावस्थालक्षणः । यथा सुवर्णादेर्धर्मलक्षणः परिणामः कटककुण्डलादिः, कुण्डलादेश्च वर्तमानत्वादिर्लक्षणपरिणामः । नवपुराणत्वादिरवस्था-

भगवान् के शरीर नहीं हो पायेंगे । चेष्टा शब्द से स्पन्द ( क्रिया ) मात्र की विवक्षा करने पर भी गुणादि में भगवत् शरीरत्व अनुपपन्न हो जायेगा । क्योंकि गुणादि में क्रिया नहीं होती । देवदत्त के मृतशरीर में यज्ञदत्तादिकृतिप्रयुक्त क्रिया होने से उस मृत शरीर में स्वीयचेष्टा न होने से मृत शरीर को लेकर प्रसिद्ध शरीर में असम्भव दोष है । [ तात्पर्य यह है कि सभी शरीरों की मृतावस्था में अन्यदीय कृतिप्रयुक्त स्पन्द होने से किसी भी शरीर में स्वीयकृतिप्रयुक्तस्पन्दसामान्यकत्व नहीं रहेगा अतः सर्वत्र शरीर में असम्भव हो जायेगा । ] [ यदि कहें मृतशरीर तो शरीर ही नहीं है अतः उसको लेकर असम्भव दोष नहीं होगा तो यह कथन असङ्गत है क्योंकि ] "जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् इत्यादि अनुमान में जीवत् विशेषण देने से जैसे तार्किकों ने मृतशरीर को शरीर माना है उसी प्रकार श्रीरामानुज मत में भी मृतशरीर में शरीरत्व इष्ट है । [ तात्पर्य यह है कि उक्त अनुमान में जीवत्विशेषण मृतशरीर की व्यावृत्ति के लिए दिया गया है । यदि मृतशरीर ही न हो तो, शरीर पद से ही उसकी व्यावृत्ति हो जायेगी, उक्त विशेषण क्यों देते । ]

इससे यह नहीं मानना चाहिए कि पहिले शरीरतया उपस्थित द्रव्य का चेतनवियोग होते ही नाश हो जाता है । [ क्योंकि चेतनवियोग होने पर भी मृतशरीर को शरीर माना है । ] और चेतनवियोग के अनन्तर द्रव्यनाश मानना तो अत्यल्प है, क्योंकि परिणामभेद से द्रव्य का भेद मानना आवश्यक होने से जीवन

भेदेन द्रव्यभेदस्यावश्यकत्वेन जीवद्दशायामप्युपचयापचयदर्शनेन शरीरनाशस्यावश्यकत्वात्, परन्तु शरीरत्वव्यवहारः सर्वत्र समान एवाबाधितः। न च मृतं शरीरमन्यदीयं जायत इति वक्तुं शक्यम्। पूर्वशरीरतया परिक्लृप्तसंघातैकदेशत्वेन मृते शरीरत्वव्यवहार इति तु ब्रुवाणे जीवद्दशायामुपचयावस्थशरीरैकदेशत्वेनापचयावस्थेऽपि शरीरत्वव्यवहारो न तु वस्तुतस्तस्य शरीरत्वमित्यपि कुतो न ब्रूयात्। विभूनां निस्स्पन्दतयाऽव्याप्तेश्च। नित्यानां कालादीनां

इति वक्तुं शक्यमिति मृतशरीरस्यान्यदीयत्वे प्राक्तनस्वामिनोऽन्त्येष्ट्यादिजन्यफलभागितानापत्तेरितिभावः।

परिणाम इति विवृतं पातञ्जले "एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याता" ( यो० द० ३।१३ ) इत्यादिना। देहपरिणामस्तु प्रत्यक्षसिद्धः। फलितमाचष्टे—परन्त्विति। तथा च मृतेऽपि शरीरत्वव्यवहारात्तत्रोक्तलक्षणासम्भवः। दोषान्तरमाह—विभूनामिति। कालाकाशादीनां व्यापकत्वात्तत्र चेष्टापदग्राह्यस्पन्दस्याभावात्।

ननु चेष्टाशब्देन न क्रियाविशेषो विवक्षितोऽपितु धात्वर्थमात्रं क्रियासामान्यमेव। तच्च विभूनामप्यस्ति, अस्तित्वादिक्रियाणां तत्रापि सत्त्वादिति चेन्न, तत्र सत्तायास्तदीयकृतिप्रयुक्तत्वाभावादव्याप्तेस्तादवस्थ्यादित्याशयेनाह—नित्यानामिति। न च चेष्टापदेन धात्वर्थमात्रस्य विवक्षापि कर्तुं शक्या, धातुत्वानिरूक्तेरित्याह—धातुवाच्यतयेति। धात्वर्थत्वं धातुपदवाच्यक्रियात्वमिति न वक्तुं शक्यम्, "भूवादयो धातवः" इति क्रियावाचिन एव धातुसंज्ञाविधानात् क्रियावाचित्वस्य धातुत्वे धातुत्वग्रहे तदर्थत्वरूपक्रियात्वग्रहः, क्रियात्वग्रहे च तदवच्छिन्नवाचकत्वघटितधातुत्वग्रह इति स्वग्रहसापेक्षग्रहकत्वरूपान्योन्या-

दशा में भी उपचय अपचय ( ह्रासवृद्धि ) देखे जाने से शरीर का नाश मानना आवश्यक है। परन्तु शरीरत्वव्यवहार सर्वत्र समान एवं अबाधित है। यह भी नहीं कह सकते हैं कि मृतशरीर अन्यदीय हो जाता है। क्योंकि उसके अन्यदीय होने पर अन्त्येष्टि आदि संस्कारजन्य फल की प्राप्ति प्राक्तनस्वामी को न हो पायेगी। पूर्वशरीरतया सिद्ध संघात का एक देश होने से मृतशरीर में शरीरत्व व्यवहार होता है ऐसा कहनेवाले को तो—यह भी कहना चाहिए कि—"जीवनदशा में अपचयावस्थापन्न शरीर में शरीरत्वव्यवहार उपचयावस्थापन्न शरीर का एकदेश होने से होता है वस्तुतः वह शरीर ही नहीं है"। विभुपदार्थों के निस्पन्द होने से उन ( विभु-आकाशादि ) में यह लक्षण अव्याप्त है। यदि धात्वर्थमात्र की विवक्षाकर चेष्टाशब्द से सत्ता लेकर विभुओं में अव्याप्ति का वारण करना चाहें तो वह भी सम्भव नहीं है क्योंकि कालाकाशादि नित्यपदार्थों की सत्ता के कृतिप्रयुक्त न होने से अव्याप्ति हो

सत्ताया अपि कृतिप्रयुक्तत्वाभावेन धात्वर्थमात्रस्य चेष्टापदेन विवक्षायामप्य-निस्ताराच्च। धातुवाच्यतयोपदर्शनीयक्रियावाचकत्वेन धातुत्वस्य निवेशेऽन्यो-न्याश्रयेणाखण्डोपाधिताया अपि प्रतीतिनिरूप्यतयाऽन्योन्याश्रयपराहततयाऽ-शक्यवचनत्वेन भ्वाद्यन्यतमत्वेन निवेशे व्यक्त्यानन्त्येनानुयोगिप्रतियोगिविधया

श्रयसत्त्वात्। उक्तञ्च भूषणे शाब्दिकैः—

धात्वर्थत्वं क्रियात्वञ्चेद्धातुत्वञ्च क्रियार्थता।
अन्योन्यसंश्रयः स्पष्टस्तस्मादस्तु यथाकरम्॥
( वै. भू. ११ ) इति।

न च कालपरिच्छिन्नत्वमेव क्रियात्वं तेन नान्योन्याश्रय इति वाच्यम् कालपरिच्छिन्नत्वस्य ध्वंसप्रतियोगित्वरूपतया तस्य घटादावतिव्याप्तेः। ननु धातुरिति प्रतीतिसाक्षिकमेव धातुत्वं, तच्चाखण्डोपाधिरिति नान्योन्याश्रय इति चेत्तत्राह—अखण्डोपाधिताया इति। उपाधिरूपं सामान्यं सखण्डाखण्डरूपतया द्वेधा। तत्र सखण्डरूपमनित्यमनेकञ्च यथा पाठकेषु पाठकत्वादि। अखण्डन्त्वेक-मेव जातिसमशीलम् यथा गगनत्वादि। तत्र निरवच्छिन्नस्वरूपसम्बन्धावच्छिन्न-प्रकारताश्रयत्वमखण्डोपाधित्वम्। किञ्चिदवच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रका-रताश्रयत्वञ्च सखण्डोपाधित्वम्। तथा च धातुत्वस्याखण्डोपाधित्वे प्रतीत्यैवाख-ण्डोपाधिताया निर्णयाद् विषयस्य सत्यत्वे प्रतीतेः प्रमात्वं, तत्प्रमात्वे च विषयस्य सत्यत्वमित्यन्योन्याश्रय इति भावः। यदि च भ्वाद्यन्यतमत्वं धातुत्वमित्युच्यते तदाप्याह—भ्वाद्यन्यतमत्वेनेति। व्यक्त्यानन्त्येनेति। भ्वादिव्यक्तीनामानन्त्येने-त्यर्थः। अन्यतमत्वं हि भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वम्। तथा चानु-योगिप्रतियोगिरूपेण सकलप्रपञ्चस्य तदन्तःपातित्वात्पुरुषायुषैरपि ज्ञातुमशक्य-त्वात्। "भूवादय" इत्यस्य भूषणस्थवैयर्थ्योक्तेरप्युपलक्षणमेतत्। ननु—

ही जायेगी। धात्वर्थमात्र की विवक्षा में भी धातुवाच्यतयाउपदर्शनीय क्रियावाचक-त्वेन धातुत्व का प्रवेश मानेंगे तो अन्योन्याश्रय हो जायेगा। [ धातुवाच्यतया उप-दर्शनीयक्रिया का ज्ञान होने पर तद्वाचकत्वेन धातुत्वज्ञान होगा, और धातुत्वज्ञान होने पर धातुवाच्यतया उपदर्शनीय क्रिया का ज्ञान होगा। इस प्रकार अन्योन्याश्रय है। ] धातुत्व को अखण्डोपाधि भी नहीं कह सकते, क्योंकि अखण्डोपाधिता के प्रतीति निरुप्य होने से अन्योन्याश्रय से पराहत है। [ धातुत्व के यथार्थ होने से प्रतीति में प्रमात्व होगा, और प्रतीति में प्रमात्व होने पर धातुत्व की सिद्धि होगी इस प्रकार अन्योन्याश्रय है। ] यदि भ्वादिअन्यतमत्वेनधातुत्व का प्रवेश करें तो भू आदि के अनन्त होने से तथा अन्यतमत्व के भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्व रूप होने से तदन्तः अनुयोगिप्रतियोगिविधया सकलप्रपञ्च के प्रविष्ट होने से उसका ज्ञान होना हो

सकलप्रपञ्चप्रवेशेन दुर्ग्रहत्वप्रसङ्गाच्च। स्वत्वघटितत्वेनापि शक्यतावच्छेदकानुगमासम्भावाच्च।

एतेन यस्य चेतनस्य यद्द्रव्यं सर्वात्मना धारयितुं शक्यं तत्तस्य शरीरमित्यस्य प्रागुक्तदोषकलुषितस्य व्याख्यानभूतं तदीयकृतिप्रयुक्तस्वप्रतियोगिकपतनप्रतिबन्धकसंयोगसामान्यकत्वं तच्छरीरत्वमित्यपि निरस्तम्, अवच्छेदकस्य दुर्निरूपत्वात्, हस्तादावतिप्रसङ्गात्, उक्तरीत्या मृतशरीरमादाय प्रविद्धशरीरेऽसम्भवात्, अननुगमात्, पतनप्रतिबन्धकपदवैयर्थ्यात्,

यो यत्स्वार्थस्योत्तरस्थतृजर्थे बोधनक्षमः।
स तादृशार्थकः शब्दो धातुस्त्रिविध ईरितः॥

इति शब्दशक्तिप्रकाशिकायां जगदीशोक्तरीत्या यादृशानुपूर्व्यवच्छिन्नप्रकारताशालिनिश्चयत्वं स्वाश्रयोत्तरतृजर्थधर्मिकस्वाश्रयज्ञानजन्योपस्थितिसहकारेण स्वाश्रयप्रतिपाद्यार्थप्रकारकशाब्दत्वव्यापकजन्यतानिरूपितजनकतावच्छेदकं तादृशानुपूर्वमीच्छब्दत्वं तादृशार्थं धातुत्वमिति निर्वक्ष्याम इति चेत्तत्राह—स्वत्वघटितत्वेनापीति। अथवा निरुक्तशरीरलक्षणस्य स्वत्वघटिततया स्वत्वस्याननुगतत्वात्तत्रैव दूषणान्तरमाह—स्वत्वघटितत्वेनापीति।

एतेनेति। प्रागुक्तदूषणेन वक्ष्यमाणेन च। निरस्तमित्यन्वयः। तदीयेति। चेतनस्तच्छब्दार्थः। स्वं शरीरत्वाभिमतम्। संयोगश्चेतनानुयोगिकशरीरप्रतियोगिकः। तादृशसंयोगसामान्य यस्य तत्कत्वं शरीरे। पतनप्रतिबन्धकपदवैयर्थ्यादिति। ननु संयोगसामान्यान्तर्गते कालाद्यनुयोगिकशरीरप्रतियोगिकसंयोगे चैत्रादिकृतिप्रयुक्तत्वाभावेन पतनप्रतिबन्धकत्वमुपादेयमेवेतिचेन्न, तादृशसंयोगस्यापि शरीरजनकादृष्टजननद्वारा चैत्रादिकृतिप्रयुक्तत्वात्। अदृष्टाद्वारककृतिप्रयुक्तत्वं निवेश्यमिति चेन्न दोषावहं प्रयुक्तत्वं निवेश्य तत्प्रयुक्तदोषवारणाय पतनप्रतिबन्धकत्वनिवेशस्य प्रक्षालनाद्धिपङ्कस्येति न्यायविरुद्धत्वात्। न हि दोषदानाय परिष्कारोऽपितु तद्वारणायेति युक्तमुक्तम्—पतनप्रतिबन्धक-

अत्यन्त दुःशक्य है। एवं उक्त लक्षण के स्वत्वघटित होने से शक्यतावच्छेदक के अनुगम न होने से भी उक्त लक्षण सम्भव नहीं है।

एवं पूर्वोक्त दोषों से दूषित "यस्य चेतनस्य यद्द्रव्यं सर्वात्मना धारयितुं शक्यं तत्तस्य शरीरमि"त्याकारकलक्षण का व्याख्यानभूत—"तदीय कृतिप्रयुक्तस्वप्रतियोगिकपतनप्रतिबन्धकसंयोगसामान्यकत्वं तत् शरीरत्वमित्याकारक [ यहाँ तत्शब्द से चेतन तथा स्वशब्द से शरीर लेना है। तथा च चेतनकृतिप्रयुक्त एवं शरीरप्रतियोगिक जो पतनप्रतिबन्धक संयोग, तादृश संयोगसामान्य है जिसका ( शरीर का ) तत्कत्वं शरीर में गया ] शरीरलक्षण भी निरस्त हो जाता है। क्योंकि इसमें अवच्छेदक दुर्निरूप

अगुरुप्रतियोगिकसंयोगस्य पतनप्रतिबन्धकत्वासम्भवेनाव्याप्तेश्च । न च जगदाधारत्वबोधकश्रुतिबलादेवागुरोरपि तादृशसंयोगाभ्युपगमः, अगुरोस्तादृशसंयोगादर्शनेन जगदाधारत्वमेवान्यादृशमित्यस्यापि सुवचत्वात्, उपपादितो हि दर्पणप्रतिबिम्बन्यायः । विभूनामजसंयोगस्वीकारेण तस्य कृतिप्रयुक्तत्वाभावेनाव्याप्तेश्च । संयोगे जन्यत्वोपादाने तु जन्यत्वस्य प्रागभावप्रतियोगित्वोत्पत्ति-

त्वनिवेशे वैयर्थ्यमिति । तथाप्यदृष्टाद्वारकप्रयुक्तत्वनिवेशे त्वाह—अगुरूप्रतियोगिकेत्यादि । अगुरूः परमाण्वादिः । ननु "स दाधार पृथिवीं द्यामु तेमाम्" इत्यादिश्रुतिबलाज्जगदन्तःपातितयाऽगुरोरपि संयोगः स्वीकर्तव्यः । तथा च नाव्याप्तिरित्याशङ्क्य निराचष्टे—न च जगदाधारत्वबोधकेति । अन्यादृशमिति । तदेव स्मारयति—उपपादितो हीति । यथा दर्पणप्रतिबिम्बयोराधाराधेयभावस्तथा जगदीश्वरयोरपीति भावः । न च परैस्तथा स्वीकर्तुं शक्यम्, तथासति विवर्तवादाभ्युपगम प्रसङ्गः ।

दोषान्तरमाह—विभूनामिति । कालाकाशादीनां नित्यानां संयोगस्यनित्यतयेश्वरीयकृतिप्रत्युक्तत्वाभावात्तेषामीश्वरशरीरानापत्तिः । जन्यत्वविशिष्टतादृशसंयोगसामान्यकत्वोक्तावप्ययं दोषः । दोषान्तरस्यापि च सत्त्वान्न निस्तार इत्याह—संयोगे जन्यत्वेति । उत्पत्तिमत्त्वादिति । तन्निष्ठान्यथासिद्धयनिरूपकत्वे सति तद्व्याप्यत्वं तज्जन्यत्वमित्यादि आदिपदग्राह्यम् ।

है, हस्तादि में अतिव्याप्ति है । उक्तरीति से मृतशरीर को लेकर प्रसिद्ध शरीर में असम्भव है । स्वत्वघटित होने से अननुगम दोष है । पतनप्रतिबन्धक पद व्यर्थ है, क्योंकि शरीर के सभी संयोग चेतनकृतिप्रयुक्त ही है । अगुरुप्रतियोगिकसंयोग पतन-प्रतिबन्धक न होने उस ( अगुरुपदार्थ ) में उक्त लक्षण अव्याप्त है । यदि कहें कि "स दाधार पृथिवीम्" इत्यादि जगदाधारत्व बोधश्रुतिबलात् अगुरुपदार्थ के संयोग को भी पतनप्रतिबन्धक मान लेंगे, तो यह कथन अयुक्त है, क्योंकि अगुरुपदार्थों का पतनप्रतिबन्धकसंयोग नहीं देखा जाता, अतः श्रुतिबोधित जगदाधारत्व को ही अन्यादृश ( तत्सत्ताविरिक्तसत्ताशून्यत्व ) मान लेंगे । इस विषय में दर्पण प्रतिबिम्बन्याय का उपपादन कर चुके हैं । [ तात्पर्य यह है कि जैसे दर्पण में प्रतिबिम्बाधारता भूतल में घटाधारता के समान नहीं है अपितु दर्पणसत्तातिरिक्त सत्ताशून्यस्वरूप है उसी प्रकार जगदाधारत्व की भी कल्पना करेंगे । ] विभु पदार्थों के संयोग को अनादि मानने से कृतिप्रयुक्त न होने से विभुओं में अव्याप्ति है । यदि संयोग में जन्यत्व विशेषण लगावें तो जन्यसंयोग के कृति प्रयुक्त होने पर भी जन्यत्व के प्रागभाव-प्रतियोगित्व उत्पत्तिमत्त्वादि अनेक प्रकार होने से, तथा उत्पत्तिप्रागभावत्व का भी खण्डन-चतुर्थपरिच्छेद के शारदा में अनेक प्रकार उपवर्णित होने से शरीर के लक्षण में किस विधा का उपादान है

सत्त्वाद्यनेकविधत्वेनोत्पत्तिप्रागभावत्वयोरपि तथात्वस्य चतुर्थे शारदायां दर्शितत्वेन च कस्या विधाया इहोपादानमित्यत्र विनिगमकाभावेन शरीरपदस्य नानार्थत्वप्रसङ्गाच्च । तत्रैव सर्वासां विधानां प्रतिविधानाच्च ।

एवं यस्य चेतनस्य यद्द्रव्यं सर्वात्मना शेषतैकस्वरूपं तत्तस्य शरीरमित्यप्युक्तरीत्या निराकार्यम्, शेषत्वस्य दुर्निरूपत्वाच्च । यत्तु–प्रकृते कार्यत्वकारण-

यत्तु प्रकृते इति । द्वितीयावच्छिन्नान्तमवच्छेदकताविशेषणम् । ज्ञानवतः कार्यत्वे कारणत्वे च तयोरवच्छेदकता ज्ञानगता सम्भाव्यतेऽपृथक्सिद्धिसम्बन्धावच्छिन्ना, परन्तु ज्ञानस्यापृथक्सिद्धिसम्बन्धो न ज्ञानावच्छिन्नानुयोगिताक इत्याह ज्ञानप्रतियोगिकेति ।

तथात्वस्य = अनेकविधत्वस्य । शारदायामिति । खण्डनशारदायामित्यर्थः । कारणत्वखण्डनप्रसङ्ग इति शेषः । प्रतिविधानाच्चेति । निरस्तत्वादित्यर्थः ।

लक्षणान्तरं प्रत्याख्यातुं तत्स्वरूपं दर्शयति—एवं यस्येति । शेषतैकस्वरूपमिति । शेषता एवैकं स्वरूपं यस्य तत् । अशेषतानर्हमित्यर्थः । चेतनप्रयोजनार्थमेव यस्य स्वरूपं तदितियावत् । यथैतद्धि प्रसिद्धं द्रव्यभूतं मानवशरीरमस्य चेतनस्य जीवस्य प्रयोजनार्थमेव सर्वात्मना सर्वदाऽङ्गभूतं सत्तिष्ठतीति लक्षणसमन्वयः । एवमेव सर्वमपि चिदचिदात्मकं जगदीशस्य प्रयोजनार्थमेवाङ्गभूतं सत्तिष्ठतीति सर्वमीश्वरशरीरम् ।

अस्मिल्लक्षणे शेषतैकस्वरूपमिति विशेषः । यद्यदर्थं तत्तस्य शेषभूतमिति प्रसिद्धम् । शरीरमात्मार्थं भवतीति तस्य शेषतार्हमेव, न तु कदाप्यशेषतार्हमित्यशेषतानर्हम् । एतेन न पुत्रादौ पितृशरीरत्वापत्तिः पुत्रादीनां दानादिना पितृशेषत्वनिवर्तनस्य शक्यतयाऽशेषतार्हत्वेनाशेषतानर्हत्वाभावात् । स्वशरीरे तु विक्रयादिना दासत्वाद्यापादनेन परशेषत्वेऽपि स्वाभाविकस्य स्वशेषत्वस्य निवर्तयितुमशक्यत्वादशेषतानर्हमेव ।

तदेतल्लक्षणं निरुक्तदूषणगणग्रस्ततया निराकृतमपि तद्घटकशेषत्वमाश्रित्य निराचष्टे—शेषत्वस्य दुर्निरूपत्वादिति । शेषत्वं ह्यङ्गत्वम् । यथा तेरे-

इसका विनिगमक न होने से शरीरपद नानार्थक हो जायेगा । एवं उन सभी विधाओं का निरास खण्डन के चतुर्थ परिच्छेद शारदा में हो जाने से भी उनमें किसी भी प्रकार के द्वारा शरीर के लक्षण का निर्माण करना सम्भव नहीं है ।

एवं यस्य चेतनस्य यद्द्रव्यं सर्वात्मना शेषतैकस्वरूपं तत्तस्य शरीरम् यह लक्षण भी उक्त रीति से निराकर्त्तव्य है । और एतल्लक्षण-घटक-शेषत्व भी दुर्निरूप है ।

पूर्वपक्षः—प्रकृत में कार्यत्व कारणत्वान्यतररूपशेषत्व के अभिप्राय से ज्ञानावच्छिन्नानुयोगिताक जो अपृथक्सिद्धि सम्बन्ध, तदवच्छिन्ना जो कार्यत्वकारणत्वान्य-

त्वान्यतररूपशेषत्वाभिप्रायेण ज्ञानावच्छिन्नानुयोगिताकापृथक्सिद्धिसम्बन्धा-वच्छिन्नकार्यत्वकारणत्वान्यतरावच्छेदकत्वं शरीरपदप्रवृत्तिनिमित्तम्, सूक्ष्मचिद-चिद्विशिष्टस्य ब्रह्मणः कारणत्वात् स्थूलचिदचिद्विशिष्टस्य च तस्य कार्यत्वात् ब्रह्म-

कार्यंत्वकारणत्वान्यतररूपेति । अस्य शेषत्वव्यवहारनियामकत्वमवच्छेदकता-सम्बन्धेन द्रष्टव्यम् । कार्यत्वकारणत्वान्यतरावच्छेदकतारूपेति वा पठनीयम् । ज्ञाना-वच्छिन्नानुयोगिताकेति । इदं चेतनपदमहिम्ना लभ्यते, ज्ञानाश्रयस्यैव चेतनत्वाभ्युप-गमात् ।

वाङ्गत्वाभिप्रायेणोक्तम् – पञ्चरात्ररहस्ये—"मुक्तास्तु शेषिणि ब्रह्मण्यशेषे शेषरूपिणः" इति । व्याख्यातञ्च तदनुसारिभिस्तथा । तच्चाङ्गत्वं चिदचित्प्रपञ्च-स्य ब्रह्मसृज्यतया वा तन्नियम्यतया वा, तच्छरीरतया वा, तदाधारतया वा तत्पाल्यतया वा तत्संहार्यतया वा तदुपासकतया वा तत्प्रसादलभ्यधर्मार्थकाम-मोक्षरूपार्थभोक्तृतया वा ? तत्र नाद्यः नित्यानां शरीरत्वानापत्तेः । अत एव न षष्ठः । न द्वितीयः, निरस्तत्वात् । न तृतीयः, तस्यैव निरूप्यमाणत्वात् । न चतुर्थः पृथिव्यादेर्देवदत्तशरीरत्वापत्तेः । न पञ्चमः, मात्रा पाल्यस्य शिशो-र्मातृशरीरत्वापत्तेः । न सप्तमः, अचित्पदार्थेषु तदसम्भवात् । अतएव नाष्टमः ।

ननु न निरूक्तं शेषत्वमपि तु कार्यत्वकारणत्वान्यतररूपमिति चेत्तत्राह—यत्त्विति । ज्ञानावच्छिन्नानुयोगिताको योऽपृथक्सिद्धिसम्बन्धो, यावत्सत्त्वम-सम्बन्धानर्हत्वरूपस्तदवच्छिन्नत्व कार्यत्वकारणत्वान्यतरावच्छेदकत्वे । उक्तलक्षणं संघटयति—सूक्ष्मचिदचिद्विविष्टस्येति । एकमेव ब्रह्म अवस्थाद्वयापन्नम् । कार्यावस्थं कारणावस्थञ्चेति । तत्र चिदचिद्वस्तुगतं सूक्ष्मत्वं नामरूपादि-भागानर्हत्वम् । तद्विपरीतञ्च स्थूलत्वम् । ब्रह्मणः कारणावस्थैव प्रलयः, कार्या-वस्था च सृष्टिरित्यप्येतन्मते । चिदचितोर्वैशिष्ट्यमपृथक्सिद्धिसम्बन्धो ब्रह्मणि । तच्च ब्रह्म ज्ञानवदिति ज्ञानावच्छिन्नानुयोगिताकत्वं तादृशसम्बन्धस्य ।

ननु रामानुजीयैर्जीवात्मनः परमात्मनश्च ज्ञानस्वरूपत्वमङ्गीक्रियते । तथा च कथं ब्रह्मणो ज्ञानगुणकत्वम् । न हि स्वरूपमेव स्वस्य गुणो भवतीति चेत्, सत्यम्, यथा सूर्यः स्वयं तेजः स्वरूपोऽपि स्वसम्बद्धस्य स्वस्मादन्यत्र भूम्यादौ प्रसृतस्य तेजोरूपस्य प्रभात्मकद्रव्यस्याश्रयोऽपि भवति तथैवाप्रत्यक्षत-यात्मनः "कृत्स्नः प्रज्ञानघन एव" ( बृ० ४।५।१३ ) "अत्रायं पुरुषः स्वयं ज्योतिः" ( बृ० ४।३।९ ) इत्यादि श्रुतिबलाज्ज्ञानस्वरूपत्वम् "नहि विज्ञातु-

तरावच्छेदकता, वही शरीरपद का प्रवृत्तिनिमित्त (लक्षण) है । सूक्ष्म चिदचिद्विशिष्ट ब्रह्म कारण है और स्थूल चिदचिद्विशिष्ट ब्रह्म कार्य है । इस प्रकार से ब्रह्मनिष्ठ कार्यत्व कारणत्व अन्यतर का अवच्छेदकत्व समस्त प्रपञ्च में है, अतः समस्त प्रपञ्च ईश्वर का

**निष्ठकार्यत्वकारणत्वान्यतरावच्छेदकत्वस्य प्रपञ्चसामान्ये सत्त्वात्। अत्र ज्ञानं देवदत्तस्य शरीरमितिव्यवहारवारणाय ज्ञानावच्छिन्नानुयोगिताकत्वमपृथक्-सिद्धिसम्बन्धे निवेशितम्, ज्ञानप्रतियोगिकसम्बन्धस्य ज्ञानावच्छिन्नानुयोगिता-कत्वाभावात्। न च शरीरविशिष्टत्वेन जीवस्य सुखादिकारणतायामेव शरीर-स्यावच्छेदकत्वं सम्भवति, नत्वेवम्, विशेषणविशेष्यभावे विनिगमनाविरहेण जीवविशिष्टशरीरत्वेनापि कारणतायां कार्यकारणभावद्वयप्रसङ्गात्, अपि तु स्वातन्त्र्येणैव कारणता जीवस्येति कथमवच्छेदकत्वं प्रसिद्धशरीरे इति वाच्यम्, कारणत्वस्य प्रयोजकतासाधारणस्य विवक्षितत्वात्, एकविशिष्टापरत्वरूप-**

र्विज्ञातेर्विपरिलोपो विद्यते" (बृ० ४।३।३०) "एष हि द्रष्टा स्प्रष्टा" (प्र० ४।९) इत्यादि श्रुतिबलाच्च तस्यैव ज्ञानगुणकत्वमपि स्वीक्रियते। सूर्यस्वरूपभूतायाः प्रभाया द्रव्यत्वेऽपि सूर्यादितेजोन्तरावलम्बितत्वेन गुणसादृश्याद् गुणत्वव्यवहारस्य गौणत्ववद् आत्मस्वरूपभूतस्य ज्ञानस्य द्रव्यत्वेऽपि नित्यमात्मरूपद्रव्यान्तरसम्बद्ध-त्वेन गुणसादृश्याज्ज्ञाने गुणत्वव्यवहारस्तु गौणः।

तत्र ज्ञानावच्छिन्नानुयोगिताकत्वनिवेशस्य सार्थक्यं दर्शयति—अत्र ज्ञानमिति। प्रोक्तभाष्यकृल्लक्षणे चेतनशब्दोल्लेखाच्चैतन्यविशिष्टस्य नियाम-कत्वं सिद्ध्यति। तत्र ज्ञानविशिष्ट आत्मा नियामकः, नियम्यञ्च शरीरम्। न च ज्ञानविशिष्टात्मस्वरूपस्य नियम्यत्वमपि, एकस्मिन्नियम्यनियामकभावानु-पपत्तेः। एवमेवैकस्मिन् विशेषणीभूते ज्ञाने उक्तान्यतरावच्छेदकत्वस्वीकारे नावच्छेद्यत्वसम्भवः। न च द्वे धर्मभूतविज्ञाने, येनैकस्यावच्छेदकत्वमपरस्याव-च्छेद्यत्वं स्यात्। तथा च न ज्ञानप्रतियोगिकसम्बन्धो ज्ञानावच्छिन्नानुयोगि-ताक इति न ज्ञाने देवदत्तशरीरत्वापत्तिः।

प्रसिद्धशरीरेऽव्याप्तिमाशङ्कते—न च शरीरविशिष्टत्वेनेति। स्वात-न्त्र्येण = विशेष्यविशेषणभावानापन्नजीवत्वमात्रेण। उक्ताशङ्कां निराचष्टे—कारणत्वस्येति। प्रयोजकत्वं जनकजनकतावच्छेदकसाधारणम्। कतिपयकारणे सत्यपि कार्योत्पत्तेरदर्शनात् कारणकलापात्मिकायाः सामग्र्या एव कार्योत्पत्ति-

शरीर है। यहाँ पर "ज्ञानं देवदत्तस्य शरीरम्" इस व्यवहार के निरासार्थ अपृथक् सिद्धि सम्बन्ध में ज्ञानावच्छिन्नानुयोगिताकत्व विशेषण दिया गया है। क्योंकि ज्ञानप्रति-योगिक सम्बन्ध ज्ञानावच्छिन्नानुयोगिताक नहीं होता है।

यदि कहा जाय कि शरीरविशिष्ट जीव को सुखादि का कारण मानने पर ही शरीर में अवच्छेदकता हो सकती है किन्तु यह सम्भव नहीं है क्योंकि विशेष्यविशेषण-भाव में विनिगमक न होने से जीवविशिष्ट शरीरत्वरूप से भी कारणता मानी जा सकती है ऐसी स्थिति में दो कार्यकारण भाव प्राप्त हो जायेगा। अतः स्वातन्त्र्येण जीव को ही

सामग्रीत्वेन च कार्योत्पत्तिप्रयोजकतोपगमेन जीवनिष्ठप्रयोजकतावच्छेदकतामादाय प्रसिद्ध शरीरेसमन्वयात्। उक्तावच्छेदकतायामपृथक्सिद्धिसम्बन्धावच्छिन्नत्वनिवेशाच्च भृत्यविशिष्टराजादेः कार्यकारित्वेऽपि न भृत्यो राजशरीरप्रसिद्धशरीरे समन्वयादिति। सामग्र्या एकविशिष्टापरत्वरूपत्वे जीवस्य विशेष्यत्वे तन्निष्ठप्रयोजकतायामवच्छेदकता यथा शरीरे, तथा शरीरस्य विशेष्यत्वे तन्निष्ठप्रयोजकतायामवच्छेदकता जीवेऽपीत्येवं तत्रातिव्याप्तिस्तु न शङ्कनीया, शरीरस्य ज्ञानशून्यतया तदनुयोगिकसम्बन्धस्य ज्ञानावच्छिन्नानुयोगिताकत्वाभावादिति भावः।

प्रयोजकत्वम्। सा च न विशकलितकारणात्मिकाऽपितु एकविशिष्टापरत्वरूपा। तथा च तेन रूपेण जीवनिष्ठप्रयोजकताया अवच्छेदकत्वं प्रसिद्धशरीरे इति नाव्याप्तिः। अपृथक्सिद्धिसम्बन्धावच्छिन्नत्वप्रयोजनं दर्शयति—उक्तावच्छेदकतायामिति। तादृश ब्रह्मनिष्ठकार्यत्वकारणत्वान्यतरावच्छेकतायामित्यर्थः। भृत्यस्य यावत्सत्त्वमसम्बन्धानर्हत्वाभावात्तद्व्यावृत्तिः।

संस्थानैक्याद्यभावे बहुषु निरुपधिर्देहशब्दस्य रूढि-
र्लोकाम्नायप्रयोगानुगतमिह ततो लक्ष्यनिष्कर्षणीयम्।
अव्याप्तत्वादिदुःस्थं परमतपठितं लक्षणं तत्र तस्मा-
द्धीतुल्याश्रयं यद्वपुरिदमपृथक्सिद्धिमद्द्रव्यमस्य॥

संस्थानं हस्तपादाद्यवयवसनिवेशविशेषः। स च देवमनुष्यपशुपक्षिलताद्यनेकविधशरीरेष्वेको नास्ति। तेषु सर्वेषु देहशब्दस्य रूढिश्च निरुपधिरेव लोके वेदे च दृश्यते। अतस्तदनुसारेण शरीरस्य लक्षणं तदव्याप्त्यादिदोषदुष्टम्। ईश्वरशरीरत्वेनाभिमतेषु कालादिषु चेष्टाया अभावात्। तस्माद् धिया ज्ञानेन सह तुल्याश्रयं समानाधिकरणं यद् द्रव्यं यस्यापृथक्सिद्धिमद् भवति तत्तस्य वपुरित्युच्चत इत्यर्थकतत्त्वमुक्तोक्तमप्येतल्लक्षणं न निर्दुष्टकोटिमाटीकते इत्याह—तदसदिति। तल्लक्षणमव्याप्त्यादिदोषदुष्टत्वादलक्षणमित्यर्थः। तत्र ज्ञानेऽव्याप्ति दर्शयति—तुल्ययुक्त्येति। यथा देवदत्तनिष्ठस्य ज्ञानप्रतियोगिका-

कारण मानना उचित है। तथा च प्रसिद्ध शरीर में अवच्छेदकता कैसे आयेगी। तो यह कथन असङ्गत है। क्योंकि प्रयोजकतासाधारणकारणता यहाँ विवक्षित है। एक विशिष्ट अपरत्वरूप सामग्री सामग्रीत्वरूपेण कार्योत्पत्ति के प्रति प्रयोजक मानी गयी है अतः जीवनिष्ठ प्रयोजकता की अवच्छेदकता को लेकर प्रसिद्ध शरीर में लक्षणसमन्वय हो जायेगा। उक्त अवच्छेदकता में अपृथक् सिद्धिसम्बन्धावच्छिन्नत्व का निवेश कर देने से भृत्यविशिष्ट राजा के कारण होने पर भी "भृत्य राजा का शरीर है" ईदृश व्यवहार की आपत्ति नहीं होती। [ क्योंकि राजा के साथ भृत्य का अपृथक् सिद्धि सम्बन्ध नहीं है ]

मिति व्यवहारापत्तिरिति। तदसद्, तुल्ययुक्त्या ज्ञाने भगवच्छरीरत्वस्या-व्यनापत्तेः। तत्कार्योत्पत्तिप्रयोजकताया एकत्वे सामाग्र्यां शरीरस्यापि प्रवेशा-

तुल्ययुक्त्येत्यादि। नन्वीश्वरधर्मभूतज्ञानस्य पराश्रितस्वभावतयैव गुणत्वव्यवहार-भाजः 'प्रज्ञा च तस्मात्प्रसृता पुराणी' इति श्रुत्या प्रसरणशालितयाऽवस्थाश्रयत्वरूपद्रव्य-लक्षणाक्रान्तस्यापि नेश्वरशरीरतेष्टा, तस्येश्वरे शेषिताप्रयोजकताया एवौचित्यादित्यस्वर-सादाह तत्कार्योत्पत्तीत्यादि। दूषणान्तरमपीहानुसन्धेयम्—तथाहि—उक्तलक्षणस्य पृथक्सिद्धिसम्बन्धस्य ज्ञानावच्छिन्नानुयोगिताकत्वाभावान्न ज्ञाने देवदत्त-शरीरत्वव्यवहारस्तथा ज्ञाने भगवच्छरीरत्वव्यवहारोऽपि न स्यादितिभावः।

ननु नेष्यत एव तस्य (ज्ञानस्य) शरीरत्वम्। "चेतनस्य चैतन्यविशिष्टस्य, तेन चैतन्यस्य तत्तदाश्रयं प्रति शरीरत्वव्यवच्छेदः" इति न्यायसिद्धाञ्जने "चेतन-स्येति चैतन्यविशिष्टतया प्रतिसम्बन्धिनिर्देशात् धर्मभूतज्ञानस्य शरीरत्वं निरस्यते" इति तत्त्वमुक्तावल्याञ्च लक्षणस्थचेतनपदव्यावृत्तिं ब्रुवाणेन श्रीवैङ्कटनाथेन धर्मभूतज्ञानस्य शरीरत्वानभ्युपगमात्। तथा च तद्दुषणोक्तिर-नर्थिकेति चेत्, मैवं भाषिष्ठाः जीवं देवादिशब्दो वदति तदपृथक्सिद्धभावाभि-धानान्निष्कर्षाभावयुक्ताद् बहुरिह च दृढो लोकवेदप्रयोगः। इति तत्त्वमुक्ताकला-पोक्तदृशा जीवापृथक्सिद्धस्य देवादिशरीररूपस्य भावस्याभिधानाद विशिष्टेऽर्थे लोके वेदे च देवादिशब्दप्रयोगस्य निष्कर्षाभावयुक्तस्य बहुलं दर्शनाद्विशिष्ट-घटकतया ज्ञानस्याशरीरत्वेऽपि, निष्कर्षाकूतहानावित्यादिनीत्या अपृथक् सिद्धस्यापि वस्तुनो यत्र पार्थक्येन प्रतिपादनमभिप्रेतं तत्र केवलशरीरार्थकत्वं शब्दस्यास्तु नाम। यथा जीवात्मन इदं भौतिकं शरीरम् इत्यत्र शरीरशब्दो न शरीरान्तर्गतजीवपर्यन्तार्थकः। तथेहापि पार्थक्येन प्रतिपादनविवक्षया ज्ञानस्य शरीरत्वं सम्भवत्येव।

किञ्च "ज्ञातुर्ज्ञेयावभासः" इति तत्त्वमुक्तावल्यां वैङ्कटोक्त्या "ज्ञातु-र्जीवस्येश्वरस्य च यो ज्ञेयावभासो विषयप्रकाशः स मतिरित्यर्थिकया केवलस्य ज्ञानस्याशरीरत्वेऽपि विषयप्रकाशत्वेन तस्य शरीरत्वं स्यादेवेति ज्ञानमीश्वरस्य शरीरमित्यत्र तुल्ययुक्त्या दोषदानमुचितमेव।

दोषान्तरमप्याह—तत्कार्येति। एकत्व इत्यस्य-आपत्तेश्चेत्यत्रान्वयः।

समाधान—उक्त शक्ति से ज्ञान में भगवत् शरीरत्व अनुपपन्न हो जायेगा। [ तात्पर्य यह है कि ज्ञान के भगवत् शरीर होने पर भी जैसे देवदत्तीय ज्ञान प्रतियोगिक अपृथक् सिद्धि सम्बन्ध में ज्ञानावच्छिन्नानुयोगिताकत्व के न रहने से देवदत्तीय ज्ञान में देवदत्तीय शरीरत्व व्यवहार नहीं होता, उसी प्रकार भगवत् ज्ञान में भी ज्ञानप्रतियोगिक तादृश सम्बन्ध में ज्ञानावच्छिन्नानुयोगिताकत्व न रहने से भगवत् शरीरत्व व्यवहार

वश्यम्भावेन जीवनिष्ठायामिव स्वनिष्ठायामपि प्रयोजकतायां शरीरस्यावच्छेदकताया अनुपपन्नाया एवापत्तेश्च, तादृशप्रयोजकताया नानात्वे तु किन्नियामकम्, तत्कार्यस्यैकत्वात्। प्रयोजकतावच्छेदकस्य नानात्वमेव नियामकम्, विशेष्यविशेषणभावे विनिगमकाभावेनैकविशिष्टापरत्वरूपसामग्रीत्वस्यैकत्वासम्भवादिति चेदेवं तर्ह्येकविशिष्टापरात्मिकायास्तत्कार्यसामग्र्या अपि नानात्वमिति तत्कार्यं नानासामग्रीकमिति सर्वजनानुभवापास्तव्यवहृतेरापत्तिः। किञ्च

लक्ष्यतावच्छेदकं नोक्तलक्षणमेव, लक्ष्यतावच्छेदकज्ञानस्य लक्षणज्ञानात्प्रागेवापेक्षणीयत्वात्, नापि निरस्यमानलक्षणेष्वेवैकस्य लक्षणत्वेऽपरस्य लक्ष्यतावच्छेदकत्वम्, शरीरपदस्य नानार्थत्वप्रसङ्गात्। नापि शरीरपदार्थत्वं लक्ष्यतावच्छेकम्, पदार्थत्वस्य पदशक्यतारूपतया शक्यतावच्छेदकात्मकोक्तलक्षणज्ञानात्प्राग्ज्ञातुमशक्यतयाऽन्योन्याश्रयात्। रीतिरियं भावत्वखण्डनशारदायां ( ५३७ पृ० ) विस्फारिता। एवम् 'इदमस्य शरीर'-मिति सार्वजनीनशरीर व्यवहारे तादृशकार्यताकारणतान्यतरावच्छेदकतारूपशेषताया अपरिस्फुरणेनासम्भवोऽपि दृढपद एवेहेति।

व्यवहृतेरापत्तिरिति। नानापदेनाभेदविरुद्धभेदप्रयुक्तो व्यवहारः, प्रकृते तु सामग्रीत्वानां भेदप्रयुक्तः सामग्रीगतो भेदाभेद एवेति यदि कश्चिद् ब्रूयात्तत्राप्याह किञ्च स्थूलेति। वस्तुतस्तु विज्ञानवादोक्तानुभविकरीत्या तत्र बुद्धावेव कश्चिद्विशेषो न तु विषये, तावन्तस्त

कथन्तां निरस्यति—सामग्र्यामिति। स्वं शरीरम्। अनुपपन्नाया इति। समानाधिकरणयोरेवावच्छेद्यावच्छेदकभावस्य यौक्तिकत्वात्तस्या अनुपपन्नता। तस्या नानात्वमप्यनुपपन्नमित्याह—तादृशप्रयोजकताया इति। प्रयोजकतावच्छेदकस्य शरीरस्य नानात्वेन तस्या नानात्वमित्याह—प्रयोजकतावच्छेदकस्येति। नानात्वं स्फोरयति—विशेष्येति। तद्दूषयति—तत्कार्यमिति। किञ्चेति। अरूचिबीज-

नहीं हो पायेगा। ] कार्योत्पत्तिप्रयोजकता को यदि एक माना जाय तो सामग्री के अन्तर्गत शरीर को भी मानना आवश्यक होने से जीवनिष्ठ प्रयोजकता में जैसे शरीर अवच्छेदक है उसी प्रकार वह (शरीर) स्वनिष्ठ (शरीरनिष्ठ) प्रयोजकता में भी अवच्छेदक होने लगेगा, जो कि युक्तिविरुद्ध है। और तादृश प्रयोजकता को यदि नाना मानें तो, उसके नानात्व का नियामक क्या है, क्योंकि उसका कार्य एक ही है। यदि कहें कि प्रयोजकतावच्छेदक का नानात्व ही प्रयोजकता के नानात्वका नियामक है, क्योंकि विशेष्यविशेषण भाव में विनिगमक न होने से एक विशिष्टापरत्वरूप सामग्रीत्व भी एक नहीं हो सकता। आप के इस कथनानुसार तो एक विशिष्टापरात्मिका तत्कार्य सामग्री भी नाना हो जायेगी, ऐसी स्थिति में तत्कार्य नानासामग्री वाला है' यह सर्वजनानुभवविरुद्ध व्यवहार होने लगेगा।

किञ्च स्थूलचिदचिद्विशिष्ट ब्रह्म को जो कार्य माना गया है वह क्या विशेषण-

स्थूलचिदचिद्विष्टस्य ब्रह्मणः कार्यत्वं किं विशेषणकार्यत्वप्रयुक्तं वा विशेष्यकार्यत्वप्रयुक्तं वोभयकार्यत्वप्रयुक्तं वा विशिष्टस्यातिरिक्तत्वपक्ष एव वा, नान्त्यः, विशेषणविशेष्योरकार्यत्वे तस्य कार्यताया वक्तुमशक्यत्वात्, न तृतीयो नापि द्वितीयः, ब्रह्मणः कार्यत्वस्याप्रामाणिकत्वात्, नाद्यः, वैशिष्ट्यनिरूपणं विना विशेषणस्य कार्यतया विशिष्टे कार्यताव्यवहारस्याशक्यसमर्थनत्वात्, न च शरीरशरीरिभावसम्बन्ध एव वैशिष्टयम्; तस्यैव निरूप्यमाणत्वात् । न चापृथक्सिद्धिसम्बधेन वैशिष्टयम्, अतएव कार्यतावच्छेदकतावच्छेदकतया स एव

एव च पदार्थाः स्वतन्त्रप्रतिपत्तृसमर्पितेन वैज्ञानिकेन = विलक्षणविज्ञानमात्रप्राणेन विशेषणविशेष्यभावेन भूषिताः, तथा च सामग्रीत्वानां बुद्धिविशेषात्मकतया नानात्वे सामग्रया अप्येकत्वमशक्यं वक्तुम्, बहवो हि पदार्थाः कथमेकतां प्राप्नुयुरिति सामग्र्यपि विलक्षणधीरेवेति दृढ एवोक्तव्यवहृत्यापत्तिशेषः ।

मत्रोक्तं टीकायाम् । विशेषणविशेष्यतत्सम्बन्धेभ्यो भिन्न एव विशिष्ट इति चतुर्थपक्षमपहस्तयति—नान्त्य इति । विशेषणविशेष्यतत्सम्बन्धातिरिक्तस्य विशिष्टस्याप्रतीतिमालक्ष्याह—विशेषणविशेष्ययोरिति । विशिष्टस्यातिरिक्तत्वे विशिष्टमानयेत्युक्ते विशेषणविशेष्यतत्सम्बन्धत्रितयानयनाभावप्रसङ्गोऽपि बोध्यः । न तृतीय इति । अत एवेत्यादिः ।

"आकाशवत्सर्वगतश्च नित्यः" "नित्यो नित्यानाम्" ।

इत्यादिश्रुत्या ब्रह्मणो नित्यत्वावगमादाह—ब्रह्मणः कार्यत्वस्येति । कृतिजन्यत्वप्रागभावप्रतियोगित्वादिकं हि कार्यत्वम् । तच्च न ब्रह्मणि केनापि स्वीकर्तुं शक्यम् । ननु न वयं ब्रह्मणः कार्यत्वमाचक्ष्महेऽपितु विशिष्टस्येति चेत्त्राह—वैशिष्टयनिरूपणमिति । लक्षणघटकापृथक्सिद्धिसम्बन्धं वैशिष्ट्य-

कार्यत्वप्रयुक्त है, या विशेष्यकार्यत्वप्रयुक्त, या उभय ( विशेष्यविशेषण ) कार्यत्वप्रयुक्त अथवा विशिष्ट को अतिरिक्त मानकर उसे कार्य कहा गया है । इनमें अन्तिम पक्ष नहीं मान सकते क्योंकि विशेषणविशेष्य दोनों के अकार्य होने पर विशिष्ट को भी कार्य नहीं कह सकते हैं । ब्रह्म को कार्य मानना अप्रामाणिक होने से तृतीयपक्ष नहीं मान सकते एवं द्वितीयपक्ष भी नहीं मान सकते । प्रथमपक्ष मानना भी युक्तियुक्त नहीं है क्योंकि वैशिष्ट्यनिरूपण के बिना विशेषण के कार्य होने से विशिष्ट में कार्यताव्यवहार शक्यसमर्थन नहीं है । यह भी नहीं कह सकते कि शरीरशरीरिभाव ही वैशिष्ट्य है, क्योंकि वही निरूप्यमाण है । यदि कहा जाय कि अपृथक्सिद्धि सम्बन्ध ही वैशिष्ट्य है । अतएव कार्यतावच्छेदकतावच्छेदकरूप से वही पूर्व उक्त है, [ तात्पर्य यह है कि स्थूलचिदचिद्विशिष्ट ब्रह्म कार्य है, कार्यता तादृश ब्रह्मनिष्ठा, कार्यतावच्छेदक स्थूलचिदचिद् हुआ, उसका ब्रह्म के साथ अपृथक्सिद्धिसम्बन्ध होने से वह सम्बन्ध कार्यतावच्छेदकता-

प्रागुक्त इति वाच्यम्, तस्यातितुच्छत्वात्, तद्धि यावत्सत्त्वमसम्बन्धानर्हत्वमिति भवद्भिर्निरुच्यते, तत्तु स्वसत्ताव्यापकसम्बन्धयोग्यताकत्वं वा स्वसत्ताव्यापकोऽसम्बन्धयोग्यत्वस्याभावो यस्य तत्त्वं वा उभयत्रापि पूर्वोक्तरीत्या मृतेऽपि शरीरत्वव्यवहारस्य प्रामाणिकत्वेनाव्याप्तिः। आद्ये च योग्यतावच्छेदकत्वं न शरीरशरीरिभावस्यैव, अन्योन्याश्रयात्, न चान्यदपि सम्भवतीत्युक्तम्, सम्बन्धपदेन कालिकादिकमादाय हिमवद्विन्ध्यादेरप्यपृथक्सिद्धत्वव्यवहारा-

प्रामाणिकत्वेनाव्याप्तिरिति। ननु मृतेऽपि शरीरे शरीरिसम्बन्धाभावेऽपि तद्योग्यत्वमस्ति, तथा च प्रथमे नाव्याप्तिः, द्वितीये परमस्तु, असम्बन्धसत्त्वे तद्योग्यताया अवश्यम्भावेन तस्या अभावासम्भवादित्यत आह आद्ये च योग्यतेति।

प्रयोजकतयाऽऽशङ्क्य निराचष्टे—तस्यातितुच्छत्वादिति। तदेवातनोति—तद्धीति। स्वं चिदचिद्वस्तु। स्वसत्ताव्यापकीभूता या सम्बन्धयोग्यता यस्य स्वस्य तत्कत्वमित्यर्थः। पूर्वोक्तरीत्येति। जीवच्छरीरं सात्मकमित्याद्युक्तरीत्येत्यर्थः। अव्याप्तिरिति। चित्सम्बन्धयोग्यताया मृतशरीरसत्ताव्यापकीभूताभावात्। तादृशशरीरस्य चिति सम्बन्धाभावात्। आद्ये च योग्यतेति। तथा च योग्यतावच्छेदकस्य दुर्निरूपत्वे मृते शरीरे सम्बन्धयोग्यत्वं कथमवगन्तव्यमिति भावः। अन्योन्याश्रयादिति। शरीरत्वापृथक्सिद्धत्वयोरित्यादिः। अन्यत् = योग्यतावच्छेदकम्।

ननु कालिकसम्बन्धेन तच्छरीरेऽपि तादृशयोग्यतासत्त्वान्नाव्याप्तिरिति चेत्तत्राह—सम्बन्धपदेनेति। यदि च स्वसत्ताव्यापकसंयोगादियोग्यताकत्वं तत्, हिमवद्विन्ध्ययोश्च संयोगाभावान्न तत्र तद् व्यवहारापत्तिरित्युच्यते तदा-

वच्छेदक है। ] तो यह कथन सङ्गत नहीं है क्योंकि अति तुच्छ अर्थात् युक्तिविरुद्ध है। आप विशिष्टाद्वैतवादी उसका यावत्सत्त्वम् असम्बन्धानर्हत्वम् [ अपने सत्ताकाल में असम्बन्ध के योग्य न होना ] निर्वचन करते हैं। किन्तु वह क्या स्वसत्ताव्यापक-सम्बन्धयोग्यताकत्वरूप है [ यहाँ स्वं = चिद्चित् प्रपञ्च, उसकी सत्ता का व्यापकीभूत सम्बन्ध = अपृथक् सिद्धिसम्बन्ध, तद् योग्यता है जिसको अर्थात् प्रपञ्च की, तत्कत्व प्रपञ्च में ] या स्वसत्ता व्यापक जो असम्बन्ध की योग्यता का अभाव, वह है जिसका, तत्त्वरूप है यह दोनों ही ठीक नहीं है, क्योंकि दोनों ही परिष्कारों में पूर्वोक्तरीति से मृत-शरीर में भी शरीरत्व व्यवहार के प्रामाणिक होने से अव्याप्ति दोष है। और प्रथम पक्ष में योग्यतावच्छेदक शरीरशरीरिभाव कह नहीं सकते, क्योंकि उसे योग्यतावच्छेदक मानने पर शरीरत्व एवं अपृथक्सिद्धिसम्बन्ध के परस्पर सापेक्ष होने से अन्योन्याश्रय दोष हो जायेगा। और इसके अतिरिक्त योग्यतावच्छेदक सम्भव नहीं है, यह प्रागुक्त है। एवं सम्बन्ध पदसे कालिक आदि सम्बन्ध लेकर हिमालय एवं विन्ध्याचल का भी

पाताच्च, विशिष्यैव संयोगादेर्निवेशेऽपि देवदत्तादिशरीरे एवोत्पन्नविनष्टयूकादेरपि देवदत्तादिशरीरापृथक्सिद्धत्वव्यवहारापाताच्च। चिद्वर्गस्य घटादेश्च भगवति समवायाभावाच्च। एवं द्वितीयोऽपि परासनीयः। अपृथक्सिद्धेः प्रतीतिविशेषसाक्षिकसम्बन्धत्वे तु प्रतीतिविषयविशेषयोः परस्परायत्तसिद्धिकतया परस्पराश्रयप्रसङ्ग इति।

एवं यथासम्भवमुदीरितदोषैरेव न्यायसिद्धाञ्जनोक्तं 'यस्य चेतनस्य

द्वितीयोऽपि परासनीय इति। असम्बन्धयोग्यत्वाभावे कौतस्त्याकाङ्क्षानिवारकत्वं सम्बन्धयोग्यत्व एवेतिप्रागुक्तदोषः, असम्बन्धयोग्यत्वस्यापि च निरूपणीयं प्रसज्यतेऽवच्छेदकमिति भावः।

प्याह—देवदत्तादिशरीर इति। तथा च तादृशयूकादौ देवदत्तशरीरत्वापत्तिरितिभावः। संयोगादेरित्यादिपदग्राह्यसमवायोऽपि न वक्तुं शक्य इत्याह—चिद्वर्गस्येति। स चावयवावयव्यादीनामेवाभ्युपगम्यते। न चावयवावयविभावादिर्भगवता घटादेश्चिद्वर्गस्य च। तथा च न समवायो वक्तुं शक्य इति भावः। शरीरशरीरिभावस्तु नाद्यापि सिद्ध इति न तमादायावयवावयविभावः शक्यशङ्कः एतन्मते समवायानभ्युपगमस्याप्युपलक्षणमेतत्। परस्पराश्रयप्रसङ्ग इति। प्रतीतेः प्रमात्वे विषयविशेषस्य याथार्थ्यसिद्धिः, तत्सिद्धौ च प्रतीतेः प्रमात्वमित्यन्योन्याश्रयः।

निरुक्तदूषणगणग्रस्तत्वादेव न्यायसिद्धाञ्जनोक्तमपि तल्लक्षणं निरस्ततयातिदेशयति—एवमिति। अत्र यदवस्थमिति विशेषणं विशेषः। यस्यामवस्थायामवतिष्ठते यद् द्रव्यं तद् यदवस्थमित्युच्यते। यदवस्थशब्देन च शारी-

अपृथक्सिद्धत्वव्यवहार होने लगेगा। यदि विशेषरूप से संयोगादि का ही निवेश करें तो देवदत्तादि के शरीर में ही उत्पन्न होकर नष्ट होने वाली यूका (जूं) आदि में देवदत्तादि शरीर से अपृथक्सिद्धत्वव्यवहार होना चाहिये। यदि सम्बन्ध शब्द से समवाय लिया जाय तो चिद्वर्ग जीव तथा अचिद् घटादि का भगवान् के साथ समवाय न होने से वे भगवत् शरीर न होंगे। इसी प्रकार द्वितीय परिष्कार (स्वसत्ताव्यापकोऽसम्बन्धयोग्यत्वस्याभावो यस्य तत्त्वम्) का भी निरास कर लेना चाहिए। यदि अपृथक्सिद्धि को प्रतीतिविशेषसाक्षिकसम्बन्ध मानें तो प्रतीति एवं विषयविशेष दोनों के परस्पराधीन सिद्धिक होने से अन्योन्याश्रय दोष हो जायेगा। [ 'इमे अपृथक्सिद्धे' इत्याकारकप्रतीति होने पर तादृशरूप से सम्बद्धविषयविशेष की सिद्धि होगी और तादृशसम्बद्धविषयविशेष के रहने पर तादृश प्रतीति होगी। ]

एवं न्यायसिद्धाञ्जनोक्त पूर्वोक्त लक्षणत्रय का सारभूत यस्य चेतनस्य यदवस्थ 'अपृथक्सिद्धं विशेषणम् द्रव्यं तत्तस्य शरीरम्, तथा 'ज्ञानावच्छिन्नानुयोगिताकापृथक्-

२९

यदवस्थमपृथक्सिद्धं विशेषणं द्रव्यं तत्तस्य शरीरमिति, ज्ञानावच्छिन्नानुयोगिताकापृथक्सिद्धत्वसम्बन्धनिरूपितं द्रव्यत्वसमानाधिकरणप्रतियोगित्वं शरीरपदप्रवृत्तिनिमित्तमिति च पूर्वोक्तलक्षणत्रयफलीभूतं निरस्तम् ।

यत्तु अन्त्यावयवित्वे सति चेष्टावत्त्वम्, अन्त्यावयवित्वे सतीन्द्रियाश्रयत्वम्, अन्त्यावयवित्वे सति भोगावच्छेदकत्वं वा शरीरपदप्रवृत्तिनिमित्तमिति तार्किकमतम् । तन्न, चेष्टाया उपलक्षणत्वे उपलक्ष्यतावच्छेदकस्य मृतशरीरसा-

यदवस्थमिति । यदवस्थस्य द्रव्यस्यापृथक्सिद्धिविशेषणता, तदवस्थस्यैव शरीरतेति यथाश्रुताभिप्रायः । अन्यथा तस्यैव द्रव्यस्यावस्थान्तरे पृथक्सिद्धतयाऽव्याप्तिः स्यात् ।

फलीभूतं निरस्तमिति । अपृथक्सिद्धिनिरासेन द्रव्यत्वमपि निरस्तं वेदितव्यम्, तद्धच तन्मते श्रीमदनन्तार्यकृतसिद्धान्तसिद्धाञ्जनोक्तरीत्याऽवस्थावत्त्वम्, अवस्था चागन्तुकापृथक्सिद्धधर्म इति ।

रिक्यवस्थाविशेषो गृह्यते । तस्यामवस्थायां विद्यमानस्यैव शरीरत्वम् । शवावस्थापन्नस्य तु तन्मते शरीरत्वमेव नास्ति । अतस्तत्र चिदसम्बन्धानर्हत्वाभावेऽपि नाव्याप्तिरिति तेषामाशयः । किन्तु नैतदपि सुस्थम्, तत्रापि शरीरत्वव्यवहारस्य सर्वजनीनतया प्रागुपदर्शितत्वेन तस्यापि यदवस्थशब्देन ग्रहीतुं शक्यत्वाच्चिदसम्बन्धानर्हत्वाभावाच्चाव्याप्तेरपरिहारात् ।

तार्किकाभिमतं शरीरलक्षणं दूषयितुमुत्थापयति—यत्त्विति । तार्किकमतमिति सम्बन्धः । अन्त्यावयवित्व इति । हस्तपादाङ्गुल्यादावतिप्रसक्तिवारणाय विशेषणम्, घटदावतिप्रसक्तिवारणार्थञ्च विशेष्यदलम् । द्रव्यानारम्भकद्रव्यत्वं समवायेन द्रव्यवद्भिन्नद्रव्यत्वं वाऽन्त्यावयवित्वम् । अत्रावयवित्वस्य प्राक्निरस्तत्वात्तदुपेक्ष्य विशेष्यदलमाश्रित्य दूषयति—चेष्टाया इति । चेष्टावति चेष्टाया उपलक्षणत्वं विशेषणत्वं वेति विकल्प्याद्यं निरस्यति—उपलक्ष्यतावच्छेदकस्येति ।

सिद्धत्वसम्बन्धनिरूपितं द्रव्यत्वसमानाधिकरणप्रतियोगित्वं शरीरपदप्रवृत्तिनिमित्तम्' ये लक्षण भी यथासम्भव पूर्वोक्त दोषों से ही निरस्त हो जाते हैं । [ यहाँ प्रथम लक्षण का अर्थ यह है कि—जिस अवस्था में रहने वाला जो द्रव्य जिस चेतन के प्रति अपृथक् सिद्ध विशेषण, बनकर रहता है, उस अवस्था में विद्यमान वह द्रव्य उस चेतन का शरीर है । द्वितीयलक्षण का अर्थ—'ज्ञानावच्छिन्नानुयोगिताक जो अपृथक्सिद्धत्वसम्बन्ध, तन्निरूपित जो द्रव्यत्वसमानाधिकरणप्रतियोगिता, वही शरीरपद का प्रवृत्ति निमित्त है । ]

तार्किकों के मत में शरीर के लक्षण इस प्रकार किये गये हैं—अन्त्यावयवित्वे सति चेष्टावत्त्वम् "अन्त्यावयवित्वे सतीन्द्रियाश्रयत्वम्" "अन्त्यावयवित्वे सति भोगावच्छेदकत्वम्" । किन्तु ये तीनों ही लक्षण निर्दुष्ट नहीं हैं । चेष्टा को उपलक्षण मानने पर मृत-

धारणस्य निर्वक्तव्यत्वात्, विशेषणत्वे तु मृतशरीरे एवाव्याप्तेः, एवं द्वितीयतृतीययोरपि द्रष्टव्यम्, अवयवित्वञ्च विज्ञानवादे निरस्तम्। अतएव अन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वम्, जातिश्च तादृशी मानुषत्वचैत्रत्वादिरित्यपि-न युक्तम्, अधस्तात् देशकालानुगमस्य संसृष्टवस्तुमात्रे निरासेन जातिमात्रस्य निरस्तत्वाच्च। शारदायां पर्याप्तेर्निरस्तत्वेनान्त्यावयविभिन्नवृत्तित्वप्रति-

काकवन्तो देवदत्तस्य गृहा इत्यत्र काकोपलक्षितगृहे उत्तुगत्वादिकमुपलक्ष्यतावच्छेदकं यथा तथा प्रकृते न किञ्चिदस्तीतिभावः। विशेषणपक्षं प्रतिक्षिपति—विशेषणत्वे इति। चेष्टा हि प्रयत्नवदात्मसंयोगासमवायिकारणिका क्रिया "चेष्टा हिताहितप्राप्तिपरिहारार्थः स्पन्द" इत्युक्तेः। सा च मृतशरीरे नास्तीत्यव्याप्तिः। द्वितीयतृतीयलक्षणघटकयोरिन्द्रियाश्रयत्वभोगावच्छेदकत्वयोरपि मृतशरीरेऽभावा दव्याप्तत्वमित्याह—एवमिति। सुखदुःखान्यतरसाक्षात्कारो भोगः। स चात्मवृत्तिस्तदवच्छेदकत्वं जीवच्छरीर एव।

ननु जातिघटितलक्षणाश्रयणे नोक्ताव्याप्तिरित्याशयेन तदाशङ्क्य निराचष्टे—अत एवेति। उक्ताद्वक्ष्यमाणाच्च दोषादेव। न युक्तमिति योजना। पृथिवीत्वादिना साङ्कर्याच्छरीरत्वस्य जातित्वाभावादाह—जातिश्चेति। जातिमात्रस्य पूर्वं निरस्तत्वादपि तन्निरास इत्याह—अधस्तादिति।

उभयाभावसाधारणमन्त्यावयविभिन्नवृत्तित्वप्रतियोगिकाभावमादाय हस्तपादाङ्गुल्यादावपि शरीरत्वव्यवहारवारणाय पर्याप्तिनिवेशस्यावश्यकत्वं मन्वानं प्रत्याह—शारदायामिति। खण्डनशारदायाम्। अयं भावः—अयमेकः इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः पर्याप्तिः। अन्यथा घटो द्वित्ववानिति प्रतीतेरिव घटो द्वाविति प्रतीतेरपि प्रमात्वापातः, आकाशाविति शाब्दपतेश्चेति तार्किकमतं तावदयुक्तम्, स्वं न स्वीयमित्यनुभवबाधेन सम्बन्धिस्वरूपतायाः सम्बन्धेऽप्रामाणिकत्वात्। द्वित्वादिस्वरूपस्य च परिवर्तनासम्भवेन तदात्मकसम्बन्धस्य घटो द्वावित्यादिधियः प्रमात्ववारणेऽसामर्थ्याच्च।

शरीर साधारण उपलक्ष्यतावच्छेदक का निर्वचन करना होगा, ( जो कि असम्भव है )। और यदि उसे विशेषण मानें तो मृत शरीर में ही अव्याप्ति हो जायेगी, क्योंकि उसमें हिताहितप्राप्तिपरिहारानुकूलव्यापाररूपा चेष्टा नहीं है। एवं द्वितीय तृतीय लक्षणों की भी मृत शरीर में अव्याप्ति है क्योंकि उसमें क्रमशः इन्द्रियाश्रयत्व तथा भोगावच्छेदकत्व नहीं है। अवयवित्व का निरासविज्ञानवाद में किया जा चुका है। अतएव यह कहना कि—"अन्त्यावयविमात्रवृत्तिचेष्टावद्जातिमत्त्व ही शरीर का लक्षण है, जातिशब्द से मानुषत्व चैत्रत्वादि जाति लेना है"। युक्तियुक्त नहीं है, क्योंकि संसृष्टवस्तुमात्र में देशकालानुगम के निरास के द्वारा जातिमात्र निरस्त हो चुका है। खण्डनशारदा में

योगिकाभावमुभयाभावादिसाधारणं द्रव्यत्वादावादायातिव्याप्तेश्च। तत्तत्पदार्थत्वेन लक्ष्यताया अपि तत्र निरस्तत्वेन तादृशजातिमत्त्वस्यैव लक्ष्यतावच्छेदकतायां विरोधाच्च। जातित्वस्याखण्डोपाधित्वेऽन्योन्याश्रयेण सखण्डत्वे

अन्योन्याश्रयेणेति। अखण्डोपाधेः प्रतीतिविशेषसाक्षिकतयैव निरूपणीयतया प्रतीतिविषययोर्विशेषद्वयस्य परस्परायत्तसिद्धिकत्वमिति भावः। सखण्डत्वे इति। नित्यत्वे सत्यनेकसमवेतत्वरूपत्वे इत्यर्थः। समवायसम्बन्धावच्छिन्नवृत्तिता हि स्वरूपसम्बन्धविशेषो नानैव। अत्राधिकं चतुर्थपरिच्छेदे सामान्यखण्डनशारदायामनुसन्धेयम्।

किञ्च—अन्त्यावयविभिन्नवृत्तित्वप्रतियोगिकाभावस्योभयाभावादिसाधारणस्य निरासार्थं तादृशवृत्तित्वत्वगतैकत्ववृत्तिप्रतियोगिताकाभाववत्वं विवक्षणीयम्। प्रतियोगितायामेकत्ववृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्वनिरूपकानुयोगितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभ्यामुच्येत तथापि तादृशवृत्तित्वत्वघटत्वाभ्यां तादृशवृत्तित्वं नास्तीत्यभावं तादृशवृत्तित्वत्वेन तादृशवृत्तित्वघटोभयाभावञ्चादाय दोषस्य तादवस्थ्यात्। न्यूनेतरपर्याप्तिनिवेश तु लक्षणापर्यवसानस्यासर्वज्ञदुर्ज्ञेयत्वापत्तेः। न च लक्षणापर्यवसानमेष्टव्यमेव, प्रमाणापगमस्यानाभासत्वप्रयोजकस्य सद्भावेऽनवस्थाया अनाभासत्वध्रौव्यात्। वस्तुतस्त्वीदृशपरिष्काराणां शङ्कैव नोत्थातुमीष्टे, आगोपालांगनं जायमानस्य तादृशाभावप्रत्ययस्य तादृशावच्छेदकताघटितार्थविषयकत्वस्य केनापि वक्तुमशक्यत्वादित्यादिकं शारदायामुट्टंकितं तत एवावधेयम्।

तत्र शारदायाम्। विरोधाच्चेति। तादृशजातिमत्त्वस्यैव लक्षणत्वात्त-

पर्याप्ति के निरस्त कर दिये जाने से द्रव्यत्वादि में उभयभावसाधारणअन्त्यावयविभिन्नवृत्तित्वप्रतियोगिकाभाव लेकर घटादि में अतिव्याप्ति है। [ तात्पर्य यह है कि खण्डनशारदा में पर्याप्ति के निरस्त हो जाने से अन्त्यावयविमात्रवृत्ति चेष्टावद्वृत्तिजातिमत्त्वम् इस लक्षण में अन्त्यावयविमात्रवृत्ति का "अन्त्यावयविभिन्ननिरूपितवृत्तित्वप्रतियोगिकाभाववज्जाति" यही अर्थ करना होगा, ऐसी स्थिति में द्रव्यत्व भी जाति हो सकती है क्योंकि उसमें भी तादृशवृत्तित्वं गगनमुभयं नास्तीत्याकारक वृत्तित्वप्रतियोगिक अभाव लिया जा सकता है तथा च तादृशाभाववज्जातिद्रव्यत्व को लेकर घटादि में उक्त लक्षण की अतिव्याप्ति हो जायेगी। ] तत्तत्पदार्थत्वेन लक्ष्यता के भी खण्डनशारदा में निरस्त हो जाने से तादृशजातिमत्त्व को ही लक्ष्यतावच्छेदक मानने में विरोध भी हैं। जातित्व को अखण्डोपाधि मानें तो उस ( अखण्डोपाधि ) के प्रतीतिमात्रसाक्षिकतया ही निरूपणीय होने से प्रतीतिविशेष एवं विषयविशेष के परस्पराधीनसिद्धिक होने से अन्योन्याश्रय होगा। यदि उसे सखण्डोपाधि अर्थात् नित्यत्व सा...

चाननुगततयानुगमकत्वासम्भवेनानन्तानां तादृशजातीनां प्रत्येकमिलितविकल्पानुपपत्तेश्चेत्यादिकमूहनीयम् । अन्ये तु—आद्ये देवदत्त ईश्वरस्य शरीरमितिव्यवहारस्य तार्किकानभिमतस्य प्रसङ्गः, ईश्वरकृतिप्रयुक्तचेष्टावत्त्वस्य देवदत्ते सत्त्वात्, चेष्टाया कृतिप्रयुक्तत्वमादायैव देवदत्तस्य शरीरमिदमिति व्यवहारात्, कृत्यसाधारणकारणकत्वस्य षष्ठ्यर्थतास्वीकारेणातिप्रसङ्गवारणेऽप्यहल्यादिशरीरभूतशिलादावुक्तलक्षणाव्याप्तिर्दुर्वारैव । द्वितीये इन्द्रियवत्त्वं समवायेनासम्भवापादकम्, संयोगेन तु घटादावतिप्रसक्तम्, स्वजन्यज्ञानावच्छेद-

स्यैव लक्ष्यतावच्छेदकत्वे विरोधः । उपनयवाक्यबोधानुपपत्तिश्च । प्रत्येकमिलितविकल्पानुपपत्तेश्चेति । तादृशजातीनां प्रत्येकस्मिन् लक्षणत्वे परस्परमव्याप्तिः । मिलितस्य लक्षणत्वे चासम्भवः ।

अन्येत्विति । यद्यपि देवदत्त ईश्वरस्य शरीरमित्यादौ कृत्यसाधारणकारणत्वस्य षष्ठ्यर्थत्वेन ईश्वरनिष्ठकृत्यसाधारणकारणत्वस्य च देवदत्तीयचेष्टाया-मभावान्नातिप्रसंगः । तथापि अहल्याशरीरभूतशिलादौ तादृशचेष्टाया एवाभावादव्याप्तिः स्यादेवेत्याह—कृत्यसाधारणकारणत्वस्येति ।

अन्त्यावयवित्वे सतीन्द्रियाश्रयत्वमिति द्वितीयलक्षणं दूषयितुं तत्रेन्द्रियवत्त्वं समवायेव विवक्षितमुत संयोगेन, स्वजन्यज्ञानावच्छेदकत्वसम्बन्धेन वेतिविकल्पाद्यं निराचष्टे—द्वितीय इति । न्यायनये इन्द्रियाणां द्रव्यत्वस्वीकारेण शरीरात्मकद्रव्ये तेषां समवायासम्भवादसम्भवः । द्वितीयं निरस्यति—संयोगेनेति । तृतीयं तिरस्करोति—स्वजन्येति । स्वमिन्द्रियम्, तज्जन्यज्ञानावच्छेदकत्वं शरीर-

अनेकसमवेतत्वरूप मानें तो वृत्तिता के स्वरूपसम्बन्धविशेषात्मकतया नाना होने से अनुगम नहीं होगा । ऐसी स्थिति में उन अनन्त तादृशजातियों का अनुगमक न होने से प्रत्येक लक्षण है या समुदाय, ईदृशविकल्पापत्ति हो जायेगी ।

उक्त लक्षणत्रय के विषय में अन्यविद्वान् कहते हैं कि—प्रथम लक्षण मानने पर देवदत्त ईश्वरस्य शरीरम् इत्याकारक तार्किक के अनभिप्रेत व्यवहार की आपत्ति होगी, क्योंकि ईश्वरकृतिप्रयुक्तचेष्टावत्त्व देवदत्त में है और चेष्टा में कृतिप्रयुक्तत्व लेकर ही "देवदत्तास्य शरीरमिदम्" यह व्यवहार होता है । यदि चेष्टायाः इस षष्ठि का अर्थ कृत्यसाधारणकारणत्व [ कृति है असाधारण कारण जिसका ] मानकर पूर्वोक्त व्यवहारापत्ति का वारण कर भी लें तो अहल्या के शिलारूप शरीर में चेष्टा के न होने से उक्त लक्षण अव्याप्त हो जायेगा ।

द्वितीय लक्षण में इन्द्रिय का आश्रय यदि समवाय सम्बन्ध से माने तो असम्भव हो जायेगा, क्योंकि समवायेन इन्द्रिय का आश्रय कोई भी शरीर नहीं है । यदि संयोगसम्बन्ध से आश्रय मानें तो घटादि में इन्द्रियसंयोग होने से अतिव्याप्ति हो जायेगी ।

कत्वसम्बन्धेन तु रामादिशरीरेष्वव्याप्तम् ईश्वरज्ञानस्य भवतां नित्यत्वात्, व्याप्यवृत्तित्वेनावच्छेदकनिरपेक्षत्वाच्च, शिलादिरूपाहल्यादिशरीरेऽव्याप्तिश्च। तृतीये वेश्मादावतिव्याप्तिः, न च स्वावयवातिरिक्तदेशानवच्छिन्नत्वस्य भोगनिरूपितावच्छेदकतायां निवेशान्न दोषः, वेश्मनः स्वावयवातिरिक्तदेहरूपदेशावच्छिन्नस्यैवावच्छेदकत्वादिति युक्तम्; परकायस्य प्रविष्टं प्रति शरीरत्वापत्तेः ईश्वरभोगस्य व्याप्यवृत्तित्वेन तदवच्छेदकाप्रसिद्धचा रामादिशरीरेऽव्याप्तेश्च, अतएव—'अपीतौ तद्वदि' ति सूत्रे श्रीभाष्ये ईश्वरानन्दे व्याप्यवृत्तित्वरूपं

रामादिशरीरेष्वव्याप्तमिति। यदि तु तेष्वनित्यज्ञानस्यापि स्वीकारो न तिरस्क्रियते, अन्यथेन्द्रियाणां तेषु व्यर्थप्रायत्वात्, तदाप्याह शिलादिरूपेति।

स्वाभिमते। भवताम् तार्किकाणाम्। प्रकारान्तरेणापीश्वरशरीरे तादृशज्ञानावच्छेदकत्वाभावमाह—व्याप्यवृत्तित्वेनेति। ईश्वरज्ञानस्येत्यादिः। दूषणान्तरमाह—शिलादिरूपेति। तत्र तादृशसम्बन्धेनेन्द्रियवत्त्वाभावात्।

अन्त्यावयवित्वे सति भोगावच्छेदकत्वमिति तृतीयलक्षणं दूषयति—तृतीय इति। शंकते—न चेति। स्वं शरीरत्वेनाभिमतम्। भोगो हि सुखदुःखान्यतरसाक्षात्कारः, स चात्मनिष्ठस्तदवच्छेदकता च शरीरे स्वावयवातिरिक्तदेशानवच्छिन्ना। वेश्मनि च सा देहावच्छिन्नैवेति नातिव्याप्तिरितिभावः। दूषणान्तराभिधानेन तच्छंकां निराचष्टे—परकायस्येति। तथापीत्यादिः। ननु परकाये प्रवेशे सति प्रविष्टस्यापि तत्र शरीरत्वमिष्टमेवेति यदि कश्चिद् ब्रूयात्तदाप्याह—ईश्वरभोगस्येति। तत्र तदीयभाष्यकारोक्तिं दर्शयति—अत एवेति। ईश्वरभोगस्य व्याप्यवृत्तित्वादेव।

यदि स्वजन्यज्ञानावच्छेदकत्वसम्बन्ध से आश्रय की विवक्षा करें तो उक्त लक्षण रामादि के शरीर में अव्याप्त हो जायेगा, क्योंकि आप (तार्किक) के मत में ईश्वरज्ञान नित्य है। और ईश्वरज्ञान के व्याप्य वृत्ति होने से वह (ईश्वरज्ञान) अवच्छेदक निरपेक्ष भी है। [ तथा च रामादि शरीर में स्वजन्य ज्ञानावच्छेदकत्व नहीं है। ] अहल्यादि के शिलारूप शरीर में इन्द्रिय का आश्रय न होने से अव्याप्ति भी है।

एवं तृतीय लक्षण [ अन्त्यावयवित्वे सति भोगावच्छेदकत्व ] भी वेश्म (गृह) में अतिव्याप्त है। यदि कहा जाय कि भोगनिरूपित अवच्छेदकता में स्वावयवातिरिक्तदेशानवच्छिन्नत्वका निवेश करने से वेश्म में अतिव्याप्ति न होगी, क्योंकि वेश्म तो स्व = शरीरावयवातिरिक्तदेहरूपदेश से अवच्छिन्न का ही अवच्छेदक है अर्थात् वेश्मनिष्ठ अवच्छेदकता तादृशदेशानवच्छिन्न न होने से वहाँ लक्षण नहीं गया, तो यह नहीं कह सकते, क्योंकि ऐसा निवेश करने पर परकाय [ अन्यपुरुषीय देह ] में प्रविष्टपुरुषीय शरीरत्वव्यवहार होने लगेगा। और ईश्वरीय भोग के व्याप्यवृत्ति होने से उसका अवच्छेदक

निरतिशयत्वमुक्तमिति वदन्ति।

शरीरत्वस्य जातित्वं तु पृथिवीत्वादिना साङ्कर्येण तार्किकैरपि नानुमन्यते, निरस्तञ्च जातिमात्रं प्राक् शारदायां च। अतएव तत्तद्गोव्यक्तिभेदकूटवदवृत्तिविषयतासम्बन्धेन यावद्गोव्यक्तिषु सम्बद्धं तावद्विषयकज्ञानमेव 'इयं गौ'रित्यादौ स्वरूपतः प्रकारतया भासमानं गोत्वमितिरीत्या शरीरत्वनिरुक्तिर्न सङ्गता, किञ्च भेदकूटस्यासर्वज्ञापरिच्छेद्यत्वेन विशिष्य च सर्वासां गोव्यक्तीनां शब्देनापि प्रतिपादयितुमशक्यत्वेन गोत्वावच्छिन्नप्रतियोगिताकभेदो निवेशनीयः; तत्र च 'इयं गौ'रित्यत्र स्वरूपत एव ज्ञानभानो-

ननु शरीत्वजातिविशिष्टं शरीरमिदमेवास्तु लक्षणम्। तादृशजातिश्च करचरणादिनिष्ठसमवायिकारणतानिरूपितसमवायसम्बन्धावच्छिन्नाकार्यता किञ्चिद्धर्मावच्छिन्ना कार्यत्वादित्यनुमानेन सिद्धेत्याशंकां शरीरत्वस्य जातित्वनिराकरणेन परिहरति—शरीरत्वस्येति। तदुक्तं तार्किकैः—शरीरत्वं तु न जातिः, पृथिवीत्वादिना सांकर्यात्" इति। तथा च प्रयोगः—शरीरत्वं जातित्वाभाववत् सांकर्यवत्त्वाद्भूतत्ववत्।

न केवलं शरीरत्वस्य जातित्वाभावादेव तन्निरासोऽपि जातिसामान्यनिरासादपि तन्निरास इत्याह—निरस्तमिति। अत एवेति। अनुगतवस्तुमात्रस्य निरासादेव। शरीरत्वनिरुक्तिर्न सङ्गतेत्यन्वयः। तत्तच्छरीरव्यक्तिभेदकूटवदवृत्तिविषयतासम्बन्धेन यावच्छरीरव्यक्तिषु सम्बद्धं तावद्विषयकज्ञानमेव—इदं शरीरमित्यादौ स्वरूपतः प्रकारतया भासमानं शरीरत्वमिति रीत्येत्यर्थः। इयं गौरित्यत्र गोत्वनिष्ठा प्रकारता निरवच्छिन्नैवोल्लिख्यमानाया एव तस्याः किञ्चिद्धर्मपुरस्कारेण भानाभ्युपगमादित्यभिप्रायेणाह—स्वरूपतः इति। दूषणान्तरमाह—किञ्चेति। स्वरूपत एव ज्ञानभानोपगमेनेति। प्रोक्तसम्बन्धेन

ही अप्रसिद्ध है अतः रामादि के शरीर में अव्याप्ति भी हो जायेगी। अत एव "अपीतौ तद्वत्......" इस सूत्र के श्रीभाष्य में ईश्वरानन्द में अव्याप्यवृत्तित्वरूप निरतिशयत्व कहा है।

पृथिवीत्वादि के द्वारा सांकर्य होने से शरीरत्व को जाति तार्किक भी नहीं मानते हैं। एवं जातिमात्र खण्डनशारदा में तथा यहाँ निरस्त भी है। अतएव "तत्तद्गोव्यक्ति के भेद कूटवद् में अवृत्तिविषयतासम्बन्ध से यावद् गोव्यक्तियों में सम्बद्ध तावद्विषयक ज्ञान ही "इयं गौ" इत्यादि में स्वरूपतः प्रकारतयाभासमान गोत्व है" इत्यादि रीति से भी शरीरत्वका निर्वचन नहीं कर सकते। किञ्च उक्त लक्षण में भेदकूट के असर्वज्ञदुर्ज्ञेय होने से और समस्त गोव्यक्तियों का प्रतिपादन शब्द के द्वारा भी अशक्य होने से गोत्वावच्छिन्नप्रतियोगिताक भेद ही कहना होगा, ऐसी स्थिति में "इयं

पगमेन विषयतानवस्थानस्याभावेऽपि लक्षणज्ञाने तस्यावश्यकत्वमेव, न हि 'इयं गौ'रित्यत्र यज्ज्ञानं स्वरूपतो भासते तदेव गोत्वमित्यभिधानमात्रेण परः प्रतिपादयितुं शक्यते, व्यक्तिविशेषे एव तस्य सम्बन्धित्वशङ्काऽनिवारणादित्यवधेयम्। जातिप्रवृत्तिनिमित्तकत्वे गवादिशब्दवच्छरीरशब्दस्य ससम्बन्धिकत्वानुपपत्तिरित्यपि केचित्।

तावद्गोव्यक्तिषु सम्बद्धमपि तज्ज्ञानं स्वरूप एव भासते न तु तदवच्छेदकं तद्विषयकत्वम्। विषयान्तरव्यावृत्त्यर्थमुपलक्षणविधया तदच्छेदकं परं स्यात्। अतएव स्वरूपतो भासमानं तज्ज्ञानमेव स्वरूपतो भासमानं गोत्वमित्युक्तम्। विषयतानवस्थानाभावेऽपीति । अनवस्थितविषयतासम्बन्धाभावेऽपीत्यर्थः। तद्विषयकत्वस्यं तदवच्छेदकत्वाभावात्। स्वरूपसम्बन्धरूपविषयतानामानन्त्यादनवस्थितत्वम्। तादृशसम्बधेन यदि ज्ञानं गोत्वस्य लक्षणं स्यात्तदा ज्ञाने सर्वविषयवृत्तित्वमवश्य स्वीकार्यम्। अन्यथा गोत्वपक्षक—इतरभेदसाध्यकज्ञानहेतुकानुमाने ज्ञानरूपहेतोर्विषयविशेषव्यक्तौ सम्बद्धत्वे पक्षैकदेशे हेत्वभावाद्भागासिद्धिः स्यात्। लक्षणज्ञाने गोत्वादिलक्षणरूपज्ञाने। तस्य = तादृशविषयतानवस्थानस्य अनवस्थितविषयतासम्बन्धस्येति यावत्। व्यक्तिविशेष एव तस्येति। तस्य = स्वरूपतो भासमानस्य ज्ञानस्य। ससम्बन्धिकत्वेति । यथा गोशब्दस्य जातिप्रवृत्तिनिमित्तकत्वे कस्येयमिति जिज्ञासा नोदेति तथा शरीरेऽपि "कस्येदमिति ससम्बन्धिकत्वजिज्ञासाया अनुभवसिद्धाया अनुपपत्तिः स्यादि"तिभावः।

गौः" इसमें स्वरूपतः ही ज्ञान का भान मानने से उसमें अनन्त विषयताओं का सम्बन्ध न होने पर भी लक्षणज्ञान में अनन्त विषयताओं का सम्बन्ध अवश्य होगा, क्योंकि "इयं गौः कहने पर जो ज्ञान स्वरूपतः भासित होता है वही गोत्व है" इस कथनमात्र से लक्षण के जिज्ञासु को नहीं समझा सकते, कारण कि "उस ज्ञानकी विषयता तो व्यक्तिविशेष (किसी एक गो व्यक्ति) में ही विश्रान्त है" जिज्ञासु के इस संशय का समाधान नहीं होता। [ तात्पर्य यह है कि उक्त ज्ञान की विषयता एक व्यक्ति में है, और लक्षण सर्वविषयक होता है अतः तद्विषयिणी जिज्ञासा रह ही जाती है। ] किसी का कहना है कि—यदि गोशब्द के समान शरीर शब्द को जाति प्रवृत्तिनिमित्तक मानेंगे तो उस (शरीर) में ससम्बन्धिकत्व [ सम्बन्धीविशेषविषयिणी आकाङ्क्षा ] अनुपपन्न हो जायेगी। [ तात्पर्य यह है कि—जिस प्रकार गोशब्द को जातिप्रवृत्तिनिमित्तक मानने पर "यह किसको है" यह आकाङ्क्षा नहीं होती, उसी प्रकार शरीर शब्द को जातिप्रवृत्तिनिमित्तक मानने पर "यह शरीर किसका है" यह अनुभव सिद्ध आकाङ्क्षा अनुपपन्न हो जायेगी ]।

## लक्षणखण्डनप्रयोजनम्

ननु लक्षणखण्डनेनैतेन किं कृतं स्यात्? एवं तर्हि तन्निरूपणेनापि न किञ्चित् स्यात्, तेन यदि वस्तुसाधनं तर्ह्यनेन तद्बाधनमपि स्यात्। ननु परिच्छेत्तुमनर्हायाः परमेश्वरविभूतेरस्य प्रपञ्चस्यालौकिकत्वेनाप्यनिर्वचनं सम्भाव्यते, मिथ्यात्वं तु कुतः? अविभूतिश्चासौ परमात्मा कथमिवोपास्यः

## लक्षणखण्डनप्रयोजनम्

तद्बाधनमपि स्यादिति। आपातरमणीयाभ्यां लक्षणप्रमाणाभ्यां व्यावहारिकत्वसिद्धिं प्रति न वयं विरोद्धारः, ताभ्यां पारमार्थिकत्वसिद्ध्युपगमे तु तयोः खण्डनमवतार्यत इति भावः।

## लक्षणखण्डनप्रयोजनम्

लक्षणखण्डनप्रयोजनं विमृशति–नन्विति। किं कृतं स्यात्, किमित्याक्षेपे, न किमपि प्रयोजनं कृतं स्यादित्यर्थः। प्रतिबन्द्या समाधत्ते –एवं तर्हीति।

ननु "एकमेवाद्वितीयम्" "नेह नानास्ति किञ्चन" इत्यादिश्रुतिसिद्धस्याद्वैततत्वस्योपपत्तये तदतिरिक्तप्रपञ्चस्य मिथ्यात्वसिद्धेरावश्यकत्वेन, तन्निर्वचनखण्डनेन तन्मिथ्यात्वं निर्वाह्यत इत्यस्ति प्रयोजनं तत्खण्डनस्येति चेत्तत्राशङ्कते –ननु परिच्छेत्तुमिति। ननु माभून्मिथ्यात्वमपि, तथापि परमेश्वरस्त्वस्त्येव, तच्छरणीकारेण शास्त्रसिद्धं फलं भविष्यतीतिचेत्तत्राह—अविभूतिश्चेति। कञ्चिद्विशेषमाश्रित्यैवोपासना प्रवर्तते। सर्वविधविशेषरहितस्य

## लक्षणखण्डनप्रयोजन

प्रश्न—इस लक्षणखण्डन से कौन-सा प्रयोजन सिद्ध हुआ?

उत्तर—यदि लक्षणखण्डन से कोई प्रयोजन सिद्ध नहीं है तो उस (लक्षण) के निरूपण से भी तो कोई प्रयोजन सिद्ध नहीं होता। और यदि लक्षण निरूपण से वस्तु सिद्ध होती है तो इस खण्डन से वस्तु का बाध भी होगा ही।

प्रश्न—असीम ऐश्वर्यशालिपरमेश्वर द्वारा निर्मित इस प्रपञ्च के अलौकिक होने से निर्वचन न होना तो सम्भव है किन्तु उसमें मिथ्यात्व कैसे सिद्ध हुआ? दूसरी बात यह है कि ऐश्वर्यशून्यपरमात्मा उपास्य कैसे होगा?

स्यादिति चेच्छ्रद्धालुतया भगवत्कृपाभाजनेनापि भवता 'अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्व'मिति न्यायविषयता नातिक्रम्यते, संसृष्टवस्तुमात्रस्य खण्डनावतारपात्रतया विभूतिसंसृष्टःपरमात्मापि तथा मा भूदित्यसंसृष्टस्यैव तस्योपगन्तव्यत्वे स्वतःसिद्धत्वरूपं स्वातन्त्र्यमेव तस्य स्वात्मकं पारमार्थिकी विभूतिः, अन्या तु तदात्मकतादृष्ट्या पारमार्थिकत्वेन पूर्वोक्तरीत्योच्यमानापि तदन्यत्वेन बाधिततयाऽद्भुताऽपि मिथ्याभूतैव

खण्डनावतारपात्रतयेति। कस्यचिद्धि क्वचित्साधनमिति संसृष्टवस्तुमात्रसिद्धेः संसर्गसिद्ध्यधीनत्वमितिसंसर्गसिद्धेरपि तथात्वेनात्माश्रयादिकमिति संसर्गातीतमेव परमार्थतत्त्वमिति भावः।

तूपासनापि कथमित्यर्थः। परिहरति—श्रद्धालुतयेति। अल्पेति।

"एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च" इति पूर्वार्द्धम्। यथात्राल्पस्य गवात्मकार्थस्य रक्षणार्थमेकछत्रं समस्तभूमण्डलस्य राज्यं प्रभुत्वं स्वकीयञ्च सुचिरं नवयौवनसम्पन्नं वपुरित्येतत्सर्वं बहुपदार्थजातं परित्यक्तुमिच्छत राज्ञो दिलीपस्य विचारविमूढत्वेन प्रतीयमानत्वं तथैव प्रकृतेऽपि—अल्पस्य विशेषस्य मिथ्याभूतप्रपञ्चस्य तत्संसर्गस्य च हेतोर्नित्यं सर्वानुस्यूतं सर्वतन्त्रसिद्धान्तसिद्धतयावश्यमुपेयं सर्ववादिभिश्चित्तत्वं निर्विशेषं हातुमिच्छतस्त विमूढत्वमेव प्रतीयत इतिभावः। प्रपञ्चस्याल्पत्वमात्मनश्च बहुत्वम् "यत्र नान्यत् पश्यति" "यो वै भूमा तदमृतम्, अथ यदल्पं तन्मर्त्यमि" ( छा. ८।२४।१ ) त्यादिश्रुतिसिद्धम्। तथा = खण्डनावतारपात्रम्। तस्य परमात्मनः। तादृशस्वातन्त्र्यस्य पार्थक्यं नास्तीत्याह—तस्य स्वात्मकमिति। तेन न तस्य खण्डनावतारपात्रत्वं न वा निर्विभूतितयानुपास्यत्वञ्चेति भावः।

अन्या त्विति। प्रपञ्चरूपा विभूतिः। तदात्मकतादृष्ट्या = चिदात्मकता-

उत्तर—श्रद्धालुतया भगवत्कृपाभाजन होते हुये भी आपने अल्पस्य हेतो....." [ अल्पलाभ हेतु अधिकलाभ के परित्याग की इच्छा वाले तुम विचार विमूढ प्रतीत होते हो ] इस न्याय का अतिक्रमण नहीं किया। [ तात्पर्य यह है कि ऐश्वर्यरूप अल्पवस्तु के हेतु परमात्मरूप महान् वस्तुका आप परित्याग कर रहे हैं। यह विवेकशील पुरुष के लिए उचित नहीं है। ] वस्तुस्थिति यह है संसृष्ट वस्तुमात्र के खण्डनीय होने से विभूति-(ऐश्वर्य)विशिष्टपरमात्मा भी खण्डनास्पद न हो जाय, एतदर्थ उसे (परमात्मा) असंसृष्ट (ऐश्वर्यशून्य) ही मानना होगा, ऐसी स्थिति में उसका स्वात्मक (स्वस्वरूप) स्वतःसिद्धत्व रूप स्वातन्त्र्य ही पारमार्थिकी विभूति है। तदतिरिक्त प्रपञ्चरूप विभूति चिदात्मकता दृष्टि से पारमार्थिकतया पूर्ववर्णित होने पर भी चिद्भिन्नत्वेनरूपेण बाधित होने से अद्भुत होते हुए भी मिथ्या ही है न कि अलीक, अतः तद्विषयक

नत्वलौकेति न दोषः। अलौकिकत्वं हि मायामहिम्नैवेति मायिकत्वमेवोपोद्बलयति। अन्यथा तु लक्षणप्रमाणाभ्यां वस्तुसिद्धिरितिमर्यादातिक्रमे यत्किञ्चिद् यत्र क्वचिदेव स्वीकार्यं किमिति न स्यात्, तस्माद्विचारस्य तादृशमर्यादामादृत्यैव प्रवर्तनीयत्वे लक्षणप्रमाणयोः केनापि निरूपणासम्भवेन द्वैते वस्तुत्वबाधनध्रौव्यमेव, अधिकं तूक्तं शून्यवादे। यद्यपि तादृशमर्यादा ब्रह्मणि त्यक्ता, तथापि स्वतःसिद्धे एवासाधनीये तस्मिन्, न तु परतःसिद्धेऽपि, न हि लक्षणं विना प्रमाणमात्रेणैव वस्तुसिद्धिरस्तु, अनुभूयते हि प्रपञ्च इति शक्यं वक्तुम्, इद प्रमाणमिदमप्रमाणमिति विभागस्यापि लक्षणनिरूपणं विनाऽसम्भवदुक्तिकत्वात्, तस्माद्द्वैतसत्यत्वेऽभिनिविष्टस्य निरूपणासमर्थस्यालौकिकत्वोक्तिमात्रेण न निस्तारः, यथा च विशिष्टाद्वैतं द्वैतस्यैव नामान्तरकरणं

दृष्ट्या। तदन्यत्वेन चिद्भिन्नत्वेन। न दोष इति। न व्यवहारानुपपत्तिरित्यर्थः। लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति नियमोऽपि मायाराज्ये एवावश्यकोऽनुकूलश्चेत्याह—अन्यथेति। एतदेव विवृणोति—लक्षणप्रमाणाभ्यामिति। तस्यानुकूल्यं प्रकटयति—लक्षणप्रमाणयोरिति। तादृशमर्यादा = लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति मर्यादा। परतः सिद्धे ब्रह्मातिरिक्ते। न हीति। शक्यं वक्तुमिति योजना। लक्षणस्यावश्यकत्वे युक्तिं दर्शयति—इदं प्रमाणमिति। प्रकरणार्थमुपसंहरति—तस्मादिति। शरीरत्वानिरूक्त्या शरीरशरीरिभावानुपपत्तिं प्रदर्श्य दृग्-

व्यवहार अनुपपन्न नहीं है। उसमें अलौकिकत्व भी माया की महिमा से ही है अतः वह (अलौकिकत्व) प्रपञ्च के मायिकत्व को ही पुष्ट करता है। अन्यथा "लक्षणप्रमाणाभ्यां वस्तुसिद्धि" [ लक्षण एवं प्रमाण से वस्तु सिद्ध होती है। ] इस मर्यादा (नियम) का अतिक्रमण करने पर जहाँ कहीं भी जो कुछ भी स्वीकार क्यों न कर लिया जाय। अतः इस मर्यादा का अवलम्बन करके ही विचार प्रवर्तनीय है। ऐसी स्थिति में किसी भी वादि प्रतिवादि के द्वारा लक्षण एवं प्रमाण का निरूपण असम्भव होने से वस्तुत्व का बाध मानना आवश्यक है। इस विषय में विशेष कथन शून्यवाद में हो चुका है।

यद्यपि उक्त मर्यादा ब्रह्म में लागू नहीं है। किन्तु असाधनीय उस स्वतःसिद्ध में ही लागू नहीं है, न कि परतःसिद्ध वस्तु में भी। अर्थात् परतःसिद्ध वस्तु में तो लक्षण और प्रमाण का होना आवश्यक है। यह भी नहीं कह सकते कि प्रपञ्च के अनुभव सिद्ध होने से लक्षण के बिना ही केवल प्रमाणमात्र से ही वस्तुसिद्धि मान ली जाय। क्योंकि लक्षण निरूपण के बिना यह प्रमाण है एवं यह अप्रमाण है यह बिभाग भी करना सम्भव नहीं है। तस्मात् द्वैत सत्यत्व में अभिनिविष्टा (दुराग्रही) एवं द्वैतसत्यत्वनिरूपण में असमर्थ प्रतिवादि का प्रपञ्च में अलौकिकत्व के कथन मात्र से निस्तार नहीं हो सकता। विशिष्टा-

तथोक्तं स्वातन्त्र्यवादशेष इति कृतमतिमसृणमतिना साकं वाग्विलासेनेति।

एवञ्च सम्बन्धान्तरस्यासम्भवद्युक्तिकत्वे आध्यासिक एवावशिष्यते सम्बन्ध इति "यस्य पृथिवी शरीर" मित्यादिश्रुतिरप्याध्यासिकनियम्यत्वेनैवोपपाद्येति सिद्धमचितश्चिदध्यस्तत्वमिति।

## शक्तेः सत्यत्वासत्यत्वयोर्निवृत्त्यनिवृत्त्योश्च चिन्ता

अयम्पुनरेतत्प्रकरणार्थनिष्कर्षः—ब्रह्मैव पारमार्थिकं तत्त्वम्, तस्यास्त्येका मायाख्या शक्तिः, सा च वस्तुतस्ततोऽभिन्नापि कल्पिततद्भेदवती,

अथ बाह्याभाससम्भिन्नज्ञानेच्छाक्रियादशोन्मीलकं शक्त्याख्यं ब्रह्मस्वभावविशेषं पूर्वं निर्णीतमप्युपसंहारव्याजेन विशदयितुमाह अयम्पुनरित्यादीति। कल्पिततद्भेदवतीति। ईदृशभेदसद्भावेऽपि 'अतोऽन्यदार्तम्' इत्यादिश्रुतौ ब्रह्मान्यत्वेन शक्तेर्न ग्रहणसम्भवः। गुणगुण्यादौ भेदाभेदस्थले नीलो न घट इत्यादिव्यवहारादर्शनेनाभेदासहिष्णोरेव भेदस्य नञादिपदबोध्यत्वोपगमात्।

दृश्ययोः सम्बन्धान्तरासम्भवेनाध्यासिकस्य तस्य पर्यवसितत्वं दर्शयन्नुपसंहारव्याजेन स्वाभिप्रेतमुपस्थापयति—एवञ्चेति।

## शक्तेः सत्यत्वासत्यत्वयोर्निवृत्त्यनिवृत्त्योश्च चिन्ता

निश्च्योतितार्थं दर्शयति—अयम्पुनरिति। निगदव्याख्यातम्।

द्वैत तो द्वैत का ही नामान्तरकरण है। इसका निरूपण स्वातन्त्र्यवाद के अन्त में कर चुके हैं। अतः इस विषय में कोमल मतिमान् से विवाद करना उचित नहीं है।

एवञ्च दृग्दृश्य का सम्बन्धान्तर के युक्ति सङ्गत न होने से आध्यासिक सम्बन्ध ही पर्यवसित होता है ऐसी स्थिति में "यस्य पृथिवी शरीरम्" यह श्रुति भी आध्यासिक नियम्यता का ही प्रतिपादन करती है। तस्मात् यह सिद्ध हो गया कि अचित् पदार्थ चित् में अध्यस्त है।

## शक्तिके सत्यत्व-असत्यत्व एवं निवृत्ति-अनिवृत्तिकी चिन्ता

यहाँ प्रकरणार्थ का निष्कर्ष यह है कि—ब्रह्म ही पारमार्थिक तत्त्व है। उसकी एक मायाख्या शक्ति है। वह वस्तुतः ब्रह्म से अभिन्न होती हुई भी कल्पित भेदवती है।

ब्रह्मणः सत्यत्वेन तु तद्रूपेण सा सत्येत्युच्यते, ब्रह्मातिरिक्तत्वस्य मिथ्यात्वेन तु तेन रूपेण सा मिथ्येति कथ्यते। स्वरूपतः सा सत्या वा मिथ्या वेति प्रश्ने तु स्वरूपं यदि ब्रह्मरूपत्वं वा ब्रह्मभिन्नत्वं वा विवक्षितं तदोक्तमेवोत्तरम्, यदि तु मायात्वशक्तित्वदृश्यत्वादिकं, तदा धर्ममात्रस्य मिथ्यात्वेन तत्तद्धर्मेण रूपेण सा मिथ्यैव। एवं सति तत्तद्धर्मोपलक्षितं स्वरूपं सत्यं स्यादितिपर्यनुयोगे त्विष्टापत्तिरेव, ब्रह्मण एव सर्वधर्मोपलक्षितत्वात्। घटत्वादिनापि तस्यैव व्यवहारात्। सा च शक्तिरनुपपन्नार्थप्रदर्शकत्वरूपस्वातन्त्र्यशालितयाऽपर्यनुयोज्या सत्यत्वे मिथ्यात्वे वोक्तरीत्या स्वानुरूपान् भ्रान्तान् भ्रमविषयान् भ्रमांश्च नैकविधान् स्फारयति, स्वयमेवोद्भासितेन चोपायकलापेन कांश्चिन्मुक्ततया भासयति, वस्तुतस्तु न बन्धो न वा मोक्षः। नन्वेवं भ्रमनिवृत्तिरेव मायाया निवृत्तिर्न तु स्वरूपतोऽपि तस्या निवृत्तिरिति स्यादित्याक्षेपे तु पूर्वोदीरितरीत्यैवोत्तरम्, यथा मिथ्या तथा निवृत्ता, यथा तु सत्या तथाऽवशिष्टेति चिदतिरिक्तं नावशिष्टम्।

अनुपपन्नार्थप्रदर्शकत्वेति। द्वैतप्रतिभासनयोग्यत्वेत्यर्थः, द्वैतस्यैव परस्मिन् ब्रह्मण्यनुपपन्नत्वात्। यद्यपि तादृशस्वातन्त्र्यमेव शक्तिः, सा च चितेरेव, तथापि विवक्षावैचित्र्येणोपचारमाश्रित्य शक्तौ तादृशस्वातन्त्र्यमुक्तम्, तस्याश्चिदभिन्नताया उक्तत्वात्।

ब्रह्म के सत्य होने से तद्रूपेण वह सत्य कही जाती है। और ब्रह्मातिरिक्त के मिथ्या होने से तेनरूपेण (ब्रह्मभिन्नत्वरूप से) वह मिथ्या कही जाती है। स्वरूप से वह सत्य है या मिथ्या? इस प्रकार प्रश्न होने पर—स्वरूपशब्द से ब्रह्मरूपत्व विवक्षित है या ब्रह्मभिन्नत्व, दोनों पक्षों में उत्तर दे चुके हैं। और यदि स्वरूप से मायात्व शक्तित्वदृश्यत्वादि विवक्षित है, तब धर्ममात्र के मिथ्या होने से तत्तद्धर्मरूप से वह मिथ्या ही है। यदि कहें कि ऐसी स्थिति में तत्तद्धर्म से उपलक्षित स्वरूप सत्य हो जायेगा, तो इसमें इष्टापत्ति है, क्योंकि समस्त धर्मों से उपलक्षित ब्रह्म ही है। घटत्वादिरूप से भी उसी का व्यवहार होता है। वह शक्ति अनुपपन्नार्थप्रदर्शकत्वरूपस्वातन्त्र्यशालि होने से अपर्यनुयोज्य (अनाक्षेप्य) होती हुई सत्य हो या मिथ्या उक्तरीति से स्वानुरूप भ्रान्तों को भ्रम के विषयों को तथा अनेक प्रकार के भ्रमों को भासित करती है। और स्वयं के द्वारा ही उद्भासित उपायकलाप (उपायसमूह) से कुछ लोगों को मुक्ततया भासित करती है। वस्तुतस्तु न बन्ध है और न मोक्ष ही।

यदि कहा जाय कि भ्रम को माया से भासित मानने तो भ्रम निवृत्त ही माया की निवृत्ति है न कि स्वरूप से भी उसकी निवृत्ति, तो आपके इस आक्षेप का उत्तर पूर्वोक्त ही है। जैसे वह मिथ्या है वैसे निवृत्त भी होती है, और जैसे सत्य है वैसे अवशिष्ट भी। अतः यही निश्चयोत है कि चित् से अतिरिक्त कुछ अवशिष्ट नहीं है।

## अनादिरपि सर्गप्रलयवाहः सान्त इति केषाश्चिद्ब्रह्मवादिनां मतस्य निराकृतिः

नावशिष्टमिति शब्देन बोध्यमाननिषेधस्य गतिं तु खण्डनचरमपद्य-शारदायामवोचाम। यदि तु तत्रैवोक्तरीत्या न भावाद्वैते—

## भावाद्वैतखण्डनम्

न भावाद्वैते इति। दृश्यध्वंसस्य जन्यतया ब्रह्मानात्मकस्य सत्यत्वं वा मिथ्यात्वं वा, आद्येऽद्वैतश्रुतियुक्तिस्वा..न्त्यभङ्गः, जन्यस्यापि तस्य सत्यत्वे दृश्यमात्रस्यापि सत्यतया किमपराद्धम्, तत्र दृश्यत्वादेर्व्यभिचारित्वात्, ध्वंसभिन्नत्वे सति दृश्यत्वादेर्मिथ्यात्व-व्याप्यत्वं त्वप्रयोजकतापराकृतम्। द्वितीये त्वविद्यां विना कथं मोक्षे तस्य सद्भाव इति मिथ्याभूतेन तेन साऽप्याक्षेप्तव्यैवेति विशीर्णा मोक्षकथा तपश्विनीत्याशयः।

## अनादिरपि सर्गप्रलयप्रवाहः सान्त इति कषाश्चिद् ब्रह्मवादिनां मतस्य निराकृतिः

विवृतश्चात्र सर्वं टीकायाम्।

## अनादि सर्गप्रलयप्रवाह भी सान्त है, कुछ ब्रह्मवादियों के इस मतका निराकरण

नावशिष्टम् इस शब्द से बोध्यमान निषेध की स्थिति का वर्णन खण्डन के अन्तिम पद्य की शारदा में कर चुके हैं। यदि वहीं कही गई रीति से भावाद्वैत में चित्त संतोष नहीं है। [तात्पर्य यह है कि यदि भावाद्वैत मानेंगे तो दृश्यध्वंस जन्य होने से ब्रह्मरूप तो हो नहीं सकता, ऐसी स्थिति में ब्रह्मभिन्न दृश्यध्वंस को सत्य माना जाय, या मिथ्या, यदि सत्य मानें तो अद्वैतश्रुति तथा अद्वैत साधक युक्तियों का स्वातन्त्र्य समाप्त हो जायेगा, अर्थात् वे स्वतन्त्रता से अद्वैत को सिद्ध न कर सकेगी। और दृश्यध्वंस जन्य होते हुए भी यदि सत्य है तो दृश्यमात्र ने क्या अपराध किया है, जिससे उसे (दृश्यमात्र) सत्य न माना जाय। दृश्यध्वंस को सत्य मानने पर उसमें दृश्यत्व हेतु का व्यभिचार भी है। यदि ध्वंसभिन्नत्वे सति दृश्यत्व को मिथ्यात्व का साधक हेतु मानें तो वह हेतु अप्रयोजक हो जायेगा। यदि उसे (दृश्यध्वंस) मिथ्या मानें तो मोक्षदशा में अविद्या के बिना वह कैसे रहेगा। अतः तदर्थ मोक्षदशा में अविद्या का भी आक्षेप करना होगा। ऐसी स्थिति में मोक्षकथा ही विलुप्त हो जायेगी। तस्मात् भावाद्वैत-

न वा स्वस्वेतरसर्वदृश्यनाशस्य वृत्यात्मकचरमक्षणात्मत्वे—

## श्रीनृसिंहाश्रमस्वामिनां मतस्य निरासः

स्वस्वेतरेति । स्वं वृत्तिः । वृत्तिनाशोऽपि वृत्यात्मक इति तावत्पूर्वपक्षतयोपक्षिप्यमाणमपि मनोग्लानिमानयति, किम्पुनः सिद्धान्तविधयाऽभिधीयमानमित्याश्चर्यपदमेतत् । न च वृत्तेः सकलदृश्यत्वेन नाशं प्रति प्रतियोगित्वम्, तत्क्षणव्यक्तित्वेन तु नाशत्वाश्रयत्वमिति वाच्यम्, सर्वथैवानुभवासंस्पर्शितया 'न हि दण्डयपि देवदत्तः कुण्डलिनं स्वमारोहती'तिन्यायेन रूपभेदेनेदृशसमाधानानां बहिष्कार्यत्वात् । अत एव—घटाभावे न घटोऽननुभवात्, नापि घटाभावः, आत्माश्रयप्रसङ्गादिति घटाभावाश्रयको घटाभावप्रतियोगिश्चात्यन्ताभावो यथा स्वीक्रियते, तथा ज्ञानात्सर्वं दृश्यं नष्टमिति प्रत्ययबलादनुयोगिताविशेषरूपध्वंसत्वं वृत्तिघटितसर्वदृश्यप्रतियोगिताकं वृत्तिरूपचरमक्षणाश्रयकं स्वीक्रियतामिति—निरस्तम् । किञ्च—घटाभावाभावस्य घटस्थानीयस्य स्वप्रतियोगिस्वरूपघटाभावात्मकताया उपगमे घटवत्येव घटाभावः प्रमीयेत न त्वन्यत्र, अनुपगमे त्वभावस्य स्वप्रतियोगिरूपतायां नेदमुदाहरणम्, ज्ञानात्सर्वं दृश्यं नष्टमिति प्रत्यये तु न किञ्चिद्बलम्, तदीयप्रमात्वस्यानिर्णीतत्वात्, प्रस्तुतया रीत्या तद्विषयस्य नाशस्य दुर्निरूपताया एव प्रदर्श्यमानत्वात्, तस्य सत्यत्वमिथ्यात्वविकल्पकवलना ह्यनुपदमाकलितैव । तद्भीरुतयैव च नाशस्यात्युपहसनीयाऽपि प्रतियोगिरूपता भवद्भिः स्वीकृता, चरमक्षणस्यान्यस्य तदाऽलाभेन वृत्त्यात्मकत्वमेवेति कृत्वा । स्वरसतश्च न तादृशप्रत्ययस्य नाशे प्रतियोगितारूपतासमर्पकत्वमपीति त्यागमेव सर्वदृश्यनाशपक्षस्यानुमोदनीयं मन्यामहे ।

## अद्वैतसिद्धिकारपर्यन्तानां केषाञ्चिन्मतस्य निरासः

ननु जन्यस्यापि दृश्यनाशस्य ब्रह्मरूपतायां हानिः का ? ननु जन्यत्वानुपपत्तिरेव । इदानीमपि तद्व्यवहारस्य प्रामाणिकत्वापत्तिश्च, ब्रह्मणः सद्भावात् । न च चरमवृत्युपलक्षितब्रह्मरूपतायां नायं दोषः; गृहस्थः सदृशीं भार्यामुपेयादित्यादौ भाविगार्हस्थ्यादेरप्युपलक्षणतादर्शनेन दोषतादवस्थ्यात् । न च ब्रह्मणि दृश्यनाश इतिव्यवहारस्तावदिष्ट एव, इदानीं ब्रह्मणि दृश्यनाश इति तु न शक्य आपादयितुम्, एतत्कालावच्छिन्नत्वस्य चरमवृत्युपलक्षितवस्तुन्यभावादिति वाच्यम्, एवं सति चरमवृत्युपलक्षितत्वस्यैतत्कालावच्छिन्नत्वव्यावृत्तस्य निर्वक्तव्यत्वापातात् । अथ तत्सम्बन्धोत्तरकालावच्छेदेन

पक्ष युक्तिसंगत नहीं है । ] और यदि स्वस्वेतरसर्वदृश्यनाश के वृत्यात्मक चरमक्षणात्मकत्व पक्ष में चित्त संतोष नहीं है । [ इस परिष्कार में स्वशब्द से वृत्ति लेना है । तथा च स्व अर्थात् वृत्ति एवं वृत्यतिरिक्त समस्त दृश्यों का नाश वृत्तिरूप चरमक्षणात्मक है यह अर्थ हुआ । किन्तु यहाँ वृत्तिनाश को वृत्तिरूप मानना युक्तिविरुद्ध है

तत्समानाधिकरणतदभाववत्त्वरेव ब्रह्मणि तयोपलक्षितत्वमिति चेन्न, तत्सम्बन्धोत्तरकालत्वं हि तत्सम्बन्धनाशाधिकरणकालत्वम्, तत्सम्बन्धनाशश्च ब्रह्मरूप एव भवता वाच्यः, अन्यथा दृश्यनाशस्याप्यतिरिक्तता कुतो नानुमन्येतेतीदानीमपि ब्रह्मरूपनाशमादायोक्तव्यवहारापत्तिः, यदि च ब्रह्मरूपनाशस्य न कश्चित्कालोऽधिकरणम्, तदा ब्रह्मापि न तस्याधिकरणमिति कोऽस्ति परममुक्तौ चरमवृत्तिसम्बन्धोत्तरकाल इत्यसम्भव उक्तलक्षणस्य । रूपभेदेनाप्याधाराधेयभावस्य 'न हि दण्डचपि देवदत्तः कुण्डलिनं स्वमारोहती'ति न्यायेनासम्भवात्, इतोऽपि च दूषणान्न दृश्यनाशस्य ब्रह्मात्मकतापक्षो युक्तः । अद्यत्वे ब्रह्मनिष्ठतया तस्य व्यवह्रियमाणत्वात् । आधाराधेयभावो विकल्पमात्रप्राणो न तु वस्तुस्थित्यनुरोधीत्युगमे त्विदानीं ब्रह्मरूपनाशमादायोक्तापत्तिस्तदवस्थैव ।

एवं स्वोत्तरकालावच्छेदेन प्रतियोगिसमानाधिकरणं यद्यत्, तदन्यत्वे सति स्वकालावच्छेदेन प्रतियोगिसमानाधिकरणो यो ब्रह्मसाक्षात्काराभावस्तद्वत्त्वं ब्रह्मसाक्षात्कारोपलक्षितत्वम्, प्रथमस्वपदेनेदानीन्तनो ब्रह्मसाक्षात्काराभावो ग्रहीतुं शक्यते, द्वितीयेन तु विदेहताकालीनो ब्रह्मसाक्षात्काराभाव इत्यपि परासनीयम्, नानाधिकरणवृत्तेरपि प्रतियोगितावच्छेदकधर्मसम्बन्धयोस्ताद्रूप्येऽभावस्य न भेदः, सुतरां तु ब्रह्मरूपैकाधिकरणाश्रितस्य तदात्मकस्य वेति विषयतासम्बन्धावच्छिन्नब्रह्मसाक्षात्कारत्वावच्छिन्नप्रतियोगिताकाभावस्याद्यत्वे स्वोत्तरकालावच्छेदेन प्रतियोगिसमानाधिकरणस्य कथं स्वान्यत्वं कदाचिदपीत्यसम्भवदोषात्, विशेषणभेदेनापि तस्य नात्र भेदः शक्यशङ्कः, परममुक्तौ विशेषणाभावात्, चरमवृत्त्युत्तरत्वोपलक्षितत्वेन तस्य परममुक्तौ भेदोपगमस्य तादृशोपलक्षितत्वस्यैव निरूप्यमाणत्वेनासम्भवात्, विदेहदशायां कालाभावेन विदेहताकालीनत्वस्य व्यावर्तकताया वक्तुमशक्यत्वात् । जीवन्मुक्तिकालीनत्वाभावस्य व्यावर्तकत्वं स्यादितिचेद्, जीवन्मुक्तिकालावृत्तेर्बद्धताकालीनस्यापि ब्रह्मसाक्षात्काराभावस्य स्वोत्तरजीवन्मुक्तिकालावच्छेदेन समाधौ प्रतियोगिसमानाधिकरणतयाऽन्यत्वप्रतियोगिकुक्षिनिक्षिप्ततयाऽसम्भवत्तादवस्थ्यात् । अथ परममुक्तावत्यन्ताभावे स्वपूर्वकालावच्छेदेन प्रतियोगिसामानाधिकरण्यस्यैव व्यावर्तकत्वमास्तामिति चेदुपलक्षणतया विद्यमानतया वा, नाद्यः, उपलक्ष्यीभूताभावव्यक्तेरैक्यस्योक्तत्वात् । न द्वितीयः, परममुक्तौ तादृशसामानाधिकरण्यस्य विद्यमानत्वानुपपत्तेः । किञ्च व्युत्थानदशायामेव यस्य जीवन्मुक्तस्य प्राणत्यागः, तस्य तदानीन्तने ब्रह्मसाक्षात्काराभावे स्वोत्तरकालावच्छेदेन न प्रतियोगिसामानाधिकरण्यम्, किन्तु स्वपूर्वकालावच्छेदेनैवेति चरमव्युत्थानदशायामपि विदेहकैवल्यव्यवहारप्रसङ्गः ।

"तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम् ।
ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥"

इतिन्येन तादृशजीवन्मुक्तस्यापि विदेहकैवल्यमिष्यत एवेति जन्मान्तरे प्रतियोगिसामानाधिकरण्यं तदीये ब्रह्मसाक्षात्काराभावे न सम्भावनीयमिति शिवम् ।

**न वा चरमतत्त्वज्ञानस्य दृश्याश्रयकालपूर्वत्वाभावनियमे चित्तसन्तोषः ।**

यत्तु—नव्यमते यथाऽद्यत्वे संयोगनाशो विभागस्वरूपः, तन्नाशस्तूत्तरसंयोगरूपः, उत्तरसंयोगाभावे तु महाप्रलये विभागनाशः परमाण्वादिनित्याधिकरणस्वरूप उपेयते, जन्यभावत्वेन विभागस्य महाप्रलयावृत्तित्वात् । एवमस्माकं मतेऽविद्यानाशो वृत्तिरूपः, वृत्तिनाशस्तु विदेहकैवल्ये ब्रह्मस्वरूप इति । तत्तुच्छम्, नह्यभ्युपगममात्रेण वस्तुस्थितिनिर्णयः, किन्तु प्रमाणेन, न च जन्यस्य नित्यात्मकतायां किञ्चित्प्रमाणम्, गौरवं तु प्रमाणानुग्राहकं न तु प्रमाणमिति न तावन्मात्रेणातिरिक्तस्वत्यागौचित्यम् । परमाणोरद्यापि सत्त्वेन चरमविभागनाशव्यवहारस्याद्यत्वे प्रामाणिकत्वापाकरणय महाप्रलयकालवृत्तित्वविशिष्टपरमाणुस्वरूपताया वाच्यत्वे प्राप्ताप्राप्तविवेकनयेन चरमविभागनाशस्य महाप्रलयकालात्मकतायामेव पर्यवसानाच्च । अत एव प्राभाकरी रीतिरपि नात्र निरताराय, उक्तया रीत्या तेनापि भृङ्गग्राहिकया तत्तत्कालात्मकताया घटाभाववद्भूतलमित्यादिज्ञानात्मकताया वाऽभावे वाच्यत्वात् । न च भवतां परममुक्तौ व्यावर्तकः कश्चित् कालः, नापि च दृश्यसामान्याभाववद्ब्रह्मेति ज्ञानमिति यत्किञ्चिदेतत् ।

निरन्वयेऽभावे नाशत्वमसम्भवदुक्तिकमिति प्रागुक्तं तु न विस्मर्तव्यम् । प्रवाहस्यानाद्यनन्तत्वपक्षे तु सान्वयतयाऽविद्यानिवृत्तेर्नाशरूपता सम्भवत्येव । अपूर्णम्मन्यतामौर्ख्याध्यासाद्यपरपर्याया ह्यविद्या निवर्तते, न तु तस्या उत्थापिका मूलशक्तिरपि, सा हि बद्धत्वेनोद्भासितावशिष्टपुर्यष्टकेषु तादृशीमविद्यामुल्लासयत्येव, ब्रह्मस्वरूपतिरोधायकत्वेन तु तस्यामपि क्वचिदविद्याशब्दप्रयोग इत्यन्यदित्यलं विस्तरेण ।

## अद्वैतसिद्धेश्चन्द्रिकाख्यटीकाकृतां मतस्य निरासः

न वा चरमतत्त्वज्ञानस्येति । अत्रेदमपि ज्ञातव्यम्—विदेहमुक्तेर्व्यवहितपूर्वक्षणेषु जायमानतत्त्वज्ञाने व्यभिचारवारणाय चरमत्वं तावद्विवक्षणीयमेव, न तु विट्ठलेशोक्तरीत्या त्याज्यम्, ब्रह्मसाक्षात्कारमात्रे तादृशनियमनिरूढौ जीवन्मुक्तिविलोपप्रसङ्गादित्यादिकं दर्शितं शारदायाम्, एवं सति चरमं तत्त्वज्ञानं शुकादेर्वा मुख्यजीवस्य वा, नाद्यः, अद्यत्वे दृश्यानुपलब्धिप्रसङ्गात् । अथ प्रतिभासभेदेन दृश्यभेदः, प्रातिभासिकश्च प्रपञ्च इति शुकादेर्दृश्यसामान्यमुक्तनियमेन विलुप्तमेव, अस्मदादिना त्वन्यदेव दृश्यं दृश्यत इति चेत्, चैत्रमैत्रादिदृष्ट्या दृष्टिसृष्टिस्वीकारपक्षेऽपि घटकेऽनादीनां धर्मादौ च न तत्स्वीकारसम्भव इति दर्शितं पुरेति कथं दृश्यसामान्यविलोपः, मायादेः सत्त्वात्,

इत्यादि अनेक दोष है । ] तथा चन्द्रिकाकार के चरमतत्त्वज्ञान के दृश्याश्रयकालपूर्वत्वाभावनियम में भी चित्तसंतोष नहीं है । [ भाव यह है कि ब्रह्मसाक्षात्कारमात्र में तादृशनियम मानने पर जीवन्मुक्ति का विलोप हो जायेगा । एवं चरमतत्त्वज्ञान भी शुकादि का माना जाय या मुख्यजीव का इत्यादि का भी युक्तिसंगत निर्णय नहीं हो

मूलमायाया उक्तनियमेन प्रासे चाद्यत्वे प्रयत्नाप्रतीतिप्रसङ्गो दुर्वारः ।

अथैतद्दोषभिया मुख्यजीवस्यैव तत्त्वज्ञानं ग्राह्यम्, युक्तं ह्येतत्, 'वेदाहं समतीतानि वर्तमानानि चार्जुन' इति वदतस्तस्य 'यः सर्वज्ञः सर्वविद्' इत्यादिश्रुतिशतार्पितस्याऽजानतत्त्वज्ञानभाक्तया चरमत्वनिवेशस्य सुषुमालिङ्गितत्वात् चरमत्वं च न दृश्याश्रयकालपूर्वत्वाभावरूपमेव, व्यापकस्य व्याप्यदलप्रवेशानौचित्यात्, किन्तु स्वसामानाधिकरण्यस्वपूर्ववृत्तित्वाभ्यां ज्ञानविशिष्टं यत्तदन्यत्वम्, वस्तुतस्तु मुख्यजीवीयचरमतत्त्वज्ञानानन्तरं न क्वचिदन्यत्रापि कस्यचिज्ज्ञानस्य सम्भावनेति द्वितीयसम्बन्धेनैव वैशिष्टंच निवेश्यतामिति चेन्मैवम्, भोगप्रदप्रारब्धप्रतिद्धतया पूर्वतत्त्वज्ञाने तादृशनियमानुपपत्त्या चरमतत्त्वज्ञानपर्यन्तं पादप्रसारिकेति तावद्वस्तुस्थितिः, एवं सति मुख्यर्जीवेऽदृष्टपरवशताऽस्ति न वा, द्वितीयस्मिन् कल्पे ज्ञाने चरमत्वमप्रयोजकम्, नापि तत्त्वविषयकत्वमात्रम् आजानतत्त्वज्ञानभाजस्तस्य पूर्वमेव दृश्यसामान्यविलोपापत्तेरुक्तत्वात् । यदि चेच्छाशक्तिमहिम्नैव तादृशज्ञानव्यक्तेरुपार्जनं या दृश्यसामान्यं न सहते तर्हि माहात्म्यमिच्छाशक्तेर्न तु तत्त्वज्ञानस्येत्येव स्यात् । तस्या अपि च माहात्म्यं सकलनियमनिवारणपरायणस्वातन्त्र्यपर्यन्तं प्रसरत् केनोपायेनापमाननीयमिति प्रतिपादनीयमेव । 'विद्वान् नामरूपाद्विमुक्तः' इत्यादिश्रुतेस्तु गतिरग्रे मूले आलौचितैव ।

आद्ये तु कल्पे सरागस्यैव जन्मदर्शनन्यायेन मुख्यजीवस्य भवप्रवाहस्तावत्प्राप्त एव, एतज्जन्मोपभुज्यमानादृष्टस्य च पूर्वजन्मन्येवोपार्जनीयत्वात् । एवं च साङ्कुशमेवैश्वर्यमश्नुवानस्य तस्यादृष्टधाराधिष्ठाता निरङ्कुशैश्वर्यशीलः 'यः सर्वज्ञः सर्वविद्' 'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः । अचिन्त्यशक्तिश्च विभोर्विधिज्ञा षडाहुरङ्गानि महेश्वरस्य ॥' इत्यादिशास्त्रदर्शितोऽवश्यमनुमन्तव्यः । यस्यैवैकस्याभिव्यक्त्यपरपर्यायावेशेन 'वेदाहं समतीतानि' 'तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च' 'मामेव ये प्रपद्यन्ते' 'मामेकं शरणं व्रज' इत्यादिसावधारणाभिव्याहारो न परं श्रीश्रीनिवासशरीरावच्छेदेनैव, अपि तु श्रीदेवीरुद्रब्रह्मादिशरीरावच्छेदेनापि जायत इति शास्त्रान्तरपरिशीलनेन प्रतीयते । सर्वत्रैकस्यैवावेशानभ्युपगमे हि परस्परमवधारणानां बाधप्रसङ्गः । स्वीकृते च तस्मिन्नप्रतिहतस्वातन्त्र्यमास्वादयति परशिवे मुख्यजीवजीवाभासविभागस्य शोभाविधुरतया नानाजीववाद एव पर्यवसानम्, तत्र चोक्तनियमानुपपत्तिरुक्तैव । अद्य यावत्कस्यापि ब्रह्मसाक्षात्कारो नाभूदिति तु शतशः प्रोच्यमानमप्युपेक्षणीयमेव । ध्वंसानङ्गीकारेण प्रतियोगिनामिदानीं प्रतिभासमानानां चरमतत्त्वज्ञानानन्तरं क्व गमनमित्यत्र च नास्ति सन्तोषाधायकं समाधानम्, घटनाशे हि घटः क्व गत पर्यनुयोगो नोदेति, ध्वंसस्य प्रतियोग्यसमानकालीनतायाः प्रत्यक्षसिद्धत्वात् पूर्वकालावच्छेदेन प्रतियोगिसमानाधिकरणे त्वत्यन्ताभावे तथापर्यनुयोगः कुतो न स्यादिति प्रतियोगिव्यधिकरणदृश्यसामान्यान्याभावसम्भावना भग्नैवेति शिवम् ।

नापि पञ्चमप्रकारतापक्षे, सदसत्तदुभयात्मकतदुभयविलक्षणविलक्षणस्य बुद्ध्यनारोहात् ।

## इष्टसिद्धिकाराद्यभिप्रेतस्य निराकरणम्

'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत्' ( बृह० १–४ ) इति श्रुतिभाष्ये 'दृश्यते ह्येकत्वविज्ञानादेवानवगमनिवृत्तिः, दृश्यमानमप्यनुपपन्नमिति ब्रुवतो दृष्टविरोधः स्यात्, न च दृष्टविरोधः केनचिदभ्युपगम्यते, न च दृष्टेऽनुपपन्नं नाम दृष्टत्वादेव' इति ग्रन्थेनानुभवसिद्धायामविद्यानिवृत्तौ काचिच्चोदना न कार्येति स्फुटं प्रतीयमानेऽर्थेऽपरितुष्यन्त केचित्तं ग्रन्थमविद्यानिवृत्तेः पञ्चमप्रकारतयाऽलौकिकत्वेनावितर्क्यत्वमित्येतत्परतया व्याकुर्वते, इष्टसिद्धौ विमुक्तात्माचार्येण चायं पक्ष उपक्षिप्तः, तमेतं निराकरोति नापि पञ्चमेत्यादि । अन्तिमविलक्षणशब्दस्य प्रत्येकं सदादिचतुष्टयेन सम्बन्धः । न सती, अद्वैतहानेः, नालीका, ज्ञानासाध्यतापत्तेः, नाप्युभयात्मिका, विरोधात्, नाप्युभयविलक्षणा, आध्यासिकसत्तादात्म्यवत्त्वे सति त्रिकालाबाध्यवैलक्षण्यस्याविद्यके एव दृष्टत्वेन मोक्षेऽविद्यां विना तादृशनिवृत्तेः स्थित्यनुपपत्तेरिति तेषामाशयः प्रसिद्ध एवेति ।

बुद्ध्यानारोहादिति । 'आत्मान्यत्वे दृश्यत्वस्यानिवार्यतया दृग्दृश्यसम्बन्धानुपपत्त्यादियुक्तिभिर्मिथ्यात्वावश्यकत्वेन न पञ्चमप्रकारत्व' मिति तु चतुर्थपरिच्छेदेऽद्वैतसिद्धिचन्द्रिकाकृता कृता निराकृतिः, तत्र यद्यपि—आत्मान्यत्वमात्रेण न दृश्यत्वम्, अलीकेऽतिप्रसङ्गात्, नाप्यलीकान्यत्वमात्रेण, ब्रह्मण्यतिप्रसङ्गात्, नापि सदलीकोभयान्यत्वेन, सदलीकोभयत्वावच्छिन्नप्रतियोगिताकभेदस्य सत्यलीके च प्रत्येकं सत्त्वेनोक्तातिप्रसङ्गतादवस्थ्यात्, तथापि सद्भिन्नत्वे सत्यसद्भिन्नत्वेन तु स्यादेव, न च पञ्चमप्रकारतावादिना पञ्चमप्रकारभिन्नत्वे सतीत्यपि दृश्यत्वप्रयोजके निवेशनीयमिति वाच्यम्, पञ्चमप्रकारतापक्षस्य प्रामाणिकत्वसिद्धिमन्तरेणैवं निवेशानुपपत्तेः । मोक्षे च विद्यमानामविद्यानिवृत्तिं प्रति किमात्मा चिद्रूपतां त्यजति येनासौ चिद्विषयत्वरूपदृश्यत्वं नासादयेदिति तेषामाशयो द्रष्टव्यः ।

इदञ्चान्यदिह वक्तव्यम्—पञ्चमप्रकाराऽपीयमविद्यासामान्याभावरूपा वा स्यात्, अविद्याविशेषाभावरूपा वा, नाद्यः,

अद्यत्वे प्रपञ्चानुपलम्भप्रसङ्गात्, कस्यापि नाद्यपर्यन्तं ब्रह्मविद्या प्रोज्ज्वलाऽऽविरासीदित्यस्यामर्षणीयत्वात् । न द्वितीयः, तथाहि—मुक्तेनोपभुक्तशय्यासनादीनामन्यैः पश्चादुपभुज्यमानानां कस्याविद्यया कल्पितत्वम्, मुक्तस्य वा, इदानीमुपभोक्तॄणां वा, नाद्यः, तस्याविद्यानिवृत्तौ तत्प्रयुक्तानामवस्थानानुपपत्तेः, नाचान्ते एव ते शय्यासनादयः सादृश्येन प्रत्यभिज्ञायमाना इति वाच्यम्, ईदृशदृष्टिसृष्टिवादस्य पूर्वं निराकृतत्वात् । न द्वितीयः,

पाता । अतः इस पक्ष में भी दोष है । ] और न पञ्चप्रकारता पक्ष में सत्, असत, सदसदुभयात्मक, एवं सदसदुभयविलक्षण इस चतुष्कोटि से विनिर्मुक्तस्वरूप बुद्ध्यारूढ़ ही होता है ।

इदानीमुपभोक्तॄणामुत्पत्तेः पूर्वमपि तादृशशय्यादीनां सद्भावात्, तस्माद् यस्या ऐश्वरशक्तेः स्फारीभूतास्ते मुक्तेऽपि कस्मिंश्चित्तिष्ठन्ति तस्या एवास्त्वियमविद्यानिवृत्तिरपीति कृतं पञ्चमप्रकारताश्रयणेनेति ।

यदि तु 'अभावस्य च निरुपाख्यत्वात्' (ब्र० सू० भा० अ० २ पा० १ सू० १८) 'बीजादीनामुपमृदितानां योऽभावस्तस्याभावस्य, शशविषाणादीनां च निस्स्वभावत्वाविशेषात्, (अ० २ पा० २ सू० २६) इति भाषमाणस्य भाष्यकारस्य मतेऽभावस्याधिकरणभिन्नत्वेनालीकतयाऽविद्यानिवृत्तेरपि ब्रह्मरूपाधिकरणात्मनैव प्रागपि सत्त्वेऽपि विद्यामहिम्नाऽविद्याप्रतियोगिकत्वं परमिदानीं तस्यां सम्पन्नम् । न च—किमिदमुच्यते, अभावो हि न कदापि निष्प्रतियोगिक इति सप्रतियोगकत्वस्य पूर्वमेव दत्तपदत्वमित्यवश्यमनुमन्तव्यमिति–वाच्यम्, स्वरूपसम्बन्धादिरूपप्रतियोगितानिरूपकत्वस्य प्राक्सत्त्वेऽप्यविद्याऽसामानाधिकरण्यस्याऽभावेऽधिष्ठानतत्त्वावगमकाले सम्पत्तिरनुभवबलादेवोपेतव्येति भाष्याशयो वर्ण्यते, तदाप्यत्यन्ताभावेऽविद्याऽसामानाधिकरण्यं न तस्या अधिकरणातिरिक्तनाशं विनेति सोऽपि कुतो नानुभवान्यथानुपपत्त्यैवाक्षिप्यते । निरस्तश्च सोऽपि । सोऽपि हि कथञ्चिन्निरूपाख्य इत्यवगत्य केषाञ्चिदुपेक्षणीयोऽपि नवीनाध्ययनाधीनसंस्कारैः ससचिवः प्राप्तपर्याप्तोत्साहः स्वस्थितये मायामपि बलादानयन् प्रपञ्चप्रवाहस्यानादिसान्तत्वपक्षे वज्रसहस्राघातसंघातविधायकोऽभूदित्यभूतपूर्वमेतत् ।

## अनलीकाया अप्यविद्याया विद्ययाऽलीकत्वप्राप्तिरिति पक्षोपक्षेपः

अथैवमास्ताम्—भावानामभवनमेव तावदभावपदार्थः, न त्वसौ सन्, अनुभवविरोधात्, भूतले कियन्ति वस्तूनीति प्रश्ने भावानामेव गणनयोत्तरदर्शनात्, अन्यथाऽनन्ताभावानां सर्वत्र सत्तया तादृशोत्तरस्याप्रामाणिकतापातात् । यद्यप्यतान्द्रिपरमाण्वाबिभावजातमपि सर्वत्रागणनीयमेव वर्तते इति व्यवहारविशेषयोग्यवस्तुविशेषपर एव तादृशस्थले वस्तुशब्द इति नाभावानां वस्तुत्वेऽपि तादृशोत्तरासङ्गतिरिति शक्यते वक्तुम्, तथापि निपुणमनुभवोद्धुरीकारेऽधिकरणातिरिक्तयाऽनुपलभ्यमानत्वेन नाभावः कश्चित्, अभावोऽस्तीत्यादिप्रत्ययस्य विकल्पात्मकत्वात्, चक्षुषा घटमपश्यन् हि मनसा 'अत्र घटाभावोऽस्ति' इति विकल्प्य तदनुरूपं वाग्व्यवहारमपि प्रवर्तयति, विकल्पौपयिकशब्दस्मरणस्य सर्वत्र सम्भवात्, शब्दज्ञानानुपात्येव विकल्प इत्यस्यानादरणीयत्वाद्वा । अधिकरणातिरिक्तताप्रकारकोपलम्भविषयत्वाभाववान् अभाव इत्यपि विकल्पमूल एव व्यवहार इति न तावताऽभावसिद्धिः सम्भावनाया, एवं च नायमधिकरणात्मको नाप्यतिरिक्त इत्यलीकः, अलीकस्यापि व्यवहार्यता च शून्यवादे उपपादितैव, अभावव्यवहारस्य च वस्तुगत्याऽधिकरणविशेषालम्बितताया औचित्यप्राप्तत्वेऽप्याधाराधेयभावांशे विकल्पात्मकत्व-

## शक्तेरानन्त्ये सर्गप्रलययोश्च प्रवाहानन्त्ये पर्यवसानम्

तदा प्रपञ्चस्योक्तरीत्या दुर्निरूपतया मिथ्यात्वमपरित्यज्यैव शास्त्रसिद्धतया च सृष्टिप्रलयौ स्वीकृत्यैव "न कदाचिदनीदृश" मिति प्रवाहानन्ततापक्ष एवाभिनवोऽभिनवाय कस्मैचिद्रोचेत। बद्धत्वादिभ्रमनिवृत्तिफलमेव, आधारत्वेन विकल्प्यमानवस्तुन आवश्यकत्वेन च न दृश्यसामान्याभावमात्रमादाय शून्यवादिविजयोऽपि, अधिकरणभिन्नत्वेनैवाभावोऽलीको न त्वधिकरणात्मनापीत्यप्यधिकरणतया विकल्प्यमानवस्तुसद्भावसमर्थनमात्राभिप्रायेणैव नेतुमुचितम्, नत्वभावस्याधिकरणात्मकताऽभिप्रायेण, अभेदे आधाराधेयभावस्य रूपभेदेनाप्यप्रामाणिकत्वात्।

न चैवमलीकत्वे घटनाशादेः साध्यतानुभवविरोधः; कपालशर्करादिरूपोत्तरावस्थाया एव साध्यताऽनुभवात्, घटाद्यत्यन्ताभावस्थले च घटादेर्देशान्तरनयनस्यैव करव्यापारादिसाध्यत्वात्, भेदस्य वाय्वादौ रूपाद्यत्यन्ताभावस्य च तु साध्यताऽनुभवस्य प्रसक्तेरेवाभावात्। घटादिज्ञानेन तदज्ञानस्य सर्वथैव निवृत्तेरनुभवसिद्धत्वस्थले तु कपालशर्करादिस्थानीयोत्तरावस्थाया अभावेऽप्यज्ञानेऽलीकताप्राप्तिरेव साध्या। न चाज्ञानं पूर्वं सदपि ज्ञानेनालीकतां चेद्गतम्, तदाऽपूर्व एवायमलीकतामार्गः, शशशृङ्गादेरलीकताया निस्स्वरूपतापरपर्यायायाः कालविशेषानवच्छिन्नाया एव सम्प्रतिपत्तेरिति वाच्यम्, अनुभवानुरोधेनापूर्वार्थाभ्युपगमेऽपि क्षतिविरहात्, अलीकानां वैलक्षण्यस्याप्यलीकत्वेन तद्व्यवहारस्य विकल्पविलासत्वात्। एवं च घटादिवत् परस्परवैलक्षण्येऽलीकानामनलीकत्वप्रसङ्गो न देशनीयः, यदि हि वैलक्षण्यं वैधर्म्यं तदा घटादेर्न तदलीकमिति वैषम्यात्, यदि तु भेदः, तदाऽभावत्वेन तस्यापि घटादावलीकत्वेऽप्यनुभवानुरोधेनैवाली..नामलीकतायास्त्यक्तुमनौचित्यात्। एवं च ब्रह्मविद्ययाऽप्यविद्याया अलीकतैव साध्यताम्, एवं चाधिकरणभिन्नत्वेन रूपेणाभावस्यालीकत्वमित्यनभिधाय सामान्यत एव तत्र तत्राभावस्यालीकतोक्तिः श्रीमद्भगवत्पादानामनुमोदिता भवतीति चेत्;

अस्त्वेवं यद्युपपद्यते विद्ययाऽनलीकस्याप्यलीकता, का नो हानिः, तथापीदृशविचारमनाश्रित्य बुधैरविद्यानिवृत्तिमधिकृत्य निरूपितानां प्रकाराणामपाकरणमत्र यक्षानुरूपो बलिरिति न्यायेनाभावस्यानलीकत्वमुपेत्यैवाचरितमुचितमेव। परन्त्वलीकताप्राप्तिरूपा निवृत्तिरपि कस्यचिद्ब्रह्मसाक्षात्कारेण मोहाख्याविद्याया एव, न तु तदुत्थापिकाया मूलशक्तेरित्युक्तमत्रापि न विस्मरणीयमितिशिवम्।

## शक्ति के आनन्त्य में एवं सर्गप्रलय के प्रवाहानन्त्य में पर्यवसान

तो उक्तरीति से प्रपञ्च के दुर्निरूप होने से उसे मिथ्या मानकर ही, शास्त्रसिद्ध होने से सृष्टिप्रलय को भी स्वीकार कर "न कदाचिदनीदृशम्" के अनुसार नूतन प्रवाहानन्तता-

**परिपूर्णात्मताबोधोदय एव च परमः पुरुषार्थः। शरीरविशेषावच्छेदेन**

अभिनव इति। नवीनप्रक्रियाग्रन्थेष्वप्रसिद्धतयाऽभिनवत्वम्, अन्यादृशग्रन्थेषु तु मिथ्यात्वं सृष्टिप्रलयौ चोपगत्यापि प्रवाहानन्तता प्रकाश्यत एव,

पुनः सृष्टिः पुनर्नाशः, पुनर्दुःखं पुनः सुखम्।
पुनरज्ञः पुनस्तज्ज्ञो बन्धमोक्षदृशः पुनः॥
न कदाचन संसारः किलायं राम सत्सदा[1]।
सर्वशक्तावसंसारशक्तिता विद्यते यतः॥
न चैवेदं कदाचित्तु साधो जगदनीदृशम्।
सर्वशक्तौ हि संसारशक्तिता विद्यते यतः॥
ज्ञदृष्ट्या सर्वमेवेदं ब्रह्मैवेति महामते।
नास्ति संसार इत्येतदुपपद्यत एव च॥
अज्ञदृष्ट्या त्वविच्छिन्नसंसारत्वादनारतम्।
नित्या संसारमायेयं मिथ्यापीहोपपद्यते॥

इतियोगवासिष्ठे [ स्थिति प्र० सर्ग ४७ ] दर्शनात्। पूर्वश्लोकस्वारस्यादज्ञदृष्ट्येत्यनेन व्युत्थानकालीना प्रक्रियादृष्टिरेवाभिप्रेयते न त्वयौक्तिकदृष्टिः। एवं च प्रपञ्चस्य प्रवाहानन्त्येऽपि तन्मूलशक्तेर्ध्वंसाप्रतियोगित्वरूपमेवानन्त्यमायाति, तस्या ध्वंसे कार्यप्रवाहविरामापत्तेः।

निर्वाणमेव सर्गश्रीःसर्गश्रीरेव निर्वृतिः।
नानयोः शब्दयोरर्थभेदः पर्याययोरिव॥

इतियोगवासिष्ठोक्त्याप्ययमर्थ उपोद्बल्यते, परमार्थतो द्वैतशून्यतया निर्वृतेऽपि परमात्मनि न काचन दशेदृशी, यस्यां कस्यापि द्वैतप्रतिभासो नास्ति, तथा च तत्त्वदृष्ट्या निर्वाणस्येव प्रक्रियादृष्ट्या संसारस्याप्यानन्त्यमिति हि तत्तात्पर्यम्।

सति दीप इवालोकः सत्यर्क इव वासरः।
सति पुष्प इवामोदश्चिति सत्यां जगत्तथा'॥

इति महोपनिषदुक्तिरप्येतत्परैव प्रतीयते।

संसारे कालत्वव्यापकतायां नवीनानामिष्टापत्तावपि कालस्यापि मायाचित्सम्बन्धरूपस्य चित्सम्बद्धमायारूपस्य मायासम्बद्धचिद्रूपस्य वा मायासमानयोगक्षेम-

## शक्तेरानन्त्ये सर्गप्रलययोश्च प्रवाहनन्त्ये पर्यवसानम्।

प्रवाहानन्ततापक्ष इति। स्वसजातीयध्वंसव्याप्यप्रागभावप्रतियोगित्वं प्रवाहानादित्वम्। स्वसजातीयप्रागभावव्याप्यध्वंसप्रतियोगित्वं तु प्रवाहानन्त्यम्। एतच्च—उर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययमित्यत्र—"अव्ययोऽनाद्यनन्तदेहादिसंतानाश्रयः" इति श्रीमद्भगवत्पादैरपि व्याख्यातम्। परिपूर्णात्मता

१. सदा सवात्मकवस्तुरूपो नेत्यर्थः।

द्वैतप्रतिभासनिवृतिरेव च "भूयश्चान्ते विश्वमायानिवृत्ति" रितिश्रुतिविषयः। तयाऽनाद्यनन्तत्वमेव प्रसञ्जनीयम्, मायाया इव तत्सम्बन्धस्यापि ब्रह्मातिरिक्ततया बोधोदय इति। परिपूर्णत्वमेवेश्वरत्वं समस्तैश्वर्यखचितत्वमिति यावत्। परिपूर्णपरमात्मभावापत्तिरेव मोक्ष इति वेदविदोऽपि वदन्ति। तथाहि—तस्माद् यदविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृत्वभोक्तृत्वरागद्वेषादिदोषकलुषितमनेकानर्थयोगि। तद्विलयेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं स्वरूपं विद्यया प्रविपद्यते। सर्पादिविलयेनेव रज्वादीन्" इति दहराधिकरणे, "किं पुनर्जीवस्येश्वरसमानधर्मत्वं नास्त्येव? न नास्त्येव, विद्यमानमपि तत्तिरोहितमविद्यादिव्यवधानात्। तत्पुनस्तिरोहितं सत्परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादात्संसिद्धस्य कस्यचिदेवाविर्भवति" इति संन्ध्यधिकरणे, "मद्भावमीश्वरभावं मोक्षमागताः समनुप्राप्ता" इति वीतरागभयक्रोध इत्यादिगीताभाष्ये च श्रीमद्भगवत्पादाः प्रत्यपादयन्। प्रपञ्चितञ्चैतत् सिद्धान्तलेशसंग्रहे श्रीमदप्पय्यदीक्षितेन्द्रैः। अत एव—

जाग्रत्स्वप्नसुषुप्तिधर्मकमिदं चित्तं त्वदज्ञानतः
प्रादुर्भूतमतस्त्वमेव सततं त्वत्तो न तद्भिद्यते।
स्वाज्ञानञ्च तवानुभूतिबलतः सिद्धं मृषा तत्त्वतो
नासीदस्ति भविष्यतीति भवतः पूर्णा चितिः शिष्यते॥

(सं० शा० ३।१४०)

इति संक्षेपशारीरकोक्तिरपि संगच्छते। "वास्तवत्वेन पूर्णानन्दचिदात्मावशिष्यते इत्यर्थः" इति तत्रैव मधुसूदनस्वामिपादाः।

अथवा परिपूर्णत्वं परिच्छेदत्रयशून्यत्वम्। स्वान्यूनसत्ताकाभावप्रतियोगि यद् यत्तत्प्रतियोगिकभेदवत्त्वम्। अभावे स्वान्यूनसत्ताकत्वविशेषणाद्ब्रह्मणि जड़ानुयोगिकभेदप्रतियोगित्वसत्त्वेऽपि नासम्भवः। ब्रह्मान्यूनसत्ताकभेदाप्रसिद्धेः। तथा च स्वान्यूनसत्ताकाभावप्रतियोगित्वरूपपरिच्छिन्नत्वमेव मिथ्यात्वव्याप्यम्। तस्य च ब्रह्मण्यसत्त्वान्न मिथ्यात्वापत्तिः। एवञ्च "सत्यं ज्ञानमनन्तं ब्रह्म" इति स्वरूपलक्षणलक्ष्यं निर्विशेषमेव तत्त्वमवशिष्यते। तदात्मताबोधोदय एव मोक्षः। ब्रह्मवेद ब्रह्मैव भवति" (मु० ३।२।९) "परमेव ब्रह्म भवति" (नृ० ५) इत्यादि-

पक्ष ही किसी अभिनव (प्रतिभासम्पन्न) विद्वान् को रुचिकर होगा। बद्धत्वादिभ्रम की निवृत्तिफलक (निवृत्तिरूप फल वाला) परिपूर्णात्मताबोध का उदय ही परमपुरुषार्थ (मोक्ष) है। शरीरविशेषावच्छेदेन [ शरीरविशेषको निमित्त बनाकर ] द्वैतप्रतिभाष

मायायास्तूक्तैव गतिः, परन्तु न मुक्तावेवेयं गतिरपि तु बन्धेऽपोत्येषा

दुर्निरूपत्वात्तु मिथ्यात्वम्, अतएव न विशिष्टाद्वैतवादप्रसङ्गः, तन्मते वैशिष्ट्यस्य सत्यत्वात्, जन्योपाधिरूपस्य तु कालस्य प्रवाहरूपेणैवानाद्यनन्तत्वम्। एवं च मिथ्याभूततया प्रपञ्चस्यानादित्वेऽपि यथा नाऽद्वैतभङ्गः, तथाऽनन्तत्वेऽपि। एवं सति च चतुर्थपरिच्छेदे खण्डनकारोऽपि—

'अनाद्यनन्तयोर्नैवं विनिगन्ता प्रवाहयोः' ( ५५५ पृ० शारदा )

इतिब्रुवन्नत्राञ्जरयेनानुकूल एव। प्रवाहयोः = कार्यकारणप्रवाहयोः।

'न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा'

इति श्रीमद्भगवद्गीतादावपि स्वरसत आनन्त्योक्तिः प्रकृते सौमनस्यं तनुते, ज्ञानं विनाऽनुच्छेद्यत्वरूपमानन्त्यं च न प्रवाहानन्त्यं विरुणद्धि, ज्ञानोच्छेद्यत्वस्यात्यन्ताभावदृढावगमातिरिक्तस्य दुर्वचत्वात्। प्रपञ्चितं ह्येतदेवानुपदम्। अवगमस्याभावकालेऽपि च तद्विषयत्वोपलक्षितात्यन्ताभावमादायोच्छेदव्यवहारसम्भवः। उपलक्षणं त्विदं भूतं सत्, न तु गृहस्थः सदृशीं भार्यामुपेयादित्यादौ गार्हस्थ्यमिव भावि सत्। तेन बद्धत्वदशायां न दृश्योच्छेदव्यवहारः। अनुपदं मूले वक्ष्यते चोच्छेदस्वरूपान्तरमपि।

द्वैतप्रतिभासनिवृत्तिरेवेति। शरीरविशेषावच्छेदेन द्वैतप्रतिभासप्रागभावासमानाधिकरणेयं विवक्षितेति त्ववर्णलभ्यम्। एवं च शरीरविशेषावच्छेदेनापुनरावृत्तिरेवापुनरावृत्ति श्रुत्यर्थः पर्यवस्यति मायायाः सद्भावेऽपि तदुत्थमोहाख्यावस्थाविशेषापगमाच्च द्वैतप्रतिभासो निवर्तते, प्रपञ्चान्तरस्येव नाशजातस्यापि मिथ्याभूतस्य सद्भावश्च नेदानीमनुपपन्न इत्युपदर्शितमेव, दृश्योत्थापकशक्तेः सद्भावादिति भावः।

ननु चितौ जीवत्वव्यवहारप्रयोजकस्योपाध्यन्तरस्यानुपन्यासेन सूक्ष्मशरीरस्यैव तथात्वे विदेहमुक्तौ तस्य निवृत्तिरौचित्यप्राप्तैव, अदृष्टायत्ता हि तत्स्थितिः अदृष्टसामान्यं च निवृत्तमेव मुक्तपुरुषीयम्, परन्तु यदि सूक्ष्मशरीरस्यानादित्वम्, तर्हि मायावदेव न निवृत्तिसम्भवः, अनादिभावस्यानिर्वतनीयतायाः पूर्वमुपन्यस्तत्वात्, यदि तु 'एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च' ( मुण्ड० ) इत्यादिश्रुतिमनुरुध्य तस्य सादित्वमुच्यते, तदा प्राप्ताप्राप्तविवेकन्यायेन बुद्ध्यादेरेव जीवतानिर्भरास्पदत्वेन प्रलयानन्तरमपूर्वजीवाविर्भावस्यैव पर्यवसन्नतयाऽकृताभ्यागमादिप्रसङ्ग इति चेन्न, तद्गुणसारत्वाधिकरणे ( ब्र० सू० अ० २ पा० ३ ) प्रलये मायात्मना बुद्ध्यादिसद्भावमादायोक्तप्रसङ्गस्य परिहृतत्वात्। वस्तुतस्त्वद्वैतवादे नास्य प्रसङ्गस्य सम्भावनापीत्यनुपदं व्यक्तीभविष्यति।

इयं गतिरिति। रूपभेदेनास्तित्वात्मिका गतिरित्यर्थः।

की निवृत्ति ही "भूयश्चान्ते विश्वमायानिवृत्तिः" इति श्रुति का प्रतिपाद्यविषय है। माया की स्थिति तो पूर्ववर्णित ही है किन्तु वह स्थिति न केवल मुक्तिदशा में ही है

## जीवह्रासवृद्धिचिन्ता

अथैवमनादिकालप्रवृत्तापीयं चितेर्द्वैतात्मना प्रथनाहंतापरपर्यायकुर्वद्रूपता कदाचिद्विरंस्यतीत्यर्थस्याश्रद्धेयतागामित्वे सर्वविदेहमुक्तिदशा न काचित्स्यात्, एवं चैकैकस्यापि न विदेहमुक्तिः, अन्यथा क्रमेण सर्वस्यापि सा भवन्ती कुर्वद्रूपताया आनन्त्यं पीडयेदेवेति विदेहमुक्तिसमर्पकप्रमाणानां विरोधः, तेषामनुरोधे चोक्ताश्रद्धेयार्थस्यापि हठादभ्युपगमनीयतेत्युभयतः पाशबन्ध इतिचेदत्र प्रसिद्धमेव समाधानद्वयम्, तथाहि—बद्धतया नियता एव जीवराशयः केचिदिति केचित्कल्पयन्ति, अपरे पुनर्जन्तूनामानन्त्यमेवात्रोत्तरमामनन्ति। अत्रोभयत्रापि न चेतस्तुष्यति चेत्तदा जीवानां ह्रासवृद्धिप्रकार उपकर्ण्यताम्—यथा योगिना स्वेच्छया निर्माणचित्तान्यधिष्ठायानेकैः शरीरैर्व्यवह्रियते तेषु किञ्चिज्जात्यायुर्भोगानुकूलं स्वीयमदृष्टं सङ्कल्पयता, पश्चात्तु तादृशशरीरैरेव नूतनपुण्यपापराशिमुपार्ज्य शरीरप्रवाहोऽपि विचित्रः प्राप्यते, द्रोणादेर्वृहस्पत्याद्यंशतया प्रथितस्य च चेतसि निधानेनेत्थं सम्भावनीयम्, कदाचिच्च निमित्तविशेषवशाच्छरीरान्तरैरुपार्जितपुण्यपापनिचयः प्राथमिके पुर्यष्टक एव संक्राम्यति। तथा योगैश्वर्यशून्यप्राणिषु भगवत एवेच्छया कदाचिद्वृद्धिं नेतव्येषु कतिपयपुर्यष्टकगतानि कर्माणि नूतनरचितचित्तेषु भगवतैव सङ्क्राम्यन्ते तद्वशाच्च किञ्चिज्जात्यायुर्भोगमनुभवतां तेषां कर्मान्तरसंग्रहसम्पत्त्या शरीरधारापि सम्पद्यते, कदाचिच्च जीवह्रासचिकीर्षायां कतिपयचित्तेष्वेवानन्तसूक्ष्मजन्तुप्रभृतिपुर्यष्टकगतानि प्राक्सञ्चितकर्माणि समावेश्यन्ते। न चैवं वैषम्यादिकं भगवति प्रसज्येत, कायव्यूहस्थले क्लृप्ततया शरीरेषु तावच्चित्तादिभेद एव न त्वात्मभेदः, एवं चैकात्मवादे मायावशात्स्वस्मिन्नेव तां तां दशामुन्मीलयति भगवति भवे कथमिव वैषम्यादिकं प्रसज्यते। यथा च ब्रह्मविदुषः पुण्यपापसञ्चारस्तदुपकार्यपकारिषु शास्त्रसिद्धः, तत्र चोपकारापकारजन्यपुण्यपापयोर्मूलता, एवमन्यत्रापि पुण्यप्रभेदप्रभावादन्यपुर्यष्टकान्तरगतान्यपि पुण्यानि पापविशेषवशाच्च पापानि संक्रान्तिमवाप्नुवन्ति। एवमेतद्वैपरीत्येन पापविशेषवशात्स्वगतपुण्यनिवहस्य नूतनोपकल्पितचेतस्यपि संक्रमः, पुण्यविशेषवशाच्च स्वगतपापपुञ्जस्येति सम्भाव्यताम्।

एतावता च—सूक्ष्मजन्तूनां स्थावराणां चान्त्यात्, विधिनिषेधशास्त्रे चाधिकारमधिरूढस्य जननिवहस्य परिगणितत्वात्, तत्रापि च भारतवर्षस्यैव कर्मभूमितया प्रसिद्धेः कथमदृष्टवादेन निर्वाह्यतामिति—शङ्काप्यपाकृता, कदाचिदेकस्यैव कर्तुरुक्तरीत्या शतसहस्रलक्षादिशरीरेषु भोक्तृत्वोपपत्तेः, 'कलिःसर्वमलाशयः' इतिन्यायेन च प्राक्तनयुगकलङ्कमानवानामस्मिन् युगे कया कयाऽऽकृत्याऽऽविर्भाव इत्यपि को वेद, न च पुण्ययुगेषु मनुष्याणामेवाधिक्यं न प्रामाणिकम्, स्वर्गाच्च पततां गतिर्न सात्त्विकस्यैव नियता, अनादिसञ्चितकर्मगतेर्वैचित्र्यादिति निर्णीतं "कृतात्ययेऽनुशयवा" नित्यधिकरणे। (ब्र०

विक्। इति दर्शनसर्वस्वेऽनिर्वनीयतावादे स्वातन्त्र्यवादनिष्पीडनप्रकारो विवर्तवादश्च।

ज्ञप्तिशून्यशिवतत्त्वविवर्त्तास्त्रैपुरेण महसा सहभूताः।
द्वैतदर्पदलनाय सुसज्जा दर्शनेषु कुशलैः परिशील्याः॥२॥

इति शङ्करचैतन्यभारतोविरचितमनिर्वचनोयतावादात्मकं
दर्शनसर्वस्वं समाप्तिमगात्।
श्रीशारदार्पणमस्तु।

सू० ३-१-८ सू०) प्राक्तनानन्तकलिसम्भूतनराणां च सङ्ख्यानं केनाकारि, येनाद्यत्वे तेषामेव जन्तुस्थावराणां सङ्ख्यापूर्तिपदेऽभिषेको न सम्भावनीयः स्यात्, सर्वथापि प्रवाहानादितापक्षे नैवं कणतोऽपि दुर्घटम्। तस्माज्जगद्वैचित्र्यानुपपत्त्यादिप्रबलप्रमाणसमर्पितादृष्टवादस्य न क्षुद्रेणानेन बाधकेन बाधनीयता, भारतवर्षस्यैव कर्मभूमित्वमित्यपि प्रायोवाद एव, सोऽपि च जम्बूद्वीपे वर्षान्तरं किञ्चिद्व्यवच्छिन्द्यात्, ब्रह्माण्डपुराणे हि 'मेधातिथेस्तु पुत्रैस्तैः प्लक्षद्वीपेश्वररैर्नृपैः। वर्णाश्रमाचारयुक्ताः प्लक्षद्वीपे प्रजाः कृताः। प्लक्षद्वीपादिषु त्वेषु शाकद्वीपान्तकेषु वै। ज्ञेयः पञ्चसु धर्मो वै वर्णाश्रमविभाजकः॥ सुखमायुश्च रूपं च बलं धर्मश्च नित्यशः।' [ पूर्वभागे अ—१४ ] इत्युक्तम्, नित्यश इति तु प्रायोवादेनापि स्यात्, इत्यादिकं मनसि निधायाह इत्येषा दिगिति।

द्वैतदर्पदलनायेति। न तु द्वैतिदर्पदलनायेति नौद्धत्यमितिभावः। द्वैतदर्पदलने च चिकीर्षिते विज्ञानादिवादचतुष्टयस्यैवोपयोग इति दर्शनसर्वस्वेऽस्मिन् दर्शनान्तराणामप्युपबृंहणं कुतो न कृतमिति न शङ्कनीयम्। अनिर्वचनीयतावादस्यैव दर्शनानां सर्वस्वतया विवक्षितत्वाच्चेति। इति दर्शनसर्वस्वे विवर्तवादे राजहंसः। इत्यों तत्सत्।

यच्चित्तरोधनधनैर्मुनिभिर्न जुष्टं
नासीत्वनन्यशरणेश—रणेषु नष्टम्।

श्रुतेः। उक्तभाष्यस्याप्यत्रैव तात्पर्यम्। दिगर्थो व्यक्तष्टीकायाम्।

आदावन्ते च कृतमङ्गलाः ग्रन्थाः प्रचारिणो भवन्तीति द्योतयितुं प्राक्तनप्रकरणचतुष्टयप्रतिपाद्यस्य मननीयतामाचष्टे—ज्ञप्तीति। प्रकृतग्रन्थे त्रैपुरतत्त्वस्य प्रतिपादितत्वकथनेन तत्संस्मरणाद्मङ्गलरूपताप्यस्य। ज्ञप्त्यादिचतुष्टयं त्रिपुरात्मकेन महसा विशिष्टम्। वैशिष्ट्यञ्च सामानाधिकरण्यसम्बन्धेन साक्षात्परम्परासाधारण्येन त्रिपुरातत्वप्रतिपत्त्यादरे प्रकरणचतुष्टयदृष्ट्या प्रतिपादकत्वमपि वक्तुं शक्यम्। चिच्छक्त्यात्मकं त्रिपुरातत्त्वं निर्विशेषतत्वा-

अपितु बन्धदशा में भी है। यहाँ यह दिग्दर्शनमात्र है।

समस्तदर्शनों में निपुण विद्वानों को इन द्वैत भ्रम के निवर्तक एवं त्रिपुरतत्त्व से संवलित ज्ञप्ति ( विज्ञान ) शून्य शिवतत्त्व तथा विवर्त का परिशीलन करना

द्वैतस्य तस्य विलये विलयो मतीनां
यासां पुनन्तु शिवदाः शिवदायगास्ताः ॥ १ ॥

सेवां श्रीशारदाया अकपटमनसा साधु सम्पाद्य पूत-
आस्थां दृश्ये विलुम्पन् प्रसृमरयशसां वासनाशून्यसंवित् ।
ध्याने बद्धादरोऽयं स्तुतपरमगुरुर्योगिनीराजहंसो-
ब्रह्माकाशे रिरंसुः परशिवनुतयैवाशिषा लालनीयः ॥ २ ॥

यत्नेनोपार्ज्यमानोऽपि माऽस्तु कश्चिगुणो मयि ।
तथापि नैव खिद्येऽहममेया मे गुरौ गुणाः ॥ ३ ॥

बाणव्योमाम्बरश्रोत्रमिते (२००५) विक्रमवत्सरे ।
वाराणस्यां निबन्धोऽयं चित्स्वातन्त्र्ये व्यजायत ॥ ४ ॥

इति खण्डनखण्डखाद्यस्थश्रीशारदायाः सौमनस्यास्पदस्य
शङ्करचैतन्यभारतीविरचितदर्शनसर्वस्वस्य तत्स-
मातकर्तृकं राजहंसनामकं मानसोन्मीलनम् ।
श्रीपरशिवार्पणमस्तु ।

भिन्नतया प्रत्यपादि प्राक्। परिशील्या इति। सर्वदर्शनविषयकनैपुण्यवद्-भिरभ्यसनीयाः। कैमर्थ्यशंकां परिहरति—द्वैतदर्पेति। द्विधा इतं द्वीतं तस्य भावो द्वैतम्। तदुक्तं वार्तिके—

"द्विधेतं द्वीतमित्याहुस्तदभावो द्वैतमुच्यते" इति। तस्य यो दर्पः। अथवा दर्पशब्दस्याभिमानार्थकत्वाद्दर्पो भ्रमः। मिथ्याज्ञानमिति यावत्। तस्य द्वैत-प्रत्यायकत्वाद् द्वैतरूपत्वम्। तथा च द्वैतात्माको यो दर्पस्तस्य दलनायेत्यर्थः। न विद्यते द्वैतं द्विधाभावो यत्र तदद्वैतमित्यद्वैतस्य ब्रह्मात्मकतया स्वतो नित्य-सिद्धत्वात्तदर्थं द्वैतदर्पदलनमेवापेक्षते। तथा सति स्वस्वरूपभूतं द्वैताभावत्वो-पलक्षितं द्वैताभावोपलक्षितं वा चिदद्वैततत्वं व्यक्तं चकास्ति स्वमहिम्नेति शिवम्। किमत्र बहुना—

यदत्र सौष्ठवं किञ्चित्तद् गुरोरेव मे न हि।
यदत्रासौष्ठवं किञ्चित्तन्ममैव गुरोर्न हि॥

इत्युक्तिमनुसरामि।

आनन्दमानन्दकरं प्रसन्नं
ज्ञानस्वरूपं निजभावयुक्तं।

चाहिए। [ प्रकृत ग्रन्थ में विज्ञान आदि चतुष्टय के साथ चित् शक्ति त्रिपुरातत्त्व भी निर्विशेषतत्त्वाभिन्नतया प्रतिपादित है। इनके परिशीलन से द्वैतभ्रमनिवृत्तिपुःसर-चिद्-अद्वैततत्त्व के स्फुरित होने से स्वस्वरूपविश्रान्ति का लाभ होता है।

योगीन्द्रमीड्यं भवरोगवैद्यं
श्रीमद्गुरुं नित्यमहं नमामि ॥

चैतन्यं शाश्वतं शान्तं व्योमातीतं निरञ्जनम् ।
नादबिन्दुकलातीतं विश्वेशं नौमि सर्वदा ॥

यत्सत्वेन जगत्सत्यं यत्प्रकाशेन भाति तत् ।
यदानन्देन नन्दन्ति श्रीबालां तां परां भजे ॥

येषामुक्तिं समादाय ग्रन्थोऽयं मण्डितो मया ।
तानाचार्यवरान् नौमि शिरसा मनसाऽपि च ॥

स्वरवेदाम्बरश्रोत्रे (२०४७) वत्सरेऽजनि चित्कला ।
अर्पिता देवदेवस्य सद्गुरोः पादपद्मयोः ॥

इति श्रीशिवशङ्करचैयन्यभारतीपूज्यपादशिष्य-सुधांशुशेखर-
शास्त्रिविरचितचित्कलायां विवर्तवादः ।

सम्पूर्णोऽयं ग्रन्थः ।

श्रीपरशिवार्पणमस्तु ।

वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम् ।
श्वेतरक्तप्रभाभिन्नं शिवशक्त्यात्मकं परम् ॥

ऋषिवेदनभोनेत्रे ( २०४७ ) जनिविक्रमवत्सरे ।
अर्प्यते भारती ह्येषा सद्गुरोः पादपद्मयोः ॥

इति श्रीशिवशङ्करचैतन्यभारतीपूज्यपादाशिष्य
सुधांशुशेखरशास्त्रिविरचितदर्शनसर्वस्वभारतीभाषानुवादे
विवर्तवादः

सम्पूर्णमिदं दर्शनसर्वस्वम् ।

श्रीपरशिवार्पणमस्तु ।

## शुद्धाशुद्धपत्रिका

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | ३ | वृह० | बृह० |
| ,, | ९ | ,, | ,, |
| ,, | १३ | ,, | ,, |
| ८ | ११ | ,, | ,, |
| ,, | १२ | ,, | ,, |
| ,, | १६ | स्वप्नस्लिधा | स्वप्नस्त्रिधा |
| १३ | २१ | व्यातिरेक | व्यतिरेक |
| १६ | १० | तार्कितर्कित | तार्किकर्कित |
| १७ | १३ | सम्मानतया | समानतया |
| १९ | १४ | पुरोवाति | पुरोवर्ति |
| ३० | १५ | वाक्यम् | वाच्यम् |
| ३२ | १३ | (ब्र०सू० ३.२.५) | (ब्र०सू० २.१.१४) |
| ३३ | ४ | महूर्ताहोरात्रादय | मुहूर्ताहोरात्रादय |
| ,, | ४ | फूत्कारादिव्यापारणां | फूत्कारादिव्यापाराणां |
| ,, | १५ | शरणोकरणोयत्वेन | शरणोकरणीयत्वेन |
| ३४ | २७ | मूलावच्देदेन | मूलावच्छेदेन |
| ३५ | ६ | पेक्षापादक | पेक्षापादकक |
| ३७ | १२ | वर्णाभिव्यङ्गय | वर्णाभिव्यङ्ग्य |
| ४० | ११ | स्फुरेणात्मक | स्फुरणात्मक |
| ४६ | १३ | वाकरः | वाकारः |
| ,, | २३ | वहुशः | बहुशः |
| ४८ | १५ | कल्पनापत्त | कल्पनापत्त्या |
| ४९ | ७ | तदुलब्धि | तदुपलब्धि |
| ५० | १५ | दूर्निरूपत्वाद् | दुर्निरूपत्वाद् |
| ५३ | ५ | निरसीनीयं | निरसनीयं |
| ,, | १५ | दोर्धंवा | दीर्घं वा |
| ५७ | ३ | कदाचित्कं | कादाचित्कं |
| ६३ | १८ | ज्ञानानुव्यापार | ज्ञानानुकूलव्यापार |
| ६७ | ३१ | न्नोत्पत्त्पन्तर | न्नोत्पत्त्यन्तर |
| ७३ | २४ | पमाणुरेव | परमाणुरेव |
| ८० | ७ | काल | काले |

| | | | |
|---|---|---|---|
| ८७ | १४ | निर्विकात्वेन | निर्विकारत्वेन |
| " | " | स्वस्थ | सुस्थः |
| ८९ | २४ | बाजे | बीजे |
| ९० | २० | परिणामोन्नुख | परिणामोन्मुख |
| " | २१ | बाजादि | बीजादि |
| ९७ | १ | धर्मषु | धर्मेषु |
| " | ५ | काय | कार्यस्य |
| ९८ | ५ | स्फारितन् | स्फोरितम् |
| १०२ | ७ | कष्टकेनैव | कण्टकेनैव |
| १०३ | ४ | चतुर्थ | चतुर्थे |
| " | ६ | स्यत् | स्यात् |
| ११० | १४ | ननु | नतु |
| " | १५ | सामान्य | सामान्यं |
| ११२ | १३ | देशाभवेन | देशाभावेन |
| १२३ | १५ | अप्रपञ्चं स चातीतं | अप्रपञ्चं प्रपञ्चातीतं |
| १२५ | १५ | निदर्शन | निदर्शनं |
| १२५ | १७ | उत्ति जन्म | उत्पत्ति जंन्म |
| १२५ | १९ | मुक्ताज्ञान | मुक्तोऽज्ञान |
| १२५ | २२ | शुद्ध | शुद्धं |
| १२८ | ७ | क्वचिदशभेदेन | क्वचिदंशभेदेन |
| १३६ | २० | प्रयुज्यमाना | प्रयुज्यमानो |
| १३७ | ३ | पारमार्थिकत्वोक्तिन्तु | पारमार्थिकत्वोक्तिस्तु |
| १४० | ३ | संविदभिधामपि | संविदभिधानमपि |
| १४३ | १ | प्रतीत्यहं | प्रतीत्यहं |
| १४३ | १५ | रूपेणविद्याया | रूपेणाविद्याया |
| १४४ | १९ | त्यगांशे | त्यागांशे |
| १४९ | ३२ | सवृतिरूप | संवृतिरूप |
| १५१ | ७ | पारमार्थिककत्वा | पारमार्थिकत्वा |
| १५१ | १८ | अर्थान्तराञ्चेति | अर्थान्तराच्चेति |
| १५४ | ३ | ज्जायेन | ज्जायेत |
| १५७ | १८ | स्वर्गकामी | स्वर्गकामो |
| १६० | १० | नन्वत्तु | नन्वस्तु |
| १७३ | ७ | वद | वेद |
| १७६ | ९ | स्वीमियते | स्वीक्रियते |
| १७८ | १९ | तापिने | तापिने |
| १८० | ४ | रनुमवी | रनुभवो |
| १८९ | ८ | न्नन्वयि सति | न्नन्वयिन्यसति |

| | | | |
|---|---|---|---|
| १८९ | १५ | निरसायापि | निरासायापि |
| १८९ | १६ | तवकृत्यास्य | तवकृत्यस्या |
| १९३ | ६ | किञ्चालीक | किञ्चालीकं |
| १९५ | १३ | विषर्यिण्येत्या | विषयिण्या इत्या |
| १९६ | २ | स्यान्न नु | स्यान्न तु |
| २०९ | २१ | व्यतिरिक्तो, स्वात्म | व्यतिरिक्तष्वात्म |
| २१० | ३ | च वही | च बहो |
| २१३ | ११ | संविदवपुषि | संविद्वपुषि |
| २१४ | ६ | द्वयोपैक्ये | द्वयोरैक्ये |
| २१६ | ४ | निवष्टव्यम् | निवेष्टव्यम् |
| २१६ | ५ | जडभ षा | जडभाषा |
| २१७ | ५ | सर्व विमर्श | सर्वं विमर्श |
| २१७ | ९ | धनि | धनिनः |
| २१७ | १७ | मितरानपेक्षत्व | मितरापेक्षत्व |
| २१९ | ८ | मुट्टङ्कयति | मुट्टङ्कयति |
| २१९ | २३ | तपस्यायज्वा | तयस्यायज्वा |
| २१९ | २३ | क्रियाष्वन्य | क्रियास्वन्य |
| २२६ | २३ | कूटो राशिरिव | कूटो राशी राशिरिव |
| २४० | १० | सा चाविद्यापरिणामः | स चाविद्यापरिणामः |
| २४९ | १ | प्रधान्गे | प्राधान्ये |
| २४९ | १८ | सर्वप्रमाणामन्तः परितृस्फुरत् | सर्वप्रमातृणामन्तः परिस्फुरतं |
| २५१ | २१ | नीलाद्यामास | नीलाद्याभास |
| २५६ | ९ | परमेश्वर | पारमेश्वर |
| २५८ | १५ | यारम्भर्णायत्वेन | यारम्भणीयत्वेन |
| २६३ | १० | चराग्यं | वैराग्यं |
| २७० | ११ | पस्वरूपं | यस्वरूपं |
| २७५ | ४ | दशनभेदा | दर्शनभेदा |
| २८१ | २१ | वेदान्तिनामति | वेदान्तिनमिति |
| २८४ | २२ | पिण्डातं | पिण्डान्तं |
| २८८ | १ | ज्ञानन | ज्ञानं न |
| २९० | ११ | परिच्छोद | परिच्छेद |
| २९० | १२ | परिच्छोद | परिच्छेद |
| २९८ | १८ | यद्यन्त्रेति | पद्यत्रेति |
| ३०३ | ९ | ब्रह्मविशेषय | ब्रह्मविषय |
| ३०५ | १ | कौलाचारश्च | समयाचारः कौलाचारश्च |
| ३०९ | ११ | वेशस्याप्यभावात् | देशस्याप्यभावात् |

| | | | |
|---|---|---|---|
| | | न्तराभ्युपगेऽनवस्थापत्तिः। | |
| ३१० | १९ | अनभ्युपगमे च वैध- म्यन्तराभ्युपगमेऽनव- स्थापत्तिः | न्तराभ्युपगमेऽनव स्थापपत्तिः |
| ३१५ | १० | कथञ्चिचेत्त | कथञ्चिच्चेत्त |
| ३१६ | ८ | रन्यतरास्य | रन्यतरस्य |
| ३१८ | १३ | प्रपञ्चमतिरिक्तं | प्रपञ्चातिरिक्तं |
| ३१८ | २३ | त्र्यमाहात्म्यात् | न्त्र्यमाहात्म्यात् |
| ३१९ | १६ | प्रायणाह | प्रायेणाह |
| ३३१ | १६ | प्रतितक | प्रतितिक |
| ३३५ | १९ | अद्वितीया | अद्वितीय |
| ३३६ | ३ | शैवाणा | शैवानां |
| ३३८ | ९ | वेधते | वेद्यते |
| ३५९ | ५ | प्युच्यमनं | प्युच्यमानं |
| ३७६ | १ | पीदृशमभिनं | पीदृशमभिधानं |
| ३८१ | १ | भेदोपरामे | भेदोपगमे |
| ३९१ | ३ | यजु शब्द | यजुःशब्द |
| ३९७ | ३ | च हसितादि | न च हसितादि |
| ४०७ | ७ | व्यपगतापाप्म | व्यपगतपाप्म |
| ४१२ | १ | इत्याद्यभिनाने | इत्याद्यभिधाने |
| ४१३ | ३ | गृरोरिति | गुरोरिति |
| ४१३ | १६ | स्वप्रकाशाशिव | स्वप्रकाशशिव |
| ४१५ | २२ | दतत्त्वस्य | दृक्तत्त्वस्य |
| ४२४ | ८ | विषप | विषय |
| ४४१ | १५ | जगदशस्य | जगदीशस्य |
| ४४२ | १७ | तदवच्छिन्नत्व | तदवच्छिन्नत्वं |
| ४४५ | १३ | तद्दुषणोक्ति | तद्दूषणोक्ति |
| ४५६ | ६ | स्बरूप एव | स्वरूपत एव |
| ४५६ | १० | तद्विषयकत्यस्यं | तद्विषयकत्वस्य |
| ४५६ | १२ | मवश्य | मवश्य |
| ४५७ | ४ | परमात्भा | परमात्मा |
| ४५८ | १२ | मेकछत्रं | मेकच्छत्रं |
| ४७१ | ७ | प्रविपद्यते | प्रतिपद्यते |
| ४७५ | २३ | चिददद्वैततत्वं | चिदद्वैततत्त्वं |
| ४७६ | १६ | स्वेत | स्वेत |
| ४७६ | १९ | पादा | पाद |

कृतेऽप्येतस्मिन् प्रयासे दृष्टिदोषवशात् क्वचिल्लब्धस्थितिकमप्यशुद्धं संशोध्यैव पठिष्यन्ति सहृदया विद्वान्स इति प्रार्थये।

